निर्दिष्टं च तच्छाब्दिकानाम्। तेथा च अव्ययानामेव अर्थप्रत्यायकत्वम् [1] न [2] वर्णानाम् एकैकशः। अव्ययानि च पदविशेषा इत्युक्तम्। एतेन उपसर्गादीनि सर्वाणि [3] व्याख्यातानि। ततः अनेके वर्णा अर्थप्रत्यायका इति वक्तव्यम्। अयमपि पक्षो न कक्षीकरणीयः। अपदात्मकस्य कचटतेत्यादिरूपस्य अर्थप्रत्यायकत्वादर्शनात् [4]। [5] [अतः] पदात्मकोऽनेको वर्णः अर्थप्रत्यायक इति सारं स्थितम् [5]। पदं च सुबन्तं तिङन्तं वा। तच्च प्रातिपदिककृत्तद्धितधातुसमासप्रकृतिकम्। तत् सर्वं वर्णस्वरूपमेव। न तु ततोऽतिरिक्तं पदमस्ति। वर्णेभ्योऽतिरिक्तस्य पदस्य अदर्शनात्।

ननु वर्णगतो धर्मः कश्चन पदमिति। यथा व्यक्तिगतो जातिविशेषो गोत्वमिति। एवं चेत्, एकगोव्यक्तिदर्शने गोत्वप्रतीतिवत् एकैकवर्णदर्शने पदप्रतीतिः स्यात्। ततो वर्णानां समुदायविशेषः पदमिति वक्तव्यम्। तच्च अर्थप्रत्यायकमिति वर्णनीयम्। तेन पदसमुदायविशेषो वाक्यम् इत्युपपादितं भवति। वर्णन्यायस्य पदे संचरणात्। ननु अस्त्वेवम्। तावता वर्णा एव शब्द इति भवताप्युक्तम् पदवाक्यात्मकानां वर्णानाम् अर्थप्रत्यायकत्वकथनेन [6] भावानवबोधात्। भावश्चायम्—यदि वर्णा नित्या यदि वा अनित्या उभयथापि तेषां समुदायो नोपपन्नः। नित्यानां तु गुणत्वे सर्वगतद्रव्यत्वे वा पञ्चाशत्संख्याकानां तेषां मेलनं केन कर्तुं शक्यम्। न चैवं वर्णानां स्थानप्रयत्नवैयर्थ्यप्रसङ्गः, नित्यानामेव तेषां स्थानप्रयत्नाभ्यामेव अभिव्यज्यमानत्वात्। न च अभिव्यक्तेरपि समुदायः कर्तुं शक्यः। वर्णाभिव्यक्तेर्ज्ञानरूपत्वात्। ज्ञानानां च क्रमेण जायमानत्वात् 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' (न्यासू. १,१,१६) इति न्यायात्। क्रमेण जायमानानां क्षणिकानां तेषाम् एकस्मिन् देशे काले वा मेलनस्य कर्तुम् अशक्यत्वात्। न च मेलनाद् अन्यः समुदायोऽस्ति। तस्माद् वर्णनित्यत्वेऽपि स्पष्टः समुदायाभावः। कथं वर्णसमुदायः पदं पदसमुदायो वाक्यम् अर्थप्रत्यायकं स्यात्। अस्ति तु अर्थप्रत्ययः शब्दात्। ततः शब्दतत्त्वम् अन्यदेव।

ननु एतादृशं शब्दतत्त्वं कुतः प्रतीयते। अनित्येभ्यो वर्णेभ्य इति ब्रूमः। न च तत्र उक्तानुपपत्तिः, पूर्वपूर्ववर्णसचिवान्त्यवर्णबुद्धेरिति ब्रूमः। न चैवम् अर्थप्रत्ययोऽप्येवमस्त्विति वक्तव्यम्। तथात्वे तस्य अशाब्दत्वं स्यात्। अनिष्टं च तत्। ततश्च उक्तबुद्धेः प्रतीयमानं शब्दतत्त्वम् एव बुद्धेर्विषयोऽर्थप्रत्यायक इति स्थितम्। यच्चार्थप्रत्यायकं स स्फोट इत्युक्तम्।

यत् शब्दब्रह्म एकम् एकप्रत्ययविषयः सर्वभूतानां स्थावरजङ्गमानां शरीरिणां चैतन्यम्। तद् उक्तम्—'शब्दब्रह्मणो व्यतिरिक्तं न चैतन्यम् अस्ति' इति।

---

१. तथाव्ययानामेकार्थ° S', Kd. २. न च S', Kd. ३. व्याख्यानि S', Kd. ४. दात्मको° S', Kd. ५. इति अयमपि पक्षो.........कंसितं पदं Kd; अस्पष्टम् S'. ६. °नेन न S', Kd. ७. °यर्थप्र° S', Kd.

ननु चैतन्यविवर्ता इमे नानाविधा भावाः सर्वे सशब्दाः। तत् शब्दतत्त्वं स्यात्। न च अधिष्ठानम् अध्यस्तं भवति इत्यत आह— 'यत्परिणामस्त्रिभुवनम् अखिलम् इदम्' इति। परिणामोऽत्र विवर्तोऽभिहितः। ननु परिणामविवर्तयोः को भेदः। अयम्। पूर्वरूपापरित्यागेन असत्यनानाकारप्रतिभासो विवर्तः यथा शुक्तिकायां रजतस्य, सर्परज्ज्वां वा सर्पस्य प्रतीतिः। पूर्वरूपपरित्यागे सति नानाकारप्रतिभासः परिणामः। यथा क्षीरस्य दधिप्रतिभासः। 'त्रिभुवनं यत्परिणामः' इत्युक्ते भौतिका भावाः शब्दब्रह्मणः परिणामाः स्युः। तद्व्युदासाय उक्तम्— 'अखिलम् इदम्' इति। इदम् [1]'आस्यप्रत्ययविषयः चैतन्याद् व्यतिरिक्तं सर्वमित्यर्थः। सा स्फोटरूपा वाणी जयति।

तेन एतद् उक्तं भवति। शब्दब्रह्मणि चेतने सर्वप्रपञ्चविवर्ताधारे स्फोटे शब्दे शब्दाभिधेयत्वम्, न तु वर्णानाम्। तेषामपि स्फोटे अध्यस्तत्वात्। तस्मात् स्फोट एव शब्दः। इति ये मन्यन्ते तेषां दुरन्तं व्यसनम् आपतितम्।

शाब्दिकमत-निरासः

अप्रतीतस्यार्थस्य प्रतीतिः। प्रतीतस्यार्थस्य परित्यागः। तथाहि, वर्णात्मकशब्देभ्यो यथा स्फोटः शब्दः प्रतीयते तथैवार्थः प्रतीयताम्, को दोषः। न च ज्ञानव्यवधाने अशाब्दत्वं तस्यार्थस्य। स्फोटोऽपि शब्द एव। शब्दश्च [2]ज्ञानकरणम्। प्रत्यक्षव्यतिरिक्तानां करणानां [3]ज्ञानकरणत्वाङ्गीकारात् सर्ववादिभिः। ततश्च यः स्फोटपक्षे परिहारः स एव वर्णपक्षे भविष्यति। तथाहि, पूर्वपूर्ववर्णसंस्कारसचिवोऽन्त्यो वर्णो ज्ञातः सन् अर्थं प्रत्याययिष्यति। किम् अन्तर्गडुना[4] स्फोटेन।

तस्माद् अपौरुषेयत्वाद् नित्यत्वाद् विवक्षितार्थत्वाच्च कृत्स्नस्यापि वेदराशेस्तदन्तर्गतस्य ब्रह्मवेदस्यापि विवक्षितार्थत्वेन व्याख्येयतासिद्धिः।

अथर्ववेदव्याख्यानस्य त्रयीव्याख्यानानन्तर्योपपादनम्

तथापि, कथमस्य अन्ते व्याख्येयता। वेदानां क्रमेण अभिव्यक्तिप्रतिपादकश्रुतिवशात्, इति ब्रूमः। सा च अथर्ववेदस्य पूर्वब्राह्मणे प्रणवप्रशंसावसरे श्रूयते— 'ब्रह्म ह वै[5] ब्रह्माणं पुष्करे[6] ससृजे। स खलु ब्रह्मा सृष्टश्चिन्ताम् आपेदे। केनाहम् एकेनाक्षरेण सर्वांश्च कामान् सर्वांश्च लोकान् सर्वांश्च देवान् सर्वांश्च वेदान् सर्वांश्च यज्ञान् सर्वांश्च शब्दान् सर्वांश्च [7]व्यष्टीः सर्वाणि च भूतानि स्थावरजङ्गमान्यनुभवेयम्[8]

---

१. आस्यं S', Kd. २. ज्ञातं° S', Kd. ३. ज्ञातक° S', Kd. ४. °गहुना S', Kd. ५. व S', Kd. ६. पुष्करं S', Kd. ७. तु. Ga. [तु. वैप ४]; वैतु. शंपा. [S', Kd.] वृष्टीः इति ? ८. °मान्वभ्रवेयोमिति Kd, °न्वभ्रवेयेमिति S'.

इति। स ब्रह्मचर्यम् अचरत् स ओम् इत्येतद् अक्षरम् अपश्यत् 'त्रिवर्णं चतुर्मात्रं सर्वव्यापि' (गोब्रा १,१,१६) इत्यादि। 'तस्य प्रथमया स्वरमात्रया पृथिवीम् अग्निम् ओषधिवनस्पतीन् ऋग्वेदं भूरिति व्याहृतिं गायत्रं छन्दः त्रिवृतं स्तोमं प्राचीं दिशं वसन्तम् ऋतुम्' (गोब्रा १,१,१७) इत्यादिना आद्याभिस्तिसृभिः प्रणवमात्राभिराप्तव्यान् ऋगादीन् प्रतिपाद्य अन्ते समाम्नातम्। 'तस्य मकारमात्रयापश्चन्द्रमसम् अथर्ववेदं नक्षत्राण्यो३मिति स्वम् आ मानम्xxxआनुष्टुभं छन्दः एकविंशं स्तोमम्' (गोब्रा १,१,२०) इत्यादि। तथा तैत्तिरीयकेऽपि ब्रह्मयज्ञप्रकरणे श्रूयते— 'यद् ऋचोऽधीते पयसः कूल्या अस्य पितॄन् स्वधा अभिवहन्ति। यद् यजूंषि घृतस्य कूल्याः। यत् सामानि सोम एभ्यः पवते। यद् अथर्वाङ्गिरसो मधोः कूल्याः' (तैआ २,१०) इति। तद् एवम् उदीरितरीत्या सर्वत्राथर्ववेदस्य चरमभावित्वात् तद्व्याख्यानस्य त्रयीव्याख्यानानन्तर्यम् उपपन्नम्।

**अथर्ववेदस्य शाखाचतुष्टयविषयको विचारः**

तस्य ऐहिकामुष्मिकसकलपुरुषार्थपरिज्ञानोपायभूतस्य अथर्ववेदस्य नव भेदा भवन्ति। तद् यथा—पैप्पलादास्तौदा[1] मौदाः शौनकीया जाजला जलदा ब्रह्मवदा देवदर्शाश्चारणवैद्याश्चेति। तत्र शौनकीयादिषु चतसृषु शाखासु अनुवाकसूक्तऋगादीनां गोपथब्राह्मणानुसारेण पञ्चभिः सूत्रैर्विनियोगोऽभिहितः। तानि च सूत्राणि—कौशिकम् वैतानम् नक्षत्रकल्पः आङ्गिरसकल्पः शान्तिकल्पश्चेति। तद् उक्तम् उपवर्षाचार्यैः कल्पसूत्राधिकरणे—

'नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः।
तुर्य आङ्गिरसः कल्पः शान्तिकल्पस्तु पञ्चमः॥' इति।

तत्र साकल्येन संहितामन्त्राणां शान्तिकपौष्टिकादिषु कर्मसु विनियोगविधानात् संहिताविधिर्नाम कौशिकं सूत्रम्। तदेव इतरैः सूत्रैरुपजीव्यत्वात् प्रधानं च। एतेषु बहुषु सूत्रेषु अथर्ववेदप्रतिपाद्यानि कर्माणि विप्रकीर्णत्वाद् दुर्बोधानीति सुखावबोधाय तानीह संगृह्यन्ते। तत्र तावत् कौशिकसूत्रे[4] क्रमेण प्रतिपाद्यान्येतानि कर्माणि।

**कौशिकसूत्रोदितानामथर्ववेदप्रतिपाद्यानां कर्मणां क्रमेण नामोल्लेखः**

आदौ स्थालीपाकविधानेन[5] दर्शपूर्णमासविधिः। ततो मेधाजननानि[6]। ब्रह्मचारिसांपदानि[7]। ग्रामनगरदुर्गराष्ट्रादिलाभार्थानि[8]। पुत्रपशुधनधान्यप्रजास्त्रीकरितुरगरथान्दोलिकादिसर्वसंपत्साधकानि[10]। जनानाम् ऐकमत्यसंपादकानि सांमनस्यानि[11]। ततो राजकर्माणि[12]। तानि च— शत्रुहस्तित्रासनानि, संग्रामजयसाधनानि,

१. द्विवर्णं Ga. २. चकार' Ga. ३. तौदो S', Kd. ४. पंचकः S', Kd.
५. स्वपसंकेतः पृ २३-२४ टि. द्र.। ६. १,२४-६,३७. ७. १०,१-२४. ८. ११,१-६.
९. ११,७-१०. १०. ११,११-१२,४. ११. १२,५-६. १२. १२,१०-१७,३४.

इषुनिवारणार्थानि, खड्गादिसर्वशस्त्रनिवारणानि, परसेनामोहनोद्वेजनस्तम्भनोच्चाटनादीनि, स्वसेनोत्साहपरिरक्षणाभयार्थानि, संग्रामे जयपराजयपरीक्षार्थानि, सेनापत्यादिप्रधानपुरुषजयकर्माणि, परसेनासंचरणप्रदेशेषु अभिमन्त्रितपाशासिकशौप्रक्षेपणादीनि, जयकामस्य राज्ञो रथस्यारोहणम्, अभिमन्त्रितभेरीपटहादिसर्ववादित्रताडनम्, सपत्नक्षयकर्माणि, शत्रूत्सादितस्य राज्ञः पुनःस्वराष्ट्रप्रवेशकानि, राजाभिषेकः। पापक्षयार्थानि निर्ऋतिकर्माणि[३]। चित्राकर्मादीनि पौष्टिकानि[४]। गोसमृद्धिकर्माणि[५]। लक्ष्मीकराणि, पुष्ट्यर्थमणिबन्धनानि[६], कृषिपुष्टिकराणि[८]। अनडुत्समृद्धिकराणि[९]। गृहसंपत्कराणि नवशालाकर्मादीनि[१०]। वृषोत्सर्जनम्[११]। आग्रहायणीकर्म[१२]। जन्मान्तरकृतपापनिमित्ताचिकित्स्यविविधरोगभैषज्यानि[१३]—तत्र प्रथमं सर्वव्याधिभैषज्यम्, ज्वरातिसारबहुमूत्रादिभैषज्यानि, [१४]शस्त्राद्यभिघातजरुधिरप्रवाहनिरोधकानि भूतप्रेतपिशाचापस्मारब्रह्मराक्षसबालग्रहादिनिवारणानि। वातपित्तश्लेष्मभैषज्यानि। हृद्रोगकामलाश्वित्रनिवारणानि। संततज्वरैकाहिकादिविषमज्वरराजयक्ष्मजलोदरनिवारणानि, गवाश्वादीनां क्रिमिहराणि, कन्दमूलसर्पवृश्चिकस्थावरजङ्गमविषनिवारणानि, शिरोऽक्षिनासिकाकर्णजिह्वाग्रीवादिरोगभैषज्यानि, ब्राह्मणाद्याक्रोशनिवारणानि, गण्डमालादिविविधरोगभैषज्यानि। पुत्रादिकामस्त्रीकर्माणि[१६] सुखप्रसवकर्माणि गर्भाधानगर्भदृंहणपुंसवनादीनि, सौभाग्यकरणानि, राजादिमन्युनिवारणानि। अभीष्टसिद्ध्यसिद्धिविज्ञानानि[१७]। दुर्दिनाशन्यतिवृष्टिनिवारणानि[१८]। सभाजयविवादजयकलहशमनानि[२०]। स्वेच्छातो नदीप्रवाहकरणानि[२१]। वृष्टिकर्माणि[२२]। अर्थोत्थापनकर्म[२३]। द्यूतजयकर्म[२४]। गोवत्सविरोधनिवारणम्[२५]। अश्वशान्तिः[२६]। वाणिज्यलाभकर्म[२७]। स्त्रियाः पापलक्षणनिवारणम्[२८]। वास्तुसंस्कारकर्म, गृहप्रवेशकर्म[२९]। कपोतवायसाद्युपहतगृहशान्तिविधिः[३०]। दुष्प्रतिग्रहायाज्ययाजनादिदोषनिवारणम्[३१]। दुःस्वप्ननिवारणम्[३२]। कुमारस्य पापनक्षत्रजननशान्तिः[३३]। ऋणापनोदनम्[३४]। दुःशकुनशान्तिः[३५]। आभिचारिकाणि, परकृताभिचारनिवारणानि[३६]। स्वस्त्ययनानि[३७]। आयुष्याणि[३८]। जातकर्मनामकरणचूडाकरणोपनयनादीनि[३९]। एकाग्निसाध्याः काम्या यागाः[४०]। ब्रह्मौदनस्वर्गौदनाद्या द्वाविंशतिः सवयज्ञाः[४१]। क्रव्याच्छमनम्, आवसथ्याधानम्[४२]। विवाहः[४३]। पैतृमेधिकानि[४४]। पिण्डपितृयज्ञः[४५]। मधुपर्कः[४६]। पांसुरुधिरादिवर्षणय-

१. °परि° नास्ति Kd. २. कथा [कषा ?] प्रक्षेपणादीनि S', Kd. ३. १८,१-१८. ४. १८,१६-३८. ५. १९,१-२१. ६. १९,२२-२७. ७. °का° Kd. ८. २०,१-२४. ९. २०, २५;२६. १०. २३,१-११. ११. २४,१६-२३. १२. २४,२४-३६. १३. २५,१-३२,२७. १४. शास्त्रा° S', Kd. १५. कामिला शंपा. ? १६. ३२,२८-३६,४०. १७. ३७,१-१२. १८. ३८,१-१०. १९. °बम° S', Kd. २०. ३८,१७-३०. २१. ४०,१-१०. २२. ४१,१-७. २३. ४१,८-१०. २४. ४१,११-१७. २५. ४१,१८-२०, २६. ४१,२१-२६. २७. ४२,१-५. २८. ४२,१६-२२. २९. ४३,२-१५. ३०. ४६,७-८. ३१. ४६,४-६. ३२. ४६,९-१३. ३३. ४६,२५. ३४. ४६,३६-४०. ३५. ४६,५३;५४. ३६. ४७,१-४९,२७. ३७. ५०,१-५२, १७. ३८. ५२,१८;१६. ३९. ५३,१-५८,२१. ४०. ५९,१-२६. ४१. ६०,१-६८,४१ ४२. ६९, १-७२,४३. ४३. ७५,१-७९,३३. ४४. ८०,१-८६,३०. ४५. ८७,१-८९,१८. ४६. ९०,१-९२,३२.

ब्रह्मराक्षसादिदर्शनेभूकम्पधूमकेतुचन्द्रार्कोपप्लवादिबहुविधोत्पातशान्त्यर्थः[2] । आज्यतन्त्रविधिः[3] । अष्टकाकर्म[4] । इन्द्रमहः[5] । ततोऽध्ययनविधिरिति[6] ।

वैतानसूत्रविहितानि ब्रह्मादिचतुर्ऋत्विजां कर्माणि

तथा वैतानसूत्रे[7]— दर्शपूर्णमासादिषु अयनान्तेषु त्रयीविहितकर्मसु ब्रह्मा ब्राह्मणाच्छंसी आग्नीध्रः पोतेति चतुर्णाम् ऋत्विजां कर्तव्यं प्रतिपाद्यते। तत्र अनुज्ञानुमन्त्रणादीनि ब्रह्मणः, शस्त्रादीनि ब्राह्मणाच्छंसिनः, आग्नीध्रस्य अन्वाहार्यश्रपणप्रस्थितयाज्यादीनि, पोतुः प्रस्थितयाज्यादीनि इति विभागः। तत्र अयं कर्मक्रमः— प्रथमं दर्शपूर्णमासौ[8] । ततोऽग्न्याधानम्[9] । अग्निहोत्रम्[10] । आग्रयणेष्टिः[11]। चातुर्मास्यानि[12] । वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाणि[13] । पशुयागः[14] । अग्निष्टोमोक्थ्यषोडश्यतिरात्रात्मकः प्रकृतिभूतश्चतुःसंस्थः सोमयागः[15] । वाजपेयः[16] । अप्तोर्यामः[17] । [18]अग्निचयनम्[19] । सौत्रामणी[20] । मैत्रावरुण्यामिक्षेष्टिः[21] । गवाम् अयनम्[22] । राजसूयः[23] । अश्वमेधः[24] । पुरुषमेधः[25] । सर्वमेधः[26] । बृहस्पतिसवगोसवादय एकाहाः सोमयागाः[27] । व्युष्टिद्विरात्रप्रकृतयोऽहीनाः[28] । रात्रिसत्राणि[29] । सांवत्सरिकाण्ययनानि[30] । दर्शपूर्णमासायनानीति[31] ।

शान्तिकल्पोक्तानि कर्माणि

शान्तिकल्पेऽपि[32]— प्रथमं कृत्तिकादिनक्षत्रपूजाहोमादि[33]। ततोऽद्भुतमहाशान्तिः[34]। नैर्ऋतकर्म[35] । अमृताद्या अभयान्तास्त्रिंशन्महाशान्तयो निमित्तभेदेन प्रतिपादिताः[36]— तत्र दिव्यान्तरिक्षभौमेषु उत्पातेषु अमृताख्या महाशान्तिः । गतायुषां पुनर्जीवनाय वैश्वदेवी। अग्निभयनिवृत्तये सर्वकामावाप्तये चाग्नेयी नक्षत्रग्रहोपसृष्टभयार्तरोगगृहीतानां तच्छान्तये भार्गवी। ब्रह्मवर्चसकामस्य वस्त्रशयनाग्निज्वलने च ब्राह्मी। राज्यश्रीब्रह्मवर्चसकामस्य बार्हस्पत्या । प्रजापश्वन्नलाभाय[37] प्रजाक्षयनिवृत्तये च प्राजापत्या। शुद्धिकामस्य सावित्री। छन्दोब्रह्मवर्चसकामस्य गायत्री। संपत्कामस्य अभिचरतोऽभिचर्यमाणस्य च आङ्गिरसी । विजयबलपुष्टिकामस्य परचक्रोद्वेजनकामस्य च ऐन्द्री। अद्भुतविकारनिवृत्ति⌊कामस्य⌋ राज्यकामस्य च माहेन्द्री।[38] । धनकामस्य धनक्षय-

— —

१. °दर्शभू° S', Kd. २. ९३,१-१३६. ३. १३७,१-४३. ४. १३८,१-१५. ५. १४०,१-२२. ६ १४१,१-४५. ७. स्थलसंकेतः पृ. २५,२६ टि. द्र.। ८. १,१-४,२६. ९. ५,१-६,१३ १०. ७,१-८,३. ११. ८,४-७. १२. ८,८;६. १३. ८,१०-९,२७. १४. १०,१-२२. १५. ११,१-२६,१६ १६. २७,१-१७. १७. २७,१८-३०. १८. नास्ति Kd. १९. २८,१-२९,२३. २०. ३०,१-२३. २१. ३०,२४-२७. २२. ३१,१-३५,२३. २३. ३६,१-१३. २४. ३६,१४-३७,८. २५. ३७,६-३८,६. २६ ३८,१०-१५ २७. ३९,१-४०,१८. २८. ४१,१-४२,११. २९ ४२,१२. ३०. ४२,१५ ३१. ४३,१-२८. ३२. शांपा. नक्षत्रकल्पे° ( तु. Bol. भू. ⌊पृ. ७८⌋ ); संकेतः ३३-३६ टि. द्र.। ३३. १,१-१३,५ ३४. १४,१;२ ३५ १५,१-६. ३६. १६,१-२५,५. ३७. °पश्व न्नस्याभाव S', Kd. ३८. अतःपरं धनकामस्य माहेन्द्री इत्यधिकः पाठः Kd.

निवृत्तिकामस्य च कौबेरी। विद्यातेजोधनायुष्कामस्य आदित्या। अन्नकामस्य वैष्णवी। भूतिकामवास्तुसंस्कारकर्मणोर्वास्तोष्पत्या। रोगार्तस्य आपद्ग्रस्तस्य च रौद्री। विजयकामस्य अपराजिता। यमभये याम्या। जलभये वारुणी। वात्याभये वायव्या। [1]कुलक्षयनिवृत्तये संतत्याख्या। वस्त्रक्षयनिवृत्तये त्वाष्ट्री। बालस्य व्याधिनिवृत्तये कौमारी। निर्ऋतिगृहीतस्य नैर्ऋती। बलकामस्य मारुद्गणी। अश्वक्षयनिवृत्तये गान्धर्वी। गजक्षयशान्तये [2]पारावती। भूमिकामस्य पार्थिवी। भयार्तस्य अभयाख्या महाशान्तिः। आसां तन्त्रभूता महाशान्तिश्चेति।

आङ्गिरसकल्पे गदितानां कर्मणां समाख्यानम्

तथा आङ्गिरसकल्पे— आभिचारकर्मादौ कर्तृकारयितृसदस्यानां स्वात्मरक्षाकरणम्। अभिचारोपयुक्तदेशकालमण्डपकर्तृका[3]रयितृदीक्षादिधर्मसमिदाज्यादिसंभारनिरूपणादिकम्। ततः आभिचा[4]रिककर्माणि। परकृताभिचारनिवारणादीन्यन्यान्यपि कर्माणि।

शान्तिकल्पोदितानि कर्माणि

शान्तिकल्पेऽपि— प्रथमं वैनायकग्रहगृहीतलक्षणानि। तच्छान्तये संभाराहरणम्। अभिषेकवैनायकहोमाः। तत्पूजाविधानम्। आदित्यादिनवग्रहयज्ञादिकमिति।

अथर्वपरिशिष्टप्रतिपादिता राज्याभिषेकोपयुक्ता अनुष्ठानविषयः

एतेषु कल्पेष्वनुक्तानि यानि राजाभिषेकोपयुक्तद्रव्यप्रकृतिद्रव्यपरिग्रहपुरोहितवरणादीनि परिशिष्टोक्तानि[5] तान्यपि अनुक्रम्यन्ते— प्रथमं राजाभिषेकः[6]। प्रातःप्रातर्वस्त्रगन्धालंकारसिंहासनाश्वगजान्दोलिकाखड्गध्वजच्छत्रचामरादीनां तत्तन्मन्त्राभिमन्त्रितानां राज्ञे [7]प्रदानादीनि पुरोहितकर्माणि[8]। सुवर्णधेनुतिलभूमिदानादीनि राज्ञः प्रतिदिवसकर्तव्यानि[9]। पूजितपिष्टमय्या सदीपया रात्रिप्रतिमया राज्ञो नीराजनम्[10]। रक्षाकरणं च इत्येवमादीनि पुरोहितस्य रात्रिकर्माणि[11]। राज्ञः पुष्पाभिषेकः[12]। राज्ञो रात्रौ आरात्रिकविधानम्[13]। प्रातःप्रातर्घृतावेक्षणम्, कपिलादानम्[14]। तिलधेनुदानम्, रसादिधेनवः[15]। कृष्णाजिनदानम्। भूमिदानम्[16]। तुलापुरुषविधिः[17]। आदित्यमण्डलाकारापूपदानम्[18]। हिरण्यगर्भविधिः[19]। हस्तिरथदानम्, कनकाश्वादिदशमहादानानि[20]। अश्वरथदानम्[21]। गोसहस्रविधिः[22]।

१. कल° S', Kd. २. परावती S', Kd. ३. °कर्तृकादीक्षा° S', Kd. ४. °चारिकर्मा° S', Kd. ५. स्थलसंकेतः पृ २६,२७ टि. द्र। ६. ३,१,१-३,३,८. ७. °प्रधा° Kd. S', धानादीन्युपहितकर्माणि। ८. ४,१,१-१६. ९. ४,२,१-१५. १०. ४,३,१-६. ११. ४,५,१-१६. १२. ५,१,१-५,५,७. १३. ७,१,१-१३. १४. ८,१,१-८,२,५. १५. ९,१,१-९,३,५. १६. १०,१,१-२२. १७. ११,१,१-११,२,५. १८. १२,१,१-१०. १९. १३,१,१-१३,५,६. २०. १४,१,१-१६. २१. १५,१,१-६. २२. १६,१,१-१६,२,४.

वृषोत्सर्गः[1] । कोटिहोमः[2] । लक्षहोमः[3] । अयुतहोमः । घृतकम्बलविधिः[4] । तटाकप्रतिष्ठा[5] । पाशुपतव्रतम्[6] । इत्येवमादीनि, अन्यान्यपि दानव्रतादीनि । इति सपरिशिष्टपञ्चकल्पप्रतिपाद्यानां कर्मणां दिङ्मात्रेण अयम् अनुक्रमः । [7]विशेषतस्तु तत्तत्सूक्तविनियोगावसरे वक्ष्यते ।

नित्य-नैमित्तिक-काम्य-भेदेन कर्मणां त्रैविध्यम्

एतानि च त्रिविधानि नित्यनैमित्तिककाम्यभेदेन । तत्र जातकर्मादीनि नित्यानि । दुर्दिनाऽशनिनिवारणाभ्यशान्त्यद्भुतकर्माणि च नैमित्तिकानि । मेधाजननग्रामसंपदादीनि काम्यानि । अत्र नित्यानां नैमित्तिकानां च अवश्यानुष्ठेयता । अकरणे प्रत्यवायस्मरणात् । तथाहि—

'नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसया ।' इति ।

काम्यानां तु इच्छातः प्रवृत्तिः ।

एतेषां ग्रामाद् बहिः प्रागुदग्देशे महानदीतटाकाद्युत्तरकूलेऽनुष्ठानम् । '[8]पुरस्तादुत्तरतोऽरण्ये कर्मणां प्रयोगः । उत्तरत उदकान्ते' (कौसू. ७,१३;१४) इति कौशिकसूत्रात् । पुंसवनादीनां तु नित्यानां गृह एवेति रुद्रभाष्यकारमतम् । कालस्तु पर्वद्वयं पुण्यनक्षत्रयुक्तं तिथ्यन्तरं वा । अद्भुतकर्मणां तु तत्तन्निमित्तानन्तरमेव । तथा चोक्तम् —

'अमावास्या पौर्णमासी पुण्यनक्षत्रयुक् तिथिः ।
एत एव त्रयः कालाः सर्वेषां कर्मणां स्मृताः ॥
अद्भुतानां सदाकालम् आरम्भः सर्वकर्मणाम् ।' इति ।

[9]आभिचारिकाणां तु ग्रामाद् दक्षिणादिशि कृष्णपक्षे कृत्तिकानक्षत्रे प्रयोग इति विशेषः । तथा च कौशिकं सूत्रम्—'आभिचारिकेषु । दक्षिणतः संभारम् [10]आहृत्य आङ्गिरसम्' । (कौसू. ४७,१;२) इत्यादि । अत्र आङ्गिरसमिति आङ्गिरसकल्पोक्तमित्यर्थः । एतेषां कर्मणां प्राच्योदीच्याङ्गानि दर्शपूर्णमासवत् कार्याणि । 'इमौ दर्शपूर्णमासौ व्याख्यातौ । दर्शपूर्णमासाभ्यां पाकयज्ञाः' (कौसू. ६,२९;३०) इति सूत्रकारवचनात् । अत्र पाकयज्ञशब्देन सर्वम् आथर्वणं कर्मोच्यते ।

१. १८c,१,१-१२. २. ३१,१,१-३१.१०,५. ३. ३०,१,१-३०,४,५;३०b,१,१-३०b,२,११. ४. ३२,१,१-३२,७,७. ५. ३९,१,१-१२. ६. ४०,१,१-४०,६,१६. ७. तु. S', Kd, वेद्. ग्रंपा. विशेषस्तु । ८. पर° S', Kd. ९. अभि° S', Kd. १०. आहरति Be.

आथर्वणिककर्मणाम् आज्यतन्त्र-पाकतन्त्रभेदात् द्वैविध्यप्रतिपादनम्

तच्च द्विविधम्। आज्यतन्त्रं पाकतन्त्रं चेति। यत्र प्रधानं हविः आज्यं तद् आज्यतन्त्रम्। यत्र चरुपुरोडाशादिकम् तद् पाकतन्त्रम्। आज्यतन्त्रे अयम् अनुष्ठानक्रमः— प्रथमम् '[1]अभ्यसथ' (अ १९,६८,१) इति कर्तुर्जपः, बर्हिर्लवनम् ,वेदिः, उत्तरवेदिः, अग्निप्रणयनम् , अग्निप्रतिष्ठापनम् , [2]व्रतग्रहणम् , पवित्रकरणम् , पवित्रेणेध्मप्रोक्षणम् ,इध्मोपसमाधानम् ,बर्हिःप्रोक्षणम् ,ब्रह्मासनम् ,ब्रह्मस्थापनम् ,स्तरणम् , [3]स्तीर्णप्रोक्षणम् ,आत्मासनम् ,उदपात्रस्थापनम् ,आज्यसंस्कारः ,स्रुवग्रहणम् ,ग्रहग्रहणम् पुरस्ताद्धोमाः, आज्यभागौ। 'सविता [4]प्रसवानाम् (अ ५,२४) इति [5]कर्मणि अभितोऽभ्यातानैराज्यं जुहुयात्' (कौसू १३७,४२) इति सूत्रकारवचनाद् अभ्यातानानि। एतदन्तं पूर्वतन्त्रम्। ततो यथोपदेशं प्रधानहोमः। तत उत्तरतन्त्रम्। अभ्यातानानि, पार्वणहोमः, समृद्धिहोमाः, [6]संनतिहोमाः, स्विष्टकृद्धोमः, सर्वप्रायश्चित्तीयहोमः, स्कन्नहोमः, 'पुनर्मैत्विन्द्रियम्' (अ ७,६७,१) इति होमः, स्कन्नास्मृतिहोमौ, संस्थितिहोमः, चतुर्गृहीतहोमः, बर्हिर्होमः, संस्रावहोमः, विष्णुक्रमाः, व्रतविसर्जनम् , दक्षिणादानम् , ब्रह्मोत्थापनम् इति। पाकतन्त्रे तु अभ्यातानाभाव एव विशेषः अन्यत् सर्वं समानम्। तथा च गोपथब्राह्मणम्[7]—

'आज्यभागान्तं प्राक्तन्त्रम् ऊर्ध्वं स्विष्टकृता सह।
हवींषि [8]यज्ञ आवापो यथा तन्त्रस्य तन्तवः॥' इति।

अद्भुतकर्मणाम् आज्यतन्त्रत्वेऽपि पाकतन्त्रवद् अभ्यातानाभावः। यद् आह केशवः — 'पाकतन्त्रेष्वभ्यातानानि न भवन्ति अद्भुतेषु न भवन्ति अन्यत्र सर्वत्र भवन्ति' (के १४,१) इति।

॥ इति उपोद्घातः ॥

१. अभ्यावसथ S', Kd. (टि. च मस्या. द्र.)। २. व्रत° S', Kd. ३. °र्णं प्रो° S', Kd. ४ प्रसवितानाम् S', Kd. ५. कर्मणि कर्मणि Bl. ६. संनिति° S', Kd. ७. कौशिकसूत्रम् इति शोधः (तु ६,३४; BUC. च)। ८. यज्ञामावापो S', Kd.

अथ

# प्रथमं काण्डम्

शाखायाः शौनकीयायाः पूर्वोक्तेष्वेव कर्मसु ।
विनियोगाभिधानेन संहितार्थः प्रकाश्यते ॥

तत्र प्रथमकाण्डे षड् अनुवाकाः, प्रथमेऽनुवाके षड् सूक्तानि, तत्र 'ये त्रिषप्ताः' इत्येतत् प्रथमं सूक्तम् । अस्य मेधाजननकर्मसु विनियोगः । यद् आह कौशिकः —'पूर्वस्य मेधाजननानि' (कौसू. १०,१) अत्र पूर्वशब्देन 'ये त्रिषप्ताः' इति सूक्तम् उच्यते, 'पूर्वं त्रिषप्तीयम्' (कौसू. ७,८) इति परिभाषणात् । तानि च मेधाजननकर्माणि—उदुम्बर-पलाशकर्कन्धूसमिदाधानम्, व्रीहियवतिलानाम् आवपनम्, क्षीरौदनपुरोडाशरसानां भक्षणम्, उपाध्यायाय भैक्षदानम्, सुप्तस्योपाध्यायस्य कर्णानुमन्त्रणम्, उपाध्यायोपसदनकाले जपः, आज्यमिश्रधानाहोमः, तिलमिश्रधाना हुत्वा तच्छेषभक्षणम्, उपाध्यायाय दण्डाजिनधानाः प्रदातुं धानानुमन्त्रणम्, तद्वदेव धानाहोमः शुकसारिभारद्वाजानां पक्षिणां जिह्वाबन्धनम् तत्प्राशनं च । एतानि कर्माणि अनेन सूक्तेन मेधाकामस्य कार्याणि । तथा च कौशिकं सूत्रम्—'शुकशारिकृशानां जिह्वा बध्नाति । आशयति । औदुम्बरपलाशकर्कन्धूनाम् आदधाति । आवपति । भक्षयति । उपाध्यायाय भैक्षं प्रयच्छति । सुप्तस्य कर्णम् अनुमन्त्रयते । उपसीदन् जपति । धानाः सर्पिर्मिश्राः सर्वहुताः । तिलमिश्रा हुत्वा प्राश्नाति । पुरस्तादग्नेः कल्माषं दण्डं निहत्य पश्चादग्नेः कृष्णाजिने धाना अनुमन्त्रयते । सूक्तस्य पारं गत्वा प्रयच्छति । सकृज्जुहोति । दण्डधानाजिनं ददाति' (कौसू. १०,२-१५) इति । अस्य अयम् अर्थः–'आद्यबन्ध्याप्लवनयानभक्ष्याणि संपातवन्ति' (कौसू. ७,१५) इति परिभाषणात् शुकादिजिह्वानां संपाताभिहुतानामेव बन्धनं प्राशनं च । 'संपातान होममे आक्षिपते' इत्यभ्यातानान्ते अनेन सूक्तेन आज्यं हुत्वा संपातानयनम् 'सर्वाण्यभिमन्त्र्याणि' (कौसू. ७,१६) इति परिभाषणाद् अनेनैव सूक्तेन अभिमन्त्रणं च । कर्कन्धूर्बृहद्बदरी । 'समिधम् आदधाति' (कौसू. ७,४) इति परिभाषणाद् उदुम्बरादीनां समिध इति योजनीयम् । हस्तहोमत्वात् तन्त्रविकल्पः । 'न दर्विहोमे न हस्तहोमे न पूर्णहोमे तन्त्रं क्रियेतेत्येके' (कौसू. १३८,१५) इति सूत्रात् । 'आवपनि व्रीहियवतिलान्' (कौसू. ७,५) इति परिभाषणाद् आवपतिचोदनायां व्रीहियवतिलाः प्रत्येतव्याः । 'सर्वाण्यभिमन्त्र्याणि' इति वचनाद् अत्र सर्वे पदार्था अभिमन्त्र्य कर्तव्याः । 'भक्षयति क्षीरौदनपुरोडाशरसान्' इति (कौसू. ७,६) वचनाद् भक्षयतिचोदनायां द्रव्यानादेशे क्षीरौदनपुरोडाशरसा बोद्धव्याः । अत्र रसशब्देन दधिघृतमधूदकानि उच्यन्ते । यद् असूत्रयत्—'दधि घृतं मधूदकमिति

१. चीरोदन° S', Kd. २. S'. धानाहोमः° ३. °सारि° Bl. ४. अनु° नास्ति S', Kd. ५. होम Kd. ६. तानानयनं S', Kd.

रसाः' (कौसू. ८,१९) इति । क्षीरौदनादीनां भक्ष्यत्वात् होमसंपाताभिमन्त्रणानि पूर्ववत् कर्तव्यानि । 'आज्यबन्ध्याऽऽदनयानभक्ष्याणि संपातवन्ति सर्वाण्यभिमन्त्र्याणि' इति वचनस्य दर्शितत्वात्, भैक्षं पक्वम् अपक्वं वा अभिमन्त्र्य दद्यात् । अनुमन्त्रणं नाम शेषिणो मन्त्रार्थत्वेन अनुसंधानपुरःसरं मन्त्रजपः । अभिमन्त्रणस्य तु ईक्षणं विशेषः । उक्तं हि—

'मन्त्रम् उच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् ।
शेषिणं तन्मना भूत्वा स्याद् एतद् अनुमन्त्रणम् ।
एतदेवाभिमन्त्रस्य लक्षणं चेक्षणाधिकम् ॥' इति

धानानां सर्वहोमस्य हुतशेषप्राशनस्य च कर्मैक्ये विरोधात् प्रयोगभेदः । अन्यद् निगदसिद्धम् ।

एतानि कर्माणि अन्योन्यनैरपेक्ष्येण मेधाजननफलसाधनत्वेन चोदितत्वाद् विकल्पेन अनुष्ठेयानि । कर्मभूयस्त्वात् फलभूयस्त्वम् इति न्यायात् समुच्चयेन वा अनुष्ठेयानि । एवम् उत्तरत्रापि द्रष्टव्यम् ।

उपनयनदिवसेपि मेधाकामस्य ब्रह्मचारिणः अनेन सूक्तेन आज्यहोमः कार्यः । तथा च उपनयनप्रकरणे सूत्रितम्—'मेधाजननायुष्यैर्जुहुयाद्' (कौसू. ५७,३१) इति । अत्र द्रव्यस्य अनादेशेपि आज्यं होमद्रव्यम् । 'आज्यं जुहोति' (कौसू. ७,३) इति जुहोतिचोदनायाम् आज्यस्य द्रव्यत्वपरिभाषणात् । तथैव ब्रह्मचारिसंपत्कर्मसु अस्य सूक्तस्य विनियोगः । सूत्रितं हि—'पूर्वस्य ब्रह्मचारिसांपदानि' (कौसू. ११,१) इति । तानि च कर्माणि उदुम्बरपलाशकर्कन्धूसमिधां ब्रह्मचारिगृहोपस्तरणतृणानां च आधानम् । अरण्यपिपीलिकाछिद्रे मेदोमधुश्यामाकेषीकतूलाज्यानि पञ्च द्रव्याणि पृथक् हुत्वा आज्यस्थाल्य पिपीलिकोद्वापान् ओप्य गृहम् आगत्य अभ्यातानान्ते अनेन सूक्तेन स्थाल्या सकृत् जुहुयात् । अनेन सूक्तेन अन्नम् अभिमन्त्र्य ब्रह्मचारिणो भोजयित्वा धानास्तिलमिश्राः प्रयच्छति । एतैः कर्मभिरनुष्ठितैराचार्यस्य शिष्यसंपत्तिर्भवति । तथा च कौशिकः—'औदुम्बर्यादयः । ब्रह्मचार्यावसथावुपस्तरणान्यादधाति' (कौसू. ११,२;३) इत्यादि ।

तथा ग्रामसंपत्कामस्य तत्साधनेष्वेतेषु उदुम्बरपलाशकर्कन्धूतक्षणाधानसभोपस्तरणतृणाधानाभिमन्त्रितान्नासवप्रदानेषु कर्मसु अस्य सूक्तस्य विनियोगः । तथा च सूत्रम्—'ग्रामसांपदानि । विकारस्थूणामूलावतक्षणानि सभानाम् उपस्तरणानि । ग्रामीणेभ्योन्नम् । सुरां सुरापेभ्यः' (कौसू. ११,७-१०) इति । अत्र यद्यपि सूक्तविशेषो न श्रूयते तथापि 'ग्रहणम् आ ग्रहणात्' ( कौसू. ८. २१ ) इति परिभाषणात् 'पूर्वस्य' इत्येतदेव त्रिषप्तीयं संबध्यते ।

१. °न्धौदन° S', Kd. २. अमव आ° (तु. Bl. शंपा. च) ? मनि शोधः (तु. सा. [अ १, १० भू.] के. च) । ३. संपातानीति S', Kd.

तथा सर्वसंपत्कर्मस्वपि अस्य सूक्तस्य विनियोगः। तथाहि, उदुम्बरपलाशा- कर्कन्धूसमिदाधानम्, व्रीहियवतिलानाम् आवपनम्, क्षीरौदनपुरोडाशरसानां भक्षणं च इत्येतानि मेधाजननोक्तानि अहनि कालत्रये अग्निप्रज्वालनं तदुपस्थानं च सव्यात् पाणिमध्याद् रुधिरस्य दधिघृतमधूदकमिश्रितस्य संपाताभिमन्त्रितस्य प्राशनम् पृश्निमन्थप्राशनं च इत्येतानि कर्माणि अनेनैव सूक्तेन सर्वसंपत्कामः कुर्यात्। आह च कौशिकः—'औदुम्बर्यादीनि। भक्षणान्तानि [सर्वसांपदानि। त्रिर्ज्योतिष्कुरुते[2]। उपतिष्ठते। सव्यात् पाणिहृदयाल्लोहितं रसमिश्रमश्नाति। पृश्निमन्थः। जिह्वाया उत्साद्यमक्ष्योः। परिस्तरणमस्तृहणं हृदयं दूर्श उपनह्य तिस्रो रात्रीः पल्पूलने वासयति। चूर्णानि करोति। मैश्रधान्ये मन्थ ओप्य दधि मधुमिश्रमश्नाति' (कौसू. ११,११-१८) इति]।

[तथा वर्चस्यकर्मणि अनेन सूक्तेन वर्चस्कामः औदुम्बर्यादीनि त्रीणि कुर्यात्। तथा च] वर्चस्कामायाः कुमार्या दक्षिणोरोरभिमन्त्रणम्, क्षीतवपाहोमः, अग्न्युप- स्थानम् इत्येतानि कर्माणि अनेन सूक्तेन तेजस्कामोऽनुतिष्ठेत्। 'पूर्वस्य समासे वर्च इति वर्चस्यानि' (कौसू. १२, १०) इत्यादि सूत्रम्।

तथा शत्रुहस्तित्रासनकर्माण्यपि अनेनैव संग्रामजयकामो राजा कारयेत्। तानि च—संपातोपेतरथचक्रस्य शत्रुहस्त्यभिमुखं प्रवर्तनम्, 'यानैभक्ष्याणि संपातवन्ति' (कौसू. ७,१५) इति परिभाषणात् संपाताभिहुतानां स्वकीयहस्त्यश्वादियानानां शत्रु- गजाभिमुखप्रेरणम्, पटहभेर्यादिवादित्राणाम् अभिमन्त्र्य ताडनम्, दृतौ शर्कराः प्रक्षिप्य अभिमन्त्र्य तद्युक्तपुरुषप्रस्थापनम्, तथैव चर्मपुटयन्त्रेण शर्कराप्रक्षेपः, अभिमन्त्रितवालु- काप्रक्षेपणं च इत्येतानि। अत्र सूत्रम्—'पूर्वस्य हस्तित्रासनानि। रथचक्रेण संपातवता प्रति- प्रवर्तयति' (कौसू. १४,१;२) इत्यादि।

तथा पञ्च निर्ऋतिकर्माणि शान्तिकपौष्टिकेषु सर्वत्र अङ्गत्वेन वा पापक्षयार्थं स्वातन्त्र्येण वा कर्तव्यत्वेन सूत्रकारेणोक्तानि। तत्र आद्ययोः संपातिताभिमन्त्रित- भक्तप्राशने आज्यहोमे च एतत् सूक्तं विनियुक्तम्। तथा च सूत्रम्—'पूर्वस्य पूर्वस्यां पौर्णमास्याम् अस्तमित उदकान्ते कृष्णचैलपरिहितो निर्ऋतिकर्माणि प्रयुङ्क्ते' (कौसू. १८,१) इत्यादि।

तथा पौष्टिकविशेषे चित्राकर्मणि संपातितसारूपवत्सौदनप्राशनपलाशादि- समिदाधानरूपे अस्य सूक्तस्य विनियोगः। सूत्रितं हि—'पूर्वस्य चित्राकर्म। कुलायश्रृतं हरित- बर्हिषम् अश्नाति' (कौसू. १८,१९;२०) इत्यादि। तत्र 'अश्नात्यनादेशे स्थालीपाकः पुष्टिकर्मसु सारूपवत्सः' (कौसू. ७,१;२) इति परिभाषितत्वात् सरूपवत्साया गोर्दुग्धे श्रृतः स्थालीपाकः। ओदन इति गम्यते।

१. °दिभव° S', Kd. २. °तिः कु° Bl. ३. °कुलतमुप° मूको. शंपा. अनु। ४. वासयति मूको. अनु शंपा.। ५. °वाणि S', Kd. ६. हु. के. वेतु. Bl. दा. न हस्तित्रास°। ७. °चैल° Bl.। ८. सारूपवत्से Bl.

तेजोमते च एतत् सूक्तं विनियुक्तम्। 'नाभ्यको: संवेशे' ( कौसू १८,२१ ) इत्यादि सूत्रम्।

तथा 'पुष्टिकर्मणाम् उपधानोपस्थानम्' ( कौसू २४,४५ ) इति सूत्रात् पौष्टिकमन्त्राणाम् उपधानोपस्थानयोर्विनियोगविधानेन तन्मध्यपातिनोऽस्य सूक्तस्य तत्रापि विनियोगः। उपधानं नाम आज्यादित्रयोदशद्रव्यहोमः। 'उपदधात्यनादेशे आज्यं समित् पुरोडाशः यवः ओदनं पायसं पशुः व्रीहियवतिलधानाः करम्भः शष्कुल्यः एतानि त्रयोदश हवींषि जानीयाद्' इति पैठीनसिपरिभाषणात्।

द्विविधा व्याधयः। आहारनिमित्ता अन्यजन्मपापनिमित्ताश्चेति। तत्र आहारनिमित्तानां वैद्यशास्त्रोक्तचिकित्सया उपशमनम्। पापनिमित्तानां तु आथर्वणैर्होमबन्धनपायनादिभिर्भैषज्यकर्मभिरुपशमनम्। 'ओषधिवनस्पतीनाम् अनु का न्यप्रतिषिद्धानि भैषज्यानाम्। अंहोलिङ्गाभिः' (कौसू ३२,२६;२७) इति सूत्रकारेण 'स नो मुञ्चत्वंहसः' (अ ४,२३) इति पापनिवृत्तिप्रतिपादनपराणां मन्त्राणां सर्वत्र भैषज्यकर्मणि विनियुक्तत्वात्। तत्र सर्वव्याधिषु अनेन सूक्तेन आज्यं हुत्वा उदपात्रं संपात्य अनेनैव व्याधितशरीरं संमार्जयेत्। तथा च कौशिकः—'अथ भैषज्यानि' इति प्रक्रम्य 'पूर्वस्योदपात्रेण संपातवतान्ते[१]। वलीर्विमार्ष्टि' (कौसू २५,१-५) इति। भैषज्योक्तसूक्तैस्तत्रतत्र व्याधौ उपधानोपस्थानान्यपि कुर्याद् इति सूत्रभाष्यकारः। उपधानस्वरूपम् उक्तम्।

तथा अनेनैव सूक्तेन पुत्रकामायाः स्त्रिया मृतापत्यायाश्च संपातितोदकावसेकम् पुरोडाशभक्षणम् कन्दुकक्रीडनम् अलंकारधारणं वा कारयेत्। 'पूर्वस्य पुत्रकामावतोकयोः' (कौसू ३२,२८) इत्यादि सूत्रम्।

तथा उपाकर्मणि माणवकवाचने विनियुक्तम्। 'त्रिषप्तीयं च[१] पच्छो वाचयेत्' (कौसू १३९,१०) इति हि सूत्रितम्।

तथा राज्ञः पुष्पाभिषेके 'ये त्रिषप्ताः' इत्यृचा शाखादिभूतया पयोहोमः कार्यः। तथा च परिशिष्टे पुष्पाभिषेकं प्रक्रम्य उच्यते—

'सप्तरात्रं घृताशी वा[७] ततो होमं प्रयोजयेत्।
गव्येन पयसा कुर्यात् सौवर्णेन स्रुवेण तु।
वेदानाम् [८]आदिमैर्मन्त्रैर्महाव्याहृतिपूर्वकैः' (अप ५,२,३;४) इति।

तद् एवम् आथर्वणमन्त्राणां सिद्धमन्त्रत्वेन अपरिमितवीर्यत्वप्रदर्शनार्थम् आदिमसूक्तस्य विस्तरतः सर्वेषु कर्मसु उपलक्षणत्वेन सूत्रकृता विनियोगोऽभ्यधायि। ततः

---

१. सांवेश इ° S', Kd. २. अनूक्ता° Bl. ३. ताड्के Bl. ४. °वतोक्यो° S', Kd. ५. विनयुक्तं S', Kd. ६. तु Bl; वैतु. मुको. °वर्ती च। शंपा च नास्ति। ७ नास्ति S', Kd. ८. आदिभिर्मं° BN.

सर्वेषां मन्त्राणाम् अभिलषितसर्वफलसाधनत्वं प्रत्येतव्यम्। ननु मन्त्राणाम् अनुष्ठेयार्थप्रकाशकत्वस्य 'तदर्थशास्त्रात्' (मीसू १,२,३१) इत्यधिकरणेन स्थापितत्वात् 'तत्तल्लिङ्गानुसारेण विनियोगो वक्तव्यः। इतरथा अग्निना सिञ्चेदितिवत् असमर्थविधानं प्रसज्येत। नायं दोषः। ऐन्द्र्या गार्हपत्यम् उपतिष्ठते इतिवद् बलीयस्या श्रुत्या लिङ्गं बाधित्वा गुणकल्पनयापि विनियोगसंभवात्। तत्र हि ऐन्द्रमन्त्रे इन्द्रशब्दस्य गौणीं वृत्तिम् आश्रित्य गार्हपत्योपस्थाने विनियोगः कृतः। एवम् अत्रापि गोपथब्राह्मणश्रुत्या उदीरितनिखिलकर्मसु विनियोगः कृत इति तत्तत्कर्मानुसारेण मन्त्रलिङ्गानां गौण्यादिवृत्त्याश्रयेण विनियोज्यार्थपरता बोद्धव्या।

ओ३म् ये त्रिषप्ताः परियन्ति[1] विश्वा रूपाणि बिभ्रतः।
वाचस्पतिर्बला तेषां तन्वो[2] अद्य दधातु मे ॥ १ ॥

ये। त्रिऽसप्ताः। परिऽयन्ति। विश्वा। रूपाणि। बिभ्रतः।
वाचः। पतिः। बला। तेषाम्। तन्वः। अद्य। दधातु। मे ॥ १ ॥

यच्छब्दोऽत्र प्रसिद्धार्थवाची। 'सर्वनाम प्रसिद्धार्थं प्रसाध्यार्थविधातकृत्' इति न्यायात् ये लोकवेदप्रसिद्धाः त्रिसप्ताः। त्रयो वा सप्त वा भावाः।

'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' (पा २,२,२५) इति अन्यपदार्थे बहुव्रीहिः। अन्यपदार्थश्च अत्र वार्थः। स च विकल्पः संशयो वा संभवति। अत्र तु विकल्प एव विवक्षितः। 'बहुव्रीहौ संख्येये डजबहुगणात्' (पा ५,४,७३) इति डच् समासान्तः। तस्य सतिशिष्टत्वात् 'सति शिष्टस्वरो बलीयान्' (पावा ६,१,१५८) इति न्यायेन बहुव्रीहिस्वरं बाधित्वा 'चितः' (पा ६,१,१६३) इति अन्तोदात्तत्वम्। तद् अयम् अर्थः— पृथिव्यादयस्त्रयः तेषाम् लोकाः। अधिष्ठातारः अग्निवाय्वादित्याः। सत्त्वरजस्तमोगुणाः ब्रह्मविष्णुमहेश्वराः इत्येवमाद्यास्त्रिसंख्याक्रान्ता ये सन्ति ते सर्वे अत्र त्रिशब्देन विवक्षिताः। तथा सप्त ऋषयः। सप्त ग्रहाः। सप्त मरुद्गणाः। सप्त लोकाः। सप्त च्छन्दांसि इत्याद्या ये सप्तसंख्याक्रान्ताः सन्ति ते सर्वे अत्र सप्तशब्देन अभिमताः। त्रिसंख्याक्रान्ताः सप्तसंख्याक्रान्ता वा इति यावत्।

यद्वा— त्रिः सप्त त्रिसप्ताः। पूर्ववद् बहुव्रीहिः। अत्र सुजर्थः अन्यपदार्थः। स च क्रियाभ्यावृत्त्यात्मकः। त्रिरावृत्तसप्तसंख्यायुक्ता इत्यर्थः। अत्र समासेनैव सुजर्थस्य अभिहितत्वात् संख्यावाचिनस्त्रिशब्दस्यैव समासः न तु सुजन्तस्य इति सुचः श्रवणाभावः। तद् उक्तं वार्तिककृता— 'सुजर्थावोभिहितार्थत्वात् समासे' (पावा २,२,२५) इति। ते चैवं

1. 'तर्सिंखगातु S', Kd. 2. त्रिसप्ताः मै ७,१२,१। 3. पर्यन्ति विभ्रता पै १, ६,१ [मूको]. 4. तन्वं अध्य पै; °न्वोऽअद्य मे. 5. °मित्य° S'. Kd. 6. °मागे° S' Kd.

पृथिव्याः प्रसिद्धसूर्याधिष्ठितप्राचीदिग्व्यतिरिक्ता आरोगादिभिः सप्तभिः सूर्यैरधिष्ठिताः सप्त दिशः। ते च आरोगादयस्तैत्तिरीयैराम्नायन्ते—'आरोगो भ्राजः पटरः पतङ्गः। स्वर्णरो ज्योतिषीमान् विभासः' ( तैआ १,७,१ ) इति। होतृप्रभृतयो वषट्कर्तारः सप्त ऋत्विजः। 'मित्रश्च वरुणश्च। धाता चार्यमा च। अंशश्च भगश्च। इन्द्रश्च विवस्वांश्चेत्येते' ( तैआ १,१३,३) इति श्रुत्यन्तरप्रसिद्धा विवस्वद्व्यतिरिक्ताः सप्त आदित्या इति। तथा च मन्त्रवर्णः—'सप्त दिशो नानासूर्याः सप्त होतार ऋत्विजः। देवा आदित्या ये सप्त' ( ऋ ९,११४,३ ) इति। यद्वा सप्त सिन्धवः सप्त लोकाः सप्त दिशः इत्येवं त्रिसप्ताः। श्रूयते हि—'यः सप्त सिन्धून् अदधात् पृथिव्याम्। यः सप्त लोकान् अकृणोद् दिशश्च' ( तैब्रा २,८,३,८ ) इति। सप्त ग्रहाः सप्त ऋषयः सप्त मरुद्गणा इति वा त्रिसप्ताः। अथ वा त्रिगुणिता सप्तसंख्या येष्विति बहुव्रीहिः। एकविंशतिसंख्याका इत्यर्थः। ते च 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' (तै ७,३,१०,५ ) इति प्रसिद्धाः परिगृह्यन्ते।

यद्वा शरीरारम्भकाणि पञ्च महाभूतानि पञ्च प्राणाः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि अन्तःकरणं चेति। एवम् एकविंशतिसंख्याकाः प्रत्येतव्याः।

एवम् उक्तलक्षणास्त्रिसप्तसंख्या ये देवाः परियन्ति प्रतिदिनं प्रतिवत्सरं प्रतिकल्पं प्रतिशरीरं यथोचितं पर्यावर्तन्ते। परिपूर्वाद् इण् गतौ इत्यस्माल्लटि अदादित्वात् शपो लुक्। 'इणो यण्' ( पा ६,४,८१ ) इति यणादेशः। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः। उदात्तवता तिङा गतेः समासवचनम् इति परिशब्दस्य तिङन्तेन समासः। 'तिङि चोदात्तवति' ( पा ८,१,७१ ) इति गतेरनुदात्तत्वम्। किं कुर्वाणाः विश्वा विश्वानि सर्वाणि रूपाणि प्रतिनियताकारान् जगदनुग्रहार्थं बिभ्रतः धारयन्तः। यद्वा रूप्यन्त इति रूपाणि चेतनाचेतनात्मकानि वस्तूनि बिभ्रतः अभिमतफलप्रदानेन पोषयन्तः। विश्वेति 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपे प्रत्ययलक्षणेन नुमि उपधादीर्घत्वे 'नलोपः प्रातिपदिकान्तस्य' ( पा ८,२,७ ) इति नलोपः। विश्वशब्दः 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' ( पाउ १,१५१ ) इति क्वन्प्रत्ययान्तत्वात् 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इत्याद्युदात्तः बिभ्रतः इति डुभृञ् धारणपोषणयोः इत्यस्माल्लटः शत्रादेशः। शपः श्लुः। 'भृञामित्' (पा ७,४,७६) इत्यभ्यासस्य इत्त्वम्। 'उगिदचां सर्वनामस्थानेऽधातोः' (पा ७,१,७० ) इति प्राप्तस्य नुमो 'नाभ्यस्ताच्छतुः' (पा ७,१,७८) इति प्रतिषेधः। प्रत्ययस्वरेण शतुरुदात्तत्वे प्राप्ते 'अभ्यस्तानामादिः' ( पा ६,१,१८९ ) इति अभ्यस्तस्य आद्युदात्तत्वम्। वाचस्पतिः वाचः वेदात्मिकायाः पतिः पालकः स्वामी। निसर्गसिद्धत्वेन नित्यानामपि वेदानां प्रथमतस्तन्मुखाद् अभिव्यक्तेस्तस्य स्वामित्वव्यपदेशः। पदद्वयमपि परस्परसापेक्षतया एकार्थतावृत्तित्वान्निरूढत्वाच्च ब्रह्मणः संज्ञा। 'सावेकाच°' ( पा ६,१,१६८ ) इति वाच उत्तरस्या विभक्तेरुदात्तत्वम्। 'षष्ठ्याः पतिपुत्र°' ( पा ८,३,५३ ) इति विसर्जनीयस्य सत्वम्। तेषां

१. °विधि° S', Kd.   २. अरोगा° S', Kd.   ३. स्वर्ण S', Kd.

प्रागुदीरितानां त्रिसप्तानां देवानां बला बलानि। पूर्ववत् 'शेश्छन्दसि बहुलम्' (पा ६,१,७०) इति शेर्लोपः। तत्तद्साधारणसामर्थ्यानि श्रुतधारणादीनि मे मम मेधाविफलार्थिनः। 'तेमयावेकवचनस्य' (पा ८,१,२२) इति अस्मच्छब्दस्य षष्ठ्येकवचनान्तस्य मे आदेशः। 'अनुदात्तं सर्वमपादादौ' (पा ८,१,१८) इत्यधिकारात् सर्वानुदात्तत्वम्। तन्वः तन्वाः शरीरस्य। अनित्यम् आगमशासनम् इति आडभावः। अद्य इदानीं मेधाजननादिकर्मकाले दधातु विदधातु करोतु। डुधाञ् धारणपोषणयोः। अस्माल्लोटि जुहोत्यादित्वात् शपः श्लुः। 'श्लौ' (पा ६,१,१०) इति द्विर्वचनम्। तिपः पित्त्वेन 'सार्वधातुकमपित्' (पा १,२,७) इति ङित्त्वस्याभावात् 'श्नाभ्यस्तयोरातः (पा ६,४,११२) इति आल्लोपस्याभावः। 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः।

अत्र बलाधानरूपाभिमतफलप्रदातृत्वं वाचस्पतिकर्तृकम् अवगम्यते। तद् अयुक्तम्। देवताया विग्रहाद्यभावेन फलदातृत्वायोगात्। लोके हि विग्रहादिमत एव सेवितराजादेः फलप्रदातृत्वं दृश्यते। नायं दोषः। देवताया विग्रहाद्यभावेन फलदातृत्वासंभवेपि तदुद्देशेन क्रियमाणयागहोमादिजनितापूर्वस्यैव फलप्रदातृत्वाङ्गीकारात्। तथा च नवमे देवताधिकरणे निर्णीतम्— 'देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्' (मीसू ९,१,६) इत्यत्र। तथाहि—'यदाग्नेयोऽष्टाकपालः' (तै २,६,३,३) इत्यत्र देवता प्रतीयते। अपूर्वमपि। तत्र प्राकरणिकानाम् अवघातप्रोक्षणादीनां संनिपत्योपकारकाणां प्रयाजादीनाम् आरादुपकारकाणां च अङ्गानां किम् अग्न्यादिदेवता प्रयोजिका उत अपूर्वम् इति विशये देवतैव प्रयोजिकेति तावत् प्राप्तम्। कुतः। यागेन तोषिताया देवतायाः फलप्रदत्वात्। संभवति हि तस्याः फलप्रदत्वम्। मन्त्रार्थवादादिभ्यो विग्रहादिपञ्चकावगमात्। विग्रहः, हविःस्वीकारः, तद्भोजनम्, तृप्तिः, प्रसादश्च इत्येतत् चेतनस्योचितं पञ्चकम्। 'सहस्राक्षो गोत्रभिद्वज्रबाहुः' (तै २,३,१४,६,) इति विग्रहः। 'अग्निरिदं हविरजुषत' (तैब्रा ३,५,१०,२,) इति हविःस्वीकारः। 'अद्धीदिन्द्र प्रस्थितेमा हवींषि' (ऋ १०,११६,८) इति हविर्भोजनम्। 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' (तै २,५,४,३) इति तृप्तिप्रसादौ। ततः सेवितराजादिवत् पूजितदेवतायाः फलप्रदत्वेन प्राधान्यात् सैव धर्माणां प्रयोजिका। तथा सति विकृतिषु सौर्यादिषु प्राकृतानाम् अग्न्यादीनाम् अभावात् तत्संबद्धा धर्मा एव तावत् नातिदिश्यन्ते कुतस्तत्र ऊहस्य प्राप्तिरिति प्राप्ते अभिधीयते —

किं देवतायाः फलप्रदातृत्वेन प्राधान्यं शब्दाद् आपाद्यते वस्तुसामर्थ्याद् वा। नाद्यः। 'स्वर्गकामो यजेत' इत्यत्र यजेतेति शब्देन विधेयस्य यागस्य फलप्रदत्वावगमात्। द्रव्यदेवते तु सिद्धत्वेन विध्यर्नेहे। तत्र यथा द्रव्यस्य विधेयं प्रति गुणत्वम् तथा देवताया अपि। यदा यागस्य कालान्तरभावि फलं प्रति व्यवहितत्वम् तदा तत्साधनभूता देवता ततोपि व्यवहिता। का तर्हि फलस्य गतिः। अपूर्वम् इति

१. °दृतिथिवाद्भो° S', Kd.



वदामः । तच्च श्रुत्या श्रुतार्थापत्त्या वा प्रतीयमानत्वात् शाब्दम् इति तस्य फलप्रदत्वम् उचितम् । नापि वस्तुसामर्थ्याद् देवस्य फलप्रदत्वम् । विग्रहादिपञ्चकप्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्याभावात् । अन्यथा 'वनस्पतिभ्यः स्वाहा मूलेभ्यः स्वाहा' ( तै ७,३,२०,१;२) इत्यादिमन्त्रेष्वपि देवत्वं विग्रहादियुक्तत्वं च कल्प्येत । तच्च प्रत्यक्षविरुद्धम् । अतो न राजादिवत् फलप्रदत्वम् । किंच विग्रहादिमद्देवतावाद्यपि न विना कर्मणा फलम् अभ्युपगच्छति । ततः प्राप्ताप्राप्तविवेकेन उभयवादिसिद्धस्य यागस्यैव फलप्रदत्वम् अस्तु । किंच मातापितृगुर्वादिशुश्रूषायाः विनापि देवतां फलप्रदत्वम् उभयवादिसिद्धम् । तस्मात् फलप्रदम् अपूर्वमेव धर्माणां प्रयोजकम् । तथा सति सौर्यादिषु अग्न्यादिदेवताभावेपि अपूर्वप्रयुक्तधर्माणाम् अतिदेशाद् अस्ति तत्र ऊहस्यावकाशः । तद् उक्तम् —

'*[देवः प्रयोजकोऽपूर्वं वाऽऽद्योऽस्य फलदत्वतः ।
न विधेये गुणो ह्यन्त्योऽपूर्वस्य फलितोचिता ॥' (मीन्या ९,१,८) इति ।]

एवं प्रकृतेपि एतत्सूक्तानुष्ठेयाज्यसमिद्धोमादिजनितापूर्वस्यैव अभिमतफलसाधनत्वम् । एवं सति 'ये त्रिषप्ताः' इत्यस्य करणमन्त्रत्वात् मन्त्राणां च अनुष्ठेयार्थप्रकाशकत्वात् फलप्रार्थनाव्यपदेशेन कर्मापेक्षितदेवता प्रकाश्यते इति अविरोधः । अयं च जैमिनिपक्षोनुक्रान्तः ।

बादरायणस्तु —

'विरोधे गुणवादः स्याद् अनुवादोवधारिते ।
भूतार्थवादस्तद्धानाद् अर्थवादस्त्रिधा मतः ॥'

इति प्रमाणान्तराविरुद्धानां मन्त्रार्थवादादीनां स्वार्थेपि तात्पर्याङ्गीकारेण देवानां विग्रहादिपञ्चकम् अभ्युपगम्य यागहोमादिक्रियातोषितानां तेषां देवानामेव अभिमतफलप्रदानकर्तृत्वम् अङ्गीचकार । तथा च वैयासिकं सूत्रम् —'फलमत उपपत्तेः' ( वेसू ३,२,३९) इति । श्रुतिरपि आराधितस्य देवस्यैव फलप्रदातृत्वं दर्शयति । 'स्त्रीपुंसोर्वा[1] य इह स्थातुम् [2]अपेक्ष्यते [तस्मै] सर्वैश्वर्यं ददाति यत्र कुत्रापि [3]म्रियेत देहान्ते देवः परमं ब्रह्म तारकं व्याचष्टे' (नृपू १,७) इति । 'एष ह्येव साधु कर्म कारयति तं यम् एभ्यो लोकेभ्य उन्निनीषते एष हि एवासाधु कर्म कारयति तं यम् अधो निनीषते' (तु. सप्र. कौउ [३,९]) इत्यादि ।

अस्य सूक्तस्य मेधाजनने विनियोगाभिधानात् तस्य च अधीतवेदशास्त्रादिधारणसामर्थ्याधानरूपत्वात् वेदानाम् अधिपतिर्ब्रह्मैव तत् कर्तुं शक्नोतीति ब्रह्मप्रार्थनम् अत्र कृतम् । अनेनैवाभिप्रायेण श्रुतिरपि तद्वाचकशब्दान्तरं परिहृत्य वाचस्पतिशब्देन ब्रह्माणं निरदिक्षत् ।

---

१. स्त्रीपुंसयोर्वा निसा. । २. अपेक्षते निसा. । ३. म्रियते निसा.

अत्र विहितानि मेधाजननादीनि कर्माणि फलार्थी स्वयमेव यदि अनुतिष्ठेत् तदा मे इति अस्मच्छब्दस्य मुख्य एवार्थः संभवति । [यदा तु] फलभाजो यजमानस्य अशक्त्या अनधिकाराद्वा उक्तानि कर्माणि अन्येन कार्यन्ते तदा किम् अयं मन्त्रः प्रत्यगाशीष्ट्वलिङ्गात् 'आयुर्दा अग्नेस्यायुर्मे देहि' (तै १,५,५,४) इतिवत् फलभाजा यजमानेन पठितव्यः उत 'ममाग्ने वर्चः' (ऋ १०,१२८,१) इतिवत् क्रियाकर्त्रा आचार्येण । द्वितीये पक्षे मन्त्रोच्चारणकर्तुरेव अस्मच्छब्दाभिधेयत्वात् तस्यैव फलसंबन्धप्रतीतेः कथं यजमानस्य फलभाक्त्वम् इति चिन्तायाम् उच्यते —

'आयुर्दा अग्ने' इत्यादेः करणतया विधानाभावात् लिङ्गाद् यजमानपाठ्यता निर्णीता '[3]मन्त्राश्चाकर्मकरणास्तद्वत्' (मीसू ३,८,१५) इत्यस्मिन्नधिकरणे । अस्य तु गोपथब्राह्मणे मेधाजननादिकर्मसु विनियोगाभिधानात् श्रुत्या लिङ्गं बाधित्वा 'ममाग्ने वर्चः' इतिवत् अस्यापि मन्त्रस्य क्रियाकर्त्रा आचार्येणैव प्रयोक्तव्यता । तथा च क्रियाकर्तुराचार्यस्य दक्षिणया क्रीतत्वात् तदतिरिक्तफलसंबन्धानुपपत्तेः फलभाक्त्वं यजमानस्यैव । 'शास्त्रफलं प्रयोक्तरि' (मीसू ३,७,१८) इत्युक्तत्वात् । तथा च मे इति संबन्धसामान्ये षष्ठी । मम यो यजमानस्तस्येत्यर्थः । तथा च जैमिनीयं सूत्रम् —'करणे मर्थवत्त्वात्' (मीसू ३,८,२५) इति । अत्रायं संग्रहश्लोकः —

'ममाग्न इति कस्यात्र फलं लिङ्गेन [4]कर्तृगम् ।
श्रुत्या स्वामिनि न क्रीते लिङ्गं तत्रोपचर्यताम् ॥' (मीन्या ३,८,२०) इति ।

[5]पुनरेहि वाचस्पते देवेन मनसा सह ।
[6]वसोष्पते [7]नि रमय [8]मय्येवास्तु मयि श्रुतम् ॥ २ ॥

पुनः । आ । इहि । वाचः । पते । देवेन । मनसा । सह ।
वसोः । पते । नि । रमय । मयि । एव । अस्तु । मयि श्रुतम् ॥ २ ॥

हे वाचस्पते वाचः वेदरूपायाः पालयितर्देव । 'सुबामन्त्रिते पराङ्गवत् स्वरे' (पा २,१,२) इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य 'आमन्त्रितस्य च' (पा ८,१,१९) इत्याष्टमिकं सर्वानुदात्तत्वम् । ईदृश हे ब्रह्मन् देवेन द्योतनात्मकेन मनसा अन्तःकरणेन अनुग्रहबुद्ध्येत्यर्थः । सकलेन्द्रियानुग्राहकत्वात् सत्त्वगुणपरिणामरूपत्वेन स्वच्छत्वाच्च मनसो द्योतनात्मकत्वम् । तादृशेन मनसा सह संगतः सन् पुनरेहि । क्रियाभ्यावृत्त्युपलक्षणार्थोऽयं पुनःशब्दः । अभिमतफलप्रदानार्थं पुनःपुनर्मत्समीपम् आगच्छेत्यर्थः ।

---

१. प्रत्यगाशीस्त्वलिंगात् शंपा; प्रत्यगाशीष्ट्व लिंगात् S', Kd. २. तु. S', Kd.; वैतु. शंपा. °पठ्यता ३. मंत्राश्च कर्म° S', Kd. ४ वक्तृगम् मीन्या.। ५. उपनेह पै १,६,२ [मूको.]; उपप्रेहि मं ४,१२,२ । ६. असोष्पते प [मूको ]; वसुपते मै. ७. रामय H, O.; विरमय मै. ८. मयमेव तदस्तु मम मै.

स्वरादिगणे पुनरायुदात्तः इति पाठात् पुनःशब्द आयुदात्तः। अत्र वाचस्पतेरागमनं फलप्रदानार्थम्। तत्र फलप्रदानं किं वाचस्पतेरेव उत मनसोपीति विचिकित्सायाम् सहभावश्रवणात् मनसोपीति प्राप्तम्। तत्र अयुक्तम्। सहैव दशभिः पुत्रैर्भारं वहति गर्दभीतिवत् सहशब्दश्रवणेपि अप्राधान्याद् मनसः क्रियानन्वयित्वात्। अप्राधान्यं च 'सहयुक्तेऽप्रधाने' (पा २,३,१९) इति तृतीयाविधानात्। तथा शेषलक्षणे 'त्वष्टारं तूपलक्षयेत् पानात्' (मीसू ३,२,३४) इत्यधिकरणेपि एवमेव निर्णीतम्। तथा हि— 'अग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा' (तै १,४,२७,१) इति पात्नीवतग्रहहोममन्त्रे त्वष्टुः पत्नीवदग्निसहभावश्रवणेन पानक्रियान्वयाद् देवतात्वात् तद्ग्रहशेषभक्षणमन्त्रेपि उपलक्षणीयत्वम् आशङ्क्य राद्धान्तितम्— त्वष्टुः अप्रधानविभक्त्यभिहितत्वेन सहभावमात्रप्रतीतेः पानक्रियान्वयित्वाभावाद् अदेवतात्वाद् भक्षणमन्त्रे नोपलक्षणीयत्वमिति। अपि च हे वसोष्पते वासकस्य ग्रामपश्वादिरूपस्य धनस्य स्वामिन्। अन्तर्भावितण्यर्थाद् *वस निवासे इत्यस्मात्* 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (पाउ १,१०) *इति उप्रत्ययः। अनित्यम् आगमशासनम् इति नुमभावे* 'घेर्ङिति' (पा ७,३,१११) *इति* गुणे 'ङसिङसोश्च' (पा ६,१,११०) *इति पूर्वरूपता।* 'षष्ठ्याः पतिपुत्र०' (पा ८,३,५३) इति विसर्जनीयस्य सत्वम्। पूर्ववत् पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकम् आयुदात्तत्वम्। यद्वा वसोः वासकस्य प्राणस्य पते स्वामिन् प्रजापते निरमय अभिमतग्रामादिलक्षणफलप्रदानेन नितराम् अस्मान् क्रीडय। यतस्त्वं वसुपतिः अतस्तव ग्रामादिविविधफलप्रदानशक्तिरस्ति। तस्माद् अस्मदपेक्षितानां विविधफलानां साकल्येन प्रदानात् निरन्तरं सुखयेत्यर्थः। अस्मादेव लिङ्गात् ग्रामसांपदादिषु कर्मसु विनियोग उपपन्नः। रमु क्रीडायाम् अस्मात् हेतुमति णिचि उपधावृद्धौ जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेति मित्त्वात् 'मितां ह्रस्वः' (पा ६,४,९२) इत्युपधाह्रस्वत्वम्। इदानीं ग्रामादिविविधसंपत्त्या सर्वोत्कृष्टताम् आत्मनः प्रार्थयते। मय्येवास्तु त्वया दत्तं ग्रामादिकम् अनन्यसाधारण्येन मय्येव वर्तताम्। अन्ययोगव्यवच्छेदार्थोयम् एवकारः। यत एवकारस्ततोन्यत्रावधारणम् इति न्यायेन अस्मच्छब्दात् परतो वर्तमानेन एवकारेण ग्रामादीनां नियम्यमानत्वात्। मेधाजननस्य प्राधान्यं दर्शयितुं विप्रपरिव्राजकन्यायेन पार्थक्येन निर्दिशति— मयि श्रुतम् इति। श्रुतम् उपाध्यायाद् विधितोऽधीतं वेदशास्त्रादिकमपि मय्येव। अस्तु इत्यनुषङ्गः। सम्यगधीतस्यापि वेदादेः प्रायेण विस्मरणसंभवाद् अधीतस्य धारणार्थं मह्यं मेधां प्रयच्छेत्यर्थः।

इहैवाभि वि तनूभे आर्त्नी इव ज्यया।
वाचस्पतिर्नि यच्छतु मय्येवास्तु मयि श्रुतम्॥ ३॥

१. धारणार्थं S', Kd. २. आर्त्नी A, B; यरत्न यस्य ज्जया पै १,६,३ [मूको.]।

इह । एव । अभि । वि । तनु । उभे इति । आर्त्नी इवेत्यार्त्नीऽइव । ज्यया ।
वाचः । पतिः । नि । यच्छतु । मयि । एव । अस्तु । मयि । श्रुतम् ॥ ३ ॥

हे वाचस्पते 'इहैव' अस्मिन्नेव साधके जने । 'इदमो हः' (पा ५,३,११) इति सप्तम्यर्थे हप्रत्यये 'इदम इश्' (पा ५,३,३) इति इशादेशः । उभे श्रुतधारणलक्षणां मेधां विविधभोगहेतुभूतां ग्रामादिसंपदं च । अनयोः ऐहिकामुष्मिकफलसाधनेन व्यवस्थितत्वात् कोटिद्वयेन निर्देशः । ते उभे अपि फले अभि वि तनु अभितो विस्तीर्णे कुरु । सर्वजनेभ्योऽपि मय्येव प्रभूते कुर्वित्यर्थः । तनु विस्तारे । 'तनादिकृञ्भ्य उः' (पा ३,१,७९) इति उप्रत्ययः । 'उतश्च प्रत्ययादसंयोगपूर्वात्' (पा ६,४,१०६) इति हेर्लुक् । तत्र दृष्टान्तः — ज्यया मौर्व्या धनुषि आरोपितया आर्त्नी इव अटन्याविव । ते यथा अभिवितन्येते तथेत्यर्थः । अनेन स्वरसतः अप्राप्तयोरपि बलात् प्रापणम् उक्तम् इति द्रष्टव्यम् । यद्वा इहैव अभि वि तनु । अभिमतं फलम् इति शेषः । उभे आर्त्नी इवेति उभशब्दस्य उत्तरत्र संबन्धः । 'ईदूदेद्द्विवचनम्' (पा १,१,११) इति प्रगृह्यसंज्ञा । 'प्लुतप्रगृह्या अचि' (पा ६,१,१२५) इति प्रकृतिभावः । आर्त्नी इवेति । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' (पावा २,१,४) इति समासः । इदानीं प्राप्तस्य फलस्य स्थैर्यं प्रार्थयते — वाचस्पतिः विधाता नि यच्छतु स्वात्मने दत्तं निखिलं फलं नियमयतु । यथा मां न जहाति तथा स्थिरीकरोतु इत्यर्थः । निपूर्वाद् यमेः शपि 'इषुगमियमां छः' (पा ७,३,७७) इति छत्वम् । 'तिङ्ङतिङः' (पा ८,१,२८) इति सर्वानुदात्तत्वम् । अभिमतस्य फलस्य अयोगव्यवच्छेदम् उक्त्वा अन्ययोगव्यवच्छेदम् आह—मय्येवास्तु मयि श्रुतम् इति । व्याख्यातमेतत् ।

उपहूतो वाचस्पतिरुपास्मान् वाचस्पतिर्ह्वयताम् ।
सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि ॥ ४ ॥

उपऽहूतः । वाचः । पतिः । उप । अस्मान् । वाचः । पतिः । ह्वयताम् ।
सम् । श्रुतेन । गमेमहि । मा । श्रुतेन । वि । राधिषि ॥ ४ ॥

वाचस्पतिः वाचः पालयिता देवः उपहूतः समीपम् आहूतः । सत्स्वपि अन्येषु देवेषु असावेव मम अभिलषितफलप्रदातेति अस्माभिः प्रार्थित इत्यर्थः । उपपूर्वात् ह्वयतेः कर्मणि निष्ठा । 'वचिस्वपि' (पा ६,१,१५) इत्यादिना संप्रसारणम् । 'गतिरनन्तरः' (पा ६,२,४९) इति गतेः प्रकृतिस्वरत्वम् । 'उपसर्गाश्चाभिवर्जम्' (फि ४,१३) इत्युपशब्द आद्युदात्तः । यतो मयोपहूतः ततो हेतोर्वाचस्पतिः स देवः अस्मान् मेधाजननादिफलकामान् उपह्वयतां तत्तत् फलं प्रदातुं स्वसमीपम् आह्वयतु । यद्वा—तत्तत्फलप्राप्तिम् अभ्यनुजानातु । उपपूर्वो ह्वयतिः अभ्यनुज्ञानेपि वर्तते, यथा 'उपहूत उपह्वयस्व' इति सोमभक्ष-

णानुज्ञानानुज्ञापनमन्त्रे । तेन उपहूताः सन्तो वयं श्रुतेन विधितोधीतेन वेदशास्त्रादिना सं गमेमहि संगच्छेमहि । वाचस्पतिप्रसादप्राप्तया मेधया कृत्स्नं वेदशास्त्रं प्राप्नवामेति भावः । 'व्यवहिताश्च' (पा १,४,८२) इति समः क्रियापदेन संबन्धः । 'समो गम्यृच्छिभ्याम्' ( पा १,३,२९ ) इति गमेरात्मनेपदम् । अस्माद् आशीर्लिङि 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ् प्रत्ययः शपोऽपवादः । 'लिङः सीयुट्' (पा ३,४,१०२) इति सीयुट् । 'छन्दस्युभयथा' (पा ३,४,११७) इति सार्वधातुकसंज्ञायां 'लिङः सलोपोनन्त्यस्य' (पा ७,२,७९) इति सलोपे गुणे वलि लोपः । अधीतस्य वेदशास्त्रस्य स्वस्मिन् सर्वदावस्थानं प्रार्थयते मा श्रुतेन इति । श्रुतेन उक्तलक्षणेन मा वि राधिषि विराद्धो वियुक्तो मा भूवम् । सर्वदा वेदशास्त्रादिसहितो भूयासम् इत्यर्थः । राध साध संसिद्धौ । अस्मात् माङि लुङि व्यत्ययेन आत्मनेपदम् इडागमश्च ।

इति प्रथमकाण्डे प्रथमेनुवाके प्रथमं सूक्तम् ।

विद्मा शरस्येत्याद्यनुवाकशेषस्य उपाकर्मणि जपे विनियोगः । तथा च सूत्रम्— 'अभिजिति शिष्यानुपनीय' इत्युपाकर्म प्रक्रम्य 'त्रिषप्तीयं चै पच्छो वाचयेत् । शेषमनुवाकस्य जपन्ति' ( कौसू १३९,१-११ ) इति । तत्र 'विद्मा शरस्य' इति प्रथमेन सूक्तेन तस्मिन्नेव उपाकर्मणि आज्यहोमः कर्तव्यः । अपराजितगणे अस्य पठितत्वात् 'अभयैरपराजितैXXXआज्यं जुहुयात्' ( कौसू १३९,७ ) इत्यादिषु विनियोगः ।

एतेनैव संग्रामजयकर्माणि कुर्यात् । तानि च— आज्यहोमः, सक्तुहोमः, धनुरिध्मेऽग्नौ धनुःसमिदाधानम्, शरेध्मे शरसमिदाधानम्, संपातिताभिमन्त्रितधनुःप्रदानं च प्रत्येतव्यानि । एतेषु कर्मस्वनुष्ठितेषु संग्रामे दृष्टमात्रेण शत्रवः पलायन्ते । तद् उक्तं संहिताविधौ—" 'विद्मा शरस्य' ( अ १,२ ) 'मा नो विदन्' ( अ १,१९ ) 'अदारसृत्' (अ १,२० ) 'स्वस्तिदाः' (अ १,२१ ) 'अव मन्युः' (अ ६,६५) 'निर्हस्तः' (अ ६,६६ ) 'परि वर्त्मानि' ( अ ६,६७) 'अभिभूः' ( अ ६,९७ ) 'इन्द्रो जयाति' (अ ६,९८ ) 'अभि त्वेन्द्र' ( अ ६,९९ ) इति सांग्रामिकाणि । आज्यसक्तून् जुहोति" (कौसू १४,७;८) इत्यादि । अयमेव अपराजितगण इत्युच्यते । तथा अनेनैव सूक्तेन संपातयुक्ताभिमन्त्रितद्रुघ्न्यार्त्नीज्यापाशबन्धनं तद्वद्दूर्वादितृणबन्धनं च इषुनिवारणकामः कुर्यात् । सूत्रितं हि— 'प्रथमरयेषुपर्ययणानि' ( कौसू १४,१२ ) इत्यादि ।

तथा ज्वरातिसारातिमूत्रनाडीव्रणेषु तदुपशमनकामस्य अनेनैव सूक्तेन मुञ्जशिरोनिर्मितरज्जुबन्धनम्, क्षेत्रमृत्तिकाया वल्मीकमृत्तिकाया वा पायनम्, सर्पिर्लेपनम्, चर्मखल्वामुखेन अपानशिश्ननाडीव्रणमुखानां धमनं च कार्यम् । आह च सूत्रकारः— " 'विद्मा शरस्य' ( अ १,२ ) 'अदो यद्' ( अ २,३ ) इति मुञ्जशिरोरज्ज्वा बध्नाति ।' इत्यादि 'धमति" (कौसू २५,६-९ ) इत्यन्तम् 'अपराजितां विजयकामस्य' ( शांक १७,४ ) इति विहितायाम् अपराजिताख्यायां महाशान्तावपि अस्य विनियोगः । तद् उक्तं शान्तिकल्पे—

---

१. तु. Bl; च नास्ति शंपा. २. °द्रुघ्नीज्या° S', Kd. ३. तु. सम्र. चर्मदृति°; चमखल्वा S', Kd. ४. अपिधमति Bl.

'अपराजितगणोपराजितायाम्' ( शांक १८,५ ) इति ।

पुष्याभिषेकेपि एतत् सूक्तम् । तद् उक्तं परिशिष्टे —

"शर्मवर्मगणश्चैव[1] तथा स्याद् अपराजितः ।
आयुष्यश्चाभयश्चैव तथा स्वस्त्ययनो गणः ॥
एतान् पञ्च गणान् हुत्वा' (अप ५,३,५;४,१) इति ॥

विद्मा शरस्य पितरं पर्जन्यं भूरिधायसम् ।
विद्मो ष्वस्य मातरं पृथिवीं भूरिवर्पसम् ॥ १ ॥

विद्म । शरस्य । पितरम् । पर्जन्यम् । भूरिऽधायसम् ।
विद्मो इति । सु । अस्य । मातरम् । पृथिवीम् । भूरिऽवर्पसम् ॥ १ ॥

संग्रामजये शरस्यैव मुख्यसाधनत्वेन प्रसिद्धत्वात् तज्जयसामर्थ्यं विशिष्टकारणजन्यत्वेन उपपादयति — शरस्य हिंसकस्य बाणस्य शत्रुजयार्थं धनुषि संधीयमानस्य पितरम् उत्पादकं विद्म जानीमः । विद ज्ञाने । अस्मात् लटि 'विदो लटो वा' ( पा ३,४,८३ ) इति मसो मादेशः । अदादित्वात् शपो लुक् । प्रत्ययस्वरेण अन्तोदात्तत्वम् । 'तिङ्ङतिङः' ( पा ८,१,२८ ) इत्यत्र 'अनुदात्तं सर्वमपादादौ' ( पा ८,१,१८ ) इत्यधिकारात् अस्य च पादादित्वात् निघाताभावः । 'द्व्यचोतस्तिङः' ( पा ६,३,१३५ ) इति सांहितिको दीर्घः । किंसंज्ञकोऽयं पिता इत्याह—पर्जन्यमिति । तर्पयिता चासौ जन्यश्चेति पर्जन्यः । तृपेर्विन्वि आद्यन्तयोर्वर्णयोर्विपर्ययः । जनेभ्यो हितो जन्यः । कालेकाले प्रवर्षणेन तर्पयिता सन् जनानां हितकारी भवतीत्यर्थः । यद्वा काले प्रवर्षणार्थं रसान् प्रार्जयतीति पर्जन्यः । तथा च यास्कः—'पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः प्रार्जयिता वा रसानाम्' (या १०,१०) इति । तस्य सर्वस्माद् अतिशयम् आह — भूरिधायसं भूरि बहुलं दधाति प्रवर्षणेन कृत्स्नं जगत् पोषयतीति भूरिधायाः । यद्वा भूरीणि स्थावरजङ्गमात्मकानि वस्तूनि यथोचितकाले वृष्टिप्रदानेन दधाति धारयतीति भूरिधायाः । कारणस्य अतिशयितवीर्यत्वप्रतिपादनेन तज्जन्यस्यापि शरस्य अमोघवीर्यत्वम् उक्तं वेदितव्यम् । डुधाञ् धारणपोषणयोः । 'वहिहाधाञ्भ्यश्छन्दसि' (पाउ ४, २२१) इति कर्तरि असुन् । तत्र णिदित्यनुवृत्तेः 'आतो युक् चिण्कृतोः' (पा ७, ३,३३) इति युक् । असुनो नित्त्वात् तदन्तस्य आद्युदात्तत्वम् । समासेपि 'गतिकारकोपपदात्कृत्' (पा ६,२,१३९) इति कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते असुनि 'गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वं च' (पाउ ४,२२७) इति स्मरणात् पूर्वपदप्रकृतिस्वरत्वम् । तत्र 'अदिशदिभूशुभिभ्यः क्रिन्' (पाउ ४,६५) इति भूरिशब्दस्य क्रिन्प्रत्ययान्तत्वात् 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्त-

1. शर्मवर्मा गणा° Bl.　　२. वर्जं° S', Kd.

त्वम् । तथा अस्य शरस्य[1] मातरं जननीम् सु सुष्ठु विद्म [°द्म+उ]। उशब्दः एवकारार्थे। विशेषेण तदसाधारणरूपं जानीम एव। ताम् आह। पृथिवीं प्रथितां विस्तीर्णां भूमिम्। श्रूयते हि—'तत् पुष्करपर्णेऽप्रथयत्। यद् अप्रथयत् तत् पृथिव्यै पृथिवित्वम्' (तैब्रा १,१,३,७) इति। प्रथ विस्तारे। अस्मात् 'प्रथेः षिवन् संप्रसारणं च' (पाउ १,१५०) इति षिवन् प्रत्ययः। तत्संनियोगेन रेफस्य संप्रसारणम्। 'षिद्गौरादिभ्यश्च' (पा ४,१,४१) इति ङीष्। प्रत्ययस्वरेण अन्तोदात्तत्वम्। तां विशिनष्टि। भूरिवर्पसं भूरीणि बहुविधानि वर्पांसि, रूपनामैतत्, रूपाणि चराचरात्मकानि यस्यां सा तथोक्ता। जनन्याः सर्वरूपोपादानत्वात् कारणगुणानां कार्ये अनुगमदर्शनात् तज्जन्यः शरोपि नानाकारः सन् साधकाभिमतं फलं साधयितुं शक्नोतीत्यर्थः। 'वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुक् च' (पाउ ४,२०१) इति वृङोऽसुन् प्रत्ययः तत्संनियोगेन पुगागमश्च। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा ६,२,१) इति प्रकृतिस्वरत्वम्।

ननु अत्र शरादिशब्दानाम् अनित्यबाणाद्यर्थविशेषवाचकता[2] प्रतीयते। ततश्च[3] अस्य अर्थविशेषस्य अयं वाचकः शब्द इति पदार्थोत्पत्तिसमनन्तरं तद्वाचकं शब्दं निश्चित्य अनन्तरं पदस्य प्रयोक्तव्यत्वाद् वेदस्य पौरुषेयत्वेन अप्रामाण्यम् अनित्यत्वं च प्राप्नोतीति। नायं दोषः। शब्दानाम् अनित्यार्थवाचकत्वानभ्युपगमात्। तर्हि कोसौ वाच्योर्थः। आकृतिरिति वदामः। यद् असूत्रयत् जैमिनिः—'आकृतिस्तु क्रियार्थत्वात्' (मीसू १,३,३३) इति। तथाहि, व्रीहीन् अवहन्ति, पशुम् आलभेत, गाम् आनय, ब्राह्मणो न हन्तव्यः इत्यादिप्रयोगेषु किं व्यक्तिः शब्दार्थः उत आकृतिरिति। व्यक्तिरिति तावत् प्राप्तम्। कुतः। अवहननादिक्रियाभिः व्यक्तेरन्वेतुं योग्यत्वात्। न हि आकृतिः अवहन्तुम् आलब्धुम् आनेतुम् हन्तुं वा योग्या। ननु आनन्त्यव्यभिचाराभ्यां न व्यक्तौ व्युत्पत्तिः संभवति। अनन्ता हि गोव्यक्तयः। अतीतानागतानाम् अनेकदेशवर्तिनां गवाम् इयत्ताया अभावात्। किं च शुक्लव्यक्तौ व्युत्पन्नो गोशब्दः कृष्णव्यक्तौ प्रयुज्यमानः स्वार्थं व्यभिचरेत्। तत्र कथं व्युत्पत्तिरिति चेत्, एवं तर्हि व्युत्पत्तिकाले सा व्यक्तिः आकृत्या उपलक्ष्यताम् इति प्राप्ते ब्रूमः—अन्वयव्यतिरेकाभ्याम् आकृतेः शक्तिग्रहणनिमित्तत्वात् शब्दार्थत्वं तस्या एवोचितम्। किंच गोशब्दे उच्चरिते व्यक्तिवादिनः संशयो भवेत्। तस्माद् आकृतेरेव अभिधेयत्वम्। यदि आकृतौ अवहननादिक्रिया न पर्यवस्येत् तर्हि व्यक्तिस्तत्रोपलक्षणीया। किंच 'श्येनचितं चिन्वीत' (तै ५,४,११,१) इत्यादौ आकृतेरेव सादृश्यप्रतियोगितया कार्यान्वयो दृश्यते। तस्माद् आकृतिः शब्दार्थः। एवं प्रकृतेपि शरादिशब्दानां नित्य एव आकृतिलक्षणोर्थो वाच्यः। ततः शब्दार्थतत्संबन्धानां नित्यत्वेन अपौरुषेयत्वात् पुरुषबुद्धिप्रभवदोषानुप्रवेशाभावेन वेदानां स्वतःसिद्धं प्रामाण्यं पुरुषप्रयत्नानिर्वर्त्यत्वेन नित्यत्वं चेति।

१. शरीरस्य S', Kd. २. अनित्यबा° S', Kd. ३. ततश्च S', Kd.

ज्या॑के॒ परि॑ णो न॒माश्मा॑नं त॒न्वं॑ कृधि ।
वी॒डुर्वरी॑योऽरा॑ती॒रप॒ द्वेषां॒स्या कृ॑धि ॥ २ ॥

ज्या॑के । परि॑ । नः॒ । न॒म॒ । अश्मा॑नम् । त॒न्व॑म् । कृ॒धि॒ ।
वी॒डुः । वरी॑यः । अरा॑तीः । अप॑ । द्वेषां॑सि । आ । कृ॒धि॒ ॥ २ ॥

हे ज्याके। कुत्सिता ज्या ज्याका। 'कुत्सिते' (पा ५,३,७४) इति कुत्सायां कप्रत्ययः। स्वस्य उपद्रवहेतुत्वात् ज्यां कुत्सितत्वेन निर्दिशति। यद्वा अज्ञाता ज्या ज्याका। अज्ञातार्थे कप्रत्ययः। शत्रुहस्तगतत्वेन तस्या अज्ञातत्वम्। 'आमन्त्रितस्य च' (पा ६,१,१९८) इति षाष्ठिकम् आद्युदात्तत्वम्। हे ईदृशि मौर्वि नः अस्मान् परि णम परिहृत्य प्रह्वीभव। आज्यलक्तुहोमादिभिः इन्द्रप्रसादविशिष्टे मयि त्वदीयस्य शरसंधानार्थं नमनस्य निष्फलत्वात् मां विहाय अन्यत्र शरं प्रेरयेत्यर्थः। अस्य सूक्तस्य इन्द्रदेवताकत्वात् जयकर्मणः इन्द्रायत्तत्वाच्च अत्र अश्रुतोपि इन्द्र एव संबोध्यः। हे इन्द्र तन्वं तनुम्। 'तन्वादीनां छन्दसि बहुलम्' (पावा ६,४,८६) इति यण्। 'उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य' (पा ८,२,४) इति विभक्तेः स्वरितत्वम्। अस्माकं शरीरम् अश्मानम् अश्मवद् दृढावयवं शस्त्राभेद्यं कृधि कुरु।

यद्यपि अत्र सामानाधिकरण्येन शरीरस्य अश्मकरणप्रार्थना प्रतीयते तथापि षाट्कौशिकस्य शरीरस्य अत्यन्तविरुद्धपाषाणात्मकत्वानुपपत्त्या 'यजमानः प्रस्तरः' (ऐब्रा २,३) इतिवत् तत्संबद्धगुणलक्षणा आश्रीयते। तथाहि— 'यजमानः प्रस्तरः' इत्यस्मिन् वाक्ये उद्भिदा यागेन इतिवत् सामानधिकरण्याद् अन्यतरस्य अन्यत् नाम इत्येकः पूर्वः पक्षः। गुणविधिरेष इत्यपरः। तत्रापि यजमानकार्ये जपादौ प्रस्तरस्य अचेतनस्य सामर्थ्याभावात् प्रस्तरकार्ये तु स्रुग्धारणादौ यजमानस्य शक्तत्वात् यजमानरूपो गुणो विधीयते। एवं सति पश्चाच्छ्रुतस्य प्रस्तरशब्दस्य कार्यलक्षकत्वेपि प्रथमश्रुतो यजमानशब्दो मुख्यवृत्तिर्भविष्यति। न चात्र 'पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये' (मीसू १,४,१७) इति द्वादशकपालन्यायेन स्तुतिः संभवति। अष्टाकपालद्वादशकपालयोरिव प्रस्तरयजमानयोः अंशांशित्वानुपपत्तेः। तस्माद् नामगुणयोरन्यतरत्वम् इति प्राप्ते अभिधीयते— उद्भिदादिशब्दानां हि अप्रसिद्धार्थत्वाद् यजिसामानाधिकरण्येन नामत्वं निर्णीतम्। अत्र तु गोमाहिषयोरिव यजमानप्रस्तरशब्दयोः अर्थभेदस्य अत्यन्तप्रसिद्धत्वात् नामत्वं न युक्तम्। गुणविधिपक्षे

१. A, B, Bh, D, R, Sm, P, P², J शंपा., सात., RW यान ( <जि-ज्या [सं१ यणादेशे स्वरिते] इति WI. प्रभृ.)। K,S,V, सा. ज्याका->[सं१] ज्याके। २. वीडु सा. ३. मुख्याद्° S', Kd. ४. अपूर्व° S', Kd. ५. °न्तो विधा° शंपा. ६. °विषयपक्षे S', Kd.

तु सूक्तवाकेन प्रस्तरं प्रहरति इत्यत्रौ प्रहरणस्यापि प्रस्तरकार्यत्वाद् यजमाने प्रहृते सति कर्मलोपः स्यात् । तस्माद् विधेयः प्रस्तरो यजमानशब्देन स्तूयते। यथा सिंहो देवदत्त इत्यत्र सिंहगुणेन शौर्यादिना उपेतो देवदत्तः सिंहशब्देन स्तूयते तथा यजमानः प्रस्तर इत्यत्रापि यजमानगुणेन यागसाधकत्वेन युक्तः प्रस्तरो यजमानशब्देन लक्षणया प्रतिपाद्यते । एवं प्रकृते अश्मशब्दोपि स्वार्थसहचरितान् दृढावयवत्वशस्त्राभेद्यत्वादिगुणान् लक्षयित्वा प्रार्थ्यमानतद्गुणयोगिनि शरीरे वर्तत इति बोद्धव्यम् । मयि त्वदीयं निरवधिकम् अनुग्रहम् अजानानः शत्रुर्माम् उद्दिश्य यद्यपि शरं प्रहिणुयात् तथापि स शरः अस्मच्छरीरं यथा न विदारयति तथा कुर्वित्यर्थः । डुकृञ् करणे । अस्माल्लोटि 'बहुलं छन्दसि' (पा २,४,७३ ) इति विकरणस्य लुक् । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' ( पा ६,४,१०२ ) इति हेर्धिरादेशः । तस्य अपित्त्वेन गुणाभावः ।

किंच हे इन्द्र वीडुः सेनायाः संस्तम्भकस्त्वम् । 'वीळयतिश्च व्रीळयतिश्च संस्तम्भकर्माणौ' (या ५,१६) इति हि यास्कः । अरातीः अरातीन् अस्मच्छत्रून् द्वेषांसि । द्विष अप्रीतौ । भावे असुन् । तत्कृतान्यप्रियाणि च वरीयः । क्रियाविशेषणम् एतत् । उरुतरम् अपा कृधि अपाकुरु अपगमय । यथा पुनःपुनरागत्य अस्मान् नापकुर्वन्ति तथा प्रक्षीणबलान् कुर्वित्यर्थः । वरीय इति । उरुशब्दात् ईयसुनि 'प्रियस्थिर' (पा ६,४,१५७) इत्यादिना उरुशब्दस्य वरादेशः । क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं च इति नपुंसकलिङ्गता । अरातीरिति । रा दाने । 'क्तिच्क्तौ च संज्ञायाम्' (पा ३,३, १७४) इति क्तिच्प्रत्ययः । न रातयः अरातयः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'तस्माच्छसो नः पुंसि' (पा ६,१,१०३) इति नत्वाभावश्छान्दसः ।

वृक्षं यद्गावः परिषस्वजाना अनुस्फुरं शरमर्चन्त्यृभुम् ।
शरुमस्मद्यावय दिद्युमिन्द्र ॥ ३ ॥

वृक्षम् । यत् । गावः । परिऽसस्वजानाः । अनुऽस्फुरम् । शरम् । अर्चन्ति । ऋभुम् ।
शरुम् । अस्मत् । यवय । दिद्युम् । इन्द्र ॥ ३ ॥

वृक्षम् । विकारे प्रकृतिशब्दः । वृक्षविकारं धनुर्दण्डम् । वृश्च्यत इति वृक्षः । ओव्रश्चू छेदने इत्यस्मात् 'स्नुव्रश्चिकृत्यृ' (पाउ ३,६६ ) इत्यादिना क्सप्रत्ययः । कित्त्वात् 'ग्रहिज्या' (पा ६,१,१६ )इत्यादिना संप्रसारणम् । 'स्कोः संयोगाद्योः' ( पा ८,२,२९ ) इति उपधासकारलोपः । 'व्रश्चभ्रस्ज' (पा ८,२,३६ ) इत्यादिना षत्वे 'षढोः कः सि' (पा ८,२,४१)

---

१. तथा S', Kd. २. 'शब्देन शब्देन S', Kd. ३. पृ४३ टि२ द्र.
४. °स्फरं A; °स्पुरं; B^h,K,D. स्फरम् सात. ।

इति कत्वम्। गावः। गोविकारत्वात् वा गमयति इषूनिति वा गावो मौर्व्यः। आद्ये तद्धितस्य लुक्। तद् उक्तं यास्केन — 'ज्यापि गौरुच्यते गव्या चेत् ताद्धितम् अथ चेन्न गव्या गमयतीषूनिति। वृक्षेवृक्षे नियता मीमयद्गौः ×××। वृक्षेवृक्षे धनुषिधनुषि' (या २,६) इति। परिषस्वजानाः धनुर्दण्डम् आश्लिष्य धनुष्कोटौ आरोपिताः सत्यः इत्यर्थः। ष्वञ्ज परिष्वङ्गे। अस्मात् 'छन्दसि लिट्' (पा ३,२,१०५) इति लिट्। 'लिटः कानज्वा' (पा ३,२,१०६) इति कानजादेशः। उपधानकारलोपे द्विर्वचनम्। 'चितः' (पा ६,१, १६३) इत्यन्तोदात्तत्वम्। अत्र परिष्वङ्गकथनेन स्त्रीपुंसयोरिव ज्याधनुर्दण्डयोरपि अन्योन्यसंसक्तयोरेव यथोचितकार्यकरत्वं सूचितम् इति मन्तव्यम्। ईदृशी ज्या यद् यदा अनुस्फुरं प्रतिस्फुरणम्। स्फुर संचलने। अस्माद् 'घमर्थे कविधानम् स्थास्नापाव्यधिहनियुध्यर्थम्' (पावा ३,३,५८) इति परिगणनस्य उपलक्षणार्थत्वात् कप्रत्ययः। ऋभुम् उरु भासमानम्। शाणोल्लीढत्वात् निशितमित्यर्थः। ईदृशं शरुं हिंसकं शरम् अर्चन्ति। अर्चतिः अत्र गतिकर्मा। अस्मान् अभिलक्ष्य प्रेरयन्ति। शॄ हिंसायाम्। 'शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (पाउ १,१०) इति उप्रत्ययः। तदा हे इन्द्र अस्माभिर्दत्तेन हविषा प्रीतस्त्वं दिद्युं द्योतमानं शरुं शरम् अस्मन्निकटम् उपसर्पन्तम् अस्मत् अस्मत्तः सकाशात् यावय पृथक् कुरु। यथा स शरो मां न स्पृशति तथा अन्यत्र अपसारयेत्यर्थः॥ यद्वा शरुं हिंसकम्। दिद्युम् वज्रनामैतत्। वज्रवद्भासमानं शस्त्रजातम्। अन्यत् पूर्ववत्। यावयेति। यु मिश्रणामिश्रणयोः। अस्मात् णिचि वृद्धिः। पकारान्तु संज्ञापूर्वको विधिरनित्यः इति वृद्धेरनित्यत्वाद् यवयेति पदं छिन्दन्ति। दिद्युमिति। द्युत दीप्तौ। अस्माद् 'द्युतिगमिजुहोतीनां द्वे चेति वक्तव्यम्' (पावा ३,२,१७८) इति क्विप् प्रत्ययः। तत्संनियोगेन द्विर्वचनम्। 'द्युतिस्वाप्योः संप्रसारणम्' (पा ७,४,६७) इति अभ्यासस्य संप्रसारणम्। अन्त्यलोपश्छान्दसः। इन्द्रेति। इदि परमैश्वर्ये। 'ऋज्रेन्द्राग्रवज्रविप्र (पाउ २, २८) इत्यादिना इन्द्रशब्दो रन्प्रत्ययान्तो निपातितः। नित्त्वाद् आद्युदात्तत्वे प्राप्ते आमन्त्रितत्वाद् आष्टमिकं सर्वानुदात्तत्वम्। यास्कस्तु बहुधा इन्द्रशब्दं निरबोचत्—'इन्द्र इरां दृणातीति वा, इरां ददातीति वा, इरां दधातीति वा, इरां दारयत इति वा, इरां धारयत इति वा, इन्दवे द्रवत इति वा, इन्दौ रमत इति वा, इन्धे भूतानीति वा। तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते। इदंकरणादित्याग्रायणः। इदंदर्शनादित्यौपमन्यवः। इन्दतेर्वा ऐश्वर्यकर्मणः'। (या १०,८) इत्यादि। यद्वा वृक्षं बहुच्छायं वटादिकं गावः निदाघपीडिताः पशवः यद् यथा आश्रियन्ति तथा तत्तदुचितजीविकाप्रदानेन उपकारकं शत्रुं परिषस्वजानाः परितः सेवमानाः तदीया भटाः अनुस्फुरं स्वामिनः हस्तनेत्रादिव्यापारमात्रम् अनुलक्ष्य। शरुम् अर्चन्ति इत्यादि पूर्ववत्।

यथा द्यां च पृथिवीं चान्तस्तिष्ठति तेजनम्।
एवा रोगं चास्रावं चान्तस्तिष्ठतु मुञ्ज इत्॥ ४॥

१. शिटीति S', Kd. २. सं° नास्ति S', Kd. ३. धारयतीति S', Kd. ४. दारयत इति ख.। ५. धारयत इति ख.। ६. द्रवति इति ख।

यथा । द्याम् । च । पृथिवीम् । च । अन्तः । तिष्ठति । तेजनम् ।

एव । रोगम् । च । आऽस्रावम् । च । अन्तः । तिष्ठतु । मुञ्जः । इत् ॥ ४ ॥

यथा येन प्रकारेण द्यां दिवम् आकाशं पृथिवीं भुवम् । परस्परसमुच्चयार्थौ चकारौ। उभयत्रापि व्यत्ययेन द्वितीया। दिवश्च पृथिव्याश्च अन्तः मध्ये अवस्थितं तेजनम् तेजनो वेणुः। लिङ्गव्यत्ययः। वेणुमस्करतेजना इत्यभिधानात्। तिष्ठति स्वकीयेन औन्नत्येन ते उभे अपि अधःकृत्य वर्तते एव एवम्। अन्त्यलोपश्छान्दसः। 'निपातस्य च' (पा ६,३,१३६) इति सांहितिको दीर्घः। रोगं रुज्यते भज्यते पुरुषः अनेनेति रोगः ज्वरातीसारादिरूपः। 'हलश्च' (पा ३,३,१२१) इति करणे घञ्। 'चजोः कु घिण्यतोः' (पा ७,३,५२) इति कुत्वम्। 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इत्याद्युदात्तः। तम् आस्रावम्। आ समन्तात् स्रवति अङ्गप्रत्यङ्गेभ्य इत्यास्रावो मूत्रातीसारः। स्रु गतौ इत्यस्माद् आङ्पूर्वात् 'श्याद्व्यधास्रुसंस्रु०' (पा ३,१,१४१) इति णप्रत्ययः। 'अचो ञ्णिति' (७,२,११५) इति वृद्धिः। पूर्ववत् षष्ठ्यर्थे द्वितीया। अत्रापि परस्परसमुच्चयार्थौ चकारौ। ज्वरातीसारादिरोगस्य आस्रावस्य च अन्तः मध्ये मुञ्जः इत् मुञ्जः एव। मुञ्जेषीकानिर्मिता रज्जुरित्यर्थः। तिष्ठतु तौ उभावपि रोगौ अधःकृत्य वर्ततामित्यर्थः। यद्यपि अत्र रोगशब्देन व्याधिसामान्यवाचिना आस्रावोपि गृहीतः तथापि एतन्मन्त्रसाध्या क्रिया आस्रावस्य विशेषतो निवर्तिकेति दर्शयितुम् आस्रावस्य पृथगभिधानम्।

इति प्रथमकाण्डे प्रथमेनुवाके द्वितीयं सूक्तम्।

विद्मा शरस्य इति तृतीयसूक्तेन मूत्रपुरीषनिरोधे प्रमेहणसाधनहरीतकीकर्पूरबन्धनम्, मूषिकामृत्तिकापूतीकतृणदधिमथितजरत्प्रमन्दद्दारुतक्षणशकलानाम् अन्यतमस्य पायनम्, हस्त्यश्वादियानारोहणम्, शरविसर्जनम्, शरेण मूत्रनालविदारणम्, लोहशकलस्य मूत्रद्वारं प्रवेशनम् इत्येवमादीन्यपि सूत्रोक्तप्रकारेण व्याधितस्य कुर्यात्। 'विषितं ते वस्तिबिलम्' इति द्व्यृचेन मूषिकामृत्तिकाद्युक्तद्रव्येषु निरुद्धमूत्रपुरीषं पुरुषम् आस्थापयेत्। "'विद्मा शरस्य' इति प्रमेहणं बध्नाति इत्यादि फाण्टं पाययति इति[1]। उद्यावर्तिने च'" (कौसू २५,१०-१९) इत्येतदन्तं सूत्रं द्रष्टव्यम्

विद्मा[1] शरस्य पितरं पर्जन्यं शतवृष्ण्यम् ।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे[4] अस्तु बालिति ॥ १ ॥

विद्म । शरस्य । पितरम् । पर्जन्यम् शतऽवृष्ण्यम् ।
तेन । ते । तन्वे । शम् । करम् । पृथिव्याम् । ते । निऽसेचनम् । बहिः ।
ते । अस्तु । बाल् । इति ॥ १ ॥

शरस्य हिंसकस्य बाणस्य पितरं पालकम् उत्पादकं वा विद्म यथावज्जानीमः। कीदृशम्। शतवृष्ण्यम् अपरिमितवीर्योपेतम्। विचित्रस्य तरुगुल्मादिरूपस्य

१. विद्मा S', Kd. २. इति नास्ति Bl. ३. वर्तते S', Kd. ४. बहिस्ते ते ३,३,१०,२

स्थावरस्य पशुमृगनरादिरूपस्य जङ्गमस्य च उत्पादने पोषणे च समर्थम् इत्यर्थः। ईदृशं पर्जन्यं वृष्टिप्रदं देवम्। पितृत्वेन जानीम इति पूर्वेण संबन्धः। वर्षतीति वृषा। वृष सेचने। 'कनिन् युवृषितक्षि' (पाउ १,१५६) इत्यादिना कनिन् प्रत्ययः। वृष्णि भवं वृष्ण्यम्। 'भवे छन्दसि' (पा ४,४.११०) इति यत्। 'अल्लोपोऽनः' (पा ६,४,१३४) इत्युपधालोपः। 'ये चाभावकर्मणोः' (पा ६,४,१६८) इति प्रकृतिभावस्तु व्यत्ययेन न प्रवर्तते। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। तेन उक्तलक्षणेन शरेण। 'अन्येषामपि दृश्यते' (पा ६,३,१३७) इति सांहितिको दीर्घः। हे मूत्रनिरोधादिव्याधिग्रस्त ते तव तन्वे। आडभावश्छान्दसः। षष्ठ्यर्थे चतुर्थी। तनुशब्दात् 'ऊङ् उतः' (पा ४, १,६६) इत्यूङ्। 'उदात्तयणो हल्पूर्वात्' (पा ६,१,१७४) इति विभक्त्युदात्तत्वस्य 'नोङ्धात्वोः' (पा ६,१,१७५) इति प्रतिषेधे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा ८,२,४) इति विभक्तिः स्वर्यते। तन्वाः शरीरस्य शं रोगाणाम् उपशमनम्। आह च यास्कः — 'शमनं च रोगाणां यावनं च भयानाम्' (या ४,२१) इति। करं करोमि। शमिति। शमु उपशमने। अस्मात् भावे विच्। करम्। डुकृञ् करणे 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति वर्तमाने लुङ्। 'कृमृदृरुहिभ्यश्छन्दसि' (पा ३,१,५९) इति च्लेरङादेशः। 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा ६,४,७५) इति अडभावः। 'आशंसायां भूतवच्च' (पा ३, ३,१३२) इति प्रार्थनायां वा लुङ्। शमनप्रकारमेव दर्शयति ते तव मूत्ररोगार्तस्य पृथिव्यां भूमौ। पृथिवीशब्दो ङीषन्तः अन्तोदात्तः। 'उदात्तयणो हल्पूर्वात्' (पा ६,१,१७४) इति विभक्तेरुदात्तत्वम्। निषेचनं नितरां सेकः प्रस्रावः। अस्त्विति संबन्धः। निपूर्वात् सिञ्चतेर्भावे ल्युट्। 'उपसर्गात्सुनोति'(पा ८,३,६५) इत्यादिना षत्वम्। 'लिति' (पा ६,१,१९३) इति प्रत्ययात् पूर्वस्य उदात्तत्वम्। समासेपि कृदुत्तरपदप्रकृतिस्वरत्वेन स एव अवशिष्यते। निषेचनप्रकारम् आह — ते तव शरीरान्तर्निरुद्धं मूत्रं बाल्। अनुकरणशब्दोयम्। इति अनेन प्रकारेण शब्दं कुर्वत् बहिरस्तु बाह्यप्रदेशे भवतु। मन्त्रसामर्थ्याद् विविधं शब्दं कुर्वत् त्वरया शरीरात् निर्गच्छतु इत्यर्थः। यद्वा बाल्। बल प्राणने। अस्मात् ण्यन्तात् क्विप्। इतिर्हेतौ। अस्य रोगार्तस्य जीवनहेतोः मूत्रं बहिरस्त्विति।

विद्म शरस्यं पितरं मित्रं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति॥ २॥

विद्म। शरस्यं। पितरम्। मित्रम्। शतऽवृष्ण्यम्।
तेनं। ते। तन्वे। शम्। करम्। पृथिव्याम्। ते। निऽसेचनम्। बहिः। ते।
अस्तु। बाल्। इति॥ २॥

१. भवो S', Kd.　　२. कुर्वन् S', Kd.

अहरभिमानी देवो मित्रः। स च सर्वेषां प्राणिनां हि मित्रवत् हितकारित्वात् मित्र इत्युच्यते। तैत्तिरीयके मित्रस्य वाक्यम्—'सर्वस्य वा अहं मित्रमस्मि' (तै ६,४,८,१) इति। यास्कस्तु अन्यथा निरवोचत्—'मित्रः प्रमीतेस्त्रायते' (या १०,२१,) इति। सोपि वृष्टिहेतुत्वेन शरस्य उत्पादयितृत्वात् पितृत्वेन व्यपदिश्यते। श्रूयते हि—'मैत्रं वा अहः। वारुणी रात्रिः' (तैब्रा १,७,१०,१;२)। 'अहोरात्राभ्यां खलु वै पर्जन्यो वर्षति मित्रावरुणावेव स्वेन भागधेयेनोपधावति तावेवास्मा अहोरात्राभ्यां पर्जन्यं वर्षयतः' (तै २,४,१०,२) इति। शेषं पूर्ववद् योज्यम्।

विद्मा शरस्यं पितरं वरुणं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥ ३ ॥

विद्म। शरस्यं। पितरम्। वरुणम्। शतऽवृष्ण्यम्।
तेन। ते। तन्वे। शम्। करम्। पृथिव्याम्। ते। निऽसेचनम्। बहिः। ते।
अस्तु। बाल्। इति ॥ ३ ॥

वरुणो राज्यभिमानी देवः। वृणोति तमसा पाशैर्वा प्राणिजातम् इति वरुणः 'वरुणो वृणोतीति सतः' (या १०,३) इति यास्कः। वृञ् वरणे इत्यस्मात् 'कृवृदारिभ्य उनन्' (पाउ ३,५३) इति उनन् प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तः। शेषं पूर्ववद् व्याख्येयम्।

विद्मा शरस्यं पितरं चन्द्रं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥ ४ ॥

विद्म। शरस्यं। पितरम। चन्द्रम्। शतऽवृष्ण्यम्।
तेन। ते। तन्वे। शम्। करम्। पृथिव्याम्। ते। निऽसेचनम्। बहिः।
ते। अस्तु। बाल्। इति ॥ ४ ॥

चन्द्रः। चदि आह्लादने। 'स्फायितञ्चि' (पाउ २,१३) इत्यादिना रक् प्रत्ययः आह्लादकारी देवः। आह च यास्कः—'चन्द्रश्चन्दतेः कान्तिकर्मणः' (या ११,५) इति। अस्य ओषधीशत्वात् शरस्य पितृत्वेन व्यपदेशः।

विद्मा शरस्यं पितरं सूर्यं शतवृष्ण्यम्।
तेना ते तन्वे३ शं करं पृथिव्यां ते निषेचनं बहिष्टे अस्तु बालिति ॥ ५ ॥

विद्म। शरस्यं। पितरम्। सूर्यम्। शतऽवृष्ण्यम्।

तेन॑ । ते॒ । त॒न्वे॑ । शम् । क॒रम् । पृ॒थि॒व्याम् । ते॒ । नि॒ऽसेच॑नम् । ब॒हिः ।
ते॒ । अ॒स्तु॒ । बाल् । इति॑ ॥ ५ ॥

सूर्यः । सरति गच्छतीति वा सुवति प्रेरयति तत्तद्व्यापारेषु कृत्स्नं जगद् इति वा सूर्यः । यद्वा सुष्ठु ईर्यते प्रकाशप्रवर्षणादिव्यापारेषु जगद्विधात्रा परमेश्वरेण प्रेर्यत इति सूर्यः । श्रूयते हि —'भीषास्माद् वातः पवते भीषोदेति सूर्यः' (तैउ २,८) इति । तद् एतत् सर्वं यास्केनोक्तम्—'सूर्यः सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वा' (या १२,१४) इति । अथ वा शोभनं वीर्यम् अस्येति सूर्यः । तथा च तैत्तिरीयकम्—'सुवीर्योमर्या यथा गोपायत इति । तत् सूर्यस्य सूर्यत्वम्' (तैब्रा २,२,१०,८) इति । पाणिनिना तु 'राजसूयसूर्य' (पा ३,१,११४) इत्यादिना क्यबन्तो निपातितः । क्यपः पित्त्वाद् अनुदात्तत्वे धातुस्वरेण आद्युदात्तत्वम् । अयमपि वृष्टिद्वारा सर्वेषां पोषकत्वात् पिता । श्रूयते हि — 'यदा खलु वा असावादित्यो न्यङ्रश्मिभिः पर्यावर्ततेऽथ वर्षति'(तै २,४,१०,२) इति ।

अनेन सूक्तेन क्रियमाणेषु कर्मसु पर्जन्यमित्रादयो देवतात्वेन मन्त्रवर्णाद् अवगन्तव्याः । यदाह —

'तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वेष्यते ।
देवतासंगतिस्तत्र दुर्बलं तु परं परम् ॥' इति ।

यदि इह कर्मसु विनियुज्यमाना मन्त्रा उच्चारणमात्रेण अदृष्टजनकाः स्युः तदा अनुष्ठेयार्थपरत्वाभावाद् देवतानाम् असिद्धिर्भवेत् । न च तथा । मन्त्राणाम् अनुष्ठेयार्थप्रकाशकत्वस्य प्रमाणलक्षणे 'तदर्थशास्त्रात्' (मीमा १,२,३१) इत्यधिकरणे निर्णीतत्वात् । तथाहि—'उरु प्रथस्व' (तै १,१,८,१) इत्यादिमन्त्रोच्चारणस्य किम् अदृष्टं प्रयोजनम् उत अनुष्ठेयार्थप्रतिपत्तिरिति । अदृष्टमेवेति तावत् प्राप्तम् न तु प्रथनादिलक्षणस्यार्थस्य अवगतिः । तस्य ब्राह्मणवाक्येनापि भासमानत्वात् । 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति हि ब्राह्मणवाक्यम् । नैतद् युक्तम् । अर्थप्रत्यायनस्य दृष्टप्रयोजनस्य संभवे सति केवलादृष्टस्य कल्पयितुम् अशक्यत्वात् । तस्माद् दृष्टम् अर्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम् । ब्राह्मणवाक्येनापि अर्थानुस्मरणसंभवे मन्त्रेणैव अनुस्मरणीयम् इति यो नियमः तस्य दृष्टासंभवाद् अदृष्टं प्रयोजनम् अस्तु । यदाहुः —

'मन्त्रा उरु प्रथस्वेति किम् अदृष्टैकहेतवः ।
यागस्मृत पुरोडाशप्रथनाद्यवभासकाः ॥

१. पर्यावर्तते स्व S', Kd.　२ वदिह S', Kd.　३ °रस्वामा° S', Kd.　४. °मादेरच मा° मीन्या.

ब्राह्मणेनापि तद्ब्रानान्मन्त्राः पुण्यैकहेतवः ।
न तद्ब्रानस्य दृष्टत्वाद् दृष्टं वरम् अदृष्टतः ॥' (मीन्या १,२,११:१२) इति ।

**यदान्त्रेषु गवीन्योर्यद्वस्तावधि संश्रितम्[1] ।**
**एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ ६ ॥**

यत् । आन्त्रेषु । गवीन्योः । यत् । वस्तौ । अधि । सम्ऽश्रितम् ।
एव । ते । मूत्रम् । मुच्यताम् । बहिः । बाल् । इति । सर्वकम् ॥ ६ ॥

आन्त्रेषु उदरान्तर्गतेषु पुरीतत्सु । अधिः सप्तम्यर्थानुवादी । यत् मूत्रं संश्रितं समवस्थितं रोगवशाद् यथाकालं बहिरनिर्गच्छत् निरुद्धम् अभूत् तथा गवीन्योः । आन्त्रेभ्यो विनिर्गतस्य मूत्रस्य मूत्राशयप्रापिसाधने पार्श्वद्वयस्थे नाड्यौ गवीन्यौ इत्युच्यते । तयोरपि यत् मूत्रं संश्रितम् तथा वस्तौ । धनुराकारो मूत्राशयो वस्तिरुच्यते । तत्रापि यद् मूत्रं संश्रितम् अस्ति ते तव उक्तस्थानेषु निरुद्धं तत् मूत्रम् एव एवम् । अन्त्यलोपश्छान्दसः । 'निपातस्य च' (पा ६,३,१३६) इति सांहितिको दीर्घः । 'एवमादीनामन्तः' (फि ४,१४) इत्यन्तोदात्तत्वम् । यथापूर्वं मुच्यतां निर्गच्छतु । निर्गमनप्रकारमेव आह । सर्वकं सर्वं तत् मूत्रम् । 'अव्ययसर्वनाम्नाम् अकच् प्राक् टेः' (पा ५,३,७१) इति अकच् । 'चितः सप्रकृतेर्बह्वकजर्थम्' (पावा ६,१,१६३) इति सप्रकृतिकस्य प्रत्ययस्य 'चितः' (पा ६,१,१६३) इत्यन्तोदात्तता । तत् मूत्रं बाल् । अनुकरणशब्दोयम् । इति एवमात्मकं शब्दं कुर्वद् बहिः शरीराद् बाह्यप्रदेशे मुच्यताम् इति संबन्धः ।

**प्र ते भिनद्मि मेहनं वर्त्रं[2] वेशन्त्या इव ।**
**एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ ७ ॥**

प्र । ते । भिनद्मि । मेहनम् । वर्त्रम् । वेशन्त्याःऽइव ।
एव । ते । मूत्रम् । मुच्यताम् । बहिः । बाल् । इति । सर्वकम् ॥ ७ ॥

हे मूत्रव्याधिपीडित ते तव मेहनम् । मिहति सिञ्चति अनेनेति मेहनम् मूत्रनालः । करणे ल्युट् । 'लिति' (पा ६,१,१९३) इति प्रत्ययात् पूर्वस्य उदात्तः । तत् मेहनं प्र भिनद्मि लोहशलाकया मूत्रनिर्गमनार्थं विदारयामि । 'व्यवहिताश्च' (पा १,४,८२) इति प्रोपसर्गस्य क्रियापदेन संबन्धः । तत्र दृष्टान्तः — वर्त्रम्[3] । वर्तते प्रवहति जलम्

१ तु. सा, (तात्पर्यतः) Bl (मूको.), B[h],K,V; वैतु. (मूको) A,B,D,S,J,P अनु शंपा. सात. संश्रुतम्; R. *संश्रुतम् इति च । संसृष्टम् (= संश्लिष्टम्)> नैप्र. यनि. इति तु तत्त्वम् । २. मात्रिकं S', Kd. ३. B[h],K,V वर्त्तं तु A,D,R, R[w],S[m],J,P[2] शंपा, Wh, Bl, सात. वा ; वैतु. B. वृत्रम्; सा., वर्तम्; कौसू (२५,१६) वर्तिम्. ४. बन्त्यः (मूको) यथा पै.

अत्रेति वर्तो मार्गः। वृतु वर्तने। अस्माद् अधिकरणे घञ्। ते वेशन्त्या इव। विशन्ति तिष्ठन्ति अस्मिन् आप इति वेशन्तः पल्वलम्। विश प्रवेशने। 'जृविशिभ्यां झच्' (पाउ ३,१२६) इति झच् प्रत्ययः। 'झोन्तः' (पा ७,१,३) इति झस्यान्तादेशः। तत्र भवा आपो वेशन्त्याः। 'भव छन्दसि' (पा ४,४,११०) इति यत्। ता यथा सुनिर्गमनमार्गं विदारयन्ति तथेत्यर्थः। एव एवम् इत्थं [1]निरुद्धमूत्रनिःसरणाय मार्गस्य कृतत्वात्। ते मूत्रं मुच्यताम् इत्यादि पूर्ववद् व्याख्येयम्।

विषितं ते वस्तिबिलं समुद्रस्योदधेरिव।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ ८॥

विऽसितम्। ते। वस्तिऽबिलम्। समुद्रस्य। उदधेःऽइव।
एव। ते। मूत्रम्। मुच्यताम्। बहिः। बाल्। इति। सर्वकम् ॥ ८॥

हे मूत्ररोगार्त ते तव वस्तिबिलं वस्तिद्वारं व्याधिवशात् निरुद्धं मूत्रवर्त्म विषितं विमुक्तं मूत्र[2]निःसरणयोग्यम् अस्तु। षो अन्तकर्मणि। अस्माद् विपूर्वात् निष्ठा। 'द्यतिस्यतिमास्थामित्ति किति' (पा ७,४,४०) इति इत्वम्। 'उपसर्गात् सुनोति' (पा ८,३,६५) इत्यादिना षत्वम्। तत्र दृष्टान्तः — समुद्रस्य। समुनत्ति स्वकीयेन जलेन कृत्स्नं जगत् क्लेदयतीति समुद्रः। उन्दी क्लेदने। 'स्फायितञ्चिवञ्चिशकिक्षिपि[3]क्षुदिसृपितृपिदृपिवन्द्युन्दि' (पाउ २,१३) इत्यादिना रक् प्रत्ययः। समुद्रं[4] यास्कस्तु बहुधा निरवोचत् — 'समुद्रः कस्मात्। समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येनमापः, संमोदन्तेऽस्मिन् भूतानि, समुदको[5] भवति, समुनत्तीति वा' (या २, १०) इति। उदधेः। उदकानि धीयन्ते धार्यन्तेस्मिन्निति उदधिः। अनेन बिलवदवस्थितेषु नदीमुखेषु समुद्रजलस्य निःसरणयोग्यता उक्ता। डुधाञ् धारणपोषणयोः। अस्मात् 'कर्मण्यधिकरणे च' (पा ३,३,९३) इति किप्रत्ययः। 'आतो लोप इटि च' (पा ६,४,६४) इत्याकारलोपः। 'पेषवासवाहनधिषु च' (पा ६,३,५८) इत्युदकशब्दस्य उदभावः। 'गतिकारकोपपदात् कृत्' (पा ६,२,१३९) इति कृदुत्तरपदप्रकृतिस्वरत्वेन अन्तोदात्तता। उदकपूर्णसमुद्रस्य नदीमुखलक्षणं जलनिःसरणद्वारं यथा विवृतं भवति एवं वस्तिबिलमपि विवृतं भवत्वित्यर्थः। एव एवम् उक्तप्रकारेण। वस्तिबिले विषिते सतीत्यर्थः। शेषं पूर्ववद् व्याख्येयम्।

यथेषुका परापतदवसृष्टाधि धन्वनः।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ ९॥

यथा। इषुका। पराऽअपतत्। अवऽसृष्टा। अधि। धन्वनः।
एव। ते। मूत्रम्। मुच्यताम्। बहिः। बाल्। इति। सर्वकम् ॥ ९॥

१. तस्मिन् S', Kd. २ मूत्रनि॰ इति शंपा.? ३. ॰क्षुपिसृ॰ S', Kd. ४. समुद्रः S', Kd.
५. समुद्रको S', Kd.

अज्ञाता इषुः इषुका। 'प्रागिवात् कः' (पा ५,३,७०) इति अज्ञातार्थे कप्रत्ययः। अधि धन्वनः। अधिः पञ्चम्यर्थानुवादी। आततज्याद् धनुषः सकाशात् अवसृष्टा विमुक्ता सती यथा येन प्रकारेण परापतत् परापतति अनिरुद्धवेगा शीघ्रं लक्ष्योद्देशं गच्छति। पत गतौ। 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति वर्तमाने लङ्। अवसृष्टेति। अवपूर्वात् सृज विसर्गे इत्यस्मात् कर्मणि निष्ठा। 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' (पा ८,२,३६) इति षत्वे ष्टुत्वम्। 'गतिरनन्तरः' (पा ६,२,४९) इति गतेः प्रकृतिस्वरत्वम्। एव एवम्। शेषं पूर्ववत्।

## इति प्रथमकाण्डे प्रथमेनुवाके तृतीयं सूक्तम्।

अम्बयो यन्तीत्यादिसूक्तत्रयेण प्रातरनुवाकानन्तरं होत्रानूच्यमानम् अपोनप्त्रीयं ब्रह्मा अनुजपति। तद् उक्तं वैताने—'अम्बयो यन्तीति त्रीण्यपोनप्त्रीयम्' (वैताश्रौ १६,१०) इति। तत्र अम्बयो यन्तीत्याद्यं सूक्तं बृहद्गणे पठितम्। तथा च सूत्रम्—" 'अम्बयो यन्ति' (अ १,४) 'शंभुमयोभू' (अ १,५;६) 'हिरण्यवर्णाः' (अ १,३३) 'निःसालाम्' (अ २,१४) 'ये अग्नयो' (अ ३,२१) 'ब्रह्म जज्ञानम्' (अ ४,१) इत्येका 'उत देवाः' (अ ४,१३) मृगारसूक्तानि उत्तमं वर्जयित्वा (अ ४,२३-२९) 'अप नः शोशुचदघम्' (अ ४,३३) 'पुनन्तु मा' (अ ६,१९) 'सस्रुषीः' (अ ६,२३) 'हिमवतः प्रस्रवन्ति' (अ ६,२४) 'वायोः पूतः पवित्रेण' (अ ६,५१) 'शं च नो मयश्च नः' (अ ६,५७,३) 'अनडुद्भ्यस्त्वं प्रथमम्' (अ ६,५९) 'मह्यमापो' (अ ६,६१) 'वैश्वानरो रश्मिभिः' (अ ६,६२) 'यमो मृत्युः' (अ ६,९३) 'विश्वजित्, (अ ६,१०७) 'संज्ञानं नो' (अ ७,५२) 'यदन्तरिक्षे' (अ ७,६८) 'पुनर्मैत्विन्द्रियं' (अ ७,६९) 'शिवा नः' (अ ७,७१,३) 'शं नो वातो वातु' (अ ७,७२) 'अग्निं ब्रूमो वनस्पतीन्' (अ ११,८) इति" (कौसू ९,२) लघुगणेपि एतत् सूक्तं पठितम्। सूत्रितं हि—" 'अम्बयो यन्ति' (अ १,४) शंभुमयोभू' (अ १,५;६) 'हिरण्यवर्णाः' (अ १,३३) 'शंतातीयं' (अ ४,१३) 'यदन्तरिक्षे' (अ ७,६८) 'पुनर्मैत्विन्द्रियं'[५] (अ ७,६९) 'शिवा नः' (अ ७,७१,३) 'शं नो वातो वातु' (अ ७,७२) 'अग्निं ब्रूमो वनस्पतीन्' (अ ११,८)" (कौसू ९,४) इति। तत्र शन्तातीयमिति आ त्वागमं शंतातिभिः इति शंतातिशब्दयुक्तत्वात् 'उत देवा' (अ ४,१३) इति। अयमेव बृहद्गणापेक्षया लघुत्वात् लघुगण इत्युच्यते। तथा शंतातीयसूक्तयोगात् शंतातीयो गण इत्युच्यते। अतः परिशिष्टे 'शंतातीयेन तिलान् जुहोति' (अप ८.१,४) इत्यत्र अयमेव गणः प्रत्येतव्यः। अपां सूक्तेषु च एतत् सूक्तं पठितम्—'अम्बयो यन्ति' (अ १,४) 'शंभुमयोभू' (अ १,५;६) 'हिरण्यवर्णाः' (अ १,३३) 'यददः' (अ ३,१३) 'पुनन्तु मा' (अ ६,१९) 'सस्रुषीः' (अ ६,२३) इत्यादीनि अपां सूक्तानि। अतः तेषां गणानां यत्रयत्र विनियोगः तत्र सर्वत्र अस्य विनियोगो द्रष्टव्यः।

१. तु. S', Kd; वैतु. शंपा. शंभुमयोभूः; एतन्नाम्नी द्वे सूक्ते (तु.दा., Bl.[९,१ टि २] च)। २. तदेव Bl. ३ उत्तमान् S', Kd. ४. शंतातीयं च S', Kd; शंतातीं च मूको.। ५. यद्य××× इन्द्रियं नास्ति Bl. ६ तिलान् घृताक्तान् जुहुयात् BN.

तथा गवां रोगोपशमनपुष्टिप्रजननकर्मसु अनेनैव सूक्तेन अभिमन्त्रितं सलवणं केवलं वा उदकं गाः पाययेत्। तद् उक्तं कौशिकसूत्रे — 'अम्बयो यन्ति' इति प्रक्रम्य 'गा लवणं पाययत्युपतापिनीः। प्रजननकामोः। प्रग्राम अवरुणद्धि' (कौसू १९,१-३) इति।

तथा सर्वरोगभैषज्यकर्मणि अनेनैव सूक्तेन आज्यहोमं पैलाशोदुम्बरादिशान्तवृक्षसमिदाधानं च कुर्यात्। सूत्रितं च — "'अम्बयो यन्ति' (अ १,४) 'वायोः पूतः' (अ ६,५१) इति च शान्ताः" (कौसू २५,२०) इति।

तथा लाभालाभजयपराजयाद्यभिलषितकर्मणां सिद्ध्यसिद्धिविज्ञानार्थम् अनेनैव सूक्तेन पच्यमानक्षीरौदनेध्माधानकुशस्तम्बपाठा अनुमन्त्रयेत। तत्रौदनादीनां क्रमेण पाके प्रसारणे समसंख्यायां विकासे स्वकार्यसिद्धिं जानीयात् इतरथा तु असिद्धिम्। तद्वदेव जयपरिज्ञाने संग्रामभूमिवेदिकापरीक्षणं च अनेनैव कुर्यात्। सूत्रितं च — 'अम्बयो यन्तीति क्षीरौदनोत्कुचस्तम्बपाठाविज्ञानानि। सांग्रामिकं वेदिविज्ञानम्' (कौसू ३७,१;२) इति।

तथा अर्थोत्थापनविघ्नशमनकामः अनेन सूक्तेन मरुद्भ्यो मान्त्रवर्णिकीभ्यो देवताभ्यः क्षीरौदनहोमः आज्यहोमः काशादिविभुवकवेतसाख्यौ ओषधीरेकस्मिन् पात्रे कृत्वा संपात्य अभिमन्त्र्य जलमध्ये अधोमुखं निनयनम्, तासामेव काशादीनां संपातिताभिमन्त्रितानाम् अप्सु प्लावनम्, श्वशिरसो मेषशिरसश्च अभिमन्त्रितस्य अप्सु प्रक्षेपणम्, मानुषकेशजरदुपानहां वंशाग्रे बन्धनम्, तुषसहितम् आमपात्रम् अभिमन्त्रितोदकेन संप्रोक्ष्य त्रिपदे शिक्ये निधाय अप्सु प्रक्षेपणं च इत्येतानि अभिवर्षणकर्माणि संपातिताभिमन्त्रितघटोदकेन आप्लावनम् अवसेचनं च कुर्यात्। अत्र 'अर्थम् उत्थास्यन्' इति प्रक्रम्य 'अम्बयो यन्ति शंभुमयोभू' इत्यादि 'अभिवर्षणावसेचनानाम्' (कौसू ४१,१४) इत्येतदन्तं सूत्रं द्रष्टव्यम्। अत्र अमयो इत्यनया परिहरणानन्तरम् आग्नीध्रीये उपसाद्यमाना वसतीवरीः अनुमन्त्रयते। तद् उक्तं वैताने — 'वसतीवरीः परिह्रियमाणाः' इत्युपक्रम्य 'आग्नीध्रीयेवस्थाप्यमाना उत्तरया अमयो इति च' (वैताश्रौ १६,२) इति।

अ॒म्बयो॑ य॒न्त्यध्व॑भिर्जा॒मयो॑ अध्वरीय॒ताम्। पृ॒ञ्च॒तीर्मधु॑ना॒ पयः॑ ॥ १ ॥

अ॒म्बयः॑। य॒न्ति॒। अध्व॑ऽभिः। जा॒मयः॑। अ॒ध्व॒रि॒ऽय॒ताम्।
पृ॒ञ्च॒तीः। मधु॑ना। पयः॑ ॥ १ ॥

अम्बयः। अम्बाशब्दवद् अम्बिशब्दोपि मातृवाचित्वेन वेदे प्रसिद्धः। यथा—

१. °कामः S', Kd. २. पालाशौदु° S'; पलाशौदु° Kd. ३. °मंत्रयेतत्रौद° S', Kd.
४. संग्र। °S', Kd. ५. साख्य ओ° S', Kd. ६. वंशांगे S', Kd. ७. °हा° S', Kd.

'अम्बितमे नदीतमे' ( ऋ २,४१,१६ ) इति 'अम्बे अम्बाल्यम्बिके' ( तै ७,४,१९,१ ) इति च। कृत्स्नस्य जगतो मातृभूता आपः। 'अम्बयो यन्त्यध्वभिरित्यापो वा अम्बयः' ( कौब्रा १२,२) इति हि कौषीतकिब्राह्मणम्। 'इन्द्राय षट् सहस्राण्यपोम्बं प्रजापतिः प्रायच्छत्ता अम्बयः' इति शाट्यायनकम्। ता आपः। अध्वरीयताम्। ध्वरो हिंसा न विद्यतेऽस्मिन्निति अध्वरः ज्योतिष्टोमादिर्यागः। तम् आत्मन इच्छताम्—

ननु ज्योतिष्टोमादौ अग्नीषोमीयसवनीयानुबन्ध्याः पशव आलभ्यन्ते कथं तत्र हिंसाऽभाव इति चेत्, नैवम्। नात्र हिंसाया अभावं ब्रूमः। किंतु तज्जनितप्रत्यवायाभावम्। तथाहि — 'न हिंस्यात् सर्वभूतानि' इति सामान्यशास्त्रं विशेषशास्त्रक्रोडीकृतविषयपरिहारेणैव प्रवर्तत इति हि परीक्षकप्रसिद्धिः। 'पञ्चदश सामिधेनीरन्वाह' ( तै २,५,८,२ ) इति सामान्यविहितस्य सामिधेनीपाञ्चदश्यस्य 'सप्तदशानुब्रूयाद्वैश्यस्य' ( तै २,५,१०,२ ) इत्येवं विशेषविहितसामिधेनीसाप्तदश्यस्य विषयानुप्रवेशेनैव प्रवृत्तेः शास्त्रे निर्णीतत्वात्। तथा च — 'अग्नीषोमीयं पशुम् आलभेत' इति विशेषशास्त्रविहितविषयपरिहारेण 'न हिंस्याद्' इति सामान्यशास्त्रं व्यर्थहिंसामेव अवलम्बत इति वैधहिंसाया निषिद्धत्वाभावात् नानर्थहेतुत्वम्। एतदेवाभिप्रेत्य उक्तम् अध्वर इति। ननु 'अग्नीषोमीयं पशुम् आलभेत' इत्यादिवत् 'श्येनेनाभिचरन् यजेत' इत्यादौ अभिचारस्यापि विहितत्वात् नानर्थहेतुत्वम् इति चेत्, नैवम्। श्येनादियागस्य विहितत्वेपि तत्साध्यहिंसाया अग्नीषोमीयपशुहिंसावद् विधिविषयत्वाभावेन निषेधशास्त्रानुप्रवेशाद् अनर्थत्वात्। तथा च तत्साधनभूतः श्येनयागोपि तद्द्वारा अनर्थ इति। गुरुमते तु श्येनादेरविधेयत्वम्। तत्र रागत एव प्रवृत्तत्वात्। तथा च श्येनवाक्यस्य अयमर्थः— अभिचारेण शत्रुं यदि जिघांससि तर्हि तव वैदिकोपायः श्येन इति रागप्राप्तायाः शत्रुहिंसायाः साधनमात्रं बोध्यते न तु यागे पुरुषः प्रवर्त्यते श्येनं कुर्विति। तथा चोक्तम्—'साध्यसाधनभावप्रतीतिमात्रपर्यवसितो हि विधिव्यापारो न प्रयोगपर्यवसितः' इति। अतः श्येनयागे विधितः प्रवृत्त्यभावेन 'न हिंस्यात् सर्वभूतानि' इति निषेधशास्त्रस्य तत्रानुप्रवेशात् श्येनस्य अनर्थत्वम्। एतद्व्युदासार्थमेव 'चोदनालक्षणोऽर्थो धर्मः' (मीसू १,१,२ ) इत्यत्र भगवता जैमिनिना अर्थपदेन धर्मो विशेषितः। नन्वेवं श्येनाङ्गभूताग्नीषोमीयपशुहिंसायाम् अपि अनर्थता प्रसज्येतेति। नैतत्। वैषम्यात्। न हि श्येनयागवत् तदितिकर्तव्यतायां रागतः प्रवर्तते पुरुषः, किं तु विधित एव। तथा चोक्तम् — कामाधिकारे करणांशे रागतः प्रवृत्तिः अङ्गेषु तु वैधी इति। तद् अलम् अतिप्रसङ्गेन। प्रकृतम् अनुसरामः —

अध्वरीयताम् अध्वरं सोमयागम् आत्मन इच्छतां यजमानानाम्। जामयो भगिन्यः। क्रियमाणे व्यापारे भगिनीवत् सहायभूता इत्यर्थः। एवंभूता आपः अध्वभिर्मार्गैः चात्वालोत्करमध्यदेशरूपैः प्रसिद्धैर्वा मार्गैः यन्ति आगच्छन्ति। यागभूमिम् इत्यर्थः। यन्तीति। इण् गतौ। अदादित्वात् शपो लुक्। 'इणो यण्' ( पा ६,४,८१ ) इति यणादेशः।

'तिङ्ङतिङः' ( पा ८,१,२८ ) इति सर्वानुदात्तत्वम् । अध्वरीयतामिति । अध्वरशब्दात् 'सुप आत्मनः क्यच्' (पा ३,१,८) । 'न च्छन्दस्यपुत्रस्य' (पा ७,४,३५) इत्यत्र 'अपुत्रादीनाम् इति वक्तव्यम्' इति स्मरणाद् ईत्वनिषेधाभावात् 'क्यचि च' (पा ७,४,३३) इति ईत्वम् । 'कव्यध्वरपृतनस्यर्चि लोपः' ( पा ७,४,३९ ) इति तु व्यत्ययेन न प्रवर्तते । क्यजन्तात् लटः शत्रादेशः । तत्र शपः पित्त्वाद् अनुदात्तत्वम् । '०अदुपदेशाल्लसार्वधातुकम्०' (पा ६,१,१८६) इति शतुरनुदात्तता । क्यजकारेण सह एकादेशो 'एकादेश उदात्तेनोदात्तः' ( पा ८,२,५ ) इति शतुरुदात्तत्वात् 'शतुरनुमः०' ( पा ६,१,१७३ ) इति आम उदात्तत्वम् । किं कुर्वत्यः । मधुना स्वकीयेन माधुर्यरसेन पयः सोमरसादिकं होमद्रव्यं पयोविकारभूतम् आज्यं वा । विकारे प्रकृतिशब्दः । पृञ्चतीः पृञ्चत्यः संयोजयन्त्यः । पृची संपर्के । अस्मात् लट् । 'लक्षणहेत्वोः क्रियायाः' ( पा ३,२,१२६ ) इति हेतौ शतृप्रत्ययः । रुधादित्वात् श्नम् । 'श्नसोरल्लोपः' ( पा ६,४,१११ ) । 'उगितश्च' (पा ४,१,६ ) इति ङीप् । 'वा छन्दसि' ( पा ६, १,१०६ ) इति पूर्वसवर्णदीर्घः । 'शतुरनुमो नद्यजादी' ( पा ६,१,१७३ ) इति ङीप उदात्तत्वम् । संपर्कहेतोः यन्तीत्यर्थः ।

अ॒मूर्या उप॒ सूर्ये॒ याभि॑र्वा॒ सूर्यः॑ स॒ह । ता नो॑ हिन्वन्त्वध्व॒रम् ॥ २ ॥

अ॒मूः । याः । उप॑ । सूर्ये॑ । याभिः॑ । वा॒ । सूर्यः॑ । स॒ह ।
ताः । नः॒ । हि॒न्व॒न्तु॒ । अ॒ध्व॒रम् ॥ २ ॥

अमूः वृष्टिरूपेण द्युलोकाद् आगच्छन्त्यो याः जगत्कारणत्वेन प्रसिद्धा आपः सूर्ये सूर्यमण्डले उप । योग्यक्रियाध्याहारः । उपलक्ष्यन्ते । 'आपः सूर्ये समाहिताः' ( तैआ १,८,१ ) इति हि श्रुतिः । अपां प्राधान्याभिप्रायेणोक्तम् । सूर्यस्यापि तद् आह । याभिः मण्डलसमीपस्थाभिरद्भिः सह । उक्तवैपरीत्यद्योतनार्थो वाशब्दः । सूर्यो वर्तते । 'सहयुक्तेऽप्रधाने' ( पा २,३,१९ ) इति विहितया तृतीयया अपाम् अप्राधान्यं गम्यते । ताः उक्तलक्षणा आपः नः अस्माकम् अध्वरं यज्ञं क्रियमाणं कर्म[2] हिन्वन्तु प्रीणयन्तु फलदानसमर्थं कुर्वन्तु । अध्वरमिति । ध्वृ हूर्छने । 'पुंसि संज्ञायाम्०' ( पा ३,३,११८ ) इति घः । न विद्यते ध्वरो यस्मिन्निति बहुव्रीहौ 'नञ्सुभ्याम्' ( पा ६,२,१७२ ) इति उत्तरपदान्तोदात्तत्वम् । 'ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः' ( या १,८ ) इति हि यास्कः । श्रुतिस्त्वेवं निर्ब्रूते — 'अध्वर्व्या वा इमे देवा अभूवन्निति तदध्वरस्याध्वरत्वम् ( तै ३,२,२,३ ) इति । हिन्वन्त्विति । हिविः प्रीणनार्थः । इदित्वात् नुम् ।

अ॒पो दे॒वीरुप॑ ह्वये॒ यत्र॒ गावः॑ पिब॑न्ति नः । सिन्धु॑भ्यः॒ कर्त्वं॑ ह॒विः ॥ ३ ॥

---

१. अध्वरीय × × × अनुदात्तत्वम् नास्ति S'. २. यज्ञक्रियमाणं S', Kd.

अपः । देवीः । उप । ह्वये । यत्र । गावः । पिबन्ति । नः ।
सिन्धुऽभ्यः । कर्त्वम् । हविः ॥ ३ ॥

देवीः द्योतमानाः देवतारूपा वा अपः उदकानि उप ह्वये समीपम् आह्वयामि । क्रियमाणस्य कर्मणः परिपूर्त्यर्थम् इत्यर्थः । यत्र सजलेषु नदीतटाकादिषु नः अस्माकं गावः पिबन्ति । अप इति शेषः । तेभ्य उपह्वयामि इति पूर्वेण संबन्धः । अप इति । 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' ( पा ६,१,१७१ ) इति शस उदात्तत्वम् । पिबन्ति । पा पाने शपि 'पाघ्रा' ( पा ७,३,७८ ) इत्यादिना पिबादेशः । 'निपातैर्यद्यदिहन्त°' ( पा ८,१,३० ) इति प्रतिषेधात् 'तिङ्ङतिङः' ( पा ८,१,२८ ) इति निघाताभावः । आह्वानस्य प्रयोजनम् आह । सिन्धुभ्यः स्यन्दनशीलाभ्यः ताभ्यः अब्देवताभ्यः हविः आज्यादिरूपं कर्त्वं कर्तव्यम् । 'कृत्यार्थे तवैकेन्केन्यत्वनः' ( पा ३,४,१४ ) इति करोतेस्त्वन् प्रत्ययः । 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम् ।

अप्स्व१न्तरमृतमप्सु भेषजम् ।
अपामुत प्रशस्तिभिरश्वा भवथ वाजिनो गावो भवथ वाजिनीः ॥ ४ ॥

अप्ऽसु । अन्तः । अमृतम् । अप्ऽसु । भेषजम् ।
अपाम् । उत । प्रशस्तिऽभिः । अश्वाः । भवथ । वाजिनः । गावः । भवथ ।
वाजिनीः ॥ ४ ॥

अप्सु उदकेषु अन्तः मध्ये अमृतम् अमरणसाधनं देवोपभोग्यं पीयूषम् । अस्तीति शेषः । समुद्रमथनेन अमृतस्य उत्पन्नत्वात् । यद्वा अमृतम् अमरणसाधनम् अन्नम् । श्रूयते हि — 'अद्भ्यो वा अन्नं जायते' ( तैब्रा ३,८,१७,५ ) इति । अथवा मूर्छितस्य उदकावसेकेन उत्क्रान्तानामपि प्राणानां पुनः शरीरे प्रवेशदर्शनात् अप्सु अमृतम् अमरणसाधनम् अस्तीति गम्यते । अनेनैवाभिप्रायेण तैत्तिरीयके समाम्नायते — 'अमृतं वा आपस्तस्मादद्भिरवतान्तमभिषिञ्चन्ति नार्तिमार्च्छति सर्वम् आयुरेति' ( तै ५,६,२,२ ) इति । 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' ( पा ६,१,१७१) इति अप्शब्दाद् उत्तरस्या विभक्तेरुदात्तत्वम् । अन्तःशब्दः स्वरादिषु अन्तोदात्तः पठितः । संहितायाम् 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( पा ८,२,४ ) इति अन्तर्शब्दाकारस्य स्वरितत्वम् । न विद्यते मृतं मरणं येनेति बहुव्रीहौ 'नञ्सुभ्याम्' ( पा ६,२,१७२ ) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नञो जरमरमित्रमृताः' (पा ६,२,११६) इत्युत्तरपदाद्युदात्तत्वम् ।

१. प्रशस्तये ऋ १,२३,१९; प्रशस्तिषु मा ६,६; तै १,७,७,२; मै १,११,१. २. देवाः ऋ, ३. भवत ऋ मा., भवत मै., भवथ तै. वाजिनः तै, मै. ४. अप° S', Kd. ५. °अन्तरपस S'.

तथा अप्सु उदकेषु मध्ये भेषजं सर्वरोगनिवारकम् औषधम् । अस्तीति शेषः । उदकरसेन प्ररूढानाम् ओषधीनां रसस्यैव रोगनिवारकत्वात् । ईदृशीनाम् अपाम् उपजीवनेन हे जनाः यूयं सर्वे अमृता अरोगाश्च भवतेत्यर्थः । उत अपि च हे अश्वाः अस्मदीयास्तुरगाः यूयम् अपाम् उदीरितप्रभावोपेतानां प्रशस्तिभिः प्रभा°[व]विशेषैः वाजिनः । वाज इति बलनाम । तद्वन्तो भवथ । वाजशब्दाद् भूम्नि मत्वर्थीय इनिप्रत्ययः । यद्वा 'वाजी वेजनवान्' ( या २,२८ ) इति यास्केनोक्तत्वात् । वेगयुक्ता भवथेत्यर्थः । तथा हे गावः यूयमपि पीतानाम् अपां प्रभावेन वाजिनीः वाजिन्यः बलयुक्ता भवथ । यद्वा वाजः अन्नं क्षीररूपम् । 'अन्नं वै वाजः'( तै १,७,४,२ ) इति श्रुतेः । तद्युक्ता भवथ । प्रभूतक्षीरा भवथेत्यर्थः । वाजिन्शब्दात् 'ऋन्नेभ्यः' ( पा ४,१,५ ) इति ङीप् । जसि 'वा छन्दसि' ( पा ६,१,१०६ ) इति पूर्वसवर्णदीर्घः ।

इति प्रथमकाण्डे प्रथमेनुवाके चतुर्थं सूक्तम् ।

'आपो हि ष्ठा' इत्यादिसूक्तद्वयस्य ऐन्द्राग्नपशौ वपाहोमानन्तरं मार्जने विनियोगः । उक्तं वैताने— 'शंभुमयोभुभ्यां चात्वाले मार्जयन्ति' ( वैताश्रौ १०,१९ ) इति ।

अत्र 'आपो हि ष्ठा' इति सूक्तम् अग्निचयने उखार्थम् आहृतस्य मृत्पिण्डस्य पलाशकषायोदकेन संसृज्यमानस्य अनुमन्त्रणे विनियुक्तम् । उक्तं वैताने— 'आपो हि ष्ठेति पलाशफाण्टेनाभिषिच्यमानम्' ( वैताश्रौ २८,११ ) इति ।

एतदेव बृहद्गणे लघुगणे अपां सूक्तेषु च पठितम् । तेषां यत्रयत्र विनियोगः तत्र सर्वत्र अस्य विनियोगोऽनुसंधेयः ।

सलिलगणे च एतत् सूक्तं पठितम् । सूत्रितं हि — " 'शंभुमयोभुभ्याम्' (अ १,५:६) 'ब्रह्म जज्ञानम्' ( अ ४,१ ) 'अस्य वामस्य' ( अ ९,१४ ) 'यो रोहितः' ( अ १३,१) 'उदस्य केतवः' ( अ १३,२ ) 'मूर्धाहम्' ( अ १६,३ ) 'विषासहिम्' ( अ १७,१ )" ( कौसू १८,२५ ) इति । अयं सलिलगणः । अतः 'सलिलैः क्षीरौदनम् अश्नाति' ( कौसू १८,२५ ) 'सलिलैः सर्वकामः' ( कौसू २४,१६ ) इत्यादौ अस्य विनियोगः ।

तथा गवां रोगोपशमनपुष्टिप्रजननकर्मसु अर्थोत्थापनविघ्नशमनकर्मणि च पूर्वसूक्तवद् विनियोगः ।

वास्तुसंस्कारकर्मणि च अनेन सूक्तेन उदकुम्भेन गृहभूमिम् आसिञ्चेत् । तथा च सूत्रम्—'निवेशनानुचरणानि' इति प्रक्रम्य 'शंभुमयोभुभ्यां विष्यन्दयति' ( कौसू ४३,३-१२ ) इति ।

१. °विता S', Kd.　२. ऐन्द्राग्नि S', Kd.　३. पठितेना S', Kd.　४. संकेत्यमाने सूक्ते रोहितस्य प्राधान्यात् प्रथममन्त्रोत्तरार्धीयेनाऽपि सता रोहितशब्दवताऽनेन प्रतीकेन संकेतः सर्वत्राऽऽहतः (तु अ १३,२३,२३; कौसू ३,४) ।　५. क्षीरौदनमश्नातीति S', Kd.　६. गृहभूमिं वा सिंचेत् S', Kd.　७. चरणानीति S', Kd.

तथा 'आदित्यां 'श्रीतेजोधनायुष्कामस्य' ( शाक १७,३ ) इति विहितायाम् आदित्याख्यायां महाशान्तौ अस्य विनियोगः। तद् उक्तं[1] शान्तिकल्पे — 'सलिलगण आदित्यायाम्' ( शाक १८,५ ) इति।

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे ॥ १ ॥

आपः। हि। स्थ। मयःऽभुवः। ताः। नः। ऊर्जे। दधातन।
महे। रणाय। चक्षसे ॥ १ ॥

हे आपः यूयं हि यस्मात् कारणात् मयोभुवः। मय इति सुखनाम। सुखस्य भावयित्र्यः स्थ भवथ। 'आपोमयः प्राणः' ( छाउ ६,५,४ ) इति श्रुतेः। अपाम् उपभोगेन प्राणस्थैर्यहेतुत्वात् सुखसाधनभूतविविधान्नाद्युपभोग्यपदार्थजनकत्वेन च सुखहेतुत्वम्। अस्तेर्लटि मध्यमपुरुषबहुवचने अदादित्वात् शपो लुक्। 'सार्वधातुकमपित्' (पा १,२,४) इति ङिद्भावात् 'श्नसोरल्लोपः' (पा ६,४,१११) इति अकारलोपः। 'हि च'(पा ८,१,३४) इति निघातप्रतिषेधः। मयोभुव इति। मयःशब्दोपपदात् भवतेरन्तर्भावितण्यर्थात् क्विप्। 'ओः सुपि' (पा ६,४,८३ ) इति प्राप्तस्य यणो 'न भूसुधियोः' ( पा ६,४,८५ ) इति प्रतिषेधः। 'गतिकारकोपपदात् कृत्' (पा ६,२,१३९) इति कृदुत्तरपदप्रकृतिस्वरत्वम्। तस्मात् ताः तथाविधा यूयं नः अस्मान् अन्नादिजनितसुखकामान् ऊर्जे बलकराय अन्नाय। तदुपभोगजनितसुखायेत्यर्थः। ऊर्ज बलप्राणनयोः। अस्मात् 'क्विप् च' ( पा ३,२,७६ ) इति क्विप्। तादर्थ्ये चतुर्थी। 'सावेकाचस्तृतीयादिर्विभक्तिः' ( पा ६,१,१६८ ) इति विभक्तेरुदात्तत्वम्। दधातन धत्त। सुखकरान्नप्रदानेन अस्मान् पोषयतेत्यर्थः। डुधाञ् धारणपोषणयोः। अस्माल्लोटि 'तप्तनप्तनथनाश्च' ( पा ७,१,४५ ) इति तस्य तनबादेशः। तस्य पित्त्वेन ङित्त्वाभावात् 'श्नाभ्यस्तयोरातः' ( पा ६,४,११२ ) इति आलोपाभावः। 'तिङ्ङतिङः' (पा ८,१,२८ ) इति निघातः। अपि च महे महते। अच्छब्दलोपश्छान्दसः। यद्वा मह पूजायाम् इत्यस्मात् क्विप्। महनीयाय पूजनीयाय रणाय रमणाय। विविधोपभोग्यपदार्थेषु क्रीडनायेत्यर्थः। रमतेर्भावे ल्युट्। अन्त्यलोपश्छान्दसः। तथा चक्षसे दर्शनाय। चिरकालजीवनाभिमतफलसाक्षात्कारायेत्यर्थः। चष्टिः पश्यतिकर्मा। 'चक्षेर्बहुलं शिच्च' ( पाउ ४,२३३ ) इति भावे असुन्। शित्त्वेन सार्वधातुकत्वात् 'चक्षिङः ख्याञ्' ( पा २,४,५४ ) इति ख्याञादेशाभावः। 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इति आद्युदात्तत्वम्। यद्वा महते रणाय रमणीयाय चक्षसे इति सामानाधिकरण्येन संबन्धः। अथवा रणाय रणनीयाय शब्दनीयाय उपनिषदेकसमधिगम्याय चक्षसे स्वात्मनो निरतिशयानन्दब्रह्मत्वसाक्षात्कारायेत्यर्थः। अण रण वण शब्दार्थाः। 'वशिरण्योरुपसंख्यानम्' ( पावा ३,३,५८ ) इति अप्। तस्य पित्त्वाद् अनुदात्तत्वे धातुस्वरः

---

१ शृते S', Kd.

शिष्यते। सर्वत्र तादर्थ्ये चतुर्थी। दधातनेति पूर्वेण संबन्धः।

यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥ २॥

यः। वः। शिवऽतमः। रसः। तस्य। भाजयत। इह। नः।
उशतीःऽइव। मातरः॥ २॥

हे आपः वः युष्माकं शिवतमः कल्याणतमः प्रसिद्धो यो रसः सारभूतः अंशोऽस्ति। सर्वप्राणिभिः अविसंवादेन उपभोग्यत्वाद् अपां रसस्य शिवतमत्वम्। श्रूयते हि— 'नानामनसः खलु वै पशवो नानाव्रतास्तेऽप एवाभि समनसः' (तै ५,३,१,३) इति। तस्य। 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। तं रसम्। यद्वा भाग-व्यतिरेकजनिता षष्ठी। तस्य रसस्य भागम् इत्यर्थः। इह अस्मिन् लोके हे आपः यूयं नः अस्मान् पुत्रस्थानीयान् भाजयत सेवयत। युष्मदीयरसप्रदानेन अस्मान् पोषयतेत्यर्थः। भज सेवायाम्। 'हेतुमति च' (पा ३,१,२६) इति णिच्। प्रार्थनायां लोट्। शपः पित्वाद् अनुदात्तत्वम्। "अदुपदेशाल्लसार्वधातुकमनुदात्तम्" (पा ६,१,१८६) इति तिङोपि अनुदात्तत्वम्। तथा च णिचश्चित्वात् तत्स्वरेण मध्योदात्तत्वे प्राप्तेपि 'तिङ्ङतिङः' (पा ८,१,२८) इति सर्वानुदात्तत्वम्। तत्र दृष्टान्तः— उशतीरिव उशत्यः कामयमानाः। वश कान्तौ। कान्तिरभिलाषः। अस्मात् लटः शत्रादेशः। अदादि-त्वात् शपो लुक्। 'सार्वधातुकम् अपित्' (पा १,२,४) इति शतुर्ङित्त्वात् 'ग्रहिज्या' (पा ६,१,१६) इत्यादिना संप्रसारणम्। 'उगितश्च' (पा ४,१,६) इति ङीप्। शत्रन्तस्य प्रत्ययस्वरेण अन्तोदात्तत्वात् 'शतुरनुमो नद्यजादी' (पा ६,१,१७३) इति ङीप उदात्त-त्वम्। जसि 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' (पावा २,१,४) इति समासः। कामयमाना मातरः यथा स्वकीयं पुत्रं स्तन्यरसप्रदानेन पोषयन्ति तथेत्यर्थः।

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ।
आपो जनयथा च नः॥ ३॥

तस्मै। अरम्। गमाम। वः। यस्य। क्षयाय। जिन्वथ।
आपः। जनयथ। च। नः॥ ३॥

तस्मै। तादर्थ्ये चतुर्थी। उपभोग्यत्वेन प्रसिद्धस्य अन्नस्य प्राप्त्यर्थं हे आपः वः युष्मान् अरम् अलं पर्याप्तं गमाम गच्छाम प्राप्नुयाम। अरम् इति। 'वाल्मूल-

1. म्रद्दक: S', Kd.

लध्वलमङ्गुलीनां वा लो रत्वम् आपद्यत इति वक्तव्यम्' (पावा ८,२,१८) इति लत्वविकल्पः। गमामेति। गम्लृ सृप्लृ गतौ। अस्मात् प्रार्थनायां लोट्। 'आडुत्तमस्य पिच्च' (पा ३,४,९२) इति आडागमः। 'बहुलं छन्दसि' (पा २,४,७३) इति शपो लुक्। यद्वा 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति लोडर्थे लुङ्। लृदित्त्वात् च्लेः अङादेशः। 'बहुलं छन्दस्यमाङ्योगेपि' (पा ६,४,७५) इति अडभावः। व इति। 'बहुवचनस्य वस्नसौ' (पा ८,१,२१) इति द्वितीयान्तस्य युष्मदो वसादेशः। स च 'अनुदात्तं सर्वम् अपादादौ' (पा ८,१,१८) इत्यनुवृत्तेः सर्वानुदात्तः। यस्य अन्नस्य क्षयाय निवासाय। अभिवृद्धय इत्यर्थः। क्षि निवासगत्योः। 'एरच्' (पा ३,३,५६) इति भावे अच्। 'चितः' (पा ६,१,१६३) इति अन्तोदात्तत्वे प्राप्ते 'क्षयो निवासे' (पा ६,१,२०१) इति आद्युदात्तत्वम्। हे आपः यूयं जिन्वथ तर्पयथ। व्रीह्यादिसस्यविशेषान् इति शेषः। यूयं वृष्टिरूपेण आगत्य सर्वेषां प्राणिनाम् अन्नाद्युपभोग्यसमृद्धये ओषधीः प्रवर्धयथेत्यर्थः। श्रूयते हि — 'ते दिवो वृष्टिम् असृजन्त। यावन्तः स्तोका अवापद्यन्त तावतीरोषधयोऽजायन्त' (तैब्रा २,१,१,१) इति। तस्मै इति पूर्वेण संबन्धः। हिवि धिवि दिवि [जिवि] प्रीणनार्थाः। इदित्त्वात् नुम्। शपः पित्त्वाद् अनुदात्तत्वम्, तिङश्च लसार्वधातुकस्वरेण धातुस्वरस्य अवशेषात् पदम् आद्युदात्तम्। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः। अपि च हे आपः यूयं नः अस्मान् जनयथ पुत्रपौत्रादिरूपेण उत्पादयथ। स्वात्मन एव पुत्रादिरूपेण उत्पत्तेः एवम् उक्तम्। तथा च ऐतरेयके समाम्नातम् — 'पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते। तज्जाया जाया भवति यद् अस्यां जायते पुनः' (ऐब्रा ७,१३) इति। जनी प्रादुर्भावे। अस्मात् 'हेतुमति च' (पा ३,१,२६) इति णिच्। 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञकत्वात् 'मितां ह्रस्वः' (पा ६,४,९२) इति उपधाह्रस्वत्वम्। शपस्तिङश्च पूर्ववत् अनुदात्तत्वे णिच्स्वरः शिष्यते। तेन णिजकारस्य उदात्तत्वम्। आप इति पूर्वामन्त्रितस्य 'आमन्त्रितं पूर्वम् अविद्यमानवत्' (पा ८,१,७२) इति अविद्यमानवद्भावेन अतिङः उत्तरत्वाभावात् 'तिङ्ङतिङः' (पा ८,१,२८) इति निघाताभावः। 'अन्येषामपि दृश्यते' (पा ६,३,१३७) इति सांहितिको दीर्घः।

ईशा॑ना॒ वार्या॑णां॒ क्षय॑न्तीश्चर्षणी॒नाम्। अ॒पो या॑चामि भेष॒जम् ॥ ४ ॥

ईशा॑नाः। वार्या॑णाम्। क्षय॑न्तीः। च॒र्ष॒णी॒नाम् ॥
अपः। याचामि। भेषजम् ॥ ४ ॥

१. आपो A,B,S^m.　२. वातामभे° मे ४,६,२७.

वार्याणां वरणीयानां धनानाम् ईशानाः ईश्वराः स्वामित्वेन नियन्त्रीः सर्वधनमूलभूतस्य हिरण्यस्य मातृभूताभ्यः अद्भ्यः उत्पत्तेः श्रवणाद् अपाम् अधिपतित्वम्। तथा हि—'आपो वरुणस्य पत्नय आसन्। ता अग्निरभ्यध्यायन्। ताः समभवन्। तस्य रेतः परापतत्। तद्धिरण्यम् अभवत्' ( तैब्रा १,१,३,८ ) इति। ईश ऐश्वर्ये। अस्मात् 'लक्षणहेत्वोः क्रियायाः' ( पा ३,२,१२६ ) इति हेतौ शानच् प्रत्ययः। अदादित्वात् शपो लुक्। अस्य धातोः अनुदात्तेत्त्वात् 'तास्यनुदात्तेन्ङिददुपदेशाद्०' ( पा ६,१,१८६ ) इति शानचः अनुदात्तत्वे धातुस्वरेण आद्युदात्तः। वार्याणाम् इति। वृङ् संभक्तौ। क्यब्विधौ हि वृञो ग्रहणं न वृङः इत्युक्तेः अस्माद्धातोः 'ऋहलोर्ण्यत्' ( पा ३,१,१२४ ) इति कर्मणि ण्यत्। 'कर्तृकर्मणोः कृति' (पा २,३,६५ ) इति प्राप्तायाः कर्मणि षष्ठ्याः 'न लोकाव्यय०' (पा २,३,६९ ) इति प्रतिषेधेपि 'अधीगर्थदयेशां कर्मणि' ( पा २,३,५२ ) इति कर्मणि षष्ठी। 'तित् स्वरितम्' ( पा ६,१,१८५ ) इति स्वरितत्वे प्राप्ते 'ईडवन्दवृशंसदुहां ण्यतः' ( पा ६, १,२१४ ) इति आद्युदात्तत्वम्। यत ईशाना अतो हेतोः चर्षणीनाम्। मनुष्यनामैतत्। मनुष्याणां क्षयन्तीः निवासयित्रीः। अभिमतधनप्रदानेन स्वस्थाने निवेशयन्तीरित्यर्थः। क्षि निवासगत्योः। अस्माद् अन्तर्भावितण्यर्थात् लटः शत्रादेशः। व्यत्ययेन शप्। 'उगितश्च' ( पा ४,१,६ ) इति ङीप्। 'शप्श्यनोर्नित्यम्' ( पा ७,१,८१ ) इति नित्यं नुमागमः। शपश्च ङीपश्च पित्त्वाद् अनुदात्तत्वम्। '०अदुपदेशाल्लसार्वधातुकम्०' ( पा ६,१,१८६ ) इति शतुरनुदात्तत्वे धातुस्वरेण आद्युदात्तः। चर्षणीनाम् इति। 'न लोकाव्यय०' ( पा २,३,६९ ) इति कर्मणि षष्ठीप्रतिषेधाभावश्छान्दसः। यद्वा 'चतुर्थ्यर्थे बहुलं छन्दसि' ( पा २,३,६२ ) इति तादर्थ्ये षष्ठी। मनुष्यार्थं निवसन्तीरित्यर्थः। 'नाम् अन्यतरस्याम्' ( पा ६,१,१७७ ) इति नाम उदात्तत्वम्। एवंभूता अपः भेषजं व्याध्यादिनिवर्तकम् औषधं याचामि प्रार्थये। उक्तं हि— 'अप्स्वन्तरमृतमप्सु भेषजम्' ( अ १,४,४ ) इति। 'अकथितं च' (पा १,४,५१ ) इति कर्मसंज्ञायाम् अप्शब्दाद् द्वितीया। 'ऊडिदम्' ( पा ६,१, १७१ ) इत्यादिना अप्शब्दाद् उत्तरस्य शस उदात्तत्वम्। याचामि। याचृ याच्ञायाम्। 'तिङ्ङतिङः' ( पा ८,१,२८ ) इति निघातः।

## इति प्रथमकाण्डे प्रथमेनुवाके पञ्चमं सूक्तम्॥

'शं नो देवीः' इति सूक्तस्य 'शंभुमयोभुभ्याम्' इति संहैव सूत्रकृता निर्दिष्टत्वात् 'आपो हि ष्ठा' इति सूक्तवत् सर्वत्र विनियोगः अनुसंधेयः। लघुगणे बृहद्गणे च आद्यन्तयोः 'शं नो देवीः' इति प्रथमा ऋक् प्रयोक्तव्या 'उभयतः मातिस्त्युभयतः शं नो देवीः' ( कौसू ९,७ ) इति सूत्रात्। इन्द्रमहाख्यकर्मणि आचमनेपि एषा विनियुक्ता। सुप्तिनं

१. °धनभूतमूलस्य. S', Kd.     २. तत् नास्ति S', Kd.     ३. अस्माद्धेतो° S', Kd.

हि — 'शं नो देव्याः पादैरर्धर्चाभ्याम् ऋचा पट्कृत्व उदकम् आचामतः' ( कौसू १४०,५ ) इति। राज्ञः पुष्याभिषेके कलशाभिमन्त्रणेपि यथा। तथा च परिशिष्टे —

'हेमरत्नौषधीबिल्वपुष्पगन्धाधिवासितान्[१]।
आच्छादितान् सितैर्वस्त्रैरभिमन्त्र्य पुरोहितः।
सावित्र्युभयतः कुर्याच्छं नो देवीं[२] तथैव च।' (अप ५,२,३;४) इति।

**शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑।**
**शं योर॒भि स्र॑वन्तु नः ॥ १ ॥**

शम्। नः। दे॒वीः। अ॒भिष्ट॑ये। आपः॑। भ॒व॒न्तु॒। पी॒तये॑।
शम्। योः। अ॒भि। स्र॒व॒न्तु॒। नः॒ ॥ १ ॥

देवीः देव्यः द्योतनादिगुणयुक्ताः। दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु। इगुपधलक्षणे के प्राप्ते 'देवसेवमेषादयः पचादिषु द्रष्टव्याः' इति वचनात् 'नन्दिग्रहिपचादिभ्यः०' (पा ३,१,१३४) इत्यच्। देवट् इति टित्त्वेन पाठात् 'टिड्ढाणञ्०' (पा ४,१,१५) इति ङीप्। 'यस्य०' (पा ६,४,१४८) इति लोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा ६,१,१६१) इति ङीप उदात्तत्वम्। जसि 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। यास्कस्तु देवशब्दं बहुधा निरवोचत् — '[३]देवो [४]दानाद्वा, दीपनाद्वा, द्योतनाद्वा, द्युस्थानो भवतीति वा' ( या ७,१५ ) इति। एवमात्मिका आपः नः अस्माकम् अभिष्टये अभियजनाय। यज देवपूजासंगतिकरणदानेषु। अस्माद् अभिपूर्वात् भावे क्तिन्। 'ग्रहिज्या' ( पा ६,१,१६ ) इत्यादिना संप्रसारणम्। 'व्रश्च' (पा ८,२,३६) इत्यादिना षत्वे ष्टुत्वम्। 'शकन्ध्वादिषु पररूपं वक्तव्यम्' ( पावा ६,१,९३ ) इति पररूपत्वे सवर्णदीर्घाभावः। 'तादौ च निति कृत्यतौ' (पा ६,२,५०) इति गतेः प्रकृतिस्वरत्वे एकादेशस्य उदात्तत्वम्। तादर्थ्ये चतुर्थी। अभितः सर्वतो यागार्थं शं सुखं भवन्तु। सुखकारिण्यो भवन्तु इत्यर्थः। तथा पीतये पानाय च शं भवन्तु। पीयमाना आपः स्वादुतमाः सुखाय भवन्तु इत्यर्थः। पा पाने। अस्मात् भावे क्तिन्। 'घुमास्था' ( पा ६,४,६६ ) इत्यादिना ईत्वम्। अपि च नः अस्माकं शं प्राप्तानां रोगाणां शमनाय योः अप्राप्तानां रोगाणां पृथक्करणाय च ता आपः अभि स्रवन्तु अस्मदाभिमुख्येन गच्छन्तु। यद्वा शं योरिति रोगाणां शमनं चोरव्याघ्रादिजनितभयानां पृथक्करणं च यथा भवति तथेत्यर्थः। तदुक्तं यास्केन—'शमनं च रोगाणां यावनं च भयानाम्'(या ४,२१) इति। शमु उपशमने। यु मिश्रणामिश्रणयोः। 'अन्येभ्योपि दृश्यन्ते' (पा ३,२,७५) इत्यत्र दृशिग्रहणस्य विध्यन्तरो-

१. 'गन्धादिवासि' S', Kd. २. देवीं S', Kd. ३. इह यज्ञस्य इति वा *शंपा., यज्ञस्य इति वा S', Kd. अधिकः पाठः। इहानुपयोगान्नेष्टः। ४. देनाद्वा दीपनाद्वा S'; देनाद्वा दापनाद्वा Kd.

पसंग्रहार्थत्वाद् आभ्यां धातुभ्यां भावे विच्। योरित्यत्र सलोपाभावश्छान्दसः। यद्वा यौतेरसुनि अवादेशाभावश्छान्दसः।

अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशंभुवम् ॥ २ ॥

अप्ऽसु। मे। सोमः। अब्रवीत्। अन्तः। विश्वानि। भेषजा।
अग्निम्। च। विश्वऽशंभुवम् ॥ २ ॥

मन्त्रद्रष्टा ब्रूते — अप्सु उदकेषु अन्तः मध्ये विश्वानि सर्वाणि भेषजा भेषजानि। 'शेश्छन्दसि बहुलम्' (पा ६,१,७०) इति शेर्लोपः। सर्वरोगनिवर्तकानि औषधानि सन्तीति सोमः एतन्नामा देवः मे मह्यं मन्त्रदर्शिने अब्रवीत् उपदिष्टवान्। तथा विश्वशंभुवम् विश्वस्य जगतः सुखकरम्। यद्वा विश्वे सर्वे व्यापाराः शंभुवः सुखस्य भावयितारः उत्पादका यस्य स तथोक्तः। शंशब्दोपपदाद् भवतेरन्तर्णीतण्यर्थात् 'क्विप् च' (३,२,७६) इति क्विप्। 'ओः सुपि' (पा ६,४,८३) इति प्राप्तस्य यणः 'न भूसुधियोः' (पा ६,४,८५) इति प्रतिषेधे उवङ्। तत्पुरुषपक्षे व्यत्ययेन पूर्वपदान्तोदात्तत्वम्। बहुव्रीहिपक्षे तु अग्निविशेषस्य इयं संज्ञा। तथा च 'बहुव्रीहौ विश्वं संज्ञायाम्' (६,२,१०६) इति पूर्वपदान्तोदात्तत्वम्। एतन्नामानम् अग्निम् अङ्गनादिगुणयुक्तं देवं च। अप्सु अन्तर्वर्तमानं सोमः अब्रवीदित्यर्थः। उदकमध्ये अग्नेः प्रवेशस्तैत्तिरीयके समाम्नातः 'अग्नेस्त्रयो ज्यायांसः' इति प्रक्रम्य 'स निलायत सोऽपः प्राविशत्' (तै २,६,६,१) इति। यद्वा "और्ववैद्युतरूपेण अग्नेः अप्सु अवस्थानं द्रष्टव्यम्। अनेन अतिशयितवीर्यवत्त्वस्य प्रख्यापितत्वाद् अपां सर्वार्थसाधनसामर्थ्यम् अस्तीत्युक्तं भवति ॥

आपः पृणीत भेषजं वरूथं तन्वे३ मम।
ज्योक् च सूर्यं दृशे ॥ ३ ॥

आपः। पृणीत। भेषजम्। वरूथम्। तन्वे। मम।
ज्योक्। च। सूर्यम्। दृशे ॥ ३ ॥

हे आपः यूयं मम तन्वे मदीयस्य शरीरस्य। 'षष्ठ्यर्थे चतुर्थी वक्तव्या' (पावा २,३,६२) इति चतुर्थी। 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा ८,२,४)

१. आपश्च मे ४,१०,४. २. °भुवः मे.। ३. सप S', Kd. ४. °शंपा.; अर्थं° S', Kd.

इति विभक्तिः स्वर्यते। 'युष्मदस्मदोर्ङसि' ( पा ६,१,२११ ) इति ममशब्द आद्युदात्तः। वरूथं वारकं ज्वरादिसर्वरोगनिवर्तकम् भेषजम् औषधम् पृणीत पूरयत। यथा मम शरीरं व्याधयो न स्पृशन्ति तथा औषधं प्रयच्छतेत्यर्थः। पृ पालनपूरणयोः। अस्मात् लोटि क्र्यादित्वात् श्नाप्रत्ययः। 'ई हल्यघोः' ( पा ६,४,११३ ) इति ईत्वम्। 'प्वादीनां ह्रस्वः' ( पा ७,३,८० ) इति धातोर्ह्रस्वत्वम्। 'सतिशिष्टस्वरबलीयस्त्वम् अन्यत्र विकरणेभ्यः' ( पावा ६,१,१५८ ) इति परिभाषया सतिशिष्टस्यापि श्नाप्रत्ययस्वरस्य दुर्बलत्वात् तिङ एव उदात्तत्वम्। 'आमन्त्रितं पूर्वम् अविद्यमानवत्' ( पा ८,१,७२ ) इति आप इत्यस्य अविद्यमानवत्त्वात् 'तिङ्ङतिङः' ( पा ८,१,२८ ) इति निघाताभावः। वरूथम् इति। वृञ् वरणे। 'जॄवृञ्भ्यामूथन्' ( पाउ २, ६ ) इति औणादिक ऊथन् प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' ( पा ६, १,१९७ ) इत्याद्युदात्तः। किमर्थम्। ज्योक् चिरकालं सूर्यं सर्वेषां प्राणप्रदत्वेन प्रेरकम् आदित्यं दृशे द्रष्टुम्। चिरकालं जीवितुम् इत्यर्थः। अनुक्तसमुच्चयार्थश्चकारः। व्याध्यादिजनितक्लेशापनोदनार्थं च इति। दृशिर् प्रेक्षणे। 'दृशे विख्ये च' ( पा ३,४,११ ) इति तुमर्थे केप्रत्ययान्तो निपातितः। सूर्यम् इति। षू प्रेरणे। 'राजसूयसूर्य०' ( पा ३,१,११४ ) इति क्यबन्तो निपातितः। क्यपः पित्वाद् अनुदात्तत्वे धातुस्वरेण आद्युदात्तत्वम्। 'कृन्मेजन्तः' ( पा १,१,३९ ) इति दृशे इत्यस्य एजन्तत्वेन अव्ययत्वात् 'न लोकाव्यय०' ( पा २,३,६९ ) इति कर्मणि षष्ठ्याः प्रतिषेधः।

शं न॒ आपो॑ धन्व॒न्या॒३ः शमु॑ सन्त्वनू॒प्या॒ः[1]।
शं नः॑ खनि॒त्रिमा॒ आपः॒ शमु॒ याः कु॒म्भ आभृ॑ताः शि॒वा नः॑ सन्तु॒ वार्षि॑कीः ॥ ४ ॥

शम्। न॒ः। आपः॑। ध॒न्व॒न्या॒ः। शम्। ऊँ॒ इति॑। स॒न्तु॒। अ॒नू॒प्या॒ः।
शम्। न॒ः। ख॒नि॒त्रिमाः॑। आपः॑। शम्। ऊँ॒ इति॑। याः। कु॒म्भे। आऽभृ॑ताः।
शि॒वाः। न॒ः। स॒न्तु॒। वार्षि॑कीः ॥ ४ ॥

पूर्वं सामान्येनैव अपां प्रार्थना कृता। अधुना स्थानविशेषिता आपः प्रार्थ्यन्ते— नः अस्माकं धन्वन्याः धन्वनि मरुभूमौ भवा आपः शं सन्तु सुखकारिण्यो भवन्तु। धिवि धवि धवि गत्यर्थाः। इदित्त्वात् नुम्। 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' ( पाउ १, १५६ ) इति कनिन् प्रत्ययः। 'भवे छन्दसि' ( पा ४,४,११० ) इति यत्। 'ये चाभावकर्मणोः' ( पा ६,४,१६८ ) इति प्रकृतिभावात् 'नस्तद्धिते' ( पा ६,४,१४४ ) इति टिलोपाभावः। तथा अनूप्याः अनुगता आपो यस्मिन् देशे सः अनूपो देशः। 'ऋक्पूरब्धूः०' ( पा ५,४, ७४ ) इत्यकारः समासान्तः। 'ऊद् अनोर्देशे' ( पा ६,३,९८ ) इति अपशब्दाकारस्य

1. धन्व° A, B[h].

ऊकारः । तत्र भवा आपः अनूप्याः । पूर्ववद् यत् । उशब्दः चार्थे । प्रभूतजलप्रदेशास्था आपश्च शं सन्तु सुखहेतवो भवन्तु ।¹ तथा खनित्रिमाः खननेन निर्वृत्ताः कूपोद्भवा आपः नः अस्माकं शं भवन्तु । खनु अवदारणे । अस्माच्छान्दसः कित्रप्रत्ययः । 'आर्धधातुकस्येड् वलादेः' ( पा ७,२,३५ ) इति इडागमः । 'क्त्रेर्मम्नित्यम्' ( पा ४,४,२० ) इति मप् । कुम्भे घटे आभृताः नदीतटाकादिभ्यः कुम्भेन आनीताः । हृञ् हरणे । अस्मात् कर्मणि निष्ठा । 'हृग्रहोर्भः०' ( पावा ८,२,३२ ) इति भत्वम् । 'गतिरनन्तरः' ( पा ६,२,४९ ) इति गतेः प्रकृतिस्वरत्वम् । ईदृश्यो याः प्रतिगृहं वर्तमानाः प्रसिद्धा आपः ताश्च शं भवन्तु । तथा वार्षिकीः वार्षिक्यः वर्षतौ भवाः । 'छन्दसि ठञ्' ( पा ४,३,१९ ) इति वर्षाशब्दात् ठञ् प्रत्ययः । 'टिड्ढाणञ्०' ( पा ४,१,१५ ) इति ङीप् । 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इति आद्युदात्तत्वम् । वृष्टिसंभूता आपश्च नः अस्माकं शिवाः सुखकारिण्यः सन्तु भवन्तु । अस भुवि । अस्मात् लोटि अदादित्वात् शपो लुक् । 'श्नसोरल्लोपः' ( पा ६,४, १११ ) इत्यकारलोपः ।

इति षष्ठं सूक्तम् ॥

इति अथर्वसंहितायां प्रथमकाण्डे प्रथमोनुवाकः ।

द्वितीयेनुवाके पञ्च सूक्तानि । तत्र 'स्तुवानम्' 'इदं हविः' इति प्रथमद्वितीये सूक्ते चातनगणे पठिते । तथा च कौशिकः — " 'स्तुवानम् ( अ १,७ ) इदं हविः ( अ १, ८ ) निःसालाम् ( अ २,१४ ) अरायक्षयणम् ( अ २,१८,३-५ ) शं नो देवी पृश्निपर्णी ( अ २,२५ ) आ पश्यति ( अ ४,२० ) तान् सत्यौजाः ( अ ४,३६ ) त्वया पूर्वम ( अ ४,३७ ) पुरस्ताद्युक्तः ( अ ५,२९ ) रक्षोहणम् ( अ ८,३ ) इत्यनुवाकः चातनानि " ( कौसू ८,२५ ) इति । अतः अस्य 'चातनानाम् अपनोदनेन व्याख्यातम्' (कौसू २५,२२ ) 'चातनैर्मातृनामभिर्जुहुयात्' (शाक १६ ) इत्यादिसूत्रेण यत्रयत्र विनियोगः क्रियते तत्रतत्र सर्वत्र अनयोः सूक्तयोरपि विनियोगो द्रष्टव्यः । अपनोदनेन व्याख्यातम् इति । आविष्टभूतपिशाचाद्युच्चाटनार्थं फलीकरणतुषावतक्षणहोमादीनि 'आरंभौ' ( अ १,२६ ) इत्यपनोदनसूक्तकर्तव्यानि अपनोदनानि कर्माणि अनेन गणेन कुर्यादित्यर्थः ।

स्तुवानमग्न आ वह² यातुधानं किमीदिनम् ।
त्वं हि देव³ वन्दितो हन्ता दस्योर्बभूविथ ॥ १ ॥

स्तुवानम् । अग्ने । आ । वह । यातुऽधानम् । किमीदिनम् ।
त्वम् । हि । देव । वन्दितः । हन्ता । दस्योः । बभूविथ ॥ १ ॥

१. आपः इव S', Kd.   २. वय पै. ४,४,१.   ३. देवानां स्तुतो प. ।

अङ्गति गच्छति सर्वजाठरवैद्युतादिरूपेण कृत्स्नं जगद् व्याप्नोति इति अग्निः। अगि रगि लगि गत्यर्थाः। 'अङ्गेर्नलोपश्च' ( पाउ ४,५० ) इति निप्रत्ययः तत्संनियोगेन नलोपश्च। यद्वा अग्रणीत्वादिगुणयोगाद् अग्निः। आह च यास्कः—'अग्निः कस्मात्। अग्रणीर्भवति अग्रं यज्ञेषु प्रणीयते अङ्गं नयति संनममानः। अक्नोपनो भवतीति स्थौलाष्ठीविः। न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः। स खलु एतेः अकारम् आदत्ते, गकारम् अनक्तेर्वा दहतेर्वा नीः परः' ( या ७,१४ ) इति। ईदृश हे अग्ने स्तुवानं मया दत्तं हविः प्रशंसन्तम् अस्माभिः स्तूयमानं वा देवम् आ वह आनय। मदीयं कर्म प्रापय। वह प्रापणे। अस्मात् लोटि 'अतो हेः' ( पा ६,४,१०५ ) इति हेर्लुक्। स्तुवानम् इति। ष्टुञ् स्तुतौ कर्तरि लटः शानच् आदेशः। कर्मणि लटो वा शानचि यगभावश्छान्दसः। 'अचि श्नुधातु' ( पा ६,४,७७ ) इत्यादिना उवङ्। अग्नेः आवहनकर्तृत्वम् अन्यत्रापि आम्नातम् — 'अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे' ( ऋ १,१२,३ ) इति। 'अग्निम् अग्न आवह' ( तैब्रा ३,५,३,२ ) इति च। किमीदिनं किम् किम् इदानीं वर्तत इति चरन्तम्। 'किमीदिने किम् इदानीमिति चरते' ( या ६,११ ) इति यास्कः। जिघांसया प्रच्छन्नचारिणं यातुधानं राक्षसम्। अपसारय इति योग्यक्रियाध्याहारः। यद्वा हे अग्ने स्तुवानम्। विभक्तिव्यत्ययः। स्तूयमानः त्वं किमीदिनं यातुधानं राक्षसम् आ वह प्रतीकारार्थम् अस्मिन् जने आवेशय। अथ वा निग्रहार्थं स्वसमीपम् आनयेत्यर्थः। यद्वा हे अग्ने त्वत् सकाशाद् भीत्या त्वां स्तुवन्तं तं यातुधानम् इति सामानाधिकरण्येन संबन्धः। अपि च हे देव दानादिगुणयुक्त त्वं वन्दितः अस्माभिर्नमस्कारादिना प्रार्थितः सन् दस्योः उपक्षयकारिणो राक्षसादेः। दसु उपक्षये। अस्माद् औणादिको युप्रत्ययः। तस्य हन्ता घातयिता हि यस्मात् कारणात् बभूविथ भवसि तस्माद् आ वहेति पूर्वेण संबन्धः। भू सत्तायाम्। 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ) इति वर्तमानेर्थे लिट्। 'हि च' ( पा ८,१,३४ ) इति निघातप्रतिषेधः।

आज्यस्य परमेष्ठिन् जातवेदस्तनूवशिन्। 
अग्ने तौलस्य प्राशान यातुधानान् वि लापय॥ २ ॥

आज्यस्य। परमेऽस्थिन्। जातऽवेदः। तनूऽवशिन्। 
अग्ने। तौलस्य। प्र। अशान। यातुऽधानान्। वि। लापय ॥ २ ॥

[1] [ हे परमेष्ठिन् ] उत्कृष्टस्थाने तिष्ठतीति परमेष्ठी। स्वर्गाद्युत्कृष्टस्थाननिवासिन्। [2] तिष्ठतेः औणादिकः किनिप्रत्ययः। 'तत्पुरुषे कृति बहुलम्' ( पा ६,३,१४ ) इति

१. आवाहन° S', Kd. २ °मेष्ठि Bh, C, R, RW. ३. °वशिम् पै ३,४,२ [मूको.]. ४. तूलस्य पै. [मूको.]. ५ °पयः पै. [मूको].

सप्तम्या अलुक्। 'अम्बाम्बगोभूमि' (पा ८,३,९७) इत्यादिना षत्वम्। 'आमन्त्रितस्य च' (पा ८,१,१९) इति आष्टमिकं सर्वानुदात्तत्वम्। हे जातवेदः जातानां वेदितः। जातशब्दोपपदात् विद ज्ञाने इत्यस्मात् 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' (पाउ ४,२२७) इति असुन्। अस्य पादादित्वाद् आष्टमिकनिघाताभावे 'आमन्त्रितस्य च' (पा ६,१,१९८) इति षाष्ठिकम् आद्युदात्तत्वम्। यास्कस्तु बहुधा निरवोचत्— 'जातवेदाः कस्मात्। जातानि वेद, जातानि वैनं विदुः, जाते जाते विद्यत इति वा, जातवित्तो वा, जातधनो वा[1], जातविद्यो, वा जातप्रज्ञो वा। यत्तज्जातः पशून् अविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति हि[3] ब्राह्मणम्' (या ७, १९) इति। हे तनूवशिन् तनूनां सकलप्राणिशरीराणां जाठराग्निरूपेण वशयितः ईदृशमहिमोपेत हे अग्ने तौल्स्य। तुलावत् हूयमानद्रव्यस्य परिच्छेदकत्वात् स्रुक्स्रुवादिकम् अत्र तुलाशब्देन उच्यते। तत्र स्रुवादौ स्थितम् आज्यं तौलम्। 'तस्येदम्' (पा ४,३,१२०) इति अण्। यद्वा तुल उन्माने। अस्मात् कर्मणि घञ्। तोल्यते उन्मीयते स्रुवादिना अवदीयत इति तोलम्। स्वार्थिकस्तद्धितः राक्षसवायसादिवत्। अवदीयमानस्य आज्यस्य। 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। आज्यं प्राशान[2] अद्धि। आज्यस्य भागम् इति भागपदाध्याहारेण वा संबन्धः। अश भोजने। लोण्मध्यमैकवचने 'हलः श्नः शानज्झौ' (पा ३,१,८३) इति श्नाप्रत्ययस्य शानजादेशः। 'अतो हेः' (पा ६,४,१०५) इति हेर्लुक्। अस्माभिर्दत्तं हविः स्वीकृत्य प्राप्तबलः सन् यातुधानान् उपद्रवकारिणो राक्षसान् वि लापय विनाशय। लीङ् श्लेषणे। अस्मात् 'हेतुमति च' (पा ३,१,२६) इति णिच्। 'विभाषा लीयतेः' (पा ६,१,५१) इति आत्वम्। 'अर्तिह्री' (पा ७,३,३६) इत्यादिना पुगागमः। यद्वा रप लप व्यक्तायां वाचि। अस्मात् णिच्। 'अत उपधायाः' (पा ७,२,११६) इति वृद्धिः। वीत्युपसर्गवशाद् अत्र धातुः वचनविशेषं परिदेवनम् आह। तद् उक्तम्-

'धात्वर्थं बाधते कश्चित् कश्चित् तम् अनुवर्तते।
तमेव विशिनष्ट्येक उपसर्गगतिस्त्रिधा ॥' इति।

आर्तस्वरान् कुर्वित्यर्थः।

वि ल॑पन्तु यातु॒धाना॑ अ॒त्त्रिणो॒ ये कि॑मी॒दिनः॑।
अथे॒दम॑ग्ने नो ह॒विरिन्द्र॑श्च॒ प्रति॑ हर्यतम्[4][5] ॥ ३ ॥

वि। ल॒प॒न्तु॒। या॒तु॒ऽधानाः॑। अ॒त्त्रिणः॑। ये। कि॒मी॒दिनः॑।
अथ॑। इ॒दम्। अ॒ग्ने॒। नः॒। ह॒विः। इन्द्रः॑। च॒। प्रति॑। ह॒र्य॒त॒म् ॥ ३ ॥

१. वा नास्ति ल.। २. 'प्रशान: ल.। ३. हि नास्ति ल.। ४. यथेदम् पं ४,४,३ [मूको.]। ५. हर्यताम् पै. [मूको.]।

अत्रिणः अदनशीलाः सर्वेषां भक्षकाः। अद भक्षणे। 'अदेस्त्रिनिश्च' (पाउ ४,६८) इति औणादिकस्त्रिनिप्रत्ययः। प्रत्ययस्वरेण अन्तोदात्तत्वम्। किमीदिनः किं किम् इदानीं वर्तत इति स्वप्रवृत्तये कालान्वेषणं कुर्वन्तः। अथ वा किम् इदं किम् इदम् इति स्वोचितं पदार्थम् अन्विष्य चरन्तः ये प्रसिद्धा यातुधानाः राक्षसाः सन्ति ते वि ल्पन्तु परिदेवनं कुर्वन्तु। हे अग्ने त्वया पीडिताः सन्तः विनश्यन्तु इत्यर्थः। अथ क्रियमाणयागाद्यन्तरायकारिरक्षोविनाशानन्तरम् हे अग्ने त्वम् इन्द्रः परमैश्वर्ययुक्तो देवश्च नः अस्मदीयम् इदम् आज्यादिरूपं हविः प्रति लक्ष्यीकृत्य हर्यतम् आगच्छतम् कामयेथां वा। स्वीकुरुतम् इत्यर्थः। हर्य गतिकान्त्योः। इन्द्र इति। इदि परमैश्वर्ये। 'ऋज्रेन्द्राग्र' (पाउ २,२८) इत्यादिना रन्प्रत्ययान्तो निपातितः। निरवाद् आद्युदात्तत्वम्।

अ॒ग्निः पूर्व॒ आ र॑भतां॒ प्रेन्द्रो॑ नुदतु बा॒हुमा॑न्।
ब्रवी॑तु॒ सर्वो॑ यातु॒मान् अ॒यम॒स्मीत्येत्य॑ ॥ ४ ॥

अ॒ग्निः। पूर्वः॑। आ। र॒भता॒म्। प्र। इन्द्रः॑। नु॒द॒तु॒। बा॒हु॒ऽमान्।
ब्रवी॑तु। सर्वः॑। या॒तु॒ऽमान्। अ॒यम्। अ॒स्मि॒। इति॑। आ॒ऽइत्य॑ ॥ ४ ॥

अग्निः अङ्गनादिगुणयुक्तो देवः पूर्वः सर्वदेवानां पुरोगामी सन् आ रभतां यातुधानान् निग्रहीतुम् उपक्रमताम्। रभ राभस्ये। राभस्यं कार्योपक्रमः। 'अग्निः खलु वै रक्षोहा' (तै ६,१,८,६) इति हि तैत्तिरीयकम्। अग्नेः प्राथम्यमपि तत्रैव आम्नातम्— 'अग्निरग्रे प्रथमो देवतानाम्' (तैब्रा २,४,३,३) इति। तदनन्तरं बाहुमान् बलवत्त्वेन प्रशस्तबाहुयुक्तः। भूमनिन्दाप्रशंसासु इति प्रशंसायां बाहुशब्दात् मतुप्। 'ह्रस्वनुड्भ्यां मतुप्' (पा ६,१,१७६) इति मतुप् उदात्तत्वम्। ईदृश इन्द्रः प्रानुदतु यातुधानान् प्रेरयतु अपसारयतु। नुद प्रेरणे। तुदादित्वात् शः। शस्य ङित्वात् लघूपधगुणाभावः। तिपः पित्त्वाद् अनुदात्तत्वे विकरणस्य प्रत्ययस्वरेण उदात्तत्वे प्राप्ते 'तिङ्ङतिङः' (पा ८,१,२८) इति सर्वानुदात्तत्वम्। 'व्यवहिताश्च' (पा १,४,८२) इति उपसर्गस्य व्यवहितप्रयोगः। इन्द्रेण प्रणुद्यमानो यातुमान्। यातूनि रक्षांसि विद्यन्ते अस्मिन्निति यातुमान् राक्षसाधिपतिः। यद्वा यातवो यातनाः। यत निकारोपस्कारयोः इत्यस्मात् औणादिक उण्। ता अस्मिन् विद्यन्त इति यातुमान् तादृशः सर्वः निखिलो यातुधानः एत्य इमं देशम् आगत्य अयम् अयम् आस्म एतन्नामकोऽहं भवामि इति ब्रवीतु कथयतु। आत्मानं प्रकाश्य निर्गच्छतु इत्यर्थः। एत्येति। आङ्पूर्वाद् इण गतौ इत्यस्मात् 'समासेऽनञ्पूर्वे क्त्वो ल्यप्'

१ यातुधानाः द्विः S', Kd.

(पा ७,१,३७) इति क्त्वाप्रत्ययस्य ल्यबादेशः। तस्य पित्त्वात् 'ह्रस्वस्य पिति कृति तुक्' (पा ६,१,७१) इति तुक्। प्रवीत्विति। ब्रूञ् व्यक्तायां वाचि। अदादित्वाच्छपो लुक्। 'ब्रुव ईट्' (पा ७,३,९३) इति ईडागमः।

पश्याम ते वीर्यं जातवेदः प्र णो ब्रूहि यातुधानान् नृचक्षः।
त्वया सर्वे परितप्ताः पुरस्तात् त आ यन्तु प्रब्रुवाणा उपेदम् ॥५॥

पश्याम। ते। वीर्यम्। जातऽवेदः। प्र। नः। ब्रूहि। यातुऽधानान्। नृऽचक्षः।
त्वया। सर्वे। परिऽतप्ताः। पुरस्तात्। ते। आ। यन्तु। प्रऽब्रुवाणाः। उप। इदम् ॥५॥

हे जातवेदः जातानाम् उत्पन्नानां वेदितरग्ने ते तव वीर्यं सामर्थ्यं पश्याम द्रक्ष्यामः। दृशिर् प्रेक्षणे। अस्मात् लोटि उत्तमबहुवचने 'आडुत्तमस्य पिच्च' (पा ३,४,९२) इति आडागम। शपि 'पाघ्रा' (पा ७,३,७८) इत्यादिना धातोः पश्यादेशः। मसः पिद्वद्भावात् शपश्च पित्त्वात् अनुदात्तत्वे धातुस्वरेण आद्युदात्तत्वम्। वीर्यम् इति। 'वीर्यं' 'यत्वमक्ष्यवीर्याणि छन्दसि' (फि ४,९) इति अन्तस्वरितत्वम्। हे नृचक्षः नॄन् मनुष्यान् चष्टे पश्यतीति नृचक्षाः। अतिरोहितज्ञानतया सर्वं साक्षात् कर्तुं शक्त इत्यर्थः। यद्वा नृभिर्मनुष्यैः ख्यायते दृश्यते उपास्यत्वेन साक्षात् क्रियत इति नृचक्षाः। 'चष्टिः पश्यतिकर्मा' (तु निघ ३,११) इति यास्कः। चक्षिङ् व्यक्तायां वाचि। नृशब्दोपपदाद् अस्मात् कर्तरि कर्मणि वा असुन्। 'असनयोश्च प्रतिषेधो वक्तव्यः' (पावा २,४,५४) इति ख्याञादेशाभावः। हे तथाविध अग्ने नः अस्माकं बाधकान् यातुधानान राक्षसान् प्र ब्रूहि प्रकथय। यथा अस्मान् पुनःपुनर्न बाधन्ते तथा यातुधानान् आज्ञापयेत्यर्थः। ब्रूहि। ब्रूञ् व्यक्तायां वाचि। अदादित्वात् शपो लुक्। 'सेर्ह्यपिच्च' (पा ३,४,८७) इति हेः अपित्त्वेन ङित्त्वात् 'क्ङिति च' (पा १,१,५) इति गुणप्रतिषेधः। अपि च त्वया एवम् आज्ञापयता पुरस्तात् पूर्वस्मिन् काले[3] परितप्ताः परितः समन्ताद् दग्धाः ते सर्वे यातुधानाः प्रब्रुवाणाः स्वस्वनामादिकं कथयन्तः प्रलपन्तो वा इदं क्रियमाणं कर्म उप आ यन्तु उप समीपम् आयन्तु आगच्छन्तु। आगत्य विनश्यन्तु इत्यर्थः। पुरस्तादिति। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा ५,३,३९) 'अस्ताति च' (पा ५,३,४०) इति पूर्वशब्दात् अस्तातिप्रत्ययः तत्संनियोगेन पुरादेशश्च। प्रब्रुवाणा इति। प्रपूर्वात् ब्रूञः लटः शानच्। चित्त्वाद् अन्तोदात्तत्वे कृदुत्तरपद-प्रकृतिस्वरत्वेनापि स एव शिष्यते।

१. पश्यामि ते वीर्या पं ४,४,५. २. पुरस्ताद् आयान्तु प.। ३. लोके S', Kd.

आ रभस्व जातवेदोऽस्माकार्थाय जज्ञिषे।
दूतो नो अग्ने भूत्वा यातुधानान् वि[1] लापय ॥ ६ ॥

आ । रभस्व । जातऽवेदः । अस्माकं । अर्थाय । जज्ञिषे ॥
दूतः । नः । अग्ने । भूत्वा । यातुऽधानान् । वि । लापय ॥ ६ ॥

हे जातवेदः जातानां वेदितरग्ने आ रभस्व राक्षसापनोदनकर्म कर्तुम् उपक्रमस्व। तत्र कारणम् आह — अस्माक। अस्मदः षष्ठीबहुवचनस्य 'साम आकम्' ( पा ७,१,३३ ) इति आकम् आदेशः। शेषे लोपे अन्त्यलोपश्छान्दसः। यदा हि शेषे लोपष्टिलोप इष्यते तदा 'अनुदात्तस्य च यत्रोदात्तलोपः' ( पा ६,१,१६१ ) इति आकम आदेरुदात्तत्वम्। यदा तु अन्त्यलोपः तदा 'एकादेश उदात्तेनोदात्तः' ( पा ८,२,५ ) इति उदात्तत्वम्। ग्रहरोगादिपीडितानाम् अस्माकम् अर्थाय प्रयोजनाय। प्रेप्सितं प्रयोजनं संपादयितुम् इत्यर्थः। यद्वा अर्थशब्दो निवृत्तिवचनः। अनर्थनिवृत्तये यतस्त्वं जज्ञिषे जातवानसि। जनी प्रादुर्भावे। अस्मात् लिटि 'असंयोगाल्लिट् कित्' ( पा १,२,५ ) इति लिटः कित्त्वे 'गमहन॰' ( पा ६,४,९८ ) इत्युपधालोपः। तस्य 'द्विर्वचनेऽचि' ( पा १,१,५९ ) इति स्थानिवद्भावात् साच्कस्य द्विर्वचनम्। 'आर्धधातुकस्येड् वलादेः' (पा ७,२,३५) इति इडागमः। ततः हे अग्ने नः अस्माकं दूतः यथोक्तकर्मकरो भूत्वा अभूततद्भावद्योतकेन भूत्वा इत्यनेन स्वयम् अदूतः सन्नपि दूतवत् संनिहितो भूत्वा मदभिलषितं कुरु इत्युक्तं भवति। यातुधानान् राक्षसान् वि लापय विनाशय।

त्वमग्ने यातुधानान् उपबद्धाँ इहा[2] वह।
अथैषामिन्द्रो वज्रेणापि[3] शीर्षाणि वृश्चतु ॥ ७ ॥

त्वम् । अग्ने । यातुऽधानान् । उपऽबद्धान् । इह । आ । वह ।
अथ । एषाम् । इन्द्रः । वज्रेण । अपि । शीर्षाणि । वृश्चतु ॥ ७ ॥

हे अग्ने त्वं यातुधानान् राक्षसान् उपबद्धान् रज्ज्वादिबद्धहस्तपादाद्यवयवान् कृत्वा इह अस्मिन् देशे आ वह आनय। अथ अनन्तरमेव इन्द्रो देवानाम् अधिपतिः एषां यातुधानानां शीर्षाणि शिरांस्यपि वज्रेण कुलिशेन वृश्चतु छिनत्तु। ओव्रश्चू छेदने। तुदादित्वात् शः। तस्य 'सार्वधातुकम् अपित्' ( पा १,२,४ ) इति ङित्त्वात् 'ग्रहिज्या' ( पा ६,१,१६ ) इत्यादिना संप्रसारणम्।

इति द्वितीयेनुवाके प्रथमं सूक्तम् ॥

१. उत्तिष्ठ पै ४,४,६. २. इहानय पै.। ३. इहानय पै. ४,४,७. ४. वज्रेणाप पै.; वज्रेण अप [मको.]।

'इदं हविः' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः। सूत्रमपि तत्रैव उदाहृतम् ॥

इदं हविर्यातुधानान् नदी फेनमिवा वहत् ।
य इदं स्त्री पुमानकरिह स स्तुवतां जनः ॥ १ ॥

इदम् । हविः । यातुऽधानान् । नदी । फेनम्ऽइव । आ । वहत् ।
यः । इदम् । स्त्री । पुमान् । अकः । इह । सः । स्तुवताम् । जनः ॥१॥

इदं मया अग्न्यादिदेवेभ्यो दीयमानं हविः आज्यादिरूपं यातुधानान् रक्षःपिशाचादीन् आ वहत् आ समन्ताद् गमयतु। अस्मात् स्थानात् प्रच्यावयतु इत्यर्थः। वह प्रापणे । 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति प्रार्थनायां लङ्। तत्र दृष्टान्तः— नदी तरङ्गिणी फेनमिव। सा यथा स्वकीयेन प्रवाहेण फेनं देशाद् देशान्तरं प्रापयति तद्वद् इत्यर्थः। नद ध्वन शब्दे। नदति ध्वनतीति नदी। पचाद्यच्। तत्र नदट् इति टित्त्वेन पाठात् 'टिड्ढाणञ्°' (पा ४,१,१५) इति ङीप्। 'यस्य°' (पा ६,४,१४८) इति लोपे उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। 'नदनान्नद्यः' (या २,२४) इति यास्कः। मन्त्रवर्णश्च— 'यददः संप्रयतीरहावनदता हते। तस्मादा नद्यो नाम स्थ' (अ ३,१३,१) इति। तदनन्तरम् इदम् अभिचारकर्म यो जनः स्त्री[1] वा पुमान् वा अकः अकार्षीत्। डुकृञ् करणे। अस्मात् लुङि 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक्। गुणे 'हल्ङ्याब्भ्यः' (पा ६,१,६८) इति तिलोपः[2]। 'यद्वृत्तान्नित्यम्' (पा ८,१,३६) इति निघातप्रतिषेधः। स जनः स्वकीयस्य अभिचारकर्मणो निष्फलत्वेन अनाप्तकामः सन् इह अस्मिन् देशे मत्समीपे स्थित्वा स्तुवतां स्तुतिं करोतु। मामेव शरणं प्राप्य सेवताम् इत्यर्थः। यद्वा यः[3] स्त्री वा पुमान् वा जनः इदम् उक्तं हविः परकृतोपद्रवनिवृत्तये अकः अकार्षीत् हे अग्न्यादिदेव स जनः निवृत्तोपद्रवः सन् स्तुवताम् त्वां स्तुत्यादिना परिचरतु इत्यर्थः। ष्टुञ् स्तुतौ। अस्मात् लोटि व्यत्ययेन शः। 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः।

अयं स्तुवान आगमदिमं स्म प्रति हर्यत।[4]
बृहस्पते वशे लब्ध्वाग्नीषोमा[5] वि विध्यतम् ॥ २ ॥

1. स्त्री वा पुमाकार्षीत् S', Kd. 2. लोपः इति S', Kd. 3. या S', Kd.
4. °मद् तं स्मोत पै ७,४,१०. 5. कृत्वा° पै.; कृता° ( मूको. )।

अयम् । स्तुवानः । आ । अगमत् । इमम् । स्म । प्रति । हर्यत ।
बृहस्पते । वशे । लब्ध्वा । अग्नीषोमा । वि । विध्यतम् ॥ २ ॥

बृहस्पत्यादयो वक्ष्यमाणा [हे] देवाः अयं राक्षसपीडितो जनः स्तुवानः युष्मद्विषयां स्तुतिं कुर्वाणः आगमत् आगतवान्। बहुविधोपद्रवनिवृत्तये संरक्षकान् युष्मानेव प्राप्त इत्यर्थः। गम्लृ सृप्लृ गतौ। लुङि 'पुषादिद्युताद्लृदितः परस्मैपदेषु' (पा ३, १,५५) इति च्लेः अङादेशः। स्तुवान इति। लटः शानच्। अदादित्वात् शपो लुक्। शानचो ङिद्वद्भावाद् गुणाभावे उवङ्। 'चितः' (पा ६,१,१६३) इति अन्तोदात्तत्वम्। यत एवम् आगमत् अतो हेतोः इमं युष्मत्समीपं प्राप्तं जनं हे देवाः प्रति हर्यत स्म प्रतिकामयध्वम्। स्वकीयत्वेन परिगृह्णीतेत्यर्थः। हर्य गतिकान्त्योः। 'स्मे लोट्' (पा ३,३,१६५) 'अधीष्टे च' (पा ३,३,१६६) इति लोट्। हे बृहस्पते बृहतां महतां देवानां पालयितर्देव। 'तद्बृहतोः करप तोश्चोरदेवतयोः॰' (पावा ६,१,१५७) इति सुट्तलोपौ। 'आमन्त्रितस्य च' (पा ६,१,१९८) इति षाष्ठिकम् आद्युदात्तत्वम्। त्वत्समीपं प्राप्तस्य अस्य उपद्रवकारिणः सर्वान् वशे लब्ध्वा स्वाधीनान् कृत्वा तिष्ठ। ते यथा इमं जनं नोपसर्पेन्ति तथा निरुध्य वर्तस्वेत्यर्थः। अपि च हे अग्नीषोमा अग्नीषोमौ। अग्निश्च सोमश्चेति द्वन्द्वे 'ईदग्नेः सोमवरुणयोः'(पा ६,३,२७) इति पूर्वपदस्य ईत्वम् 'अग्नेः स्तुत्स्तोमसोमाः' (पा ८,३,८२) इति षत्वम्। 'सुपां सुलुक्॰' (पा ७,१,३९) इति पूर्वसवर्णदीर्घः। पादादित्वाद् आष्टमिकनिघाताभावे षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम्। युवां वि विध्यतं तान् उपद्रवकारिणो विविधं ताडयतम्। मारयतम् इत्यर्थः। अग्नीषोमौ हि राजत्वात् शिक्षाधिकारिणौ इति तयोरेवात्र प्रार्थनम्। राजत्वं च तयोस्तैत्तिरीयके समाम्नायते— 'राजानौ वा एतौ देवतानां यद् अग्नीषोमौ' (तै २,६,२,१;२) इति। व्यध ताडने। अस्माद् विपूर्वात् लोटि दिवादित्वात् श्यन्। तस्य ङिद्वद्भावात् 'ग्रहिज्या' (पा ६,१,१६) इत्यादिना संप्रसारणम्। यद्वा अयं यातुधानः युष्मत्तः अत्यर्थं भीतः सन् स्तुवानः युष्मान् स्तुवन् आगमत् युष्मन्निकटं प्राप्तवान्। इमम् आगतं यूयं प्रति हर्यत स्म अस्माकं प्रतिकूलम् अवगच्छत। हे बृहस्पते इमं वशे लब्ध्वा इत्यादि पूर्ववद् योज्यम्।

यातुधानस्य सोमप जहि प्रजां नयस्व च ।
[1]नि स्तुवानस्य पातय परमक्ष्युतावरम् ॥ ३ ॥

---

१, प्रातम् S', Kd. २. नयस्व पै (मूको.)४,४.८. ३. निः R, V, ; न्य पै. (मूको.)। ४. परमक्षुतावरम् पै. (मूको.)।

यातुऽधानस्य । सोमऽप । जहि । प्रऽजाम् । नयस्व । च ।
निः । स्तुवानस्य । पातय । परम् । अक्षि । उत । अवरम् ॥ ३ ॥

हे सोमप सोमरसस्य पातरग्ने । 'आतोनुपसर्गे कः' ( पा ३,२,३ ) इति कर्मणि उपपदे पिबतेः कप्रत्ययः । यातुधानस्य राक्षसस्य प्रजाम् पुत्रपौत्रादिलक्षणां संततिं जहि नाशय । हन हिंसागत्योः । अस्मात् लोटि 'सेर्ह्यपिच्च' ( पा ३,४,८७ ) इति हिरादेशः । 'हन्तेर्जः' ( पा ६,४,३६ ) इति धातोर्जादेशः । तस्य 'असिद्धवदत्रा भात्' ( पा ६,४,२२ ) इति असिद्धत्वाद् 'अतो हेः' ( पा ६,४,१०५ ) इति लुगभावः । यद्वा यातुधानस्य इति कर्मणि षष्ठी । यातुधानम् अस्मदुपद्रवकारिणं राक्षसं जहि । प्रजाम् अस्मदीयां नयस्व च अभिमतफलं प्रापय च । अनिष्टपरिहारम् इष्टप्राप्तिं च कुरु इत्यर्थः । अपि च स्तुवानस्य भीत्या त्वद्विषयां स्तुतिं कुर्वतः शत्रोः परम् उत्कृष्टं दक्षिणम् अक्षि । उतशब्दः अप्यर्थे । अवरम् निकृष्टं वामाक्ष्यपि । उभे अपि चक्षुषी निष्पातय स्वस्थानात् प्रच्यावय । विनाशयेत्यर्थः । 'तस्माद् दक्षिणोर्ध आत्मनो वीर्यावत्तरः' ( तै १,७,६,३ ) इति श्रुत्या पुरुषशरीरे दक्षिणभागस्य अतिशयितवीर्यवत्त्वप्रतिपादनात् तद्भागवर्तिनश्चक्षुषः परत्वम् उक्तम् । तदपेक्षया च इतरस्य अवरत्वम् उन्नेयम् ।

यत्रैषामग्ने जनिमानि वेत्थ गुहा सतामत्रिणां जातवेदः ।
तांस्त्वं ब्रह्मणा वावृधानो जह्येषां शततर्हमग्ने ॥ ४ ॥

यत्र । एषाम् । अग्ने । जनिमानि । वेत्थ । गुहा । सताम् । अत्रिणाम् । जातऽवेदः ।
तान् । त्वम् । ब्रह्मणा । वावृधानः । जहि । एषाम् । शतऽतर्हम् । अग्ने ॥ ४ ॥

हे जातवेदः जातानां वेदितरग्ने गुहा सताम् गुहायां निवसताम् अत्रिणाम् अदनशीलानाम्[1] एषाम् रक्षसां यत्र यस्मिन् स्थानविशेषे विद्यमानानि जनिमानि जन्मानि वेत्थ जानासि । यत्रेति । 'सप्तम्यास्त्रल्' ( पा ५,३,१० ) 'प्राग्दिशो विभक्तिः' ( पा ५,३,१ ) इति विभक्तिसंज्ञायां 'त्यदादीनामः' ( पा ७,२,१०२ ) इति अत्वम् । 'लिति' ( पा ६,१,१९३ ) इति प्रत्ययात् पूर्वस्य उदात्तत्वम् । जनिमानीति । जनी प्रादुर्भावे । अस्माद् भावे औणादिक इमनिन् प्रत्ययः । वेत्थेति । विद ज्ञाने । 'विदो लटो वा' ( पा ३,४,८३ ) इति सिपस्थलादेशः । लित्स्वरेण आद्युदात्तत्वम् । 'निपातैर्यद्यदिहन्त०' ( पा ८,१,३० ) इति निघातप्रतिषेधः । सताम् इति । अस्तेर्लटः शत्रादेशः । अदादित्वात् शपो लुक् । 'श्नसोरल्लोपः' ( पा ६,४,१११ ) इत्यकारलोपः । अत्रिणाम् इति । 'अदेस्त्रिनिश्च' ( पाउ ४,६८ ) इति त्रिनिप्रत्ययः । अतो हेतोः हे अग्ने त्वम् ब्रह्मणा मन्त्रेण वावृधानः

1. °शालिनाम् S', Kd.

वर्धमानः सन् । वृधु वृद्धौ । अस्मात् लिटः कानच् । तान् तत्र स्वस्थाने वर्तमानान् राक्षसान् जहि नाशय । तथा एषाम् यातुधानानां शततर्हम् शतप्रकारं बहुविधं हिंसनं च निवर्तय । तत्कृतोपद्रवजातमपि नाशयेत्यर्थः । यद्वा ब्रह्मणा परिवृढेन अस्माभिर्दत्तेन हविषा वावृधानः वर्धमानः प्रवृद्धबलस्त्वम् तान् अत्त्रिणो राक्षसान् एषाम् रक्षसां त्वया ज्ञातानि पुत्रपौत्रादिरूपाणि जन्मानि च शततर्हम् । क्रियाविशेषणम् एतत् । शतशो बहुशस्तर्हणं हिंसनं यथा भवति तथा जहि । निरवशेषं नाशयेत्यर्थः । तृह हिसि हिंसायाम् । अस्माद् भावे घञ् ।

इति प्रथमकाण्डे द्वितीयेनुवाके द्वितीयं सूक्तम् ।

'अस्मिन् वसु' इति सूक्तेन सर्वसंपत्कर्मसु वासितयुग्मकृष्णलमणिबन्धनम् सारूपवत्सौदने पुरुषाकृतिम् आलिख्य तत्प्राशनं च कुर्यात् । तथा च सूत्रम् —'अस्मिन् वसु'[1] ××× इति युग्मकृष्णलं वासितं बध्नाति । सारूपवत्सं पुरुषगात्रम्' ( कौसू. ११,१९;२० ) इत्यादि । अत्र वासितम् इत्यस्य अयम् अर्थः—'त्रयोदश्यादयस्तिस्रो दधिमधुनि वासयित्वा बध्नाति । आशयति' ( कौसू. ७,१९;२० ) इति परिभाषणात् त्रयोदश्यादिषु दिवसेषु दधिमधुपूर्णे पात्रे मणिं प्रक्षिप्य चतुर्थेहनि तन्मणिबन्धनं तद्दधिमधुप्राशनं च कुर्याद् इति । तथा शत्रुणा राष्ट्रात् प्रच्यावितस्य राज्ञः पुनः स्वराष्ट्रप्रवेशार्थं छेदनप्रदेशात्[2] पुनः प्ररूढैः काम्पीलकाष्ठैः[3] शृतं लूनपुनरुत्थितव्रीहिजम् ओदनम् अनेनैव सूक्तेन प्राशयेत् । तथा च संहिताविधौ —'अस्मिन् वस्विति राष्ट्रावगमनम्[4] । आनुशूकानां[5] व्रीहीणाम् आत्रस्कजैः काम्पीलैः[6] शृतं सारूपवत्सम् आशयति' ( कौसू. १६,२७;२८ ) इति ।

तथा आयुष्कामः युग्मकृष्णलमणिं स्थालीपाके प्रक्षिप्य तन्मणिबन्धनम् तदोदनप्राशनं च अनेनैव सूक्तेन कुर्यात् । तथा च कौशिकः—'अस्मिन् वसु'[1] ××× इति युग्मकृष्णलम् आदिष्टानां स्थालीपाक आधाय बध्नाति । आशयति' ( कौसू. ५२,२०;२१ ) इति ।

तथा उपनयनकर्मणि माणवकानुमन्त्रणेपि एतत् सूक्तं विनियुक्तम् । 'उपनयनम्' प्रक्रम्य सूत्रितम्—''प्राञ्चम् अवस्थाप्य दक्षिणेन पाणिना नाभिदेशे संस्तभ्य जपतीति[7] । 'अस्मिन् वसु वसवो धारयन्तु' ( अ १,९ ) 'विश्वे देवा वसवः' ( अ १,३० ) 'आ यातु मित्रः' ( अ ३,८ ) 'अमुत्र भूयात्' ( अ ७,५५ ) 'अन्तकाय मृत्यवे' ( अ ८,१ ) 'आ रभस्व' ( अ ८,२ ) 'प्राणाय नमः' ( अ ११,६ ) 'विषासहिम्' ( अ १७,१ ) इत्यभिमन्त्रयते[8]'' ( कौसू. ५५,१-१७ ) इति ।

१. वसु यदावध्नन्वव प्राणान् इति सकलः पाठः । २. प्रवेशात् S', Kd. ३. काम्पील° S', Kd. ४. °ष्ट्राग° S', Kd. ५. तुषुकाराणां S', Kd. ६. कंपील S',Kd. ७. जपतीति S', Kd. ८. इत्यनुमन्त्रयते तु. Bl. ; वैतु. S', Kd.

एतेषामेव आयुष्यगणत्वात् 'आयुष्यस्वस्त्ययनैराज्यं जुहुयात्' (कौसू १३९,७) इति सूत्राद् उपाकर्मादिष्वपि एतत् सूक्तं द्रष्टव्यम्।

तथा 'ऐरावतीं गजक्षये' (शाक १७,५) इति विहितायाम् ऐरावत्याख्यायां महाशान्तावपि अस्य विनियोगः। तथा [च] शान्तिकल्पे— 'आयुष्यशान्तिस्वस्तिगण ऐरावत्याम्' (शाक १८,८) इति।

तथा 'बार्हस्पत्यां राज्यैश्रीब्रह्मवर्चसकामस्य' (शाक १७,१) इत्युक्तायाम् 'अस्मिन् वस्विति युग्मकृष्णलं बार्हस्पत्यायाम्' (शाक १९,२) इत्युक्तत्वाद् बार्हस्पत्याख्यायां महाशान्तौ युग्मकृष्णलमणिबन्धनेपि एतत् सूक्तं द्रष्टव्यम्।

पुष्याभिषेककर्मणि *[अपि] एतत् सूक्तम् *[द्रष्टव्यम्]। तथा च परिशिष्टे—

'शर्मवर्मगणश्चैव तथा स्याद् अपराजितः।
आयुष्यश्चाभयश्चैव तथा स्वस्त्ययनो गणः॥
एतान् पञ्च गणान् हुत्वा वाचयेत द्विजोत्तमान्।' (अप ५,३,५;४,१) इति।

**अ॒स्मिन् वसु॒ वस॑वो धारय॒न्त्विन्द्रः॑ पू॒षा वरु॑णो मि॒त्रो अ॒ग्निः।**
**इ॒ममा॑दि॒त्या उ॒त विश्वे॑ च दे॒वा उत्त॑रस्मि॒न् ज्योति॑षि धारयन्तु ॥ १ ॥**

अ॒स्मिन्। वसु॑। वस॑वः। धा॒र॒य॒न्तु॒। इन्द्रः॑। पू॒षा। वरु॑णः। मि॒त्रः। अ॒ग्निः।
इ॒मम्। आ॒दि॒त्याः। उ॒त। विश्वे॑। च॒। दे॒वाः। उत्ऽत॑रस्मिन्। ज्योति॑षि। धा॒र॒य॒न्तु॒॥ १ ॥

अस्मिन् जने सर्वसंपदादिफलकामे वसवः निवासहेतुभूता एतत्संज्ञा देवाः वसु अभिलषितं धनं धारयन्तु स्थापयन्तु। धृञ् धारणे। अस्मात् णिच्। वसव इति। वस निवासे। 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (पाउ १,१०) इति उप्रत्ययः। तत्र 'धान्ये नित्' (पाउ १,९) इत्यनुवृत्तेः 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम्। न केवलं वसवः अपि तु इन्द्रः परमैश्वर्ययुक्तो देवानाम् अधिपतिर्देवः। इदि परमैश्वर्ये। 'ऋज्रेन्द्राग्र' (पाउ २,२८) इत्यादिना रन्प्रत्ययान्तो निपातितः। नित्त्वाद् आद्युदात्तत्वम्। यद्वा इदंकारास्पदं विश्वं कारणभूतब्रह्मात्मना अद्राक्षीदिति इन्द्रः। श्रूयते हि ऐतरेयके— 'स एतमेव पुरुषं ब्रह्म ततमम् अपश्यद् इदम् अदर्शमितीं३ तस्माद् इदन्द्रो नाम इदन्द्रो ह वै नाम तम् इदन्द्रं सन्तम् इन्द्रम् इत्याचक्षते।

१. °ष्यैः स्व° Bl. २. आयुष्यः शां° S', Kd. ३. राज्यार्थश्री° Bol.
३. °वर्मा गण° BN. ४. तद्वा पै १,१६,१. ६. उत मे देवाः पै.। ७. °न्त पै. (मूको.)।

परोक्षेण' (ऐआ २,४,३) इति। पूषा पोषकः एतन्नामा देवः। 'पूष्णः पोषेणं महृम्' (तैब्रा १,२,१,१९) 'पूषापोषयत्' (तैब्रा १,६,२,२) इत्यादिश्रुतेः। पुष पुष्टौ। 'श्वन्नुक्षन्' (पाउ १,१५९) इत्यादिना कनिन्प्रत्ययान्तो निपातितः। प्रत्ययस्वरेण अन्तोदात्तत्वम्। वरुणः वृणोति सर्वं जगत् निग्रहीतुं पाशजालेन व्याप्नोतीति वरुणो रात्र्यभिमानी देवः। तथा च श्रूयते — 'ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितताः पुरुत्रा' (आपश्रौ ३,१३,१), 'उदुत्तमं वरुण पाशम् अस्मद् अवाधमं वि मध्यमं श्रथाय' (ऋ १,२४,१५) इति च। वृञ् वरणे। 'कॄवृदारिभ्य उनन्' (पाउ ३,५३) इति उनन्प्रत्ययः। नित्वाद् आद्युदात्तत्वम्। मित्रः अहरभिमानी देवः[3]। 'अहोरात्रे वै मित्रावरुणौ' (तै २,४ १०,१) इत्यादिश्रुतेः। सर्वस्य मरणत्रायकत्वेन सर्वजनमित्रत्वात् मित्र इत्युच्यते। 'सर्वस्य वा अहं मित्रम् अस्मि' (तै ६,४,८,१) इति हि तैत्तिरीयकम्। 'मित्रः प्रमीतेस्त्रायते' (या १०,२१) इति यास्कः। अग्निः एतेषाम् इन्द्रादीनाम् अग्रणीः मुख्यभूतो वा देवः। 'अग्निरग्रे प्रथमो देवतानाम्' (तैब्रा २,४,३,३) 'अग्निर्मुखं प्रथमो देवतानाम्' (ऐब्रा १,४) इति च श्रुतेः। एतेपि अस्मिन् वसु धारयन्तु इति संबन्धः। उत अपि च आदित्याः। अदितिः अदीना देवमाता तस्याः पुत्रा आदित्याः धात्रर्यमादयो देवाः। श्रूयते हि तैत्तिरीयके —'अदितिः पुत्रकामा' इत्यारभ्य 'तस्यै धाता चार्यमा चाजायेताम्' (तैब्रा १,१, ९,१) इत्यादि। 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (पा ४,१,८५) इति अदितिशब्दात् षष्ठीसमर्थाद् अपत्येर्थे प्राग्दीव्यतीयो ण्यप्रत्ययः। प्रत्ययस्वरेण अन्तोदात्तत्वम्। विश्वे सर्वे अन्ये देवाश्च। यद्वा विश्वे देवाः एतत्संज्ञका गणदेवाः इमम् पुरुषम् उत्तरस्मिन् उत्कृष्टतरे ज्योतिषि तेजसि धारयन्तु स्थापयन्तु। तेजसा सर्वोत्कृष्टं कुर्वन्तु इत्यर्थः।

अस्य[4] देवाः प्रदिशि[5] ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम्।
सपत्ना अस्मदधरे भवन्तूत्तमं नाकमधि रोहयेमम् ॥ २ ॥

अस्य। देवाः। प्रऽदिशि। ज्योतिः। अस्तु। सूर्यः। अग्निः। उत। वा। हिरण्यम्। सऽपत्नाः। अस्मत्। अधरे। भवन्तु। उत्ऽतमम्। नाकम्। अधि। रोहय। इमम् ॥ २ ॥

हे देवाः इन्द्रादयः युष्मदाज्ञया अस्य ग्रामादिफलकामस्य पुरुषस्य। कर्तरि कर्मणि वा षष्ठी। प्रदिशि प्रदेशने प्रशासने। आज्ञायाम् इत्यर्थः। ज्योतिरस्तु भवतु। किं तज्ज्योतिरिति तद् आह—सूर्यः मार्ताण्डः सर्वस्य प्रकाशको देवः। अग्निः और्व-जाठरवैद्युतादिरूपः अङ्गनादिगुणयुक्तो देवः। एतत् चन्द्रादीनामपि उपलक्षणम्।

---

१. पूष्णः पूर्वे पोषेण Kd. २. वितस्ताः S'. ३ अहरभिमानी देवो मित्रः S', Kd.
४. अस्मिन् पै १,१६,२ (मूको.)। ५. प्रदिशा पै. (मूको.)।

उतशब्दः अप्यर्थे। वाशब्दः चार्थे। अपि च हिरण्यम् सुवर्णम्। अस्य सितभास्वररूपत्वात् ज्योतिष्ट्वम्। श्रुतं च —'ज्योतिर्वै हिरण्यं ज्योतिषैव तमोपहते' ( तै ५,७,५,२ ) इति। सूर्यादिकं ज्योतिः प्रकाशप्रवर्षणादिना अस्य उपकरोतु। निखिलसंपन्मूलभूतं धनमपि अस्य वशे वर्तताम् इत्यर्थः। प्रदिशीति। दिश अतिसर्जने। अस्मात् प्रपूर्वात् संपदादिलक्षणो भावे क्विप्। यत एवम् अतः सपत्नाः शत्रवः। सपत्नशब्दः शत्रुपर्यायः अव्युत्पन्नं प्रातिपदिकम्। यद्वा सपत्नीव सपत्नः। 'व्यन्तसपत्ने' (पा ४,१, १४५) इति निपातनात् सपत्नीशब्दाद् इवार्थे अकारप्रत्ययः। अस्मत् अस्मदीयात् पुरुषात्। यद्वा असत् अस्मात्। छान्दसं ह्रस्वत्वम्। अधरे निकृष्टा भवन्तु। उपक्षीणा भवन्तु इत्यर्थः। अपि च न केवलम् ऐहिकमेव, आमुष्मिकमपि सुखं प्रार्थयते। उत्तमम् उत्कृष्टतमम्। उच्छब्दाद् उत्कर्षक्रियावचनाद् आतिशायनिकस्तमप्। 'उत्तमशश्वत्तमौ सर्वत्र' इति उञ्छादिषु पाठाद् 'उञ्छादीनां च' ( पा ६,१,१६० ) इति अन्तोदात्तत्वम्। तादृशं नाकम्। कं सुखम् अकं दुःखम्। न विद्यतेस्मिन् अकम् इति नाकः स्वर्गः। श्रूयते हि — 'सुवर्गो वै लोको नाको यस्यैना उपधीयन्ते नास्मा अकं भवति' ( तै ५,३ ७,१ ) इति। 'नभ्राण्नपाद्' ( पा ६,३,७५ ) इत्यादिना नञः प्रकृतिभावात् नलोपाभावः। 'बहुव्रीहौ प्रकृत्या०' ( पा ६,२,१ ) इति पूर्वपदप्रकृतिस्वरत्वम्। 'नञ्सुभ्याम्' (पा ६,२,१७२) इति व्यत्ययेन न प्रवर्तते। दुःखलेशेनापि असंस्पृष्टं लोकम् इमम् पुरुषम् अधि रोहय। व्यत्ययेन एकवचनम्। हे देवाः अधिरोहयत प्रापयत। ऐहिकम् आमुष्मिकं च सुखं प्रयच्छतेत्यर्थः।

येनेन्द्राय समभरः[3] पयांस्युत्तमेन[4] ब्रह्मणा[5] जातवेदः।
तेन [6]त्वमग्न इह वर्धयेमं सजातानां श्रैष्ठ्य आ धेह्येनम् ॥ ३ ॥

येन। इन्द्राय। सम्ऽअभरः। पयांसि। उत्ऽतमेन। ब्रह्मणा। जातऽवेदः।
तेन। त्वम्। अग्ने। इह। वर्धय। इमम्। सऽजातानाम्। श्रैष्ठ्ये। आ।
धेहि। एनम् ॥ ३ ॥

हे जातवेदः जातानां वेदितरग्ने येन अतिशयितवीर्यवता उत्तमेन उत्कृष्टतमेन ब्रह्मणा मन्त्रेण करणभूतेन पयांसि क्षीराज्यादिरूपाणि हवींषि इन्द्राय देवानाम् अधिपतये समभरः समहरः प्रापितवान् असि। हृञ् हरणे अस्मात् लङि सिप्। 'हृग्रहोर्भश्छन्दसि०' ( पावा ८,२,३२ ) इति भत्वम्। 'लुङ्लङ्लृङ्क्ष्वड् उदात्तः' ( पा ६,४,७१ ) इति अडागम उदात्तः। 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति निघातप्रतिषेधः। 'तिङि चोदात्तवति' ( पा ८,१,७१ ) इति गतेरनुदात्तत्वम्। हे अग्ने त्वं तेन तथा-

१. उपसृष्टाद् उच्छब्दक्रि° ग्रंपा. २. स्वर्गो S', Kd. ३. समभरन् पै १,१६,३; मं १,४,३. ४. उत्तरेण पै.। ५. हविषा मं.; तै ३,५,४,२. ६. अग्नेत्वमुत तै.।

विधेन ब्रह्मणा इमम् संपदादिफलकामं पुरुषम् इह अस्मिन् लोके स्वकीये अवस्थाने वर्धय समर्धय । अस्य अभिमतफलसमृद्धिं कुर्वित्यर्थः । अपि च सजातानाम् समानजन्मनां पुरुषाणां मध्ये श्रैष्ठ्ये श्रेष्ठत्वे एनम् पुरुषम् आ धेहि निधेहि स्थापय । ज्ञातीनां मध्ये एनम् उत्कृष्टतमं कुर्वित्यर्थः । डुधाञ् धारणपोषणयोः । अस्मात् लोट् । 'सेर्ह्यपिच्च' ( पा ३,४,८७ ) इति हिरादेशः । 'घ्वसोरेद्धावभ्यासलोपश्च' ( पा ६,४,११९ ) इति एत्वाभ्यासलोपौ । श्रैष्ठ्य इति । प्रशस्यशब्दाद् आतिशायनिक इष्ठन्प्रत्ययः । 'प्रशस्यस्य श्रः' ( पा ५,३,६० ) इति प्रशस्यशब्दस्य श्रादेशः । अस्मादेव आदेशविधानसामर्थ्याद् 'अजादी गुणवचनादेव' ( पा ५,३,५८ ) इति नियमस्य बाधितत्वाद् अगुणवचनादपि इष्ठन्प्रत्ययः । 'प्रकृत्यैकाच्' ( पा ६,४,१६३ ) इति प्रकृतिभावात् टिलोपयस्येतिचलोपयोरभावः । श्रेष्ठस्य भावः श्रैष्ठ्यम् । ब्राह्मणादेराकृतिगणत्वाद् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' ( पा ५, १,१२४ ) इति ष्यञ् । 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इति आद्युदात्तत्वम् ।

ऐषां यज्ञमुत वर्चो ददेहं रायस्पोषमुत चित्तान्यग्ने ।
सपत्ना अस्मदधरे भवन्तूत्तमं नाकमधि रोहयेमम् ४ ॥

आ । एषाम् । यज्ञम् । उत । वर्चः । ददे । अहम् । रायः । पोषम् । उत । चित्तानि । अग्ने ।
सऽपत्नाः । अस्मत् । अधरे । भवन्तु । उत्ऽतमम् । नाकम् । अधि । रोहय । इमम् ॥ ४ ॥

हे अग्ने त्वत्प्रसादाद् एषाम् शत्रूणां संबन्धिनं यज्ञम् स्वर्गादिसाधनं पुण्यकर्म अहम् त्वदुपासकः आ ददे स्वीकरोमि । अपहरामीत्यर्थः । 'आङो दोनास्यविहरणे' ( पा १,३,२० ) इति आत्मनेपदम् । 'व्यवहिताश्च' ( पा १,४,८२ ) इति आङो व्यवहितप्रयोगः । उत अपि च वर्चः राज्यादिनिमित्तं शत्रुसंबन्धि तेजः । तथा रायः धनस्य पोषम् पुष्टिम् । शत्रूणां संबन्धि समृद्धं धनम् इत्यर्थः । उत चित्तानि मनांस्यपि । आ ददे इति प्रत्येकं संबन्धः । शत्रुसंबन्धि ऐहिकामुष्मिकसुखोपायभूतं यज्ञधनादिकं तन्निर्वर्तिकां बुद्धिं च स्वात्मसात्करोमीत्यर्थः । रायस्पोषम् इति । 'ऊडिदंपदादि°' ( पा ६,१,१७१ ) इति रैशब्दात् परस्याः षष्ठ्या उदात्तत्वम् । 'षष्ठ्याः पतिपुत्र°' (पा ८,३,५३)

१. इह इह S', Kd. २. एनं श्रैष्ठ्ये श्रेष्ठत्वे एनं पुरुषं S', Kd. ३. वनेर्य पै १,१६.४.
४. संबंधियज्ञं S', Kd.

इति विसर्जनीयस्य सत्वम्। यत एवम् अतः सपत्ना अस्मदधरे भवन्तु इत्यादि पूर्ववद् योज्यम्।

इति प्रथमकाण्डे द्वितीयेऽनुवाके तृतीयं सूक्तम्।

अयं देवानाम् इति सूक्तेन जलोदररोगनिवृत्तये गृहतृणदर्भपिञ्जूलीयुक्तघटजलेन अभिषेकं कुर्यात्। सूत्रितं हि—'अयं देवानाम् इति एकविंशत्या दर्भपिञ्जूलीभिर्वलीकैः सार्धम् अधिशिरोऽवसिञ्चति' ( कौसू २५,३७ ) इति।

अयं देवानामसुरो वि राजति वशा हि सत्या वरुणस्य राज्ञः।
ततस्परि ब्रह्मणा शाशदान उग्रस्य मन्योरुदिमं नयामि ॥ १ ॥

अयम्। देवानाम्। असुरः। वि। राजति। वशा। हि। सत्या। वरुणस्य। राज्ञः।
ततः। परि। ब्रह्मणा। शाशदानः। उग्रस्य। मन्योः। उत्। इमम्। नयामि ॥ १ ॥

देवानाम् इन्द्रादीनां मध्ये असुरः क्षेप्ता पापिनां निग्रहीता। असु क्षेपणे। 'असेरुरन्' ( पाउ १,४२ ) इति उरन् प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इति आद्युदात्तत्वम्। ईदृशः अयम् वरुणो वि राजति विशेषेण दीप्यते। सर्वनियन्तृत्वात् सर्वोत्कृष्टतया वर्तत इत्यर्थः। राजृ दीप्तौ। तत्र हेतुम् आह — हि यस्मात् कारणात् सत्या सत्यानि सद्रूपं प्राप्तानि पदार्थजातानि। 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपः। राज्ञः राजमानस्य वरुणस्य देवस्य वशा वशानि स्ववशेन स्वाधीनानि। नियम्यत्वेन स्वाधीनानि भवन्तीत्यर्थः। यद्वा राज्ञः वरुणस्य सत्यानि यथार्थभाषणानि स्ववशानि भवन्ति। सर्वदा सत्यभाषणशील इत्यर्थः। आम्नास्यते हि — 'राज्ञस्त्वा सत्यधर्मणः' ( अ १,१०,३ ) इति। ततः तस्मात् कारणात् परि परितः सर्वतः ब्रह्मणा मन्त्रेण वरुणविषयस्तुतिरूपेण हविषा वा शाशदानः अत्यर्थं तीक्ष्णः[4] स्तोत्रादिना तोषितस्य वरुणस्य अनुग्रहेण प्राप्तबलः। शद्लृ शातने। अस्मात् यङ्लुगन्ताद् व्यत्ययेन लटः शानच्। 'अभ्यस्तानाम् आदिः' ( पा ६,१,१८९ ) इति आद्युदात्तत्वम्। ईदृशोऽहम् उग्रस्य उद्गूर्णबलस्य दुष्प्रधर्षस्य वरुणस्य मन्योः क्रोधात् अनृतभाषणादिपापजनितात् जलोदररोगहेतुभूतात् इमम् जलोदररोगार्तं पुरुषम् उन्नयामि उद्गमयामि। रोगाद् उन्मोचयामीत्यर्थः।

१. विराय? पै १,६,१.　　२. °म्योर इदं मन्नयामि पै.।　　३. स्ववशमास्वा° S', Kd.
४. तीक्ष्णस्तोत्रा° S', Kd.

नम॑स्ते राजन् वरुणास्तु मन्यवे विश्वं ह्यु॑ग्र[1] निचिकेषि द्रुग्धम् ।
सहस्र॒मन्यान् प्र सु॑वामि साकं श॒तं जीवाति शरदस्तवायम् ॥ २ ॥

नमः । ते । राजन् । वरुण । अस्तु । मन्यवे । विश्वम् । हि । उग्र । निऽचिकेषि । द्रुग्धम् ।
सहस्रम् । अन्यान् । प्र । सुवामि । साकम् । शतम् । जीवाति । शरदः । तव । अयम् ॥ २ ॥

हे राजन् द्योतमान वरुण ते तव मन्यवे क्रोधाय नमः नमस्कारः अस्तु भवतु। सर्वत्र हिंसनस्य मन्युपूर्वकत्वात् अत्र मन्योर्नमस्कार्यतया निर्देशः । यथा 'नमस्ते रुद्र मन्यवे' (तै ४,५,१,१) इति । 'नमःस्वस्तिस्वाहा°' (पा २,३,१६) इति मन्युशब्दात् चतुर्थी । तत्र हेतुम् आह— हि यस्मात् कारणात् त्वं हे उग्र उद्गूर्णबल वरुण विश्वम् कृत्स्नं द्रुग्धम् द्रोहम् । भावे क्तः । समस्तप्राणिकृतम् अपराधं निचिकेषि जानासि । अपराधज्ञानात् हि मन्युरुत्पद्यते अतः तदुत्पत्तिर्मा भूद् इति मन्योः अत्र नमस्कारः कृत इति द्रष्टव्यम् । यद्वा उत्तरशेषोयम् । हे वरुण द्रुग्धम् द्रोहकर्तृ अपकारकम् । द्रुह जिघांसायाम् । कर्तरि क्तः । रधादित्वेन विकल्पितेट्त्वात् 'यस्य विभाषा' (पा ७,२,१५) इति इट्प्रतिषेधः । 'वा द्रुहमुहष्णुहष्णिहाम्' (पा ८,२,३३) इति हकारस्य घत्वम् । 'झषस्तथोर्धोऽधः' (पा ८,२,४०) इति निष्ठातकारस्य धत्वम् । प्रत्ययस्वरेण अन्तोदात्तता । ईदृशं विश्वम् प्राणिजातं हि यस्मात् निचिकेषि जानासि । कितै ज्ञाने । अस्मात् लट् । जुहोत्यादित्वात् शपः श्लुः । तस्मात् कारणात् सहस्रम् सहस्रसंख्याकान् अन्यान् सापराधान् द्वेष्यान् जनान् साकम् सह । युगपदेव इत्यर्थः । प्र सुवामि प्रेरयामि । अस्य प्रतिनिधित्वेन प्रयच्छामीत्यर्थः । वरुणस्य सकाशात् प्रतिनिधिप्रदानेन आत्मनो निष्क्रयणम् ऐतरेयके समाम्नातम्— 'अथेहं ते शतं ददाम्यहम् एषाम् एकेनात्मानं निष्क्रीणै' (ऐब्रा ७,१५) इति । षू प्रेरणे । तुदादित्वात् शः । तस्य ङित्त्वात् गुणप्रतिषेधे उवङ् । 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः । तस्मात् कारणात् अयम् व्याधिपीडितो जनः तव अनुग्रहात् शतं शरदः शतसंख्याकान् संवत्सरान् जीवाति जीवतु । सापराधान् अन्यान् अपरिमितान् जनान् स्वीकृत्य एनं नीरोगं कृत्वा शतसंवत्सरं जीवयेत्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे' (पा २,३,५) इति द्वितीया । जीव प्राणधारणे इत्यस्मात् लेटि आडागमः ।

यदुवक्थानृतं[3] जिह्वया वृजिनं[4] बहु ।
राज्ञस्त्वा सत्यधर्मणो मुञ्चामि वरुणादहम् ॥ ३ ॥

१. उग्रं O, Op; यद् देव पै १,६,२. २. किल शंपा. ३. उक्ता अनृतं पै १,६,३. [मूको.]
४. वृजिनं पै. [मूको.] ।

यत् । उवक्थ । अनृतम् । जिह्वया । वृजिनम् । बहु ।
राज्ञः । त्वा । सत्यऽधर्मणः । मुञ्चामि । वरुणात् । अहम् ॥ ३ ॥

हे जलोदररोगग्रस्त पुरुष जिह्वया अभिवदनसाधनेन इन्द्रियेण यत् रोगनिदानभूतम् अनृतम् असत्यम् उवक्थ उवक्थ । अयथार्थकथनं कृतवानसीत्यर्थः । ब्रूञ् व्यक्तायां वाचि । 'ब्रुवो वचिः' (पा २,४,५३) इति लिटि वच्यादेशः । 'लिट्यभ्यासस्योभयेषाम्' (पा ६,१,१७) इति अभ्यासस्य संप्रसारणम् । छान्दसो वर्णव्यत्ययः । अनृतस्य रोगहेतुत्वम् उपपादयन् विशिनष्टि — बहु अधिकं वृजिनम् पापम् । हेतुहेतुमतोरभेदेन सामानाधिकरण्यम् । अन्यस्मात् पापकर्मणः अधिकतरपापहेतुः अनृतवदनम् इत्यर्थः । वृजी वर्जने । तस्माद् औणादिक इनच् प्रत्ययः । 'चितः' (पा ६,१,१६३) इति अन्तोदात्तत्वम् । अनृतस्य वृजिनरूपत्वं तैत्तिरीयकेपि आम्नातम्—'वृजिनम् अनृतं दुश्चरितम् । ऋजुकर्म सत्यं सुचरितम्' (तैब्रा ३,३,७,१०) इति । यस्माद् अनृतं पापरूपं तस्माद् रोगनिदानम् इत्यर्थः । उक्तं हि—

'जन्मान्तरकृतं पापं व्याधिरूपेण जायते ।
तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥' इति ।

यद्यपि अनृतवदनरूपं पापं कृतवान् असि तथापि सत्यधर्मणः सत्यं धर्मो यस्यासौ सत्यधर्मा । 'धर्माद् अनिच् केवलात्' (पा ५,४,१२४) इति अनिच्प्रत्ययः समासान्तः । सत्यभाषणस्वभावात् । विवक्षितविशेषणम् एतत् । यतोयं वरुणः सत्यधर्मा अतः असौ अनृतभाषणं न सहत इत्यर्थः । श्रूयते हि —'अनृते खलु वै क्रियमाणे वरुणो गृह्णाति' (तैब्रा १,७,२,६) इति । ईदृशात् राज्ञः राजमानात् नियामकाद् वरुणात् हे रोगग्रस्त अहं त्वा त्वां मुञ्चामि मोचयामि । तस्माद् अनृतवदनसंभूतात् जलोदररूपाद् वरुणपाशात् मन्त्रप्रभावेन त्वां वियोजयामीत्यर्थः । मुच्लृ मोक्षणे । तुदादित्वात् शः । 'शे मुचादीनाम्' (पा ७,१,५९) इति नुम् ।

मुञ्चामि त्वा वैश्वानरादर्णवान्महतस्परि[1] ।
सजातानुग्रेहा[2] वद ब्रह्म[3] चाप[4] चिकीहि[5] नः[6] ॥ ४ ॥

मुञ्चामि । त्वा । वैश्वानरात् । अर्णवात् । महतः । परि ।
सऽजातान् । उग्र । इह । आ । वद । ब्रह्म । च । अप । चिकीहि । नः ॥ ४ ॥

१. वैतु. मंपा. यनि. । २. हे S', Kd. ३. ब्रह्मन् पै १,६,४. ४. अपाचां पै. [मूको.] । ५. उग्रह पै. [मूको.] । ६. इह न पै [मूको.] ।

हे रोगग्रस्त त्वा त्वाम्। 'त्वामौ द्वितीयायाः' ( पा ८,१,२३ ) इति युष्मदस्त्वादेशः। 'अनुदात्तं सर्वम् अपादादौ' ( पा ८,१,१८ ) इति अनुवृत्तेः स च अनुदात्तः। वैश्वानरात् विश्वनरहितात् महतः प्रभूताद् अर्णवात्। अर्ण इत्युदकनाम। तद् अस्मिन् बहुलम् अस्तीत्येतस्मिन् अर्थे 'अर्णसो लोपश्च' ( पावा ५,२,१०९ ) इति वप्रत्ययः तत्संनियोगेन सकारलोपश्च। तथाविधात् समुद्रात्। अनेन च तदभिमानी देवो लक्ष्यते। समुद्राभिमानिनो वरुणात् मुञ्चामि। तत्कृतात् जलोदररोगाद् मुञ्चामीत्यर्थः। परिः पञ्चम्यर्थानुवादी। यद्वा वैश्वानरः विश्वनरहितो जाठराग्निः तस्य आवरकत्वेन संबन्धी सोपि वैश्वानरः। 'तस्येदम्' ( पा ४,३,१२० ) इत्यण्। तथाविधात् महतः अधिकाद् दुश्चिकित्स्याद् अर्णवात् उदकसहितात् जलमयाद् रोगात् त्वां मुञ्चामि। हे उग्र उद्गूर्णबल वरुण त्वमपि सजातान् सहचारिणः शिक्षकान् भटान् इह अस्मिन् पुरुषविषये आ वद आ समन्तात् कथय। यथा पुनःपुनरागत्य एनं पुरुषं न निघ्नन्ति तथा कथयेत्यर्थः। तत्र हेतुम् आह — नः अस्मदीयं ब्रह्म हवीरूपम् अन्नम्। यद्वा ब्रह्म[1] अस्माभिः प्रयुज्यमानां मन्त्ररूपां स्तुतिम् अप योग्यक्रियाध्याहारः। अपहाय। अनृतभाषणादिनिमित्तम् अपराधं विस्मृत्येत्यर्थः। चिकीहि जानीहि। अनुक्तसमुच्चयार्थश्चकारः। मदीयया स्तुत्या परितुष्टः सन् भयादि नाशयेत्यर्थः। चिकीहि। कि[3] ज्ञाने। अस्मात् लोटि जुहोत्यादित्वात् शपः श्लुः। छान्दसो दीर्घः।

इति प्रथमकाण्डे द्वितीयेनुवाके चतुर्थं सूक्तम्॥

'वषट् ते पूषन्' इति सूक्तेन गर्भिण्याः शिरसि संपाताभिहुतोष्णजलेन आप्लावनम् शालाग्रन्थिविमोचनम् योक्त्रबन्धनम् इत्येवमादीनि सुखप्रसवकर्माणि पुत्रजननविज्ञानकर्मान्तानि कुर्यात्। तत्र 'वषट् ते पूषन्निति चतुर उदपात्रे संपातान् आनीय[5]' इत्यादि 'पुंर्नामधेये कुमारः' ( कौसू ३३,१-२० ) इत्येतदन्तं सूत्रं द्रष्टव्यम्।

वषट् ते पूषन्नस्मिन्त्सूतावर्यमा होता कृणोतु वेधाः।
सिस्रतां नार्यृतप्रजाता वि पर्वाणि जिहतां सूतवा उ॥ १॥

वषट्। ते। पूषन्। अस्मिन्। सूतौ। अर्यमा। होता। कृणोतु। वेधाः।
सिस्रताम्। नारी। ऋतऽप्रजाता। वि। पर्वाणि। जिहताम्। सूतवै। ऊँ इति॥ १॥

हे पूषन् सकलप्राणिजातस्य पोषक देव। 'पूषापोषयत्' ( तैब्रा १,६,२,२ ) इति श्रुतेः। ते तुभ्यम्। 'नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च' ( पा २,३,१६ ) इति चतुर्थी।

१. ब्रह्म वेदाह Kd. २. उक्त°S', Kd. ३. कित ग्रंपा. ४. चतुरुद° S', Kd.
५. तु. Bl. मूको. अनु. ग्रंपा.; वैतु. S', Kd. ग्रंपा. च आनयति। ६. नामधेयः S', Kd.
७. सिस्रताम् B,[2] R[2].

'तेमयावेकवचनस्य' ( पा ८,१,२२ ) इति युष्मदस्ते आदेशः। 'अनुदात्तं सर्वम् अपादादौ' ( पा ८,१,१८ ) इति अनुवृत्तेः स च अनुदात्तः। अस्मिन् सूतौ इदानीं संप्राप्ते सुखप्रसवकर्मणि। षूङ् प्राणिप्रसवे इत्यस्मात् भावे क्तिन्। अस्मिन्निति। लिङ्गव्यत्ययः। होता देवानाम् आह्वाता ऋत्विक् अर्यमा प्राणिजातस्य प्रेरको देवः आदित्यः तदात्मको भूत्वा वषट् कृणोतु। वषट्कारेण हविः प्रयच्छतु। तथा वेधाः धाता सकलजगतो निर्माता देवः ध्यानविशेषेण तदात्मकश्च भूत्वा वषट् कृणोतु। यद्वा अर्यमा वेधाश्च होता भूत्वा तुभ्यं वषट् कृणोतु। देवैरेव क्रियमाणम् इदं कर्म सुखप्रसवलक्षणं फलं दातुं शक्नोतीत्यर्थः। कृवि हिंसाकरणयोश्च। इदित्त्वात् नुम्। अस्मात् लोटि शपि प्राप्ते 'धिन्विकृण्व्योर च' ( पा ३,१,८० ) इति उप्रत्ययः। तत्संनियोगेन धात्वन्तस्य अकारादेशश्च। 'अतो लोपः' ( पा ६,४,४८ ) इति तस्य लोपे 'अचः परस्मिन् पूर्वविधौ' ( पा १,१,५७ ) इति स्थानिवद्भावेन अकारस्य उपधात्वविघातात् लघूपधगुणाभावः। हविःस्वीकारेण तुष्टस्य पूष्णः प्रसादात् नारी गर्भिणी स्त्री। 'नृनरयोर्वृद्धिश्च' ( पाग ४,१,७३ ) इति शार्ङ्गरवादिषु पाठात् ङीन्प्रत्ययः तत्संनियोगेन वृद्धिश्च। ऋतप्रजाता सत्यप्रसवा जीवदपत्या सती सिस्रताम् प्रसवजनितक्लेशात् विनिःसृता भवतु। अक्लेशेन प्रसूता भवतु इत्यर्थः। सृ गतौ। अस्मात् लोटि व्यत्ययेन आत्मनेपदम्। जुहोत्यादित्वात् शपः श्लुः। 'श्लौ' ( पा ६,१,१० ) इति द्विर्वचनम्। 'अर्तिपिपर्त्योश्च' ( पा ७,४,७७ )। 'बहुलं छन्दसि' ( पा ७,४,७८ ) इति अभ्यासस्य इत्वम्। 'द्विविकरणा अपि धातवो भवन्ति' इति पुनरपि विकरणः शः। तस्य ङित्त्वाद् गुणाभावे यण्। 'अभ्यस्तानाम् आदिः' ( पा ६,१,१८९ ) इत्याद्युदात्तत्वम्। उ अपि च सूतवै सुखप्रसवार्थम्। षूङ् प्राणिगर्भविमोचने। 'कृत्यार्थे तवैकेन्केन्यत्वनः' ( पा ३,४,१४ ) इति भावे तवैप्रत्ययः। यद्वा सूतवै प्रसवितुम्। 'तुमर्थे सेसेन्°' ( पा ३,४,९ ) इति तवैप्रत्यय.। 'अन्तश्च तवै युगपत्' ( पा ६,१,२०० ) इति आद्यन्तयोर्यौगपद्येन उदात्तत्वम्। पर्वाणि प्रसवनिरोधकाः संधिबन्धाः वि जिहताम् विगच्छन्तु। विश्लथा भवन्तु इत्यर्थः। ओहाङ् गतौ। लोटि जुहोत्यादित्वात् शपः श्लुः। 'श्लौ' ( पा ६,१,१० ) इति द्विर्वचनम्। 'भृञामित्' ( पा ७,४,७६ ) इति अभ्यासस्य इत्वम्। 'श्नाभ्यस्तयोरातः' ( पा ६,४,११२ ) इति आकारलोपः।

चत॑स्रो दि॒वः प्र॒दिश॒श्चत॑स्रो॒ भूम्या॑ उ॒त ।
दे॒वा गर्भं॒ समै॑रय॒न् तं व्यू॒ऽर्णुव॑न्तु॒ सूत॑वे ॥ २ ॥

चत॑स्रः । दि॒वः । प्र॒ऽदिशः॑ । चत॑स्रः । भूम्याः॑ । उ॒त ।
दे॒वाः । गर्भ॑म् । सम् । ऐ॒र॒य॒न् । तम् । वि । ऊ॒र्णु॒व॒न्तु॒ । सूत॑वे ॥ २ ॥

१. संप्राप्ते S'.   २. तवेनिति S', Kd.   ३. संबंधाः S', Kd.   ४. समैरयंत इति परिवर्त्य समैरयंतां A; समैरयंतां B^h,D,K,V; समैरयं तां सात.; °रयन् ते पे १,५,२.

दिवः द्युलोकस्य संबन्धिन्यः याः चतस्रः चतुःसंख्याकाः प्रदिशः प्रकृष्टा दिशः प्राच्याद्याः प्रधानदिशः सन्ति। उत अपि च भूम्याः भूलोकस्य याः चतस्रः प्रदिशः सन्ति। चतुर्शब्दस्य जसि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' (पा ७,२,९९) इति चतस्रादेशः। 'अचि र ऋतः' (पा ७, २,१००) इति रेफादेशः। 'त्रः संख्यायाः' (फि २,५) इति चतुर्शब्द आद्युदात्तः। स्थानिवद्भावात् तदादेशोपि आद्युदात्त एव। ता विश्वेदेवताः देवाः इन्द्रादयश्च गर्भम् पूर्वं समैरयन् संगतम् अकुर्वन्। गर्भम् उदपादयन्नित्यर्थः। इदानीं ते[1] देवाः सूतवे प्रसवितुं गर्भाशयाद् विनिर्गन्तुं[2] तम् उदरस्थं गर्भं व्यूर्णुवन्तु विगताच्छादनं कुर्वन्तु। जरायोः सकाशाद् विमुक्तं कुर्वन्तु इत्यर्थः। ऊर्णुञ् आच्छादने। लोटि अदादित्वात् शपो लुक्। छान्दसो गुणः। विः उपसर्गः 'उपसर्गाश्चाभिवर्जम्' (फि ४,१३) इति उदात्तः। यणादेशे 'उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य' (पा ८,२,४) इति पर ऊकारः स्वर्यते।

सूषा व्यू॑र्णोतु वि योनिं॑ हापयामसि।
श्रथया॑ सूषणे त्वमवं॑ त्वं बिष्कले॑[4] सृज ॥ ३ ॥

सूषा। वि। ऊर्णोतु। वि। योनिम्। हापयामसि।
श्रथय। सूषणे। त्वम्। अव। त्वम्। बिष्कले। सृज ॥ ३ ॥

सूषा सवित्री प्रजनयित्री देवता। षूङ् प्राणिगर्भविमोचने। अस्माद् औणादिकः क्सप्रत्ययः। यद्वा सूः सवनम् उत्पत्तिः। संपदादिलक्षणो भावे क्विप्। सुवं सनोति प्रयच्छतीति सूषा। षणु दाने। 'जनसनखनक्रमगमो विट्' (पा ३,२,६७) इति विट्प्रत्ययः। 'विड्वनोरनुनासिकस्यात्' (पा ६,४,४१) इति आत्वम्। छान्दसः सुलोपः। यद्वा शोभना उषाः सूषा। 'सुपां सुलुक्॰' (पा ७,१,३९) इति सोर्डादेशः। भसंज्ञाऽभावेपि डित्करणसामर्थ्यात् टिलोपः। एवंभूता देवता व्यूर्णोतु गर्भं विगतावरणं करोतु। जरायुबन्धनं विश्लेषयतु इत्यर्थः। ऊर्णुञ् आच्छादने। अस्मात् लोटि अदादित्वात् शपो लुक्। 'ऊर्णोतेर्विभाषा' (पा ७,३,९०) इति वृद्धिविकल्पनाद् गुणः। वयमपि सुखप्रसवाय योनिम् गर्भनिर्गममार्गं वि हापयामसि विहापयामः। यथा गर्भः सुखेन निपतति तथा विवृतं कारयाम इत्यर्थः। ओहाक् गतौ। अस्मात् णिच्। 'अर्तिह्री' (पा ७,३,३६) इत्यादिना पुगागमः। 'इदन्तो मसि'[7] (पा ७,१,४६)।

१. तद्देवाः S', Kd. २. विनिर्गतम् S', Kd. ३. वैतु. मंपा. यनि.। ४. शूषणे पै १,५,३. ५. पुष्कले पै.। ६. सूषाः S', Kd. ७. मसिः शंपा.।

हे सूषणे। सुखं संनोति प्रयच्छतीति सूषणिः सुखप्रसवकारिणी देवता। 'छन्दसि वनसनरक्षिमथाम्' ( पा ३,२,२७ ) इति सनोतेः इन्प्रत्ययः। तस्याः संबोधनम्। त्वम् अपि मदीयेन अनेन सुखप्रसवकर्मणा प्रीता सती श्रथय योनिं विश्लेषय। यद्वा श्रथय गर्भिण्याः संधिबन्धान् विमुञ्च। सार कृप श्रथ दौर्बल्ये। चुरादित्वात् स्वार्थिको णिच्। अदन्तत्वाद् उपधावृद्ध्यभावः। तथा हे विष्कले। विष्क इत्यनुकरणशब्दः। तं लाति आदत्ते करोतीति विष्कलिः सूतिमारुतः। ला आदाने। अस्माद् औणादिकः किप्रत्ययः। 'आतो लोप इटि च' ( पा ६,४,६४ ) इति आकारलोपः। यद्वा विट् व्याप्ता सती कलयति प्रेरयतीति विष्कला। विष्लृ व्याप्तौ। 'क्विप् च' ( पा ३,२,७६ ) इति कर्तरि क्विप्। कल गतौ इत्यस्मात् पचाद्यच्। विट् चासौ कला चेति विष्कला। हे तथाविधे देवते त्वम् अव सृज गर्भम् अवाङ्मुखं प्रेरय। सृज विसर्गे। तुदादित्वात् शः।

नेवं मांसे नै [४]पीवसि नेवं मज्जस्वाहतम्।
अवैतु पृश्नि शेवलं शुने जराय्वत्तवेऽव जरायु पद्यताम् ॥ ४ ॥

नऽइव। मांसे। न। पीवसि। नऽइव। मज्जऽसु। आऽहतम्।
अव। एतु। पृश्नि। शेवलम्। शुने। जरायु। अत्तवे। अव। जरायु।
पद्यताम् ॥ ४ ॥

हे प्रसवित्रि त्वं मांसेन[५] उदरगतेन नेव पीवसि। इवशब्दो भिन्नक्रमः। मांसेनेव न पीवसि। यथा मांसेन शरीरगतेन स्थवीयसी भवसि न तथा अनेन जरायुणा। किंतु *[प] तत् जरायु[६] शैवल्यकल्पम्[७]। पीव मीव णीव स्थौल्ये इति धातुः। पततपतने शरीरबाधो नास्ति इत्याह — मज्जसु मज्जोपलक्षितेषु धातुषु एतत् जरायु आहतम् आबद्धं छाय्वादिकमिव न भवति। किंतु तदसंबद्धमेव[८] वर्तत इत्यर्थः। यद्वा हे जरायु त्वं मांसेन[९] शरीरगतेन संबद्धं सत् नेव पीवसि। इवशब्दः अवधारणे। नैव प्रवृद्धं भवसि। तथा त्वं मज्जसु नेव आहतम् नैव संबद्धम् असि। तथा च निगमान्तरम् — 'स्थविरत्यवपद्यस्व न मांसेषु न स्नावसु न बद्धम् असि मज्जसु' ( आपमं २,११,१९ ) इति। अतः कारणात् शेवलम् जलस्योपरिस्थितशैवालवत् आन्तरावयवासंबद्धं पृश्नि शुभ्रवर्णं

१. प्रसनोति S', Kd.    २. गर्भिगर्भिण्याः S', Kd.    ३. न इति संशोध्य न Bh; न Sm.
४. पीव° A, D, R, Sm, P, P², J; पिवसि H, O, Op.    ५. वैतु. मंपा. यनि.।    ६. किंतेतज्जरायु S', Kd., किन्तु तत् जरायु *शंपा.।    ७. शाल्यकल्पम् शंपा.?    ८. तसंबंधमेव S', Kd.
९. स्वचित्य° S', Kd.

तत् जरायु गर्भवेष्टनम् अवैतु । अवाङ् पततु । तस्य मलवस्त्वाज्यताम् आह — शुने अत्तवे । षष्ठ्यर्थे चतुर्थी । 'श्वयुवमघोनाम् अतद्धिते' ( पा ६,४,१३३ ) इति संप्रसारणम् । शुनो भक्षणाय । अव पततु इति संबन्धः । अद भक्षणे इत्यस्मात् 'तुमर्थे सेसेन्' ( पा ३,४,९ ) इति तवेन्प्रत्ययः । आदरार्थं पुनस्तदेवाह — जरायु अव पद्यताम् अवाग् भूमौ निपततु । पद गतौ । दिवादित्वात् श्यन् । निस्वाद् आद्युदात्तत्वे प्राप्ते 'तिङ्ङतिङः' ( पा ८,१,२८ ) इति निघातः ।

वि ते॑ भिनद्मि[१] मेह॑नं वि योनि॑ वि ग॒वीनि॑के[४] ।
वि मा॒तरं॑ च पु॒त्रं च॒ वि कु॒मा॒रं ज॒राय॒णाव॑ ज॒राय॑ु पद्यताम् ॥ ५ ॥

वि । ते॒ । भि॒न॒द्मि॒ । मेह॑नम् । वि । योनि॑म् । वि । ग॒वीनि॑के॒ इति॑ ।
वि । मा॒तर॑म् । च॒ । पु॒त्रम् । च॒ । वि । कु॒मा॒रम् । ज॒राय॑ुणा । अव॑ । ज॒राय॑ु । प॒द्य॒ता॒म् ॥ ५ ॥

हे गर्भिणि ते तव मेहनम् मूत्रावसेकद्वारं वि भिनद्मि विदारयामि । भिदिर् विदारणे । रुधादित्वात् श्नम्प्रत्ययः । न केवलं मेहनम् अपि तु तदाधारभूतां योनिं वि भिनद्मि शिशुनिर्गमनयोग्यां करोमि । तथा गवीनिके योनेः पार्श्ववर्तिन्यौ निर्गमन-प्रतिबन्धिके नाड्यौ वि भिनद्मि । मेहनादिविभेदनस्य प्रयोजनं दर्शयति — वि मातरम् इति । मातरम् जननीं पुत्रम् । पुन्नाम्नो नरकात् त्रायत इति पुत्रः । पुरु बहुलं त्रायत इति वा पुत्रः । तद् उक्तं यास्केन — 'पुत्रः पुरु त्रायते निपरणाद्वा पुन्नरकं ततस्त्रायत इति वा' ( या २,११ ) इति । परस्परसमुच्चयार्थौ चकारौ । तौ उभौ वि भिनद्मि विश्लेषयामि । गर्भाशयात् पुत्रं निर्गमयामीत्यर्थः । तथा[५] जरायुणा उल्बेन कुमारम् पुत्रं वि भिनद्मि । जरायुकुमारावपि परस्परं विश्लिष्टौ करोमीत्यर्थः । अनन्तरं जरायु अपि उदरस्थम् उल्बम् अव पद्यताम् अवपततु ।

यथा॒ वातो॒ यथा॒ मनो॒ यथा॒ पत॑न्ति प॒क्षिणः॑ ।
ए॒वा त्वं द॑शमास्य सा॒कं ज॒राय॑ुणा प॒ताव॑ ज॒राय॑ु पद्यताम् ॥ ६ ॥

यथा॑ । वात॑ः । यथा॑ । मन॑ः । यथा॑ । पत॑न्ति । प॒क्षिण॑ः ।
ए॒व । त्वम् । द॒श॒ऽमा॒स्य॒ । सा॒कम् । ज॒राय॑ुणा । प॒त॒ । अव॑ । ज॒राय॑ु । प॒द्य॒ता॒म् ॥ ६ ॥

१. तवेङ् S', Kd. २. श्रतामि पै २०,२५,१०. ३. तक्वीं ते ३,३,१०,१; ख्वारीम् पै. ४. °वीन्यौ ते. । ५. गर्भंच जरायु च ते.; गर्भं च जरायुजम् पै. । ६. तदि S', Kd.

गर्भस्य अविलम्बेन निर्गमनं दृष्टान्तैः समर्थयते — यथा येन प्रकारेण वातः वायुः शीघ्रं गच्छति। यथा वा मनः ज्ञानसाधनम् अन्तःकरणम् अप्रतिबन्धं सत् शीघ्रतरं गच्छति। यथा वा पक्षिणः विहगाः सशरीरा अपि अप्रतिबद्धगतयः सन्तः पतन्ति आकाशे उड्डीयन्ते। पतॢ गतौ। लटि 'कर्तरि शप्' (पा ३,१,६८) इति शप्। 'तास्यनुदात्तेन्ङिददुपदेशात्०' (पा ६,१,१८६) इति लसार्वधातुकस्य अनुदात्तत्वम्। शपश्च पित्त्वाद् अनुदात्तत्वम्। धातुस्वरेण आद्युदात्तः। 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातस्य 'यावद्यथाभ्याम्' (पा ८,१,३६) इति प्रतिषेधः। एव एवम्। 'निपातस्य च' (पा ६,३,१३६) इति सांहितिको दीर्घः। हे दशमास्य दशसु मासेषु मात्रा पोषित शिशो। दश मासान् भृत इति विगृह्य 'तद्धितार्थोत्तरपदसमाहारे च' (पा २,१,५१) इति तद्धितार्थे विषयभूते समासः। 'संख्यापूर्वो द्विगुः' (पा २,१,५२) इति द्विगुसंज्ञायां 'द्विगोर्यप्' (पा ५,१,८२) इति भरणार्थे यप्। 'आमन्त्रितस्य च' (पा ८,१,१९) इति आष्टमिकं सर्वानुदात्तत्वम्। एवंभूत शिशो त्वं जरायुणा गर्भवेष्टनेन साकम् सह पत गर्भाशयात् शीघ्रं निर्गच्छ। 'सहयुक्तेऽप्रधाने' (पा २,३,१९) इति सहार्थेन साकंशब्देन योगे जरायुणा इति अप्राधान्ये तृतीया। अप्राधान्येनोक्तं जरायुपतनं प्राधान्येनापि निर्दिशति — अव जरायु पद्यताम् इति। व्याख्यातम्।

इति प्रथमकाण्डे द्वितीयेनुवाके पञ्चमं सूक्तम्।

इति द्वितीयोनुवाकः समाप्तः।

तृतीयेनुवाके पञ्च सूक्तानि। तत्र 'जरायुजः' इत्येतत् प्रथमं सूक्तम्। तस्य वातपित्तश्लेष्मविकारजेषु रोगेषु यथोचितमेदोमधुसर्पिस्तैलपायनादिकर्मसु विनियोगः। " 'जरायुज' इति मेदोमधुसर्पिस्तैलं पाययति" (कौसू २६,१) इत्यादि सूत्रम्।

तथा दुर्दिननिवारणे अतिवृष्टेर्निवारणे च " 'जरायुज' इति दुर्दिनम् आयन् प्रत्युत्तिष्ठति। अन्तृचम्" (कौसू ३८,१;२) इत्यादिसूत्रोक्तानि सूर्योपस्थानोदकप्रक्षेपादीनि कर्माणि अनेन सूक्तेन कुर्यात्।

अस्य 'मुञ्च शीर्षक्त्याः' इति तृतीयया ऋचा सर्वेषु व्याधिषु संपाताभिमन्त्रणसंस्कृतेन उदकघटेन व्याधितम् अभिषिञ्चेत्। " 'मुञ्च' इत्याप्लावयति" (कौसू २७,३४) इति सूत्रात्।

जरायुजः प्रथम उस्रियो वृषा वाताभ्रजा स्तनयन्नेति वृष्ट्या।
स नो मृडाति तन्व ऋजुगो रुजन् य एकमोजस्त्रेधा विचक्रमे ॥ १ ॥

१. वातभ्रजा K, V.; वातभ्रजा A, B[h], D, K, S[m], P, P[a], J, शंपा., RW., वात. ?

ज॒रा॒यु॒ऽजः । प्र॒थ॒मः । उ॒स्रियः॑ वृषा॑ । वात॑ऽअभ्रजाः । स्त॒नय॑न् । ए॒ति॒ । वृ॒ष्ट्या ।
सः । नः॒ । मृ॒डा॒ति॒ । त॒न्वे॑ । ऋ॒जु॒ऽगः । रु॒जन् । यः । एक॑म् । ओजः॑ । त्रे॒धा ।
वि॒ऽच॒क्र॒मे ॥ १ ॥

जरायुजः जरायोः सकाशाद् उत्पन्नः । अदितिपुत्रत्वात् जरायुजत्वम् । श्रूयते हि — 'अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनम् अपचत् । तस्या उच्छेषणम् अददुः । तत् प्राश्नात् । सा रेतोऽधत्त । तस्यै चत्वार आदित्या अजायन्त' ( तै ६,५,६,१ ) इति । यद्वा दिवि जरायुस्थानानि नक्षत्राणि अभिभूय उद्भूतत्वात् जरायुजः । आम्नायते हि — 'द्यौर्वंशा स्तनयित्नुर्गर्भो नक्षत्राणि जरायु सूर्यो वत्सो वृष्टिः पीयूषः' ( काठ ३९,८ ) इति । जनी प्रादुर्भावे । अस्मात् 'पञ्चम्याम् अजातौ' ( पा ३,२,९८ ) इति डप्रत्ययः । 'टेः' ( पा ६,४,१४३ ) इति टिलोपः । प्रत्ययस्वरेण अन्तोदात्तत्वम् । प्रथमः सर्वस्मात् जगतः पूर्वम् उद्भूतः । उस्रियः । उस्राः किरणाः । वसन्ति निवसन्ति एभिर्जना इति व्युत्पत्तेः । वस निवासे इत्यस्मात् 'स्फायितञ्चि' (पाउ २,१३) इत्यादिना रक्प्रत्ययः । 'वचिस्वपि' ( पा ६,१,१५ ) इत्यादिना संप्रसारणम् । ते अस्य सन्तीत्युस्रियः । मत्वर्थीयो घः । वृषा वर्षप्रदः सूर्यः । वृष सेचने । 'कनिन् युवृषितक्षि' (पाउ १,१५६) इत्यादिना कनिन्प्रत्ययः वातभ्रजाः वातवत् शीघ्रं भ्रजति गच्छतीति वातभ्रजाः । भ्रज गतौ । अस्माद् असुन् प्रत्ययः । यद्वा वातानां भ्रजः समूहो यस्यासौ वातभ्रजाः । प्रयाणसमये बहुतरवायुयुक्तत्वात् । 'सुपां सुपो भवन्ति' ( पावा ७,१,३९ ) इति सोर्जसादेशः । ईदृशः सूर्यः स्तनयन् मेघान् गर्जयन् वृष्ट्या महत्तरेण प्रवर्षणेन सह एति आगच्छति । स्तनयन् इति । स्तन देवशब्दे । चुरादिः अदन्तोयम् । श्रूयते हि — 'यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेथ वर्षति' ( तै २,४,१०,२ ) इति ।

'अग्नौ प्रास्ताहुतिः सम्यग् आदित्यम् उपतिष्ठते ।
आदित्याज्जायते वृष्टिः XXX ॥' ( मस्मृ ३,७६ )

इति स्मृतेश्च । सः आदित्यः नः अस्माकं तन्वे । तनूं शरीरम् । 'क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२ ) इति कर्मणः संप्रदानत्वात् चतुर्थी । मृडाति मृडयतु । मृडाति । मृड सुखने । अस्मात् लेटि आडागमः । किं कुर्वन् । रुजन् त्रिदोषजनितरोगादिकं भञ्जन् निवर्तयन् । रुजो भङ्गे । तुदादित्वात् शः । तमेव आदित्यं विशिनष्टि — ऋजुगः ऋजु अकुटिलं गच्छतीति ऋजुगः । 'डोऽन्यत्रापि दृश्यते' (पावा ३,२,४८) इति गमेर्डप्रत्ययः । यः सूर्यः एकम् अभिन्नम् ओजः आत्मीयं तेजः त्रेधा त्रिप्रकारेण अग्निवायुसूर्यात्मना विचक्रमे विविधम् आक्रान्तवान् । पृथिव्यादिलोकत्रयम् आक्रम्य

१. पृ ८७ टि. द्र. । २. ब्रह्मोदनं S', Kd. ३. वैतु. मंपा. यनि. । ४. भ्रजाय S', Kd.
५. स्तनयान् S', Kd. ६. मृडयतु S', Kd.

अधिपतित्वेन स्थितवान् इत्यर्थः । स सूर्यः मृडातीति[1] पूर्वेण संबन्धः । वि पादविक्षेपे । 'वेः पादविहरणे' (पा १,३,४१) इति आत्मनेपदम् । यद्वा यः सूर्यः एकमेव स्वकीयम् ओजः तेजः त्रेधा त्रिप्रकारेण वाय्वग्निचन्द्रात्मना विचक्रमे कृत्स्नशरीराणि आक्रम्य वर्तते । वातपित्तश्लेष्मलक्षणदोषत्रयकारिदेवतात्मना सर्वत्र अयमेव वर्तत इत्यर्थः । अतः सूर्यप्रार्थनया दोषत्रयोद्भूतस्य रोगजातस्य निवृत्तिरुपपन्ना ।

अङ्गेअङ्गे शोचिषा शिश्रियाणं नमस्यन्तस्त्वा हविषा विधेम ।
अङ्कान्त्समङ्कान् हविषा विधेम यो अग्रभीत् पर्वास्या ग्रभीता ॥ २ ॥

अङ्गेऽअङ्गे । शोचिषा । शिश्रियाणम् । नमस्यन्तः । त्वा । हविषा । विधेम ।
अङ्कान् । सम्ऽअङ्कान् । हविषा । विधेम । यः । अग्रभीत् । पर्व । अस्य । ग्रभीता ॥ २ ॥

अङ्गेअङ्गे सर्वेष्वङ्गेषु । 'नित्यवीप्सयोः' (पा ८,१,४) इति द्विर्वचनम् । 'अप्लुतवदुपस्थिते' ... 'ईदूतौ च सप्तम्यर्थे' इत्यादौ च' (पा ६,१,११९) इति प्रकृतिभावात् 'एङः पदान्तादति' (पा ६,१,१०९) इति पूर्वरूपत्वाभावः । 'तस्य परम् आम्रेडितम्' (पा ८,१,२) । 'अनुदात्तं च' (पा ८,१,३) इति परस्य अङ्गशब्दस्य अनुदात्तत्वम् । सर्वप्राणिशरीरेषु शोचिषा दीप्त्या शिश्रियाणम् व्याप्य वर्तमानम् । प्राणात्मना व्याप्य वर्तमानम् इत्यर्थः । श्रूयते हि — 'प्राणः प्रजानाम् उदयत्येष सूर्यः' (प्रउ १,८) इति । श्रिञ् सेवायाम् । अस्मात् 'छन्दसि लिट्' (पा ३,२,१०५) इति वर्तमाने लिट् । 'लिटः कानज्वा' (पा ३,२,१०६) इति तस्य कानजादेशः । 'अचि श्नुधातु' (पा ६,४,७७) इत्यादिना इयङादेशः । 'चितः' (पा ६,१,१६३) इति अन्तोदात्तत्वम् । न च 'अभ्यस्तानामादिः' (पा ६,१,१८९) इति आद्युदात्तत्वं शङ्कनीयम् । तस्य सार्वधातुकविषयत्वात् । हे सूर्य ईदृशं त्वा त्वां नमस्यन्तः नमस्कुर्वन्तः । स्तुतिनमस्कारादिभिः पूजयन्त इत्यर्थः । हविषा चर्वाज्यसमिदादिना विधेम परिचरेम । विधतिः परिचरणकर्मा । विध विधाने । तुदादित्वात् शः । शस्य ङित्त्वात् लघूपधगुणाभावः । नमस्यन्त इति । 'नमोवरिवश्चित्रङः क्यच्' (पा ३,१,१९) इत्यत्र 'नमसः पूजायाम्' इति विशेषितत्वात् पूजार्थे क्यच् । 'नः क्ये' (पा १,४,१५) इति पदसंज्ञाया नियमितत्वात् तत्र पदसंज्ञाया अभावेन रुत्वाद्यभावः । तदन्तात् लटः शत्रादेशः । शपः पित्त्वाद् अनुदात्तत्वम्, शतुश्च लसार्वधातुकस्वरेण । अतः चित्स्वरेण क्यजन्तस्य अन्तोदात्तत्वे शबकारेण सह एकादेशस्यापि 'एकादेश उदात्तेनोदात्तः' (पा ८,२,५) इति उदात्तत्वम् । तथा अङ्कान् अञ्चनशीलान् गमनशीलान् सूर्यस्य अनुचरान् समङ्कान् समञ्चनशीलान्

1. मृळातीति S', Kd.

समीपे वर्तमानान् अन्तरङ्गानपि परिवारभूतान् देवान् हविषा विधेम परिचरेम। अञ्चु गतिपूजनयोः। अस्मात् 'हलश्च' (पा ३,३,१२१) इति कर्तरि बाहुलकाद् घञ्। 'चजोः कु घिण्यतोः' (पा ७,३,५२) इति कुत्वम्। हविःप्रदानस्य प्रयोजनम् आह—यो अग्रभीदिति। अग्रभीत् प्रहीता ग्राहको यः ज्वरादिरूपो रोगः अस्य पुरुषस्य पर्व पर्वाणि शरीरावयवसंधीन् अग्रभीत् अग्रहीत्। व्याप्य बाधत इत्यर्थः। तस्य रोगजातस्य निवृत्तये हविषा विधेमेति पूर्वेण संबन्धः। ग्रह उपादाने। अस्मात् लुङि 'च्लेः सिच्' (पा ३,१,४४)। 'अतो हलादेः०' (पा ७,२,७) इति प्राप्ताया वृद्धेः 'ह्यन्तक्षण०' (पा ७,२,५) इति प्रतिषेधः। 'हृग्रहोर्भश्छन्दसि' (पावा ८,२,३२) इति भत्वम्। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः।

मुञ्च शीर्षक्त्या उत कास एनं परुष्परुराविवेशा यो अस्य।
यो अभ्रजा वातजा यश्च शुष्मो वनस्पतीन्त्सचतां पर्वतांश्च ॥ ३ ॥

मुञ्च। शीर्षक्त्याः। उत। कासः। एनम्। परुःऽपरुः। आऽविवेश। यः। अस्य।
यः। अभ्रऽजाः। वातऽजाः। यः। च। शुष्मः। वनस्पतीन्। सचताम्। पर्वतान्। च ॥ ३ ॥

हे सूर्य शीर्षक्त्याः शीर्षं शिरः अञ्चति गच्छति व्याप्य बाधत इति शीर्षक्तिः शिरोरोगः। तस्मात् सकाशाद् एनं पुरुषं मुञ्च मोचय। शिरोरोगं निवर्तयेत्यर्थः। उत अपि च यः कासः हृत्कण्ठमध्यवर्ती प्रसिद्धः श्लेष्मरोगविशेषः एनं पुरुषम् आविवेश प्रविष्टवान्। प्रवेशनप्रकारमेव आह—अस्य पुरुषस्य परुःपरुः सर्वान् संधिबन्धान् आविवेश। विश प्रवेशने। अस्मात् लिट्। तथाविधात् कासरोगाद् एनं मोचयेति पूर्वेण संबन्धः। इदानीं वातपित्तश्लेष्मविकारजनितानां सर्वेषामपि व्याधीनाम् अस्मात् पुरुषाद् अन्यत्रावस्थानं प्रार्थयते यो अभ्रजा इति। यो रोगः अभ्रजाः। अपो बिभर्तीत्यभ्रं प्रवर्षको मेघसंघः, तस्मात् जायते प्रवर्षणोदकसंसर्गेण उत्पद्यत इति अभ्रजाः श्लेष्मरोगः। 'जनसनखनक्रमगमो विट्' (पा ३,२,६७) इति विट्प्रत्ययः। 'विड्वनोरनुनासिकस्यात्' (पा ६,४,४१) इति आत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। तथा यो वातजाः वातात् कौष्ठ्यात् वायोर्जात उत्पन्नो रोगः यश्च शुष्मः शोषकः पित्तविकारजनितो ज्वरादिरोगोस्ति दोषत्रयोद्भूतः स सर्वोपि रोगः एनं पुरुषं विहाय वनस्पतीन् काननस्थान् वृक्षान् पर्वतांश्च मनुष्यसंचाररहितान् शिलोच्चयांश्च सचतां समवैतु। आश्रयतु इत्यर्थः। षच समवाये। शुष्म इति। शुष शोषणे। अस्मात् 'अविसिविसिशुषिभ्यः कित्' (पाउ १,१४४) इति मन्प्रत्ययः। तस्य कित्त्वभावात् लघूपधगुणाभावः। नित्स्वरेण आद्युदात्तत्वम्। वनस्पतीन् इति। वनानां पतिः

१. ग्रहको S', Kd. २. पुरुःपुरुः S', Kd. ३. संबंधाद् S', Kd,

वनस्पतिः । 'पारस्करप्रभृतीनि च संज्ञायाम्' (पा ६,१,१५७) इति सुडागमः । 'उभे वनस्पत्यादिषु युगपत्' (पा ६,२,१४०) इति उभयपदप्रकृतिस्वरत्वम् ।

शं मे परस्मै गात्राय शमस्त्ववराय मे ।
शं मे चतुर्भ्यो अङ्गेभ्यः शमस्तु तन्वे३ मम ॥४॥

शम् । मे । परस्मै । गात्राय । शम् । अस्तु । अवराय । मे ।
शम् । मे । चतुःऽभ्यः । अङ्गेभ्यः । शम् । अस्तु । तन्वे । मम ॥ ४ ॥

अधुना रोगार्तः स्वस्य आरोग्यं स्वयमेव आशास्ते — मे मम परस्मै परस्ताद् उपरि वर्तमानाय शिरोरूपाय गात्राय शरीरावयवाय शम् तत्रत्यरोगशमनेन सुखम् अस्तु भवतु । तथा मे मम अवराय अवस्ताद् वर्तमानाय चरणलक्षणाय अङ्गाय शम् सुखम् अस्तु भवतु । तथा मे मम । चतुर्भ्यः द्वौ पादौ द्वौ हस्तौ इति चत्वारि तेभ्यः । अङ्गेभ्यः अवयवेभ्यः शम् सुखम् अस्तु । 'झल्युपोत्तमम्' (पा ६,१,१८०) इति भ्यसः पूर्वस्य अचः उदात्तत्वम् । तथा मम तन्वे मध्यशरीराय सर्वसमष्टिरूपाय शरीराय वा शम सुखम् अस्तु भवतु । तनुशब्दाद् 'ऊङ् उतः' (पा ४,१,६६) इति ऊङ्प्रत्ययः । ततश्चतुर्थ्येकवचने यण् । 'उदात्तयणो हल्पूर्वात्' (पा ६,१,१७४) इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'नोङ्धात्वोः' (पा ६,१,१७५) इति प्रतिषेधः । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा ८,२,४) इति विभक्तेः स्वरितत्वम् । 'युष्मदस्मदोर्ङसि' (पा ६,१,२११) इति ममशब्द आद्युदात्तः ।

इति तृतीयेऽनुवाके प्रथमं सूक्तम् ।

'नमस्ते अस्तु विद्युते' इति सूक्तम् अशनिनिवारणकर्मणि अशन्युपस्थानादौ सोमदर्भकुष्ठलोष्टमञ्जिष्ठादिद्रव्याणां गृहक्षेत्रादिषु निखनने च विनियुक्तम् । उक्तं संहिताविधौ — " 'नमस्ते अस्तु' (अ १,१३) 'यस्ते पृथु स्तनयित्नुः' (अ ७,१२) इत्यैशनियुक् । तम् उपाध्याय प्रथमं स्यः सोमदर्भ° " (कौसू ३८,८;९) इत्यादि ।

१. अरस्तु° S', Kd. २. मे मम शंपा. । ३. = अशनिविषयकः युक् (= संकेत्यमानसूक्तयुग्मम्) । अत्र युज्-इति पुंसि युग्मपर्यायः । तम् (= युजम्) इति सम्बन्धः (वैतु. S', Kd. अशनियुक° उ° इति, मूको. दा. चानुसरन्तं; Bl. अनु शंपा. °क्त->°क्तम् इतीव?) । ४. ∠उप-आ√ध्यै (वैतु. शंपा. °दाय इति, Bl. अपादाय इति च?) । ५. 'प्रथमम् (= आदौ) स्यः (= अतिवर्षादिपीडितः)' इति संबन्धः (वैतु 'प्रथमस्य *[सूक्तस्य]' इत्युक्तवन्तं दा., अनुसरन्तं Bl. अनु शंपा. प्रथमस्य इत्येकं पदमिति?) ।

तथा उपाकर्मणि अनेन सूक्तेन आज्यं जुहुयात् । सूत्रितं च— 'अभिजिति शिष्यान्' इत्युपक्रम्य " 'नमस्ते अस्तु विद्युत' (अ १,१३) 'आरेमावस्मदस्तु' " (अ १,२६) इति (कौसू. १३९,१-८)।

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते अस्त्वश्मने येना दूडाशे अस्यसि ॥ १ ॥

नमः । ते । अस्तु । विऽद्युते । नमः । ते । स्तनयित्नवे ।
नमः । ते । अस्तु । अश्मने । येन । दुःऽदाशे । अस्यसि ॥ १ ॥

हे पर्जन्य ते तव संबन्धिन्यै विद्युते विद्योतमानायै सौदामिन्यै नमः अस्तु मया क्रियमाणो नमस्कारो भवतु । यद्वा नम इत्यन्ननाम । मया हूयमानं हविर्लक्षणम् अन्नं भवतु । 'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' (पा २,३,१६) इति चतुर्थी । द्युत दीप्तौ । अस्माद् विपूर्वात् 'क्विप् च' (पा ३,२,७६) इति क्विप् । तथा ते तव संबन्धिने स्तनयित्नवे स्तनितं ध्वनिं कुर्वते अशनये नमः अस्तु । स्तन देवशब्दे । अस्मात् चुरादित्वात् णिच् । अदन्तत्वाद् उपधावृद्ध्यभावः । 'स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्' (पाउ ३,२९) इति ण्यन्ताद्धातोः इत्नुच्प्रत्ययः । 'अयामन्ताल्वाय्येत्न्विष्णुषु' (पा ६,४,५५) इति णेरयादेशः । तथा ते तव संबन्धिने अश्मने । मेघनामैतत् । व्यापनशीलाय मेघाय नमः अस्तु भवतु । कुतो हेतोर्नमस्कार इत्यत आह — येनेति । येन कारणेन दूडाशे दुःखेन दाश्यते दाप्यते इति दूडाशो लुब्धः । स्तुतिनमस्कारहविरादीनाम् अप्रदातेत्यर्थः । दाशृ दाने । अस्माद् अन्तर्भावितण्यर्थात् कर्मणि खलि[4] 'दुरो दाशनाशदभध्येषूत्वं वक्तव्यम्' (पावा ६,३,१०९) इति दुरो रेफस्य उत्वम् उत्तरपदादेः ष्टुत्वं च । तादृशे पुरुषे अस्यसि क्षिपसि अशनिं प्रक्षिपसि । अतो हेतोः अशनिभयनिवृत्तये नमस्करोमीत्यर्थः । असु क्षेपणे । 'दिवादिभ्यः श्यन्' (पा ३,१.६९) इति श्यन्प्रत्ययः । 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम् । 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः ।

नमस्ते प्रवतो नपाद् यतस्तपः समूहसि ।
मृडया नस्तनूभ्यो मयस्तोकेभ्यस्कृधि ॥ २ ॥

१ इति नास्ति S', Kd. २. दूडाशस्यसि पै १५,२०,८ प्रदिजस्तसि पै. [मूको.] । यो मा दूडाश खि ४,४,१ ३. एतस्यैव प्रपञ्चः आज°( पा३,२,१७७) । ४. स्वः समीहसे मा ३६,२१; पै १६, ३,४; ततस्वसंहसे पै. [मूको.] । ५. खनि शंपा. । ६. शंनः पै. ।

नर्मः । ते । प्रऽव॑तः । नपा॒त् । यतः॑ । तपः॑ । स॒म्ऽऊह॑सि ।
मृ॒डय॑ । नः॒ । त॒नूभ्यः॑ । मयः॑ । तो॒केभ्यः॑ । कृ॒धि॒ ॥ २ ॥

न केवलं विद्युदादिभ्यो नमस्कारः अपितु पर्जन्यस्यापि नमस्कारः क्रियते — हे प्रवतो नपात् प्रवतः प्रगतस्य स्वस्मात् प्रच्युतस्य त्वद्विषयस्तुतिनमस्काराद्यकर्तुः पुरुषस्य नपात् न पातः न पालक । असेवकस्य अशनिभयप्रदातरित्यर्थः । 'उपसर्गाच्छन्दसि धात्वर्थे' ( पा ५,१,११८ ) इति प्रशब्दाद् गम्यर्थे अभिधेये वतिप्रत्ययः । ननु 'वत्यन्ताश्च' इति अव्ययसंज्ञायां कथं लिङ्गसंख्याभ्यां योगः । उच्यते । उपसर्गाच्छन्दसि धातौ इत्येव उच्यमानेपि धातोः अभिधेयत्वासंभवेन सामर्थ्यात् धात्वर्थे सेत्स्यति । तथापि क्रियमाणम् अर्थग्रहणम् एतत् ज्ञापयति–ससाधने धात्वर्थे अभिधेये उपसर्गाद् वतिर्भवतीति । तथा च साधनस्य लिङ्गसंख्यायोगित्वात् तदभिधायिनो वत्यन्तस्यापि लिङ्गसंख्यायोगित्वेन अनव्ययत्वम् । आह च महाभाष्यकारः —कः पुनर्धातुकृतोर्थः। साधनम् । ××साधनेऽयं भवन् लिङ्गसंख्याभ्यां योक्ष्यते (पाम ५,१,११८) इति । पा रक्षणे । पातीति पात् । अस्मात् लटः शत्रादेशः । नञ्समासे 'नलोपो नञः' ( पा ६,३,७३ ) इति नलोपे प्राप्ते 'नभ्राण्नपात्०' ( पा ६,३,७५ ) इति नञः प्रकृतिभावः । 'सुबामन्त्रिते पराङ्गवत् स्वरे' ( पा २,१,२) इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । यद्वा प्रवतः प्रगतस्य भुवः सकाशात् प्रचण्डैः सूर्यकिरणैरुद्धृतस्य उदकस्य नपात् न पातयितः । अकाले उदकं यथा अधो न पतति तथा उपरिष्टात् मेघमण्डले धारयितरित्यर्थः । पातयतेः क्विप् । हे ईदृश पर्जन्य ते तुभ्यं नमः नमस्कारः भवतु । तस्य नमस्कार्यत्वम् आह — यतः यस्मात् कारणात् तपः पातकदाहकं तेजः समूहसि संहतं करोषि । अशनिरूपेण प्रक्षिपसीत्यर्थः । ऊह वितर्के । उपसर्गवशात् संघीकरणम् अर्थः । हे पर्जन्य नः अस्माकं तनूभ्यः शरीरेभ्यः । तादर्थ्ये चतुर्थी । मृडय । अशनिनिवारणेन शरीरस्य सुखं जनयेत्यर्थः । तथा तोकेभ्यः । अपत्यनामैतत् । अस्माकम् अपत्येभ्यः पुत्रपौत्रादिरूपेभ्यः मयः । सुखनामैतत् । सुखं कृधि कुरु । नमस्कारादिना प्रीतः सन् अशनिम् अस्मदीयेभ्यः सर्वेभ्यो निवारयेत्यर्थः । करोतेर्लोटि 'सेर्ह्यपिच्च' ( पा ३,४,८७ ) इति हिरादेशः । 'बहुलं छन्दसि ( पा ,४,७३ ) इति विकरणस्य लुक् । 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' ( पा ६,४,१०२ ) इति हेर्धरादेशः । 'कःकरत्करतिकृधिकृतेष्वनदितेः' ( पा ८,३,५० ) इति विसर्जनीयस्य सत्वम् ।

प्र॒वतो॑ नपा॒न्नम॑[3] ए॒वास्तु॒ तुभ्यं॒ नम॑स्ते हे॒तये॑[4] तपु॑षे[5] च कृण्मः ।
वि॒द्म[6] ते॒ धाम॑ पर॒मं गुहा॒ यत् स॑मु॒द्रे अ॒न्तर्निहि॑ता॒सि नाभि॑ः[7] ॥ ३ ॥

---

१. उपशब्दा° S', Kd. २. योक्ष्यते शंपा. । ३. °मो अस्तु पै १४,३,५. ४. हेते पै. [मूको.] । ५. तपुष्यै पै.; तिपुष्यै पै. [मूको.] । ६. विद्मो नाम पै.; गन्धर्वो नामपै. [मूको.] । ७. निहता समाभिः पै. [मूको.] ।

प्रऽवतः । नपात् । नमः । एव । अस्तु । तुभ्यम् । नमः । ते । हेतये । तपुषे । च ।
कृण्मः ।
विद्म । ते । धाम । परमम् । गुहा । यत् । समुद्रे । अन्तः । निऽहिता । असि ।
नाभिः ॥ ३ ॥

हे प्रवतो नपात् । व्याख्यातम् एतत् । स्वरे तु विशेषः । पादादित्वात् षष्ठ्यामन्त्रितसमुदायस्य 'आमन्त्रितस्य च' (पा ६,१,१९८) इति षाष्ठिकम् आद्युदात्तत्वम् । हे पर्जन्य तुभ्यं नम एव नमस्कार एव अस्तु भवतु । तदतिरिक्तं परिचरणं न कर्तुं प्रभवाम इत्यर्थः । तथा ते तव हेतये हन्त्यनेनेति हेतिः आयुधम् । 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा ३,३,९७) इति हन्तेः क्तिनि अन्तोदात्तो निपात्यते । तामेव विशिनष्टि — तपुषे तापकारिण्यै । तप संतापे । 'अर्तिपृवपियजितनिधनितपिभ्यो नित्' (पाउ २,११७) इति उसुप्रत्ययः । तस्य नित्त्वाद् आद्युदात्तत्वम् । संतापकारिणे अशनिरूपाय आयुधाय च नमः कृण्मः कुर्मः । कृवि हिंसाकरणयोश्च । अस्मात् लटि 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः अकारश्चान्तादेशः । तस्य 'अतो लोपः' (पा ६,४,४८) इति लोपे सति 'अचः परस्मिन् पूर्वविधौ' (पा १,१,५७) इति स्थानिवद्भावात् लघूपधगुणाभावः । 'लोपश्चास्यान्यतरस्यां म्वोः' (पा ६,४,१०७) इति अङ्गान्तस्य उकारस्य लोपः । पर्जन्यस्य निवासस्थानापरिज्ञाने नमस्कारायोगम् आशङ्क्य तदपि जानीम इत्याह — हे पर्जन्य ते तव संबन्धि[न्या] गुहा गुहायाम् । 'सुपां सुलुक्°' (पा ७,१,३९) इति सप्तम्या लुक् । गुहावत् परैरगम्ये प्रदेशविशेषे परमम् उत्कृष्टं यत् प्रसिद्धं धाम निवासस्थानं तद् विद्म वयं जानीमः । विद ज्ञाने । 'विदो लटो वा' (पा ३,४,८३) इति मसो मादेशः । किं पुनस्तद् इत्याह — समुद्रे । अन्तरिक्षनामैतत् । समुद्द्रवन्ति अस्माद् उदकानि इति समुद्रः । आह च यास्कः —'समुद्रः कस्मात् । समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येनमापः, संमोदन्तेस्मिन् भूतानि, समुदको भवति, समुनत्तीति वा (या २,१०) इति । ईदृशे अन्तरिक्षे अन्तः मध्ये नाभिः । यथा देहमध्ये नाभिचक्रे सर्वा नाड्यो बद्धा भवन्ति तथा पर्जन्ये कृत्स्नं मेघमण्डलं बद्धं वर्तत इति नाभित्वव्यपदेशः । हे पर्जन्य त्वं तत्र निहिता स्थापिता नाभिः असि भवसि । नाभिचक्रवत् कृत्स्नस्य मेघमण्डलस्य धारकत्वेन अन्तरिक्षमध्ये अवस्थितो भवसीत्यर्थः । निपूर्वात् धाञः कर्मणि निष्ठा । 'दधातेर्हिः' (पा ७,४,४२) इति हिरादेशः । 'गतिरनन्तरः' (पा ६,२,४९) इति गतेः प्रकृतिस्वरत्वम् । नाभ्यपेक्षया स्त्रीलिङ्गता । णह बन्धने । 'नहो भश्च' (पाउ ४,१२६) इति इञ्प्रत्ययान्त आद्युदात्तो नाभिशब्दः ।

यां त्वा देवा असृजन्त विश्व इषुं कृण्वाना असनाय धृष्णुम् ।
सा नो मृड विदथे गृणाना तस्यै ते नमो अस्तु देवि ॥ ४ ॥

१. समुद्रको S', Kd.

याम् । त्वा । देवाः । असृजन्त । विश्वे । इषुम् । कृण्वानाः । असनाय । धृष्णुम् ।
सा । नः । मृड । विदथे । गृणाना । तस्यै । ते । नमः । अस्तु । देवि ॥ ४ ॥

पूर्वत्र पर्जन्यस्य प्राधान्येन प्रार्थना कृता । अधुना अशनिमेव प्राधान्येन प्रार्थयते । हे अशने यां त्वा त्वां विश्वे सर्वे देवाः दानादिगुणयुक्ता इन्द्रादयः असृजन्त सृष्टवन्तः । किमर्थम् इत्यत आह — असनाय क्षेपणाय अनभिमतेषु पुरुषेषु प्रक्षेप्तुम् । असु क्षेपणे । भावे ल्युट् । धृष्णुम् धर्षिकां शत्रूणां हिंसने प्रगल्भाम् । ञिधृषा प्रागल्भ्ये । 'त्रसिगृधिधृषिक्षिपेः क्नुः' ( पा ३,२,१४० ) इति क्नुप्रत्ययः । इषुम् शरं कृण्वानाः कुर्वाणाः इषुकरणाद्धेतोः असृजन्तेत्यर्थः । कृवि हिंसाकरणयोश्च । 'लक्षणहेत्वोः क्रियायाः' ( पा ३, २,१२६ ) इति हेतौ शानच् । 'धिन्विकृण्व्योर च' ( पा ३,१,८० ) इति उप्रत्ययः अकारश्चान्तादेशः ।' सा तथाविधा त्वं विदथे । यज्ञनामैतत् । विन्दन्ति प्राप्नुवन्ति अनेन फलम् इति विदथो यज्ञः । विद्लृ लाभे । 'रुदिविदिभ्यां कित्' ( ?पाउ ३,११५ ) इति करणे अथप्रत्ययः । कित्त्वाद् लघूपधगुणाभावः । प्रत्ययाद्युदात्तत्वम् । अधुना मया क्रियमाणे कर्मणीत्यर्थः । गृणाना स्तूयमाना । गॄ शब्दे । कर्मणि लटः शानच् यकि प्राप्ते व्यत्ययेन श्नाप्रत्ययः । 'श्नाभ्यस्तयोरातः' ( पा ६,४,११२ ) इत्याल्लोपः । 'चितः' ( पा ६,१,१६३ ) इत्यन्तोदात्तत्वम् । यद्वा विद्यन्ते ज्ञायन्ते नक्षत्राणि अस्मिन् इति विदथम् अन्तरिक्षम् तस्मिन् गृणाना शब्दायमाना । गर्जन्तीत्यर्थः । नः अस्मान् मृळ मृडय । त्वन्निमित्तभयनिवारणेन सुखयेत्यर्थः । तत्र हेतुम् आह — हे देवि अन्तरिक्षे विद्योतमाने अशने तस्यै तादृश्यै उक्तमहिमोपेतायै ते तुभ्यं नमः नमस्कारः अस्तु भवतु । तस्या इति । 'सावेकाचः०' ( पा ६,१,१६८ ) इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्त्साववर्ण०' (पा ६,१,१८२) इति प्रतिषेधात् प्रातिपदिकस्वरेण आद्युदात्तः ।

इति तृतीयेनुवाके द्वितीयं सूक्तम् ।

'भगम् अस्या वर्चः' इति सूक्तेन स्त्रियाः पुरुषस्य वा दौर्भाग्यकरणे तदुपभुक्तमाल्यकन्दुकदन्तधावनकेशानां सूत्रोक्तप्रकारेण [नि] खननादिकर्माणि कुर्यात् । तथा च कौशिकः — " 'भगम् अस्या वर्च' इति मालानिष्प्रमन्ददन्तधावनकेशानं ईशानहतायाः" (कौसू ३६, १५) इत्यादि ।

भगमस्या वर्च आदिष्यधि वृक्षादिव स्रजम् ।
महाबुध्न इव पर्वतो ज्योक् पितृष्वास्ताम् ॥ १ ॥

भगम् । अस्याः । वर्चः । आ । अदिषि । अधि । वृक्षात्ऽइव । स्रजम् ।
महाबुध्नःऽइव । पर्वतः । ज्योक् । पितृषु । आस्ताम् ॥ १ ॥

---

१. बेट्ठ. मंपा. यनि. । २. मालाप्रमन्द S', Kd. ३. °शम् Bl. ४. हरातायाः S', Kd.

अस्याः अनभिमतायाः स्त्रियाः भगम् भाग्यं वर्चः तद्धेतुभूतं शारीरम् असाधारणं तेजश्च आदिषि आददे । मन्त्रप्रभावात् स्वीकरोमीत्यर्थः । डुदाञ् दाने । 'आङो दोऽनास्यविहरणे' (पा १,३,२०) इति आत्मनेपदम् । 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति लुङ् । 'स्थाघ्वोरिच्च' (पा १,२,१७) इति सिचः कित्त्वम् तत्संनियोगेन धातोराकारस्य इत्वम् । सिचः कित्त्वाद् गुणाभावः । भगम् इति । भज सेवायाम् । 'पुंसि संज्ञायां घः प्रायेण' (पा ३,३, ११८) इति करणे घः । 'चजोः कु घिण्ण्यतोः' (पा ७,३,५२) इति कुत्वम् । वृषादेः आकृतिगणत्वाद् आद्युदात्तत्वम् । वर्च इति । वर्च दीप्तौ इत्यस्माद् भावे असुन् । तस्य नित्त्वाद् आद्युदात्तत्वम् । वर्चस आदाने दृष्टान्तः — वृक्षादिव महीरुहादिव । अधिः पञ्चम्यर्थानुवादी । पुष्पिताद् यथा स्रजं पुष्पनिकरं जना आददते तथेति पूर्वेण संबन्धः । सृज विसर्गे । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' ( पा ३,२,५९ ) इति क्विन्नन्तो निपातितः । वृक्षादिवेति । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' ( पावा २,१,४ ) इति समासः । एवम् अपहृतवर्चस्का सा स्त्री किं करोतु इत्यत आह—महाबुध्न इव महान् दीर्घतरो बुध्नो मूलं यस्य स महाबुध्नः । भूम्याम् अधिकतरं निखात इत्यर्थः । बन्ध बन्धने । 'बन्धेर्ब्रधिबुधी च' ( पाउ ३,५ ) इति नक्प्रत्ययः तत्संनियोगेन धातोर्बुधादेशश्च । 'आन्महतः समानाधिकरणजातीययोः' ( पा ६,३,४६ ) इति महच्छब्दस्य आकारः । तादृशः पर्वतः पर्ववान् शिलोच्चयः । 'पर्ववान् पर्वतः' ( या १,२० ) इति हि निरुक्तम् । स यथा स्वस्थानात् न चलति तथा इयमपि दुर्भगा स्त्री ज्योक् चिरकालं पितृषु वक्ष्यमाणेषु पितृमात्रादिगृहेषु आस्तां निवसतु । पित्रादिगृहात् न कदाचित् पत्युर्मुखम् अवलोकयतु इत्यर्थः । आस उपवेशने । 'अनुदात्तङित आत्मनेपदम्' ( पा १,३,१२ ) इति तङ् । लोटि अदादित्वात् शपो लुक् । 'तिङ्ङतिङः' ( पा ८,१,२८ ) इति सर्वानुदात्तत्वम् ।

एषा ते राजन् कन्या वधूर्नि धूयतां यम ।
सा मातुर्बध्यतां गृहेथो भ्रातुरथो पितुः ॥ २ ॥

एषा । ते । राजन् । कन्या । वधूः । नि । धूयताम् । यम ।
सा । मातुः । बध्यताम् । गृहे । अथो इति । भ्रातुः । अथो इति । पितुः ॥ २ ॥

हे राजन् राजमान सोम । प्रथमातिथित्वेन नियामकत्वात् यमेति तस्यैव विशेषणम् । श्रूयते हि — 'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः' ( ऋ १०,८५,४० ) इति । हे ईदृश सोम एषा कन्या

१. स्त्रियः S', Kd. २. निवेसतु S', Kd. ३. यत् पै १,१५,२. ४. राजन पै. [मूको.] । ५. वधून् विधूयतां पै. । ६. यमः पै [मूको]. । ७. बध्य° पै. [मूको.] । ८. नियमक° S', Kd.

स्त्री ते तव वधूः जाया । प्रथमतस्त्वया परिगृहीतत्वाद् इत्यर्थः । सा वधूः नि धूयताम् । दौर्भाग्येन पतिगृहात् निःसार्यताम् इत्यर्थः । धूञ् कम्पने । कर्मणि लोट् । एवं भवता पतिगृहात् निःसारिता सा वधूः मातुः जनन्या गृहे बध्यताम् । बद्धेव तत्रैव चिरं वर्तताम् इत्यर्थः । बन्ध बन्धने । 'अनिदिताम्°' (पा ६,४,२४) इति उपधालोपः । अथो अपि च भ्रातुः सोदरस्य गृहे बध्यताम् इति संबन्धः । अथो अपि च पितुः जनकस्य गृहे बध्यताम् । एषा वधूः दुर्भगा सती यावज्जीवं मात्रादिगृहेष्वेव यथेच्छं वर्ततां न कदाचित् पतिगृहं प्रविशतु इत्यर्थः ।

एषा ते कुलपा राजन् तामु ते परि दद्मसि ।
ज्योक् पितृष्वासाता आ शीर्ष्णः शमोप्यात् ॥ ३ ॥

एषा । ते । कुलऽपाः । राजन् । ताम् । ऊँ इति । ते । परि । दद्मसि ।
ज्योक् । पितृषु । आसातै । आ । शीर्ष्णः । शर्मऽओप्यात् ॥ ३ ॥

हे राजन् सोम एषा स्त्री ते तव कुलपाः पातिव्रत्येन कुलस्य पालयित्री या । विवाहकाले प्रथमतस्त्वया परिगृहीतत्वात् । पा रक्षणे । 'आतोनुपसर्गे कः' (पा ३,२,३) इति कर्मण्युपपदे कप्रत्ययः । ताम् स्त्रियम् । उशब्दः अवधारणे, स च भिन्नक्रमः । ते तुभ्यमेव परि दद्मसि परिदद्मः । रक्षणार्थं दानं परिदानम् । एतावन्तं कालं पतिसमीपे स्थिताम् एनां रक्षणार्थं पुनस्त्वदायत्तामेव करोमीत्यर्थः । डुदाञ् दाने । जुहोत्यादित्वात् शपः श्लुः । 'श्नाभ्यस्तयोरातः' (पा ६,४,११२) इति आकारलोपः । 'इदन्तो मसि' (पा ७,१,४६) इति मस इदन्तत्वम् । तस्या निवासस्थानम् आह — ज्योक् चिरकालं पितृषु पित्रादिगृहेषु उक्तेषु आसातै आस्तां निवसतु । आस उपवेशने । अस्मात् लेटि आडागमः । टेः एत्वे 'वैतोन्यत्र' (पा ३,४,९६) इति ऐकारः । पितृकुलवासस्य अवधिम् आह — शीर्ष्णः शिरसः समोप्यात् संवपनात् भूमौ संपतनात् । आङ् अभिविधौ । शिरसो निपातावधीति यावत् । मरणपर्यन्तं पित्रादिगृहेष्वेव वर्तताम् इत्यर्थः । समाङ्पूर्वाद् वपेर्भावे छान्दसः क्यप् । 'शीर्षंश्छन्दसि' (पा ६,१,६०) इति शिरःशब्दस्य शीर्षन् आदेशः । 'अल्लोपोऽनः' (पा ६,४,१३४) इति अकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा ६,१,१६१) इति षष्ठ्येकवचनस्य उदात्तत्वम् । 'आङ् मर्यादावचने' (पा १,४,८९) इति आङः कर्मप्रवचनीयसंज्ञा । 'पञ्चम्यपाङ्परिभिः' (पा २,३,१०) इति समोप्यशब्दात् पञ्चमी ।

---

१. मात्रामादि° S′, Kd.　　२. तथेच्छ S′, Kd.　　३. यन्३ केतपा पै १,१५,२ [मूको.] °कतमा पै. [मूको.]।　४. आसता B, B^D.　५. तु. B,B^h,D,K,A,K, R,S^m,V,J,RW.; वैतु. सा. अनु शंपा, Wh., सात., पै. समोप्यात् । पाठस्तु? केशम् ओ (आ-उं) प्यात् इति शोधः (तु. छन्दः अ [१६, ३२,२] च [तु. Bl.]) ।　६. समूऽओप्यात् शंपा. ।　७. वैतु. पंपा. यनि. ।　८. मसिः शंपा. । ९. विवास° S′, Kd.

आसि॑तस्य ते॒ ब्रह्म॑णा क॒श्यप॑स्य॒ गय॑स्य च ।
अ॒न्तः॒को॒शमि॑व जा॒मयोऽपि॑[1] नह्यामि ते॒ भग॑म् ॥ ४ ॥

असि॑तस्य । ते॒ । ब्रह्म॑णा । क॒श्यप॑स्य । गय॑स्य । च॒ ।
अ॒न्तः॒को॒शम्ऽइ॑व । जा॒मय॑: । अपि॑ । न॒ह्या॒मि॒ । ते॒ । भग॑म् ॥ ४ ॥

हे नारि ते तव भगम् भाग्यम् असितस्य एतन्नाम्न ऋषेः ब्रह्मणा मन्त्रेण अपि नह्यामि । अपिनद्धं पिहितं करोमि । त्वत् सकाशाद् निवर्तयामीत्यर्थः । तथा कश्यपस्य ऋषेः गयस्य च । परस्परसमुच्चयार्थश्चकारः । एतयोरपि संबन्धिना ब्रह्मणा मन्त्रेण ते तव भगम् भाग्यम् अपि नह्यामि । णह बन्धने । दिवादित्वात् श्यन् प्रत्ययः । तत्र दृष्टान्तः — जामयः । जायन्ते आसु अपत्यानीति जामयः स्त्रियः भगिन्यादिरूपाः । तद् उक्तं यास्केन — 'न जामये भगिन्यै । जामिरन्येऽस्यां जनयन्ति जाम् अपत्यम्' (या ३,६) इति । ताः अन्तः गृहमध्ये अवस्थितं कोशमिव धनवस्त्रादिस्थापनार्थम् आवृतं स्थानमिव । तादृशं स्थानं यथा पिहितं कुर्वन्ति तद्वद् इत्यर्थः । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' (पावा २,१,४) इति समासः ।

'सं सं स्रवन्तु' इति सूक्तं सर्वपुष्टिकर्मणि संपाताभिमन्त्रितमैश्रधान्यचरुप्राशने दधिमधुमिश्रसक्तुमन्थप्राशने च विनियुक्तम् । सूत्रितं हि — " 'सं सं स्रवन्तु' इति नार्व्याभ्याम् उदकम् आहरतः सर्वत उपासेचम् । तस्मिन् मैश्रधान्यं शृतम् अश्नाति" (कौसू १९,४;५) इत्यादि व्रीहियवादीनि मिश्रधान्यानि 'व्रीहियवगोधूमोपवाकतिलप्रियंगुश्यामाका इति मिश्रधान्यानि' (कौसू ८,२०) इति परिभाषासूत्रात् ।

तथा लक्ष्मीकरणे च एतत् सूक्तम् । सूत्रितं हि — 'यस्य श्रियं कामयते ततो व्रीह्याज्यपय आहार्य क्षीरौदनम् अश्नाति' (कौसू १९,७) इत्यादि ।

सं सं[7] स्रवन्तु॒ सिन्ध॑वः॒ सं वाताः॒ सं प॑त॒त्रिण॑: ।
इ॒मं य॒ज्ञं प्र॒दिवो॑ मे जुषन्तां संस्रा॒व्ये॑ण ह॒विषा॑ जुहोमि ॥ १ ॥

सम् । सम् । स्र॒व॒न्तु॒ । सिन्ध॑वः । सम् । वाता॑: । सम् । प॒त॒त्रिण॑: ।
इ॒मम् । य॒ज्ञम् । प्र॒ऽदिव॑: । मे॒ । जु॒षन्ता॒म् । स॒म्ऽस्रा॒व्येऽण । ह॒विषा॑ ।
जु॒हो॒मि॒ ॥ १ ॥

१. गमयस्य पै. [मूको.] । २. अन्तःको॰ B, Bᵖ, Eᵏ, I, H. ३. कोशमिव जामयोप पै. [मूको.] । ४. नार्व्या॰ S', Kd. ५. तु. S', Kd, Bl.; वैतु. शंपा. उपासिच्य । ६. क्षीरो- दन॰ S', Kd. ७. तु. म [६,६३,४] सा. च; वैतु. पपा. अनु. शंपा., RW., सात. सं सं सं इति ?

सिन्धवः स्यन्दनशीला नद्यः सं सं स्रवन्तु सम्यक् अस्मदनुकूलाः प्रवहन्तु । स्रु गतौ । लोटि शब्गुणावादेशाः । 'प्रसमुपोदः पादपूरणे' (पा ८,१,६) इति समो द्विर्वचनम् । 'तस्य परम् आम्रेडितम्' (पा ८,१,२) इति परस्य आम्रेडितसंज्ञा । 'अनुदात्तं च' (पा ८,१,३) इति तस्य अनुदात्तत्वम् । तथा वाताः गमनशीला वायवः । वा गतिगन्धनयोः । 'हसिमृग्रिण्वामिदमिल्लूपूधूर्विभ्यस्तन्' (पाउ ३,८६) इति तन्प्रत्ययः । नित्त्वाद् आद्युदात्तत्वम् । तेपि । उपसर्गवशात् स्रवन्तु इति सर्वत्र अनुषज्यते । सं सं स्रवन्तु आनुकूल्येन प्रवर्तन्ताम् । तथा पतत्रिणः पतत्राणि पक्षा एषां सन्तीति पतत्रिणः । पतॢ गतौ । 'पतेरत्रन्' (?पाउ ३,१०५) इति पतत्रशब्दः अत्रन्प्रत्ययान्तः । 'अत इनिठनौ' (पा ५,२,११५) इति मत्वर्थीय इनिप्रत्ययः । तदुपलक्षिताः सर्वे प्राणिनः सं सं स्रवन्तु सम्यग् अनुकूलाश्चरन्तु । यद्वा एते सिन्धुप्रभृतयः सं स्रवन्तु अस्मदभिलषितं फलं संप्रयच्छन्तु । तथा प्रदिवः पुराणनामैतत् । पुरातना देवाः मे मदीयम् इमं यज्ञम् यागं जुषन्ताम् सेवन्ताम् । अत्र संनिहिता भूत्वा हविः स्वीकुर्वन्तु इत्यर्थः । जुषी प्रीतिसेवनयोः । तुदादित्वात् शप्रत्ययः । तस्य ङित्त्वात् लघूपधगुणाभावः । अत्र हविषः सद्भावम् आह — संस्राव्येण इति । सम्यक् स्रवणं संस्रावः । स्रु गतौ । भावे घञ् । संस्रावम् अर्हतीति संस्राव्यम् आज्यपयःप्रभृति । 'तदर्हति[1]' (पा ५,१,६३) इति यत्प्रत्ययः । यद्वा संस्रावणीयेन । संपूर्वात् स्रवतेर्ण्यन्तात् 'अचो यत्' (पा ३,१,९७) इति यत् । तादृशेन हविषा आज्यादिना जुहोमि । आज्यादिकं हविः देवान् उद्दिश्य अग्नौ प्रक्षिपामीत्यर्थः । 'तृतीया च होश्छन्दसि' (पा २,३,३) इति हविषा इति कर्मणि तृतीया ।

इ॒हैव ह॒वमा या॑त म इ॒ह सं॑स्रावणा उ॒तेमं व॑र्धयता गिरः ।
इ॒है॒तु सर्वो॒ यः प॒शुर॒स्मिन् ति॑ष्ठतु या र॒यिः ॥ २ ॥

इ॒ह । ए॒व । ह॒वम् । आ । या॒त॒ । मे॒ । इ॒ह । स॒म्ऽस्रा॒व॒णाः[2] । उ॒त । इ॒मम् । व॒र्ध॒य॒त॒ । गि॒रः॒ ।
इ॒ह । आ । ए॒तु॒ । सर्वः॑ । यः । प॒शुः । अ॒स्मिन् । ति॒ष्ठ॒तु॒ । या[3] । र॒यिः ॥ २ ॥

हे देवाः मे मम संबन्धिनं हवम् आह्वानम् उद्दिश्य इहैव अस्मिन् मत्समीपदेश एव आ यात आगच्छत । अन्यान् सर्वान्[4] परित्यज्य मत्समीपमेव आगच्छतेत्यर्थः । या प्रापणे । लोटि अदादित्वात् शपो लुक् । तत्र हेतुरुच्यते — इह अस्मिन् कर्मणि संस्रावणाः[5] संस्रावणीयाज्यादिसाध्या होमाः । सन्तीति शेषः । स्रवतेर्ण्यन्तात् कर्मणि ल्युट् । तद्धविःस्वीकरणार्थम् आ यातेति पूर्वेण संबन्धः । उत अपि च गिरः गीर्यन्ते स्तूयन्त इति गिरः । कर्मणि क्विप् । 'ॠत इद्धातोः' (पा ७,१,१००) इति इत्वम् । हे

१. 'छन्दसि' च (पा. ५,१,६७) इति भाष्यम् । २. °स्रवणाः P. ३. तु. सा.; वैतु. P, P², J, K, Bᵖ, Oᵖ. याः । ४. सर्वान् सर्वान् Kd. ५. वैतु. संपा. यनि. ।

देवाः स्तूयमाना यूयम् इमम् हविःप्रदं यजमानं वर्धयत प्रजापश्वादिभिः समृद्धं कुरुत। वृधु वृद्धौ। अस्मात् ण्यन्तात् लोटि मध्यमपुरुषबहुवचनस्य थस्य तादेशः। 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' ( पा ६,३,१३३ ) इति सांहितिको दीर्घः। यद्वा हे देवाः यूयं गिरः अस्माभिः क्रियमाणाः स्तुतिरूपा वाचः। प्राप्य इत्यध्याहृत्य योज्यम्। हे देवाः युष्मत्प्रसादात् यः लोके प्रसिद्धः गवाश्वमहिषादिरूपः पशुरस्ति स सर्वोपि इह अस्मदीये सदने ऐतु आगच्छतु। तथा या प्रसिद्धा धान्यकनकादिरूपा रयिः धनम् अस्ति सा सर्वापि अस्मिन् मदीये गृहे तिष्ठतु निवसतु। मम पशुधनादिसर्वसमृद्धिर्भवतु इत्यर्थः।

ये नदीनां संस्रवन्त्युत्सासः सदमक्षिताः।
तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि ॥ ३ ॥

ये। नदीनाम्। सम्ऽस्रवन्ति। उत्सासः। सदम्। अक्षिताः।
तेभिः। मे। सर्वैः। सम्ऽस्रावैः। धनम्। सम्। स्रावयामसि ॥ ३ ॥

नदीनाम् नदनशीलानां गङ्गादीनाम्। 'नदनाभवः' ( या २,२४ ) इति यास्कः। तथा च अग्रे निर्वक्ष्यते। 'यददः संप्रयतीरहावनदता हते। तस्मादा नद्यो नाम स्थ' ( अ ३,१३,१ ) इति। नद अव्यक्ते शब्दे। अस्मात् पचाद्यच्। तत्र गणे नदट् इति पाठात् टित्त्वात् ङीप्प्रत्ययः। 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा ६,१,१६१) इति ङीप उदात्तत्वम्। तासां संबन्धिनो ये प्रसिद्धाः सदम् सदा अविच्छेदेन वर्तमाना अक्षिताः क्षयरहिताः अक्षीयमाणा वा। यद्वा सदम् अक्षिताः सर्वदा ग्रीष्मादावपि क्षयरहिताः। क्षि क्षये। अस्माद् भावे कर्मणि वा क्तः। 'निष्ठायाम् अण्यदर्थे' ( पा ६,४,६० ) इति भावकर्मणोः पर्युदस्तत्वाद् दीर्घाभावः। अत एव 'क्षियो दीर्घात्' ( पा ८,२,४६ ) इति विहितस्य

१. वैतु. मंपा. यनि.। २. नदीनाम् इतः पूर्वं S', Kd. मन्त्रं च तत्पूर्वार्धभाष्यं च पुनरपि मन्त्रं च पठतः। तद् यथा—

तृतीया

ये नदीनां संस्रवन्त्युत्सासः सदमक्षिताः।
तेभिर्मे सर्वैः संस्रावैर्धनं संस्रावयामसि ॥ ३ ॥

नदीनां नदनशीलानां गङ्गादीनाम्। नदनाभव इति यास्कः। अहावनदता हते तस्मादा नद्यो नाम स्थेत्यग्रे वक्ष्यते च। नद अव्यक्ते शब्दे। पचाद्यच्। नदट् इति पाठात् 'टिड्ढाणञ्' इति ङीप्। ये प्रसिद्धा दृढा उत्सासः उत्साः गिरिकुहरनिर्गता निर्झराः। आज्जसेरसुक्। सदं सदा अविच्छेदेन अक्षिता. क्षयरहिताः अक्षीयमाणा वा। क्षि क्षये। अस्माद् भावे कर्मणि वा क्तः। 'निष्ठायाम् अण्यदर्थे' इति अर्थविशेषे दीर्घस्य पर्युदस्तत्वात् 'क्षियो दीर्घात्' इति विहितस्य नत्वस्यापि अभावः। संस्रवन्ति सम्यक् प्रवहन्ति। स्रु गतौ। यद्वृत्तान्नित्यम् इति निघातप्रतिषेधः।

निष्ठान्तत्वस्यापि अभावः । तथाविधा उत्सासः उत्साः भूमेरुद्गच्छन्तो जलप्रवाहाः । 'आज्जसेरसुक्' ( पा ७,१,५० ) । संस्रवन्ति संभूय प्रवहन्ति । महानदीनां जलप्रवाहाः सर्वदा क्षयरहिताः प्रवहन्तीत्यर्थः । तेभिः तैः । 'बहुलं छन्दसि' ( पा ७,१,१० ) इति भिसः ऐसभावे 'बहुवचने झल्येत्' ( पा ७,३,१०३ ) इति एत्त्वम् । सर्वैः निखिलैः संस्रावैः जलप्रवाहैः । स्रु स्रवणे । भावे घञ् । 'थाथघञ्क्ताजबित्रकाणाम्' ( पा ६,२,१४४ ) इति उत्तरपदान्तोदात्तत्वम् । धनम् गोहिरण्यादिरूपं मे मम संस्रावयामसि संस्रावयामः संप्रवाहयामः । अविच्छिन्नैर्नदीनां प्रवाहैः सस्याद्यभिवृद्धिद्वारा अभिलषितं धनं प्राप्नुयामेत्यर्थः । यद्वा नदीनाम् अविच्छिन्नप्रवाहवत् ममापि धनम् अविच्छेदेन समृद्धं भवतु इत्यर्थः । स्रु स्रवणे । अस्मात् ण्यन्तात् लटि 'इदन्तो मसि'[1] ( पा ७,१,४६ ) इति मस इदन्तत्वम् ।

ये स॒र्पिषः॑[2] सं॒स्रव॑न्ति क्षी॒रस्य॑ चोद॒कस्य॑ च ।
तेभि॑र्मे॒ सर्वैः॑ संस्रा॒वैर्धनं॒ सं स्रा॑वयामसि ॥ ४ ॥

ये । स॒र्पिषः॑ । स॒म्ऽस्रव॑न्ति । क्षी॒रस्य॑ । च॒ । उ॒द॒कस्य॑ । च॒ ।
तेभिः॑ । मे॒ । सर्वैः॑ । स॒म्ऽस्रा॒वैः । धन॑म् । सम् । स्रा॒व॒या॒म॒सि॒ ॥ ४ ॥

सर्पिषः सर्पणशीलस्य आज्यस्य । 'यद् असर्पत् तत् सर्पिरभवत्' ( तै २,३,१०,१ ) इति हि तैत्तिरीयकम् । ये अवयवाः संस्रवन्ति नदीरूपेण प्रवहन्ति । यद्वा पूर्वमन्त्रात् उत्सास इति विशेष्यम् अनुषज्य योजनीयम् । सर्पिषोपि द्रवणस्वभावं द्रव्यम् उदाहरति । क्षीरस्य क्षरणशीलस्य पयसः ततोपि द्रवणशीलस्य उदकस्य । उदननात् परितो गमनाद् उदकम् । तथा च निगमः — 'उदानिषुर्महीरिति तस्माद् उदकम् उच्यते' ( तै ५,६,१,३ ) इति । परस्परसमुच्चयार्थौ चकारौ । तयोर्ये उत्साः संस्रवन्ति तेभिरित्यादि पूर्वं व्याख्यातम् ।

इति चतुर्थं सूक्तम् ।

'येमावास्यां रात्रिम्' इति सूक्तेन द्वेष्यमारणार्थम् अभिमन्त्रितसीसचूर्णमिश्रान्नप्रदानम् तद्वाग्रस्थाभरणसंस्पर्शनम् स्वयंछिन्नवेणुयष्ट्या ताडनं च कुर्यात् । सूत्रं च —" 'येमावास्यां रात्रिम्' इति संनह्य सीसचूर्णानि" (कौसू ४७,२३) इत्यादि । अत्र सीसशब्देन 'सीसनदीसीसे अयोरजांसि कृकलासशिरः सीसानि' ( कौसू ८,१८ ) इति परिभाषासूत्रोक्तानि प्रत्येतव्यानि । अत्र नदीसीसम् इति नदीफेनम् उच्यते ।

१. मसिः सर्वत्र S', Kd. २. संस्रावाः पै १,२४,२. ३. नास्ति Bl. ४. °स्रास° Bl.

ये॒ऽमा॒वा॒स्यां३॒॑ रात्रि॑मु॒दस्थु॑र्व्रा॒जम॒त्रिणः॑ ।
अ॒ग्निस्तु॒रीयो॑ यातु॒हा सो अ॒स्मभ्य॒मधि॑ ब्रवत् ॥ १ ॥

ये । अ॒मा॒ऽवा॒स्या॒म् । रात्रि॑म् । उ॒त्ऽअस्थुः॑ । व्रा॒जम् । अ॒त्रिणः॑ ।
अ॒ग्निः । तु॒रीयः॑ । या॒तु॒ऽहा । सः । अ॒स्मभ्य॑म् । अधि॑ । ब्र॒वत् ॥ १ ॥

ये प्रसिद्धा अत्रिणः अदनशीला रक्षःपिशाचादयः। अद भक्षणे इत्यस्माद् 'अदेस्त्रिनिश्च' (पाउ ४,६८) इति औणादिकस्त्रिनिप्रत्ययः। अमावास्याम्। अमा सह वसतः अस्यां तिथौ सूर्याचन्द्रमसौ इति अमावास्या। वस निवासे। अस्मात् ण्यति 'अमावस्यद् अन्यतरस्याम्' (पा ३,१,१२२) इति वृद्ध्यभावनिपातनस्य पाक्षिकत्वाद् अत्र वृद्धिः। 'तस्येदम्' (पा ४,३,१२०) अर्थे विहितस्य अणः छान्दसो लुक्। 'तित् स्वरितम्' (पा ६,१,१८५) इति अन्तस्वरितत्वम्। अमावास्यासंबन्धिनीम् इत्यर्थः। यद्वा 'सुपां सुपो भवन्ति' (पावा ७,१,३९) इति षष्ठ्या अमादेशः। अमावास्याया इत्यर्थः। रात्रिम् रजनीं व्राजम्[1] भ्राजमानां तारकाभिर्दीप्यमानाम्। भ्राजृ दीप्तौ। 'भ्राजभास' (पा ३,२,१७७) इत्यादिना क्विप्। रात्रिम् इति। 'कालाध्वनोरत्यन्तसंयोगे' (पा २,३,५) इति द्वितीया। सर्वस्यां रात्रौ उदस्थुः उत्तिष्ठन्ति। मनुष्यान् हिंसितुं रात्रौ संचरन्तीत्यर्थः। यद्वा भ्राजं[2] भ्राजमानं रोगाद्यभावेन पुष्टाङ्गं पुरुषं हिंसितुम् उदस्थुः। अत एव अमावस्यासंबन्धिन्यां रात्रौ रक्षसां संचरणं निमित्तीकृत्य राक्षोघ्नेष्टिर्विहिता — 'अग्नये रक्षोघ्ने पुरोडाशम् अष्टाकपालम् अमावास्यायां निशायां निर्वपेत्' (तु. तै २,२,२,२) इति। तथैव तेषां संचरणमेव निमित्तीकृत्य तस्यां रात्रौ आत्मरक्षा कर्तव्येति तेनैव आपस्तम्बेनोक्तम् — 'दिवादित्यः सत्त्वानि गोपायति नक्तं चन्द्रमास्तस्माद् अमावास्यायां निशायां स्वाधीन आत्मनो गुप्तिम् इच्छेत्' (आपध १,११,३[3]) इति। अस्थुरिति। ष्ठा गतिनिवृत्तौ। 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति वर्तमाने लुङ्। अत्र च ऊर्ध्वगमनस्य विवक्षितत्वात् 'उदोऽनूर्ध्वकर्मणि' (पा १,३,२४) इति ऊर्ध्वकर्मणः पर्युदस्तत्वाद् आत्मनेपदाभावः। 'गातिस्था०' (पा २,४,७७) इति सिचो लुक्। 'आतः' (पा ३,४,११०) इति झेर्जुस्। 'उस्यपदान्तात्' (पा ६,१,९६) इति पररूपत्वम्। यत एवं रक्षांसि अस्याम् उत्तिष्ठन्ति अतः कारणात्[4] तुरीयः चतुर्थः अग्निः। पूर्वं देवानां हव्यवाहकास्त्रयः अग्नयो मृताः, तदपेक्षया अस्य वर्तमानस्य अग्नेस्तुरीयत्वम्। श्रूयते हि तैत्तिरीयके — 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त' (तै २,६,६,१) इति। यद्वा वैतानाग्नयस्त्रयः, तदपेक्षया गार्ह्योऽग्निश्चतुर्थः। अथवा वैतानिकः गार्ह्यः सांग्रामिकश्चेति त्रयः अग्नयः, तदपेक्षया आङ्गि-

१. 'मत्रिणः सात.। २. भ्रामा° S', Kd. ३. वैतु. मंपा. यनि.। ४. रक्षांस्यमत्रि° S', Kd.

रक्षोघ्नश्चतुर्थः। पूरणेर्थे 'चतुरश्छयतावाद्यक्षरलोपश्च' (पावा ५,२,५१) इति छप्रत्ययः। तत्संनियोगेन चकारस्य लोपः। सोग्निः यातुहा यातूनां रक्षसां हन्ता। 'अग्निः खलु वै रक्षोहा' (तै ६,१,४,६) इति तैत्तिरीयकम्। हन हिंसागत्योः। अस्माद् यातुशब्दोपपदात् 'बहुलं छन्दसि' (पा ३,२,८८) इति क्विप्। स तथाविधोग्निः अस्मभ्यम् अस्मदर्थम् अधि ब्रवत् अधिब्रवीतु। अस्मान् स्वकीयत्वेन स्वीकृत्य तेभ्यो रक्षःपिशाचेभ्यः प्राप्तां भीतिं निवर्तयतु इत्यर्थः। ब्रूञ् व्यक्तायां वाचि। अस्मात् लेटि अडागमः।

सीसा॒याध्या॑ह॒ वरु॑णः सीसा॑या॒ग्निरुपा॑वति।
सीसं॑ म॒ इन्द्रः॒ प्राय॑च्छ॒त् तद॒ङ्ग या॑तु॒चात॑नम् ॥ २ ॥

सीसा॑य। अधि॑। आ॒ह॒। वरु॑णः। सीसा॑य। अ॒ग्निः। उप॑। अ॒व॒ति॒।
सीस॑म्। मे॒। इन्द्रः॑। प्र। अ॒य॒च्छ॒त्। तत्। अ॒ङ्ग। या॒तु॒ऽचात॑नम् ॥ २ ॥

अनया प्रयोगसाधनं द्रव्यं स्तूयते। सीसाय प्राक् सूत्रपरिभाषया प्रदर्शिताय नदीफेनादिरूपाय। तादर्थ्ये चतुर्थी। तदर्थं वरुणः जलाधिपतिर्देवः अध्याह अधिब्रवीति। मदीयम् एतद् इत्यभिमन्यते। अस्य सीसस्य रक्षःपिशाचाद्यनभिमतनिवृत्तिसाधनत्वेन इतरपदार्थेभ्यो विशिष्टत्वात् अत्रैव असाधारण्येन पक्षपातं करोतीत्यर्थः। आहेति। ब्रूञ् व्यक्तायां वाचि। 'ब्रुवः पञ्चानाम् आदित आहो ब्रुवः' (पा ३,४,८४) इति तिपो णलादेशः तत्संनियोगेन प्रकृतेः आहादेशश्च। तथा सीसाय उक्तद्रव्यार्थम् अग्निः अञ्जनादिगुणयुक्तो देवः उप अवति उपरक्षति। निरन्तरम् एतत् सीसं समीपे स्थापयित्वा रक्षोनिबर्हणसामर्थ्याधानेन पालयतीत्यर्थः। यद्वा सीसायेति 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वात् चतुर्थी। सीसम् उक्तप्रकारेण रक्षतीत्यर्थः। उदीरितसामर्थ्योपेतं सीसं मे मह्यं द्वेष्यादिनिरसनकामाय इन्द्रः परमैश्वर्ययुक्तो देवानां पतिः प्रायच्छत् प्रादात्। अनेन त्वदभिमतं साधयेति प्रदत्तवान् इत्यर्थः। दाण् दाने। लङि 'पाघ्रा' (पा ७,३,७८) इत्यादिना यच्छादेशः। सत्सु अन्येषु उत्कृष्टेषु द्रव्येषु किम् अनेन निकृष्टेन द्रव्येणेत्याह — तदङ्ग इति। अङ्ग इति आभिमुख्यकरणे। हे साधक देवदत्त तत् खलु उक्तसामर्थ्योपेतं सीसं यातुचातनम् यातूनां रक्षःपिशाचादीनां नाशकम्। 'चातयतिर्नाशने' (या ६,३०) इति हि यास्कः।

१. °ध्या° पै १,१०,१. २. °अङ्ग अमीवायातु पै., अमीवाचस्त पै. [मूको.]। ३. अत्रैवसाधारण्येन S', Kd. ४. देवदत्तखलु S', Kd.

इदं विष्कन्धं सहत इदं बाधते अत्त्रिणः ।
अनेन विश्वा ससहे या जातानि पिशाच्याः ॥ ३ ॥

इदम् । विऽस्कन्धम् । सहते । इदम् । बाधते । अत्त्रिणः ।
अनेन । विश्वा । ससहे । या । जातानि । पिशाच्याः ॥ ३ ॥

अपि च इदम् सीसं विष्कन्धम् गतिप्रतिबन्धकम् । रक्षःपिशाचादिकृतं विघ्नजातम् इत्यर्थः । सहते अभिभवति निःसारयति । षह अभिभवे इति धातुः । विष्कन्धम् इति । स्कन्दिर् गतिशोषणयोः । भावे घञ् । प्रादिसमासे 'वेः स्कन्देरनिष्ठायाम्' (पा ८,३,७३) इति षत्वम् । व्यत्ययेन धकारः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तथा इदम् सीसम् अत्त्रिणः अदनशीलान् राक्षसान् बाधते हिनस्ति । न केवलं रक्षःपिशाचादिकृतं विघ्नं निवर्तयति अपितु विघ्नोत्पादकान् रक्षःप्रभृतीनपि विनाशयतीत्यर्थः । यत एवम् अतः अनेन उक्तप्रभावोपेतेन सीसेन विश्वा विश्वानि सर्वाणि । 'शेश्छन्दसि बहुलम्' (पा ६,१,७०) इति शेर्लोपः । ससहे अभिभवामि । सह अभिभवे । लटि उत्तमैकवचने 'बहुलं छन्दसि' (पा २,४,७६) इति शपः श्लुः । कानि पुनस्तानि इत्याह पिशाच्याः पिशिताशिन्या राक्षस्याः अस्याः सकाशात् जातानि उत्पन्नानि या यानि पीडाकराणि उपद्रवजातानि । सन्तीति शेषः । तानीति पूर्वेण संबन्धः । पिशितम् अश्नातीति पिशिताशः । 'पृषोदरादीनि यथोपदिष्टम्' (पा ६,३,१०९) इत्यत्र गणे पिशाचशब्दस्य पाठात् पिशिताशशब्दस्य पिशाचादेशः । जातिलक्षणो ङीष् ।

यदि नो गां हंसि यद्यश्वं यदि पूरुषम् ।
तं त्वा सीसेन विध्यामो यथा नोसो अवीरहा ॥ ४ ॥

यदि । नः । गाम् । हंसि । यदि । अश्वम् । यदि । पुरुषम् ।
तम् । त्वा । सीसेन । विध्यामः । यथा । नः । असः । अवीरऽहा ॥ ४ ॥

हे शत्रो त्वं नः अस्माकं संबन्धिनीं गाम् गोजातं यदि हंसि मारयसि । हन हिंसागत्योः । लटि शपि अदादित्वात् शपो लुक् । तथा अश्वं यदि हंसि । पूरुषम् अस्मदीयं भृत्यादिरूपं यदि हंसि । अत्र सर्वत्र यदिशब्दप्रयोगाद् अपकर्तुरेव हिंस्यत्वम् न अनपकर्तुः इति द्योत्यते । तम् तथाविधं मदीयगवाश्वादिहननेन अपकर्तारं त्वा त्वां शत्रु-

१. ससहे पै. १,१०,२. २ 'प्रबंधकम् S', Kd.

भूतम्। 'त्वामौ द्वितीयायाः' (पा ८,१,२३) इति युष्मदस्त्वादेशः। 'अनुदात्तं सर्वम् अपादादौ' (पा ८,१,१८) इत्यनुवृत्तेः अनुदात्तत्वम्। सीसेन उत्कमहिम्नोपेतेन विध्यामः ताडयामः मारयामः। व्यध ताडने। दिवादित्वात् श्यन्। 'ग्रहिज्यावयिव्यधि' (पा ६,१,१६) इत्यादिना संप्रसारणम्। शत्रुणा घातितानां गवादीनां पुनरुद्भवासंभवात् किमिति शत्रुहिंसा क्रियत इत्यत आह — यथेति। इतः परमपि यथा येन प्रकारेण हे शत्रो त्वं नः अस्माकम् अवीरहा। वीर्याज्जायन्त इति वीराः पुत्राः, तेषां हन्ता वीरहा, न वीरहा अवीरहा। असः भवसि। अस्तेर्लेटि अडागमः। इतः परमपि अस्मदीयान् पुत्रपश्वादीन् यथा न बाधसे तथा ताडयाम इति पूर्वेण संबन्धः।

इति पञ्चमं सूक्तम्।

इति प्रथमकाण्डे तृतीयोऽनुवाकः॥

चतुर्थेऽनुवाके पञ्च सूक्तानि। तत्र 'अमूर्याः' इति प्रथमं सूक्तम्। तेन शस्त्रघातादिजरुधिरप्रवाहस्य स्त्रीरजसः अतिवर्तनस्य च निवृत्तये पञ्चपर्वणा दण्डेन रुधिरवहनस्थानाभिमन्त्रणम् व्रणमुखे रथ्यापांसुसिकताप्रक्षेपणादिकम् अर्भकपालिकाबन्धनं च इत्येवमादि कुर्यात्। सूत्रं च — "'अमूर्या' इति। पञ्चपर्वणा पांसुसिकताभिः परिकिरति। अर्मकपालिकां बध्नाति। पाययति" (कौसू २६,९-१२) इत्यादि। अर्मकपालिका नाम शुष्कपङ्कमृत्तिका, केदारमृत्तिका वा।

अ॒मूर्या यन्ति॑ यो॒षितो॑ हि॒रा॑ लोहि॑तवाससः।
अ॒भ्रात॑र इव जा॒मय॒स्तिष्ठ॑न्तु ह॒तव॑र्चसः॥ १॥

अ॒मूः। याः। यन्ति॑। यो॒षितः॑। हि॒राः। लोहि॑तऽवाससः।
अ॒भ्रात॑रःऽइव। जा॒मयः॑। तिष्ठ॑न्तु। ह॒तऽव॑र्चसः॥ १॥

योषितः स्त्रियाः संबन्धिन्यः अमूः एताः पुरतो दृश्यमानाः लोहितवाससः लोहितवर्णवस्त्राः। लोहितवर्णा इत्यर्थः। यद्वा लोहितस्य रुधिरस्य निवासभूताः। वस आच्छादने, वस निवासे, इत्यनयोः अन्यतरस्माद् 'वसेर्णित्' (पाउ ४,२१८) इति औणादिकः असुन्प्रत्ययः। तस्य णिद्वद्भावाद् उपधावृद्धिः। ईदृश्यो या हिराः

१. इत्यत इत्याह S′, Kd. २. पंचमपर्वणा S′, Kd. ३. °कपालकां S′, Kd. ४. यन्तु पं १३,४,१५. ५. जामयः पं., या ३,४. ६. सर्वा पै., या.। ७. योषितस् पै., योषस् पै. [मूको.]; योषास् या.। ८. तिष्ठन्ति पै., या.। ९. °वर्णास्यस्त्र: S′, Kd.

सिराः रजोवहननाड्यः यन्ति गच्छन्ति। व्याधिवशात् सर्वदा प्रवहन्तीत्यर्थः। इण् गतौ। 'इणो यण्' ( पा ६,४,८१ ) इति यणादेशः। 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति निघातप्रतिषेधः। ताः सिराः क्रियमाणेन अनेन भैषज्यकर्मणा हतवर्चसः हत-तेजस्काः प्रनष्टरोगवीर्याः सत्यः तिष्ठन्तु स्थेयासुः। मा प्रवाक्षुरित्यर्थः। तिष्ठन्तु। ष्ठा गतिनिवृत्तौ। लोटि 'पाघ्रा॰' ( पा ७,३,७८ ) इत्यादिना तिष्ठादेशः। स च आद्युदात्तो निपातितः। अन्यथा धातुस्वरेण अन्तोदात्तत्वे सति शपा सह एकादेशे 'अतो गुणे' ( पा ६,१,९७ ) इति पररूपे 'एकादेश उदात्तेनोदात्तः' ( पा ८,२,५ ) इति उदात्तत्वे कृते ति-ष्ठन्ति इति मध्योदात्तं पदं स्यात्। आद्युदात्तं चेष्यते। तस्माद् आद्युदात्तो निपात्यते। स निपातनस्वरो धातुस्वरस्य बाधको यथा स्यात्। पादादित्वात् निघाताभावः। तत्र दृष्टान्तः — अभ्रातर इव। न विद्यन्ते भ्रातरो यासां ता अभ्रातरः। 'नद्यृतश्च' (पा ५,४,१५३) इति प्राप्तस्य कपः 'ऋतश्छन्दसि' (पा ५,४,१५८) इति निषेधः। यथा अभ्रातृका जामयः भगिन्यः। आह च यास्कः — 'न जामये भगिन्यै। जामिरन्येऽस्यां जनयन्ति जाम् अपत्यम्' (या ३,६) इति। ता यत उत्पन्नास्तत्रैव पितृकुले संतानकर्मणे पिण्डदानाय च तिष्ठन्ति तद्वद्, इत्यर्थः।

तिष्ठा॑व॒रे तिष्ठ॑ प॒र उ॒त त्वं ति॑ष्ठ मध्यमे।
क॒नि॒ष्ठि॒का च॒ तिष्ठ॑ति॒ तिष्ठा॒दिद्ध॒मनि॑र्म॒ही ॥ २ ॥

तिष्ठ॑। अ॒व॒रे॒। तिष्ठ॑। प॒रे॒। उ॒त। त्वम्। ति॒ष्ठ॒। म॒ध्य॒मे॒।
क॒नि॒ष्ठि॒का। च॒। तिष्ठ॑ति। तिष्ठा॑त्। इत्। ध॒मनि॑ः। म॒ही ॥ २ ॥

इदानीं धमनीः प्रार्थयते — हे अवरे शरीरस्य अधोभागवर्तिनि सिरे त्वं तिष्ठ शस्त्राद्यभिघातजनितरुधिरस्रावाद् निवृत्ता भव। तथा हे परे ऊर्ध्वाङ्गवर्तिनि सिरे त्वमपि तिष्ठ। अवरे इत्यस्य आमन्त्रितस्य 'आमन्त्रितं पूर्वम् अविद्यमानवत्' (पा ८,१,७२) इति अविद्यमानवद्भावेन अतिङ उत्तरत्वाभावात् तिष्ठेत्यस्य निघाताभावः। उत अपि च हे मध्यमे। मध्ये भवा मध्यमा। 'मध्यान्मः' (पा ४,३,८) इति मप्रत्ययः। शरीरस्य मध्यभागवर्तिनि सिरे त्वमपि तिष्ठ। पूर्वार्धे प्रत्यक्षेण धमनीनां स्थानभेदभिन्नानां प्रार्थना कृता। अधुना परिमाणतो भिन्नानां तासामेव पारोक्ष्येण प्रार्थना क्रियते — कनिष्ठिका। अतिशयेन अल्पा कनिष्ठा। 'युवाल्पयोः कन् अन्यतरस्याम्' (पा ५,३,६४) इति इष्ठनि अल्पशब्दस्य कन् आदेशः। स्वार्थिकः कप्रत्ययः। 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः' (पा ७,३,४४) इति इत्वम्। सूक्ष्मतरा च नाडी तिष्ठति। तत्र यत्नविशेषो

१. इदं शपा सह एकादेशे इत्यतः पूर्वम् S', Kd. २. 'कासि तिष्ठास् पै १६,४,१६.
३. प्रथम' S,' Kd.

न कर्तव्य इत्यर्थः । अस्मिन् पक्षे चकारः त्वर्थे । यद्वा पञ्चमलकारोयम् । कनिष्ठिका च तिष्ठतु महती चेति । परस्परसमुच्चयार्थश्चकारः । 'चवायोगे प्रथमा' (पा ८,१,५९) इति प्रथमा तिङ्विभक्तिर्न निहन्यते । मही महती स्थूलतरा धमनिः सिरा तिष्ठादित् तिष्ठत्वेव । अनेन प्रयोगेण निवृत्तरुधिरस्रावा अवतिष्ठताम् । ष्ठा गतिनिवृत्तौ । 'लेटोडाटौ' (पा ३,४,९४) इत्यडागमः । 'इतश्च लोपः परस्मैपदेषु' (पा ३,४,९७) इति इकारलोपः । पादादित्वात् निघाताभावः । महीति । महती-शब्दे छान्दसः अच्छब्दलोपः ।

श॒तस्य॑ ध॒मनी॑नां स॒हस्र॑स्य हि॒राणा॑म् ।
अस्थु॒रिन्म॑ध्य॒मा इ॒माः सा॒कमन्ता॑ अरंसत ॥ ३ ॥

श॒तस्य॑ । ध॒मनी॑नाम् । स॒हस्र॑स्य । हि॒राणा॑म् ।
अस्थुः॑ । इत् । म॒ध्य॒माः । इ॒माः । सा॒कम् । अन्ताः॑ । अ॒रं॒स॒त ॥ ३ ॥

शतस्य शतसंख्यानां धमनीनाम् हृदयगतानां प्रधाननाडीनाम् । तथा च कठोपनिषदि अग्रे समाम्नायते । 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानम् अभिनिःसृतैका' (कउ ६,१६) इति । तथा सहस्रस्य सहस्रसंख्याकानां हिराणाम् सिराणां शाखानाडीनाम् । सहस्रशब्दस्य अपरिमितपर्यायत्वात् श्रुतिप्रसिद्धानां सर्वासां शाखानाडीनाम् एतद् उपलक्षणम् । तथा च प्रश्नोपनिषदि वक्ष्यति । 'अत्रैतद् एकशतं नाडीनां तासां द्वासप्ततिं द्वासप्ततिं प्रति शाखानाडीसहस्राण्यासु व्यानश्चरति' (प्रउ ३,६) इति । आचार्यैरपि प्राधान्यविवक्षया काश्चन नाड्यः परिगणिताः ।

'मध्यस्थायाः सुषुम्नायाः पर्वपञ्चकसंभवाः ।
शाखोपशाखतां प्राप्ताः सिरा लक्षत्रयात् परम् ।
अर्धलक्षम् इति प्राहुः शरीरार्थविचारकाः ।' इति ।

तासाम् उभयविधानां नाडीनां मध्यमाः मध्ये भवाः इमाः पूर्वं व्याधिवशात् स्रवन्त्यो नाड्यः अस्थुरित् । इच्छब्दः अवधारणे । अतिष्ठन्नेव । अधुना मन्त्रप्रभावात् निवृत्तरुधिरस्रावा भवन्त्येवेत्यर्थः । अतः परं निवृत्तरुधिरस्रावाभिर्नाडीभिः साकम् सार्धम् अन्ताः अन्तिमा अवशिष्टाः सर्वा नाड्यः अरंसत यथापूर्वं रमन्ते स्म । रमु क्रीडायाम् । अनुदात्तेत्वाद् आत्मनेपदम् । लुङि 'च्लेः सिच्' (पा ३,१,४४) ।

१. ते धमनी° पै १६,४,१२. २. हिराणां ते पै., हिराणात् पै. [मूको.] । ३. वा पै.
४. मुण्डकोप° ग्रंपा. ।

परि॑ वः॒ सिक॑तावती ध॒नूर्बृ॑ह॒त्य॑क्रमीत् । तिष्ठ॑ते॒लय॑ता॒ सु कम् ॥ ४ ॥

परि॑ । वः॒ । सिक॑तावती । ध॒नूः॑ । बृ॒ह॒ती । अ॒क्र॒मी॒त् ।
तिष्ठ॑त । इ॒लय॑त । सु । क॒म् ॥ ४ ॥

हे नाड्यः वः युष्मान् । 'बहुवचनस्य वस्नसौ' (पा ८,१,२१) इति द्वितीयान्तस्य युष्मदः वसादेशः । सिकतावती सिकताः रजांसि तद्वती तदाधारभूता नाडी । यद्वा अश्मर्याख्यो व्याधिविशेषो यस्माद् उत्पद्यते सा नाडी सिकतावती । धनूः धनुर्वद् वंक्रो मूत्राशयो नाडीविशेषः । धन धान्ये । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः॰' (पाउ १,८० ) इति ऊप्रत्ययः । स्मर्यते हि—

'मूत्राशयो धनुर्वक्रो वस्तिरित्यभिधीयते ।' इति ।

तथा बृहती महती । 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' (पाउ २,८४) इति शतृवद्भावाद् 'उगितश्च' (पा ४,१,६) इति ङीप् । 'बृहन्महतोरुपसंख्यानम्' (पावा ६,१,१७३) इति ङीप उदात्तत्वम् । उक्ता सा नाडी पर्यक्रमीत् परितो व्याप्नोत् । सर्वान् रुधिरप्रवहणमार्गान् निरुध्य वर्तत इत्यर्थः । क्रमु पादविक्षेपे । अस्मात् लुङि सिचि 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' (पा ७,२,५) इति वृद्धिप्रतिषेधः । अस्माद्धेतोः हे नाड्यः यूयं तिष्ठत निवृत्तस्रावा भवत । कम् सुखम् अस्य जनस्य सु सुष्ठु इलयत प्रेरयत । स्रवव्याधिविनिर्मुक्ताः सुखं प्रयच्छतेत्यर्थः । इल प्रेरणे इति धातुः ।

इति प्रथमं सूक्तम् ।

'निर्लक्ष्म्यम्' इति सूक्तेन मुखहस्तपादाद्यङ्गेषु सामुद्रिकोक्तदुर्लक्षणयुक्तायाः स्त्रियास्तद्दोषनिवृत्तये मुखप्रक्षालनम्, अभिषेकः, फलीकरणतुषावतक्षणानां होमो वा कार्यः । सूत्रितं हि— " 'निर्लक्ष्म्यम्' इति पापलक्षणाया मुखम् उक्षत्यन्त्र्चं दक्षिणात् केशस्तुकात्" (कौसू ४२,१९ ) इत्यादि ।

तथा शान्तिकल्पेपि महाशान्तौ एतत् सूक्तम् ।

१. °सामयी पै १९,४,१४. २. वक्रा S', Kd. ३. तु. सा.; वैतु. टि. ४ । ४. तु. Bl.; वैतु. S', Kd. सा. च निर्लक्ष्मम् ।

निर्लक्ष्म्यं१ ललाम्यं१ निररातिं सुवामसि ।
अथ या भद्रा तानि नः प्रजाया अरातिं नयामसि ॥ १ ॥

निः । लक्ष्म्यम् । ललाम्यम् । निः । अरातिम् । सुवामसि ।
अथ । या । भद्रा । तानि । नः । प्रऽजायै । अरातिम् । नयामसि ॥ १ ॥

ललाम्यम् ललामे भवं तिलकस्थानगतम् । 'शरीरावयवाच्च' (पा ४,३,५५) इति भवार्थे यत्प्रत्ययः । 'तित् स्वरितम्' (पा ६,१,१८५) इति स्वरितत्वम् । लक्ष्मम् लक्ष्म असौभाग्यकरं चिह्नम् । लक्ष दर्शनाङ्कनयोः । बाहुलकाद् औणादिको मक्प्रत्ययः । निः सुवामसि निःसुवामः । अस्माच्छरीराद् निरवशेषम् उत्सारयामः । षू प्रेरणे । तुदादित्वात् शप्रत्ययः । 'अचि श्नुधातु' (पा ६,४,७७) इत्यादिना उवङ् । 'इदन्तो मसि' (पा ७,१,४६) इति मस इदन्तत्वम् । 'व्यवहिताश्च' (पा १,४,८२) इति निसो व्यवहितप्रयोगः । 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः । अरातिम् । राति ददाति इष्टं वस्त्विति रातिर्मित्रम्, न रातिः अरातिः शत्रुः । अरातिवद् अनिष्टकरम् अवयवान्तरगतं दुर्लक्षणं निःसुवामः । रा दाने । 'क्तिच्क्तौ च संज्ञायाम्' (पा ३,३,१७४) इति क्तिच् । नञ्समासे 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' (पा ६,२,२) इत्यत्र 'अव्यये नञ्कुनिपातानाम् इति वक्तव्यम्' इति परिगणनाद् अव्ययपूर्वपदप्रकृतिस्वरत्वम् । दुर्लक्षणनिरसनरूपाम् अनिष्टनिवृत्तिम् अभिधाय सुलक्षणस्थापनरूपाम् इष्टप्राप्तिम् आह — अथ येति । अथ दुर्लक्षणनिरसनानन्तरं या यानि सांमुद्रिकशास्त्रप्रसिद्धानि भद्रा भद्राणि कल्याणानि सौभाग्यकराणि चिह्नानि सन्ति । भदि कल्याणे सुखे च । इदित्त्वाद् नुम् । 'ऋज्रेन्द्राग्र०४' (पाउ २,२८) इति रक्प्रत्ययः नलोपश्च । उभयत्रापि 'शेश्छन्दसि बहुलम्' (पा ६,१,७०) इति शेर्लोपः । प्रत्ययलक्षणेन नुमि कृते 'सर्वनामस्थाने चासंबुद्धौ' (पा ६,४,८) इति उपधादीर्घः । 'नलोपः प्रातिपदिकान्तस्य' (पा ८,२,७) इति नलोपः । तानि उदीरितानि चिह्नानि नः अस्माकं प्रजायै पुत्रपौत्रादिरूपायै । भवन्तु इति शेषः । प्रकर्षेण जायत इति प्रजा । जनी प्रादुर्भावे । 'उपसर्गे च संज्ञायाम्' (पा ३,२,९९) इति जनेर्डप्रत्ययः । डित्करणसामर्थ्यात् 'टेः' (पा ६,४,१४३) इति टिलोपः । प्रत्ययस्वरेण अन्तोदात्तत्वम् । ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव स्वरः शिष्यते । ततश्चापि कृते 'एकादेश उदात्तेनोदात्तः' (पा ८,२,५) इति एकादेश उदात्तः । यानि पूर्वं निःसारितानि असौभाग्यकराणि चिह्नानि सन्ति तेषाम् आश्रयम् आह — अरातिम् इति । उक्तानि, दौर्भाग्यकराणि चिह्नानि अरातिम् शत्रुं नयामसि नयामः प्रापयामः । णीञ् प्रापणे । पूर्ववद् मस इदन्तत्वम् ।

---

१. ललाम्यं३ A, R, B, Bh, D.　　२. वैतु. मंपा. यनि. ।　　३. अथ अरातिम् S', Kd.
४. भन्देर्नलोपश्च शंपा. ?

निररणिं सविता साविषक् पदोर्निर्हस्तयोर्वरुणो मित्रो अर्यमा ।
निरस्मभ्यमनुमती रराणा प्रेमां देवा असाविषुः सौभगाय ॥ २ ॥

निः । अरणिम् । सविता । साविषक् । पदोः । निः । हस्तयोः । वरुणः । मित्रः । अर्यमा ।

निः । अस्मभ्यम् । अनुमतिः । रराणा । प्र । इमाम् । देवाः । असाविषुः । सौभगाय ॥ २ ॥

सविता सर्वस्य प्रेरको देवः अरणीम्[1] अरमणीम् अलक्ष्मीम् । दौर्भाग्यकरं चिह्नम् इत्यर्थः । मकारलोपश्छान्दसः । यद्वा अरणीम् सर्वदा पर्यटनकारिणीम् आर्तिकरीं वा अलक्ष्मीम् । अर्तेः औणादिकः अनिप्रत्ययः । 'कृदिकाराद् अक्तिनः' (पावा ४,१,४५) इति ङीष्प्रत्ययः । एवंभूताम् अलक्ष्मीं पदोः पादयोः । वर्तमानाम् इति शेषः । 'पद्दन्नोमास्' ( पा ६,१,६३ ) इत्यादिना पादशब्दस्य पद् आदेशः । 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' ( पा ६,१,१७१ ) इति विभक्तेरुदात्तत्वम् । निः साविषत् निःसुवतु निःसारयतु । षू प्रेरणे । अस्मात् पञ्चमलकारे 'लेटोऽडाटौ' ( पा ३,४,९४ ) इति अडागमः । 'सिब्बहुलम्०' ( पा ३,१,३४ ) इति सिप् । 'स च णिद् वक्तव्यः' ( पावा ३,१,३४ ) इति वचनात् 'अचो ञ्णिति' ( पा ७,२,११५ ) इति वृद्धिः । 'आर्धधातुकस्येड् वलादेः' ( पा ७,२,३५ ) इति सिप इडागमः । तथा वरुणः वारको देवः । मित्रः सर्वेषां मित्रभूतो देवः । अर्यमा अभिमतफलप्रदाता देवः । 'अर्यमेति तम् आहुर्यो ददाति' ( तैब्रा १,१,२,४ ) इति श्रुतेः । एते देवाः प्रत्येकं हस्तयो र्वर्तमानाम् अरणीम् अलक्ष्मीं निःसुवन्तु । हस्तपादयोर्वर्तमानम् असौभाग्यकरं लक्षणम् एते सर्वे देवा निर्गमयन्तु इत्यर्थः । तथा अनुमतिः सर्वेषाम् अनुमन्त्री देवता अस्मभ्यम् अस्मदर्थं रराणा मा भैषीरिति शब्दायमाना अस्माभिः स्तूयमाना वा । रै शब्दे । कर्तरि कर्मणि वा लिट् । 'लिटः कानज्वा' ( पा ३,२,१०६ ) इति कानजादेशः । 'चितः' ( पा ६,१,१६३ ) इति अन्तोदात्तत्वम् । यद्वा रा दाने । राति ददाति अभिमतफलम् इति रराणा । पूर्ववत् कानजादेशः । एवंभूता सती देवी सर्वेषु शरीरावयवेषु वर्तमानं दुर्लक्षणं निःसुवतु । निसः श्रवणात् तत्सहचरितसाविषत् इति क्रियापदस्य अनुषङ्गः । सतीष्वपि अन्यासु देवतासु अस्या एव प्रार्थनायां हेतुम् आह — प्रेमाम् इति । देवाः इन्द्रादयः इमाम् उक्ताम् अनुमतिं सौभगाय सौभाग्याय अस्माकं सौभाग्यं दातुं प्रासाविषुः[2] प्रेरितवन्तः । यत एवम् अत इति पूर्वत्र संबन्धः । षू प्रेरणे । अस्मात् लुङि 'सिचि वृद्धिः परस्मैपदेषु' ( पा ७,२,१ ) इति वृद्धिः ।

१. तु. शंपा., Wh.; वैतु. पै. सा. RW. साविषत् । २. वैतु. मंपा. यनि. ।

'व्यवहिताश्च' ( पा १,४,८२ ) इति प्रोपसर्गस्य व्यवहितप्रयोगः । सौभगायेति । शोभनो भगोऽस्य अस्तीति सुभगः । तस्य भावः सौभगम् । उद्गात्रादिगणे 'सुभग मन्त्रे' इति पाठात् 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' ( पा ५,१,१२९ ) इति अञ् । 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इति आद्युदात्तत्वम् ।

यत् त आत्मनि तन्वां घोरम् अस्ति यद्वा केशेषु प्रतिचक्षणे वा ।
सर्वं तद्वाचाप हन्मो वयं देवस्त्वा सविता सूदयतु ॥ ३ ॥

यत् । ते । आत्मनि । तन्वाम् । घोरम् । अस्ति । यत् । वा । केशेषु । प्रतिऽचक्षणे । वा ।
सर्वम् । तत् । वाचा । अप । हन्मः । वयम् । देवः । त्वा । सविता । सूदयतु ॥ ३ ॥

हे दुर्लक्ष्मोपेत पुरुष ते तव आत्मनि आत्मीयायां तन्वाम् शरीरे घोरम् भयंकरं दुर्लक्षणं यद् अस्ति । यद्वा आत्मनि शरीरोपहिते पुरुषे घोरम् भयंकरं पापं तन्वाम् शरीरे दुर्लक्षणं यद् अस्ति । वा अथवा केशेषु शिरोरुहेषु "[वा] अथवा प्रतिचक्षणे दर्शनसाधने चक्षुषि यद् घोरम् अस्ति । चष्टिः पश्यतिकर्मा । करणे ल्युट् । 'असनयोश्च' ( पावा २,४,५४ ) इति ख्याञादेशप्रतिषेधः । तद् आभ्यन्तरं बाह्यं च सर्वम् घोरजातं वयम् प्रयोगकुशलाः वाचा मन्त्ररूपया अप हन्मः हिंस्मः । हन हिंसागत्योः । अदादित्वात् शपो लुक् । 'सावेकाचस्तृतीयादिर्विभक्तिः' ( पा ६,१,१६८ ) इति वाच उत्तरस्यास्तृतीयाया उदात्तत्वम् । अनिष्टनिवृत्तिं विधाय इष्टप्राप्तिं प्रार्थयते — देवः द्योतनात्मकः सविता प्रेरको देवः त्वा त्वां सूदयतु श्रेयसे प्रेरयतु । दूरगतदुर्लक्षणं त्वां श्रेयसा संबद्धं करोतु इत्यर्थः । षूद क्षरणे ।

रिश्यपदीं वृषदतीं गोषेधां विधमामुत ।
विलीढ्यं ललाम्यं[1] ता अस्मन्नाशयामसि ॥ ४ ॥

रिश्यऽपदीम् । वृषऽदतीम् । गोऽसेधाम् । विऽधमाम् । उत ।
विऽलीढ्यम् । ललाम्यम् । ताः । अस्मत् । नाशयामसि ॥ ४ ॥

ऋश्यपदीम् ऋश्यस्य सारङ्गस्येव पादौ यस्याः सा ऋश्यपदी ईदृशदुर्लक्षणोपेता स्त्री ताम् । 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च' ( पावा २, २, २४ ) इति

१. ऋश्य° S', Kd. २. *शुंपा.; दुर्गत° S', Kd. ३. ऋश्यं° S, V, Bh सा. ४. ललाम्यं ३ B, Bh, D, A, R, Sm. ५. वैदु. मंपा. यनि. (तु. टि. ३) ।

बहुव्रीहिसमासे 'पादस्य लोपोऽहस्त्यादिभ्यः' (पा ५,४,१३८) इति पादशब्दस्य अन्त्यलोपः । 'पादोऽन्यतरस्याम्' (पा ४,१,८) इति ङीप् । भसंज्ञायां 'पादः पत्' (पा ६,४,१३०) इति पद्भावः। तथा वृषदतीम् । वृषस्येव दन्ता यस्याः सा वृषदती स्थूलदन्ता नारी [ताम्] । पूर्ववद् बहुव्रीहौ 'अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च' (पा ५,४,१४५) इति दन्तशब्दस्य दतृ आदेशः 'उगितश्च' (पा ४,१,६) इति ङीप् । तथा गोसेधाम् गौरिव सेधति गच्छतीति गोसेधा स्त्री ताम् । षिधु गत्याम् । पचाद्यच् । तथा विधमाम् विकृतं धमति शब्दायते इति विधमा [ताम्] । ध्मा शब्दाग्निसंयोगयोः । अस्मात् 'पाघ्राध्माधेड्दृशः शः' (पा ३,१,१३७) इति शप्रत्ययः । 'पाघ्राध्मास्थाम्नादाण्दृश्यर्ति' (पा ७,३,७८) इत्यादिना धमादेशः। फूत्कारादिविविधशब्दकारिणीम् इत्यर्थः । यद्वा । 'धमति गतिकर्मा' (या ६,२) इति यास्कः । विकृतगमनाम् । उतशब्दः अप्यर्थे ताः सर्वा ऋश्यपद्याद्याः अस्मत् अस्मत्तः सकाशात् नाशयामसि नाशयामः । अस्मत्संबन्धिनीनां स्त्रीणाम् ऋश्यपदीत्वादिरूपं यद् दुर्लक्ष्म तद् मन्त्रप्रभावात् निवर्तयाम इत्यर्थः । णश अदर्शने । 'इदन्तो मसि' (पा ७,१,४६)। तथा ललाम्यम् ललामस्थाने ललाटप्रान्ते भवम् । 'शरीरावयवाच्च' (पा ४,३,५५) इति यत् । 'तित् स्वरितम्' (पा ६,१,१८५) इति स्वरितत्वम् । तथाविधं विलीढ्यम् । विशेषेण लीढं विलीढम् । लिह आस्वादने । भावे निष्ठा । 'हो ढः' (पा ८,२,३१) इति ढत्वम् । 'झषस्तथोर्धोऽधः' (पा ८,४,४०) इति धत्वम् । ततः ष्टुत्वे कृते 'ढो ढे लोपः' (पा ८,३,१३) इति ढलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (पा ६,३,१११) इति दीर्घः । विलीढे भवं विलीढ्यम् । 'भवे छन्दसि' (पा ४,४,११०) इति यत् । पूर्ववत् स्वरितत्वम् । विलीढमिव स्थितं केशानां प्रातिलोम्यरूपं ललाटप्रान्ते वर्तमानं यद् दुर्लक्ष्म तदपि नाशयाम इत्यर्थः । अत्र ऋश्यपदीत्वादीनि स्त्रीणामेव दुर्लक्षणानि न पुरुषाणाम् इत्यभिप्रायेण तत्र स्त्रीलिङ्गनिर्देशः । यद् विलीढ्यरूपं दुर्लक्षणं तत् स्त्रीपुरुषोभयसाधारणम् इति ततः पार्थक्येन निर्देशः ।

इति चतुर्थेऽनुवाके द्वितीयं सूक्तम् ।

'मा नो विदन्' (अ १,१९) 'अदारसृत्' (अ १,२०) 'स्वस्तिदाः' (अ १,२१) इति सूक्तत्रयस्य अपराजितगणे पाठात् तद्गणसाध्येषु सांग्रामिकादिकर्मसु विद्मा शरस्य (अ १,२) इति प्रथमसूक्तवद् विनियोगोऽनुसंधेयः ।

अत्र 'मा नो विदन्' इति सूक्तस्य ब्राह्मणायुधधारणदेवताप्रतिमानर्तनहसनाद्यद्भुतेषु आज्यहोमे विनियोगः । 'अथ यत्रैतद् ब्राह्मणा आयुधिनो भवन्ति' इति प्रक्रम्य सूत्रितम् । "'मा नो विदन्' (अ १,१९) 'नमो देववधेभ्यः' (अ ६,१३) इत्येता-

१. द्र. पृ. १११ टि. ५. २. तद्गणसाध्येषु S', Kd.

भ्यां सूक्ताभ्यां जुहुयात्। सा तत्र प्रायश्चित्तिः। अथ[1] यत्रैतद् दैवतानि नृत्यन्ति' ' ( कौसू १०४, १-४;१०५,१ ) इत्यादि।

तथा अनड्वान् यदि धेनोः स्तन्यं पिबेत् तदा एतेन आज्यं जुहुयात्। तथा च कौशिकः — 'अथ यत्रैतद् अनड्वान् धेनुं धयति' इति प्रक्रम्य "'मा नो विदन्', 'नमो देववधेभ्यः' इत्येताभ्यां जुहुयात्" ( कौसू ११३,१-३ ) इति।

मा नो॑ विदन्॑ विव्या॒धिनो॒ मो अ॑भिव्या॒धिनो॑ विदन् ।
आ॒रा॒च्छ॑र॒व्या॑ अ॒स्मद्वि॑षू॒चीरि॑न्द्र पातय ॥ १ ॥

मा । न॒ः । वि॒द॒न् । वि॒ऽव्या॒धिनः॑ । मो इति॑ । अ॒भि॒ऽव्या॒धिनः॑ । वि॒द॒न् ।
आ॒रात् । श॒र॒व्याः॑ । अ॒स्मत् । वि॒षू॑चीः । इ॒न्द्र॒ । पा॒त॒य॒ ॥ १ ॥

विव्याधिनः विशेषेण अस्त्रादिभिस्ताडनशीलाः शत्रवः नः अस्मान् युध्यमानान् मा विदन् मा लभन्तां मा प्राप्नुवन्तु। विद्लृ लाभे। अस्मात् माङि लुङि 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' ( पा ३,१,५५ ) इति च्लेः अङादेशः। 'न माङ्योगे' (पा ६,४, ७४ ) इति अडभावः। विव्याधिन इति। व्यध ताडने। अस्माद् विपूर्वात् 'सुप्यजातौ णिनिस्ताच्छील्ये' ( पा ३,२,७८ ) इति णिनिः। तथा अभिव्याधिनः अभिमुखम् आगत्य विध्यन्ति हिंसन्तीत्यभिव्याधिनः प्रत्यर्थिनः संनिहिता भटाः। पूर्ववद् णिनिः। तेऽपि मो विदन् मैव लभन्ताम्। दूरस्थाः संनिहिताश्च भटा अस्मान् न स्पृशन्तु इत्यर्थः। अधुना शत्रुसंबन्धीनि शस्त्राण्यपि अस्मत्समीपदेशं न प्राप्नुवन्तु इति प्रार्थयते। हे इन्द्र परमैश्वर्ययुक्त देव शरव्याः शत्रुभिर्बहुशो विनिर्मुक्ताः शरसंहतीः विषूचीः विष्वक् नानामुखम् अञ्चनशीलाः सतीः अस्मत् आरात् अस्मत्तो दूरदेशे पातय प्रक्षिप। शरव्या इति। 'शॄस्वृस्निहित्रप्यसि' (पाउ० १,१० ) इत्यादिना औणादिक उप्रत्ययः। शरुशब्दात् 'उगवादिभ्यो यत्' (पा ५,१,२) इति यत्। 'ओर्गुणः' (पा ६,४,१४६) इति गुणे 'वान्तो यि प्रत्यये' ( पा ६, १,७९ ) इति अवादेशः। 'तित् स्वरितम्' ( पा ६, १,१८५ ) इति स्वरितत्वम्। 'अन्यारादितरर्ते°' ( पा ,२,३,२९ ) इति अस्मच्छब्दात् पञ्चमी। विषूचीरिति। अञ्चु गतिपूजनयोः। अस्माद् विषुशब्दोपपदात् 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' ( पा ३,२,५९ ) इति क्विन्। 'अनिदिताम्°' ( पा ६,४,२४ ) इति नलोपः। 'अञ्चतेश्चोपसंख्यानम्' ( पावा ४,१,६ ) इति ङीपि भसंज्ञायाम् 'अचः' ( पा ६,४, १३८ ) इत्यकारलोपे 'चौ' (पा ६,३,१३८ ) इति दीर्घत्वम्।

१. अथात्रैतद् देवता विनृत्यति S', Kd.   २. विदं न पै १,२० १ [मूको.]

विष्व॑ञ्चो अ॒स्मच्छर॑वः पतन्तु॒ ये अ॒स्ता ये चा॒स्या॑ः ।
दैवी॑र्मनु॒ष्येषवो॒ मम॒मित्रा॒न् वि वि॑ध्यतु ॥ २ ॥

विष्व॑ञ्चः । अ॒स्मत् । शर॑वः । प॒तन्तु॒ । ये । अ॒स्ताः । ये । च॒ । आ॒स्या॑ः ।
दैवी॑ः । म॒नु॒ष्य॒ऽइ॒षवः॑ । मम॑ । अ॒मित्रा॑न् । वि । वि॒ध्य॒तु॒ ॥ २ ॥

शरवः शराः हिंसकाः । शॄ हिंसायाम् । 'शॄस्वृस्निहि॰' [पाउ १,१०] इत्यौणादिक उप्रत्ययः । तत्र 'धान्ये नित्' (पाउ १,९) इत्यनुवृत्तेः 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इत्याद्युदात्तत्वम् । ते अस्मत् अस्मत्तः सकाशात् विष्वञ्चः विविधगमनाः पतन्तु निपतन्तु । अस्मान् परित्यज्य अन्यत्र गच्छन्तु इत्यर्थः । तान् शरान् विशिनष्टि— ये शरा अस्ताः शत्रुभिर्धनुर्यन्त्रेण विनिर्मुक्ताः । असु क्षेपणे । कर्मणि निष्ठा । 'यस्य विभाषा' ( पा ७,२,१५ ) इति इट्प्रतिषेधः । तथा ये च शराः आस्याः क्षेप्तव्याः तूणीरे संगृहीताः । ते सर्वे निपतन्तु इति योजना । असु क्षेपणे इत्यस्मात् 'ऋहलोर्ण्यत्' ( पा ३,१,१२४ ) इति ण्यत्प्रत्ययः । पूर्वं शत्रुशराणां लक्ष्यावेधलक्षणं वैयर्थ्यं प्रार्थ्य अधुना स्वीयानां शराणां शत्रुरूपस्य [ लक्ष्यस्य ] हिंसकत्वं प्रार्थयते । दैवीः देवसंबन्धिन्यः [इषवः] आग्नेयवारुणादिरूपाणि अस्त्राणि । देवशब्दात् 'तस्येदम्' (पा ४,३,१२०) अर्थे 'देवाद् यञञौ' ( पावा ४,१,८५ ) इति अञ्प्रत्ययः । 'टिड्ढाणञ्' ( पा ४,१,१५ ) इत्यादिना ङीप् । 'वा छन्दसि' ( पा ६,१,१०६ ) इति जसि पूर्वसवर्णदीर्घः । 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इति आद्युदात्तत्वम् । तथा मनुष्येषवः मनुष्याणाम् अस्मदीयानां संबन्धिन्य इषवः शस्त्राणि उभयविधास्ता इषवः अस्मदीयैर्योद्धृभिः मनुष्यैर्विमुच्यमानाः मम मदीयान् अमित्रान् न विद्यते मित्रम् एषाम् इति अमित्राः शत्रवः । बहुव्रीहौ 'नञ्सुभ्याम्' ( पा ६,२,१७२ ) इति उत्तरपदान्तोदात्तत्वे प्राप्ते 'नञो जरमरमित्रमृताः' ( पा ६,२,११६) इति उत्तरपदाद्युदात्तत्वम् । तान् शत्रून् वि विध्यतु विविध्यन्तु मारयन्तु । व्यध ताडने । लोटि दिवादित्वात् श्यन् । तस्य ङित्त्वात् 'ग्रहिज्यावयिव्यधिवष्टि' ( पा ६,१,१६ ) इत्यादिना संप्रसारणम् । 'तिङां तिङो भवन्तीति वक्तव्यम्' ( पावा ७,१,३९ ) इति झेस्तिप् । 'तिङ्ङतिङः' ( पा ८,१,२८ ) इति निघातः ।

यो न॒ः स्वो यो अर॑णः सजा॒त उ॒त निष्ट्यो॒ यो अ॒स्माँ अ॑भि॒दास॑ति ।
रु॒द्रः श॑र॒व्य॑यै॒तान् मम॒मित्रा॒न् वि वि॑ध्यतु ॥ ३ ॥

१. पाठः शोध्यः (तु. वैप. [परि.], [अंशतः] सा. च; वैतु. शंपा. RW. प्रभृ. यनि.); देवा मनुष्या इषवो पै. १,२०,२. २. विध्यन्तु पै.; विद्यतु पै. [मूको.] । ३. लक्ष्यवेध॰ S', Kd. ४. वैतु. संपा यनि. । ५. न A,B.

यः । नः । स्वः । यः । अरणः । सऽजातः । उत । निष्ट्यः । यः । अस्मान् । अभिऽदासति ।
रुद्रः । शरव्यया । एतान् । मम । अमित्रान् । वि । विध्यतु ॥ ३ ॥

नः अस्माकं संबन्धी यः स्वः ज्ञातिः अधिकबलः सन् अस्मान् 'अनपकर्तृन् अभिदासति उपक्षपयति क्षेत्रधनादिकम् अपहृत्य पीडयतीत्यर्थः। दसु उपक्षये। अस्मात् ण्यन्तात् लट्। शपः 'छन्दस्युभयथा' (पा ३,४,११७) इति आर्धधातुकत्वात् 'णेरनिटि' (पा ६,४,५१) इति णिलोपः। शप्तिपोः पित्त्वाद् अनुदात्तत्वे धातुस्वरः शिष्यते। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः। तथा अरणः अरणनीयः संभाष्यो न भवतीत्यरणः शत्रुः। रण शब्दार्थः इत्यस्माद्धातोः 'वाशिरण्योरप्युपसंख्यानम्' (पावा ३.३,५८) इति कर्मणि अप्। ततो नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। एवंभूतो यः शत्रुः अस्मान् अभिदासति उपक्षपयति। तथा अन्योपि सजातः समानजन्मा समबलः ज्ञातिः अरातिर्वा। उत अपिच निष्ट्यः निर्गतवीर्यो निकृष्टबलो यः शत्रुः अस्मान् अभिदासति क्षुद्रोपद्रवैः पीडयति। सजात इति। जनेः कर्तरि निष्ठा। 'श्वीदितो निष्ठायाम्' (पा ७,२,१४) इति इट्प्रतिषेधः। 'जनसनखनां सञ्झलोः' (पा ६,४,४२) इति आत्त्वम्। ततः समानशब्देन समासे 'समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु' (पा ६,३,८४) इति समानशब्दस्य सभावः। निष्ट्य इति। 'अव्ययात् त्यप्' (पा ४,२,१०४) इत्यत्र 'निसो गते' (पा ४,२,१०४) इति वचनात् निस्शब्दात् त्यप्प्रत्ययः। 'ह्रस्वात् तादौ तद्धिते' (पा ८,३,१०१) इति सकारस्य मूर्धन्यादेशः। एतान् ज्ञातिप्रभृतीन् मम मदीयान् अमित्रान् शत्रून् रुद्रः। रोदयति सर्वम् अन्तकाले इति रुद्रः संहर्ता देवः। रुदिर् अश्रुविमोचने। अस्मात् ण्यन्तात् 'रोदेर्णिलुक् च' (पाउ २,२२) इति रक्प्रत्ययः। शरव्यया शरूणां हिंसकानाम् आयुधानां संहतिः शरव्या। 'पाशादिभ्यो यः' (पा ४,२,४९) इति समूहेर्थे यप्रत्ययः। 'ओर्गुणः' (पा ६,४,१४६) इति गुणे 'वान्तो यि प्रत्यये' (पा ६,१,७९) इति अवादेशः। तथा वि विध्यतु विनिहन्तु। व्यध ताडने। श्यनि 'ग्रहिज्या' (पा ६,१,१६) इत्यादिना संप्रसारणम्।

यः सपत्नो योऽसपत्नो यश्च द्विषञ्छपाति नः।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥ ४ ॥

यः । सऽपत्नः । यः । असपत्नः । यः । च । द्विषन् । शपाति । नः ।
देवाः । तम् । सर्वे । धूर्वन्तु । ब्रह्म । वर्म । मम । अन्तरम् ॥ ४ ॥

१. शरव्ययां P, J. २. अनपिकर्तृन् S', Kd. ३. अनीयः S', Kd. ४. उपक्षयति S', Kd. ५. द्विर्ष Bh, R, RW.

यः सपत्नः ज्ञातिरूपः शत्रुः यः असपत्नः ज्ञातिव्यतिरिक्तः शत्रुः अस्मान् बाधते । तथा यश्च शत्रुः द्विषन् द्वेषं कुर्वन् । द्विष अप्रीतौ । 'द्विषोऽमित्रे' (पा ३,२,१३१) इति शतृप्रत्ययः । नः अस्मान् अनागसः शपाति शपेत् । निग्रहरूपया वाचा नाशयेत् । शप आक्रोशे । अस्मात् लेटि आडागमः । 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः । तं सर्वं पूर्वोक्तं शत्रुं सर्वे निखिला देवाः इन्द्रादयो धूर्वन्तु हिंसन्तु । धुर्वी हिंसायाम् । शत्रुकृतशापस्य असंस्पर्शनोपायम् आह — ब्रह्मेति । मम मन्त्रप्रयोक्तुः ब्रह्म प्रयुज्यमानं मन्त्रजालम् अन्तरम् व्यवधायकं वर्म कवचं भवतु । यथा शत्रुकृता वाक्शस्त्रादयः अस्मान् न स्पृशन्ति तथा अयं मन्त्रः अस्मान् छादयतु इत्यर्थः ।

इति तृतीयं सूक्तम् ।

'अदारसृत्' इत्यस्य उक्तः पूर्वसूक्तेन विनियोगः । तस्य आधाया दर्शपूर्णमासयोः गृमहविर्निरीक्षणे विनियोगः । " 'अदारसृद्' इत्येवक्षते" (कौसू २,३९) इति हि सूत्रम् ।

**अदारसृद् भवतु देव सोमास्मिन् यज्ञे मरुतो मृडर्ता नः ।**
**मा नो विददभिभा मो अशस्तिर्मा नो विदद् वृजिना द्वेष्या या ॥ १ ॥**

अदारऽसृत् । भवतु । देव । सोम । अस्मिन् । यज्ञे । मरुतः । मृडत । नः ।
मा । नः । विदत् । अभिऽभाः । मो इति । अशस्तिः । मा । नः । विदत् । वृजिना । द्वेष्या ।
या ॥ १ ॥

हे देव द्योतनात्मक सोम अस्मदीयः शत्रुः अदारसृत् भवतु । दारयन्ति पुरुषहृदयं विदारयन्तीति दाराः स्त्रियः । दृ विदारणे । 'दारजारौ कर्तरि णिलुक् च' (पावा ३,३,२०) इति ण्यन्तात् कर्तरि घञ् । दारान् सरति गच्छतीति दारसृत् । सृ गतौ । 'क्विप् च' (पा ३,२,७६) इति क्विप् । न दारसृत् अदारसृत् इति नञ्समासे 'अव्यये नञ्कुनिपातानाम् इति वक्तव्यम्' (पावा ६,२,२) इति अव्ययपूर्वपदप्रकृतिस्वरत्वम् । मदीयः शत्रुः स्वस्थानात् प्रच्युतः सन् न कदाचिदपि स्वस्त्रीसमीपं प्राप्नोतु इत्यर्थः । हे मरुतः सप्तगणात्मका एकोनपञ्चाशत्संख्याका देवाः । 'आमन्त्रितस्य च' (पा ८,१,१९) इति आष्टमिकं सर्वानुदात्तत्वम् । अस्मिन् मया अनुष्ठीयमाने यज्ञे दर्शपूर्णमासात्मके संग्रामरूपे वा नः अस्मान् मृडत मृडयत । इष्टफलप्रापणेन जयप्रदानेन च सुखयतेत्यर्थः । मृड सुखने । तुदादित्वात् शप्रत्ययः । अस्मिन्निति । इदमः त्यदाद्यत्वे 'हलि

१. जाति° S', Kd. २. हृदय° S', Kd. ३. भवत तैब्रा ३,७,५,१२. ४. मृडत तैब्रा; मृळता पै १९,१६,५. ५. प्रापद् पै. । ६. वृजना तैब्रा; दुच्छुना पै. । ७. मृळयत S', Kd.

लोपः' (पा ७,२,११३)। 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' (पा ६,१,१७१) इति विभक्तेरुदात्तत्वम्। यज्ञ इति। यज देवपूजासंगतिकरणदानेषु। 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (पा ३,३,९०) इति नङ्प्रत्ययः। चुत्वेन ञकारः। प्रत्ययस्वरेण अन्तोदात्तत्वम्। अपिच अभिभाः आभिमुख्येन प्रवर्तमानं शात्रवं तेजः। यद्वा आभिमुख्येन भाति रणरङ्गे दीप्यत इति अभिभाः शत्रुः। भा दीप्तौ। अस्मात् 'क्विप् च' (पा ३,२,७६) इति क्विप्। स च नः अस्मान् मा विदत् मा लब्ध। मा प्राप्नोतु इत्यर्थः। विद्लृ लाभे। अस्मात् माङि लुङि 'पुषादिद्युताद्यॢदितः०' (पा ३,१,५५) इति च्लेः अङादेशः। तथा अशस्तिः अकीर्तिः। मो मैव विदत्। शंसु स्तुतौ। भावे क्तिन्। 'अनिदिताम्०' (पा ६,४,२४) इति नलोपः। 'तितुत्र' (पा ७,२,९) इत्यादिना इट्प्रतिषेधः। नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम्। तथा द्वेष्या द्वेष्याणि द्वेषणीयानि। द्विष अप्रीतौ। 'ऋहलोर्ण्यत्' (पा ३,१,१२४) इति कर्मणि ण्यत्। या यानि वृजिना वृजिनानि पापानि पराजयनिमित्तानि अभिमतफलप्रतिबन्धकानि[1] सन्ति। सर्वत्र 'शेश्छन्दसि बहुलम्' (पा ६,१,७०) इति शेर्लोपः। तानि नः अस्मान् मा विदत्। व्यत्ययेन एकवचनम्। मा विदन् मा प्राप्नुवन्तु। यद्वा वृजिना वृजिनं पापम् अस्याम् अस्तीति वृजिना। अर्शआदित्वाद् अच्। हिंसादिपापोपेता, अत एव द्वेष्या अस्माभिर्द्वेषणीया [या] शात्रवी सेनास्ति सापि नः अस्मान् मा विदत्।

यो अद्य सेन्यो[2] वधो॑ऽघायूना॑मुदीर॑ते।
युवं तं मित्रावरुणावस्मद्या॑वयतं परि॑ ॥२॥

यः। अद्य। सेन्यः। वधः। अघऽयूनाम्[3]। उत्ऽईरते।
युवम्। तम्। मित्रावरुणौ। अस्मत्। यवयतम्। परि॑ ॥ २ ॥

अद्य इदानीं युद्धकाले सेन्यः सेनायां भवः। 'भवे छन्दसि' (पा ४,४,११०) इति सेनाशब्दाद् यत्प्रत्ययः। 'यतोऽनावः' (पा ६,१,२१३) इति आद्युदात्तत्वम्। तथाविधः। अघायूनाम्। अघम् हिंसालक्षणं पापं परेषाम् इच्छन्तीति अघायवः शत्रवः। 'छन्दसि परेच्छायामपि' (पावा ३,१,८) इति अघशब्दात् क्यच्। 'अश्वाघस्यात्' (पा ७,४,३७) इति आत्त्वम्। 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः। प्रत्ययस्वरेण अन्तोदात्तत्वे 'नामन्यतरस्याम्' (पा ६,१,१७७) इति नाम उदात्तत्वम्। तेषां शत्रूणां संबन्धी यो वधः हननम् तेन तत्साधनम् आयुधं लक्ष्यते। हन हिंसागत्योः। 'हनश्च वधः' (पा ३,३,७६) इति भावे अप्प्रत्ययः तत्संनियोगेन हन्तेर्वधादेशश्च।

1. फलप्रबन्ध° S', Kd. 2. सेन्यो A, D, R, S^m; सेन्यो वै १३,१६,६. 3. सा. समये °यूनाम् इति पाठ आसीदिति स्पष्टम्। उभयथाऽपि साधुत्वे तु. पा ६, १,१७७.

स च अन्तोदात्तः। अतो लोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' ( पा ६,१,१६१ ) इति अप उदात्तत्वम्। तथाविधम् आयुधजालम् उदीरते उद्गच्छति अस्मदभिमुखं प्राप्नोति। ईर गतौ। 'बहुलं छन्दसि' ( पा २,४,७३ ) इति शपो लुगभावः। 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति निघातप्रतिषेधः। शपः पित्त्वाद् अनुदात्तत्वम्। '॰अदुपदेशाल्लसार्वधातुक॰' ( पा ६,१,१८६ ) इति अनुदात्तत्वे धातुस्वरः शिष्यते। 'तिङि चोदात्तवति' ( पा ८,१,७१) इति गतेर्निघातः। मित्रावरुणौ मित्रश्च वरुणश्च। 'देवताद्वन्द्वे च' ( पा ६,३,२६ ) इति पूर्वपदस्य आनङादेशः। 'देवताद्वन्द्वे च' ( पा ६,२,१४१ ) इति उभयपदप्रकृतिस्वरत्वे प्राप्ते 'आमन्त्रितस्य च' ( पा ८,१,१९ ) इति आष्टमिकं सर्वानुदात्तत्वम्। हे देवौ युवम् युवाम्। 'प्रथमायाश्च द्विवचने भाषायाम्' ( पा ७,२,८८ ) इति आत्वस्य भाषाविषयत्वाद् अत्र अभावः। तम् शत्रुभिर्विनिर्मुक्तं वधम् अस्मत् अस्मत्तः सकाशात् परि परितः यावयतम् वियोजयतम्। अस्मान् यथा न स्पृशति तथा कुरुतम् इत्यर्थः। यु मिश्रणामिश्रणयोः। अस्मात् ण्यन्तात् लोटि रूपम्। 'छन्दसि परेऽपि' ( पा १,४,८१ ) इति परेः परप्रयोगः। 'तिङ्ङतिङः' ( पा ८,१,२८ ) इति निघातः। 'उपसर्गाश्चाभिवर्जम्' ( फि ४,१३ ) इति परेः आद्युदात्तत्वम्।

इतश्च यदमुतश्च यद् वधं वरुण यावय।
वि महच्छर्म यच्छ वरीयो यावया वधम् ॥ ३ ॥

इतः। च। यत्। अमुतः। च। यत्। वधम्। वरुण। यवय।
वि। महत्। शर्म। यच्छ। वरीयः। यवय। वधम् ॥ ३ ॥

अनया वरुणम् अवयुत्य प्रार्थयते। इतः अस्मात् संनिहितात् शत्रोः सकाशाद् यद् वधम् हननसाधनम् आयुधं माम् उद्दिश्य प्राप्नोति। इदमः 'पञ्चम्यास्तसिल्' ( पा ५,३,७ ) इति तसिल्प्रत्ययः। तसिलः 'प्राग्दिशो विभक्तिः' ( पा ५,३,१ ) इति विभक्तिसंज्ञा। 'इदम इश्' ( पा ५,३,३ ) इति इशादेशः। 'लिति' ( पा ६,१,१९३ ) इति प्रत्ययात् पूर्वस्य उदात्तत्वे प्राप्ते 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' ( पा ६,१,१७१ ) इति विभक्तिसंज्ञकत्वात् तसिल उदात्तत्वम्। तथा अमुतः अमुष्मात् दूरे दृश्यमानात् शत्रोः सकाशाद् यद् आयुधं प्राप्नोति। अदःशब्दात् पूर्ववत् तसिल्। तस्य विभक्तिसंज्ञकत्वात् 'त्यदादीनामः' ( पा ७,२,१०२ ) इति अत्वम्। 'अदसोऽसेर्दादु दो मः' (पा ८,२,८० ) इति उत्वमत्वे। 'लिति' ( पा ६,१,१९३ ) इति प्रत्ययात् पूर्वस्य उदात्तत्वम्। तत् सर्वं वधम् शत्रुभिर्विनिर्मुक्तं हननसाधनम् आयुधम्। हन्तेर्व्यत्ययेन 'हनश्च वधः' ( पा ३,३,७६ ) इति करणे अप्। यस्तु करणाधिकरणयोः स तु त्रिलिङ्गः इति

१. वंध॰ S', Kd. २. अथर्व पै १९,१८,७. ३. यावयः पै. [मूको.].

न्यायात् नपुंसकत्वम् । तद् आयुधम् हे वरुण त्वं यावय अस्मत्तो वियोजय । यु मिश्रणामिश्रणयोः । न केवलम् अनिष्टनिवृत्तिः, इष्टप्राप्तिरपि मे स्याद् इत्याह — हे वरुण महत् अधिकम् अस्मद्द्वेष्यैरलभ्यं शर्म सुखं वि यच्छ विशेषेण प्रयच्छ । दाण् दाने । शपि 'पाघ्रा' ( पा ७,३,७८ ) इत्यादिना यच्छादेशः । 'तिङ्ङतिङः' ( पा ८,१,२८ ) इति निघातः । उपसर्गस्य 'व्यवहिताश्च' ( पा १,४,८२ ) इति व्यवहितप्रयोगः । अपि च वरीयः उरुतरं मन्त्रप्रयोगादिना प्रवृद्धं दुष्परिहरं वधम् हननसाधनं शस्त्रास्त्रजालम् हे वरुण त्वं यवय वियोजय । वरीय इति । उरु-शब्दाद् ईयसुनि 'प्रियस्थिरस्फिरोरुबहुल' ( पा ६,४,१५७ ) इत्यादिना वरादेशः 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम् । यावया वधम् इति । अन्येषामपि दृश्यते' ( पा ६,३,१३७ ) इति सांहितिको दीर्घः ।

शास इत्था महाँ अस्यमित्रसाहो अस्तृतः ।
न यस्य हन्यते सखा न जीयते कदा चन ॥ ४ ॥

शासः । इत्था । महान् । असि । अमित्रऽसहः । अस्तृतः ।
न । यस्य । हन्यते । सखा । न । जीयते । कदा । चन ॥ ४ ॥

हे इन्द्र त्वं शासः शासको नियन्ता । शासु अनुशिष्टौ । पचाद्यच् । इत्था इत्थम् अनेन प्रकारेण महान् महत्त्वगुणोपेतः सर्वोत्कृष्टः असि भवसि । इदम्शब्दात् 'था हेतौ च च्छन्दसि'(पा ५,३,२६) इति प्रकारेर्थे थाप्रत्ययः । 'एतेतौ रथोः' (पा ५,३,४) इति इदम इदादेशः । प्रत्ययस्वरेण अन्तोदात्तता । महाँ असीत्यत्र संहितायां तस्य 'दीर्घादटि समानपादे' (पा ८,३,९ ) इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' ( पा ८,३,३ ) इति आकारस्य अनुनासिकादेशः । भोभगोअघोअपूर्वस्य योऽशि' (पा ८,३,१७) इति रोर्यत्वम् । 'लोपः शाकल्यस्य'( पा ८,३ १९ ) इति लोपः । 'पूर्वत्रासिद्धम्' (पा ८,२,१) इति असिद्धवद्भावात् सवर्णदीर्घाभावः । तमेव इन्द्रं विशिनष्टि — अमित्रसाहः अमित्राणां शत्रूणां सोढा अभिभविता । षह अभिभवे । पचाद्यच् । 'चितः' ( पा ६,१,१६३ ) इति अन्तोदात्तत्वम् । समासेपि कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । तथा अस्तृतः शत्रुभिरहिंसितः । स्तृञ् हिंसायाम् । कर्मणि निष्ठा । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अहिंसितत्वं कैमुतिकन्यायेनापि आह — न यस्येति । यस्य उक्तमहिमोपेतस्य इन्द्रस्य सखा शरणागतो मित्रत्वं प्राप्तः पुरुषो न हन्यते शत्रुभिर्न हिंस्यते । हिंस्यत्वं तस्य दूरापास्तं पराजयोपि नास्तीत्याह — कदा चन । चनशब्दः अप्यर्थे । कदाचिदपि न जीयते शत्रु-

१. अस्यमित्रखादो अद्भुतः ऋ १०,१५२,१ पै २.८८,१.	२. वैतु. मंपा. यनि. ।

भिर्नाभिभूयते। इन्द्रस्य सख्युरपि एवं किल, किमु वक्तव्यम् इन्द्रस्य अस्तृतत्वम् इति पूर्वेण संबन्धः। एवम् अतिशयितमहिमोपेतस्य इन्द्रस्य प्रसादाद् वयमपि शत्रून् जयेम इति वाक्यशेषः। हन्यत इति। हन हिंसागत्योः। 'सार्वधातुके यक्'(पा ३,१,६७)। '॰अदुपदेशाल्लसार्वधातुक॰' ( पा ६,१,१८६ ) [इति] अनुदात्तत्वे यक्स्वरः शिष्यते। 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति निघातप्रतिषेधः। जीयत इति। जि जये। पूर्ववद् यक्। 'अकृत्सार्वधातुकयोः॰' ( पा ७,४,२५ ) इति दीर्घः। यच्छब्दस्य अत्रापि संबन्धात् पूर्ववद् निघाताभावः। कदेति। किंशब्दात् 'सर्वैकान्यकिंयत्तदः काले दा' ( पा ५,३,१५ ) इति दाप्रत्ययः। 'प्राग्दिशो विभक्तिः' ( पा ५,३,१ ) इति विभक्तिसंज्ञायां 'किमः कः' ( पा ७,२,१०३ ) इति कादेशः।

इति चतुर्थेनुवाके चतुर्थं सूक्तम्॥

'स्वस्तिदाः' इत्यस्य अपराजितगणे पाठात् सांग्रामिकादिकर्मसु गणप्रयुक्तो विनियोग उक्तः।

तथा ग्रामगमनादिषु स्वस्त्ययनकामः एतेन सूक्तेन प्रथमं दक्षिणपादप्रक्रमणम्, शर्करातृणप्रक्षेपणम्, इन्द्रोपस्थानं च कुर्यात्। सूत्रितं हि — "'स्वस्तिदाः' ( अ १,२१ ) 'ये ते पन्थानः' (अ ७,५७,२) इत्यध्वानं दक्षिणेन प्रक्रामति। व्युदस्यत्यसंख्याताः शर्कराः। तृणानि क्षिप्त्वोपतिष्ठते" (कौसू ५०,१-३ ) इति।

एवं पिशाचादिनिवारणकर्मणि, उद्वेगविनाशने च एतत् सूक्तम् 'स्वस्त्यायं कुरुते' ( कौसू २५, ३६ ) इति सूत्रकृता अतिदिष्टत्वात्।

तथा वेदिकरणस्यादावपि एतत् सूक्तं जपेत्।

'वि न इन्द्र' ( अ १, २१, २ ) इत्यनया पुरीषच्छन्नां चितिं ब्रह्मा अनुमन्त्रयते। तद् उक्तं वैताने—" 'वि न इन्द्र' ( अ १, २१, २ ) 'मृगो न भीमः' ( अ ७, ८९. ३) 'वैश्वानरो न ऊतये' ( अ ६, ३५ ) इति चिति पुरीषच्छन्नाम्" ( वैताश्रौ २९,५) इति।

स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी।
वृषेन्द्रः पुर एतु नः सोमपा अभयंकरः॥ १॥

स्वस्तिऽदाः। विशाम्। पतिः। वृत्रऽहा। विऽमृधः। वशी।
वृषा। इन्द्रः। पुरः। एतु। नः। सोमऽपाः। अभयम्ऽकरः॥ १॥

१. तु. Bl.; नास्ति ग्रंपा. २. क्षिप्त्वो॰ Bl. ? ३. इति चितिंचितिं पुरीषाच्छन्नाम् RG.
४. विशः ऋ १०,१५२,२ तैमा ३,७,११,४; तैम्रा १०,१,१६. ५. स्वस्तिदाः तैमा. तैम्रा.

**स्वस्ति इति अविनाशिनाम। विनाशरहितं शोभनं फलं ददाति प्रयच्छतीति** स्वस्तिदाः। 'स्वस्तीत्यविनाशिनाम। ××सु अस्ति' ( या ३, २१ ) **इति यास्कः। डुदाञ् दाने।** 'क्विप् च' ( पा, ३, २, ७६ ) **इति क्विप्।** 'समासस्य' ( पा ६, १, २२३ ) **इति अन्तोदात्तत्वम्।** विशाम् **सर्वासां प्रजानां** पतिः **पालयिता।** 'सावेकाचः' ( पा ६, १, १६८ ) **इति विश्शब्दाद् उत्तरस्य आम उदात्तत्वम्।** वृत्रहा। **वृत्रो नाम जलाधारभूतो मेघः। तं मेघं वृष्ट्यर्थं हतवान् वृत्रहा। यद्वा वृत्रो नाम त्वष्ट्रा उत्पादितः असुरः, तं हतवान्। आह च यास्कः** – तत् को वृत्रः। मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर इत्यैतिहासिकाः ( या २, १६ ) **इति। तन्नामनिर्वचनं श्रुत्यैव द्वेधा दर्शितम्** 'यद् अवर्तयत् तद् वृत्रस्य वृत्रत्वम्' ( तै २, ५, २, १) **इति।** 'यद् इमाँल्लोकान् अवृणोत् तद् वृत्रस्य वृत्रत्वम्' ( तै २, ५, २, २ ) **इति च। हन हिंसागत्योः। वृत्रशब्दोपपदाद् अस्माद् भूते काले** 'ब्रह्मभ्रूणवृत्रेषु क्विप्' ( पा ३, २, ८७ ) **इति क्विप्। उपपदसमासे** 'गतिकारकोपपदात् कृत्'' ( पा ६, २, १३९ ) **इति उत्तरपदप्रकृतिस्वरत्वम्।** विमृधः **विशेषेण मर्धयिता शत्रूणाम्। मृध हिंसायाम्।** 'इगुपधज्ञाप्रीकिरः कः' ( पा ३, १, १३५ ) **इति कप्रत्ययः।** वशी **सर्वस्य प्राणिजातस्य वशयिता। वश कान्तौ।** 'वशिरण्योरप्युपसंख्यानम्' ( पा ३, ३, ५८ ) **इति भावे अप्। वशोऽस्यास्तीति वशी।** 'अत इनिठनौ' (पा ५,२,११५ ) **इति मत्वर्थीय इनिः।** वृषा **कामानां वर्षिता। वृषु सेचने इत्यस्मात्** 'युवृषितक्षि' (पाउ १,१५४) **इत्यादिना औणादिकः कनिन्प्रत्ययः।** 'ञ्नित्यादिर्नित्यम्' ( पा ६, १, १९७ ) **इति आद्युदात्तत्वम्।** सोमपाः **सोमस्य पाता। पा पाने। अस्मात् सोमशब्दोपपदात्** 'आतो मनिन्क्वनिब्वनिपश्च' ( पा ३, २, ७४ ) **इति विच्। एवम् उक्तमहिमोपेत** इन्द्रः अभयंकरः **भयराहित्यस्य कर्ता सन्** नः **अस्माकं संग्रामादौ** पुरः **पुरस्तात् पूर्वभागे** एतु **गच्छतु। अभयंकर इति।** 'उपपदविधौ भयाढ्यादिग्रहणं तदन्तविधिं प्रयोजयति' ( पावा ३, २, ४३ ) **इति वचनात्** 'मेघर्तिभयेषु कृञः' ( पा ३, २, ४३ ) **इति अभयशब्दोपपदादपि करोतेः खच्प्रत्ययः।** 'अरुर्द्विषदजन्तस्य मुम्' ( पा ६, ३, ६७ ) **इति पूर्वपदस्य मुमागमः।** 'चितः' ( पा ६, १, १६३ ) **इति अन्तोदात्तत्वम्। उपपदसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते। पुर इति।** 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' ( पा ५, ३,३९ ) **इति पूर्वशब्दात् असिप्रत्ययः प्रकृतेः पुरादेशश्च।**

वि न॑ इन्द्र॒ मृधो॑ जहि नी॒चा य॑च्छ पृतन्य॒तः।
अ॒ध॒मं[1] ग॑मया॒ तमो॒ यो अ॒स्माँ अ॑भि॒दास॑ति ॥ २ ॥

वि। नः॒। इन्द्र॒। मृधः॑। ज॒हि॒। नी॒चा। य॒च्छ॒। पृ॒त॒न्य॒तः।
अ॒ध॒मम्। ग॒म॒य॒। तमः॑। यः। अ॒स्मान्। अ॒भि॒ऽदास॑ति ॥ २ ॥

१. अधरं ऋ १०,१५२,४.

हे इन्द्र परमैश्वर्ययुक्त देव नः अस्मभ्यम्। 'बहुवचनस्य वस्नसौ' (पा ८, १, २१) इति अस्मदश्चतुर्थ्यन्तस्य नस् आदेशः। तादर्थ्ये चतुर्थी। अस्मदर्थं मृधः। संग्रामनामैतत्। संग्रामान्। मृधेः संपदादिलक्षणः क्विप्। वि जहि विनाशय। अस्मद्विजयार्थं संग्रामकारिणः शत्रून् मारयेत्यर्थः। हन हिंसागत्योः। लोटि 'सेर्ह्यपिच्च' (पा ३, ४, ८७) इति हिः आदेशः। 'हन्तेर्जः' (पा ६, ४, ३६) इति जादेशः। तस्य 'असिद्धवदत्राभात्' (पा ६, ४, २२) इति असिद्धत्वात् 'अतो हेः' (पा ६, ४, १०५) इति लुगभावः। तथा पृतन्यतः पृतनां सेनाम् आत्मन इच्छतः युद्धोद्योगकारिणः शत्रून् नीचा नीचैः यच्छ नियमय। युद्धार्थं संघीभावत्यागेन न्यग्भूतान् कुर्वित्यर्थः। पृतन्यतः। पृतनाशब्दात् 'सुप आत्मनः क्यच्' (पा ३,१,८) इति क्यच्। 'कव्यध्वरपृतनस्यर्चि लोपः' (पा ७,४,३९) इति आकारलोपः। तदन्तस्य धातुसंज्ञायां लटः शत्रादेशः। क्यजकारेण उदात्तेन सह शपः शतुश्चैकादेशो 'एकादेश उदात्तेनोदात्तः' (पा ८,२,५) इति शतुरुदात्तत्वात् 'शतुरनुमो नद्यजादी' (पा ६,१,१७३) इति अजादिविभक्तेः उदात्तत्वम्। नीचैःशब्दात् उत्तरस्य सुपः 'सुपां सुलुक्' (पा ७,१,३९) इत्यादिना डादेशः। डित्करणसामर्थ्यात् टिलोपः। अपि च यः शत्रुः अस्मान् अभिदासति क्षेत्रधनाद्यपहारेण उपक्षपयति। दसु उपक्षये। तं शत्रुम् अधमम् पुनरुत्थानशून्यं निकृष्टं तमः मरणात्मकं गमय प्रापय। गमॢ सृपॢ गतौ। अस्मात् णिजन्तात् 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञायां 'मितां ह्रस्वः' (पा ६,४,९२) इति उपधाह्रस्वत्वम्। 'अन्येषामपि दृश्यते' (पा ६,३,१३७) इति सांहितिको दीर्घः।

वि रक्षो॒ वि मृधो॑ जहि॒ वि वृ॒त्रस्य॒ हनू॑ रुज।
वि म॒न्युमि॑न्द्र [३]वृत्रहन्न॒मित्र॑स्याभि॒दास॑तः ॥ ३ ॥

वि। रक्षः॑। वि। मृधः॑। ज॒हि॒। वि। वृ॒त्रस्य॑। हनू॒ इति॑। रु॒ज।
वि। म॒न्युम्। इ॒न्द्र॒। वृ॒त्र॒ऽह॒न्। अ॒मित्र॑स्य। अ॒भि॒ऽदास॑तः ॥ ३ ॥

हे वृत्रहन् वृत्रस्य हन्तरिन्द्र त्वं रक्षः। जातावेकवचनम्। बाधकानि रक्षांसि। वीत्युपसर्गश्रवणात् जहीति क्रिया अत्रापि संबध्यते। वि जहि विनाशय। रक्षणीयः अस्मात् सर्वो जन इत्यपादानेर्थे औणादिकः असुन्प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम्। 'रक्षो रक्षितव्यम् अस्मात्, (या ४,१८) इति

१. शत्रून् तै १,६,१२,५. २. तुद तै. ३. भामितोऽमि° तै.

यास्कोपि । तथा मृधः संग्रामान् वि जहि । तथा वृत्रस्य वृत्रवत् प्रबलस्य शत्रोः हनू कपोलौ वि रुज विभङ्ग्धि । विदारयेत्यर्थः । रुजो भङ्गे । तुदादित्वात् शप्रत्ययः । 'अतो हेः' (पा ६,४,१०५) इति हेर्लुक् । अभिदासतः अभितः अस्मान् उपक्षपयतः अमित्रस्य शत्रोर्मन्युम् क्रोधमपि । अत्रापि उपसर्गश्रवणात् जहीति संबध्यते । वि जहि । स्वस्थानस्थितोपि यथा मद्विषये मन्युं न करोति तथा कुर्वित्यर्थः । मन ज्ञाने । 'यजिमनिशुन्धिदसिजनिभ्यो युच्' (पाउ ३,२०) इति औणादिको युच्प्रत्ययः । यास्कोप्याह — 'मन्युर्मन्यतेः दीप्तिकर्मणः' (या १०,२९) इति ।

अपेन्द्र द्विषतो मनोऽप जिज्यासतो वधम् ।
वि महच्छर्म यच्छ वरीयो यावया वधम् ॥ ४ ॥

अप । इन्द्र । द्विषतः । मनः । अप । जिज्यासतः । वधम् ।
वि । महत् । शर्म । यच्छ । वरीयः । यवय । वधम् ॥ ४ ॥

हे इन्द्र परमैश्वर्ययुक्त देव द्विषतः शत्रोर्मनः हिंसकं क्रूरं मानसम् । अपेत्युपसर्गश्रवणात् योग्या प्रकृता जहीति क्रिया संबध्यते । अप जहि अपहतं कुरु । द्विष अप्रीतौ । अस्मात् लटः शत्रादेशः । 'अदिप्रभृतिभ्यः शपः' (पा २,४,७२) इति शपो लुक् । 'शतुरनुमो नद्यजादी' (पा ६,१,१७३) इति ङस उदात्तत्वम् । तथा जिज्यासतः वयोहानिं तदुपलक्षितं मरणं कर्तुम् इच्छतः शत्रोः संबन्धिनं वधम् हननसाधनम् आयुधम् । पूर्ववत् क्रियाध्याहारः । अप जहि । ज्या वयोहानौ । 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (पा ३,१,७) इति सन्प्रत्ययः 'सन्यङोः' (पा ६,१,९) इति द्विर्वचने हलादिशेषे ह्रस्वे च कृते 'सन्यतः' (पा ७,४,७९) इति अभ्यासाकारस्य इत्वम् । सन्नन्तस्य धातुसंज्ञायां लटः शत्रादेशः । शपः पित्त्वाद् अनुदात्तत्वे, शतुर्लसार्वधातुकस्वरेण, ङसश्च सुप्त्वाद् अनुदात्तत्वे 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति सन्नन्तस्य यद् आद्युदात्तत्वं तदेव शिष्यते । उत्तरोऽर्धर्चो व्याख्यातः ।

इति पञ्चमं सूक्तम् ।
इति प्रथमकाण्डे चतुर्थोनुवाकः ।

पञ्चमेनुवाके सप्त सूक्तानि । तत्र 'अनु सूर्यम्' इत्येतत् प्रथमं सूक्तम् । तेन हृद्रोगकामैलादिरोगोपशान्तये रक्तवृषभरोममिश्रोदकं पाययेत् । तथा तेनैव रक्तगोचर्मच्छिद्रमणिं गोक्षीरे प्रक्षिप्य, संपात्य, अभिमन्त्र्य तन्मणिबन्धनम्, तत्क्षीरपानं च

१. कान्ति° शंपा. २. जहि ते ३,५,८,१. ३. मन्यो: ऋ १०,१५२,५. ४. यवया ऋ. प. ५. °कामिला° शंपा. सर्वत्र ।

कारयेत्। तथा रोगिणं हरिद्रौदनं भोजयित्वा, तदुच्छिष्टानुच्छिष्टेन आप्रपदं प्रलिप्य, खट्वायाम् उपवेश्य तदधः शुककाष्ठशुकगोपीतनकाख्यानां त्रयाणां पक्षिणां सव्यजङ्घायां हरितसूत्रेण आबन्धनम् इत्येवमादिकं सूत्रोक्तं कुर्यात्। सूत्रं च— "'अनु सूर्यम्' इति मन्त्रोक्तस्य लोममिश्रम् आचामयति' इत्यादि 'जातरूपेणापिधाप्य×××बध्नाति" (कौसू २६,१४-२६) इत्यन्तम्।

अनु सूर्यमुदयतां हृद्द्योतो हरिमा च ते।
गो रोहितस्य वर्णेन तेन त्वा परि दध्मसि॥ १॥

अनु। सूर्यम्। उत्। अयताम्। हृत्ऽद्योतः। हरिमा। च। ते।
गोः। रोहितस्य। वर्णेन। तेन। त्वा। परि। दध्मसि॥ १॥

हे व्याधित पुरुष ते तव हृद्द्योतः हृदयं द्योतयति दीपयति संतापयतीति हृद्द्योतः हृद्रोगः। द्युत दीप्तौ। अस्मात् हृच्छब्दोपपदात् 'कर्मण्यण्' (पा ३,२,१) इति अण्प्रत्ययः। उपपदसमासे कृदुत्तरपदप्रकृतिस्वरत्वम्। यद्वा हृद्रोगजनितः संतापो हृद्द्योतः। द्युतेर्भावे घञ्। तथा हरिमा कामलादिरोगजनितः शारीरो हरिद्वर्णः। हरिच्छब्दात् 'वर्णदृढादिभ्यः ष्यञ् च' (पा ५,१,१२३) इति चकाराद् भावे इमनिच्प्रत्ययः। 'यचि भम्' (पा १,४,१८) इति भसंज्ञायाम् 'टेः' (पा ६,४,१५५) इति टिलोपः। 'ञ्नित:' (पा ६,१,१९७) इति अन्तोदात्तत्वम्। व्याधिद्वयमपि सूर्यम् गच्छन्तं भानुम् अनु लक्षीकृत्य उदयताम् उद्गच्छतु। उक्तः संतापो हरिद्वर्णश्च अस्माच्छरीराद् उत्क्रम्य संतापकं हरिद्वर्णं सूर्यमेव प्राप्नोतु इत्यर्थः। सरतेः सुवतेर्वा क्यपि 'राजसूयसूर्य' (पा ३,१,११४) इत्यादिना निपात्यते। क्यपः पित्त्वाद् अनुदात्तत्वे धातुस्वरेण आद्युदात्तत्वम्। 'अनुर्लक्षणे' (पा १,४,८४) इति लक्षणेऽर्थे अनोः कर्मप्रवचनीयत्वम्। 'कर्मप्रवचनीययुक्ते द्वितीया' (पा २,३,८) इति सूर्यशब्दाद् द्वितीया। अयताम् इति। अय पय गतौ। अनुदात्तेत्त्वाद् आत्मनेपदम्। अनभिमतरोगजनितवर्णापगमानन्तरम् इष्टवर्णसंयोजनम् आह — गोरिति। रोहितस्य लोहितवर्णस्य गोः गोजातीयस्य वर्णेन लौहित्येन तेन प्रसिद्धेन तस्मात् पृथक्कृतेन हे रुग्ण त्वा त्वां परि दध्मसि परिदध्मः आच्छादयामः। तव शरीरं प्रकृष्टवर्णोपेतं कुर्म इत्यर्थः। परिपूर्वो दधातिः आच्छादने वर्तते। तथा च निगमः — 'परिधत्त धत्त वाससैनम्' (आपमं २,२,६) इति। 'जरां गच्छासि परिधत्स्व वासः' (हिगृ १९,१,४) इति च। 'इदन्तो मसि' (पा ७,१,४६) इति मस इदन्तत्वम्। 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः।

---

१. रोहियं शंपा. २. आचम° Bl. ३. उदेतां पै १.२८,१ [मूको.] ४. हरिमा पै. [मूको.] ५. यो पै. ६. गोर्वर्णः पै. ७. हृऽद्योतः P, P², J. ८. तु. पृ १२३, टि ५. ९. अनभिमतेरोगजनिते वर्णा° S', Kd.

परि॑ त्वा रोहि॑तै॒र्वर्णै॑र्दीर्घायु॒त्वाय॑ दध्मसि ।
यथा॒यम॑र॒पा अस॒दथो॒ अह॑रितो॒ भुव॑त् ॥ २ ॥

परि॑ । त्वा॒ । रोहि॑तैः । वर्णैः॑ । दी॒र्घा॒यु॒ऽत्वाय॑ । द॒ध्म॒सि॒ ।
यथा॑ । अ॒यम् । अ॒र॒पाः । अस॑त् । अथो॒ इति॑ । अह॑रितः । भुव॑त् ॥ २ ॥

उक्तमेव लोहितवर्णपरिधानफलप्रकटनार्थं पुनराह — हे व्याधित त्वा त्वां रोहितैः लोहितैः वर्णैः प्रागुक्तैर्गोसंबन्धिभिः परि दध्मसि परिदध्मः । 'व्यवहिताश्च' ( पा १,४,८२ ) इति परेरुपसर्गस्य व्यवहितः प्रयोगः । किमर्थम् इति तदाह — दीर्घायुत्वाय । दीर्घं शतसंवत्सरपरिमितम् आयुर्जीवनकालो यस्यासौ दीर्घायुः, तस्य भावस्तत्त्वम् । सकारलोपश्छान्दसः । तादर्थ्ये चतुर्थी । सतिशिष्टत्वात् समासस्वरत्वं बाधित्वा त्वप्रत्ययस्वरेण अन्तोदात्तत्वम् । तदेव कथम् इत्यत आह — यथा येन प्रकारेण अयम् चिकित्सितः पुरुषः अरपाः । रप इति पापनाम । 'रपो रिप्रम् इति पापनामनी भवतः' इति हि यास्कः ( ४,२१ ) । न विद्यते रपः पापं यस्यासौ अरपाः । बहुव्रीहौ 'नञ्सुभ्याम्' ( पा ६,२,१७२ ) इति उत्तरपदान्तोदात्तत्वम् । अपगतपापः असत् भवेत् । अस्तेर्लेटि अडागमः । अथो पापक्षयानन्तरमेव अहरितः कामलादिरोगजनितहरिद्वर्णरहितः भुवत् भवेत् । रोगनिदानभूतपापक्षये सति तच्छान्तौ सत्याम् यथा दीर्घायुर्भवति तथा परिदध्म इति वाक्यार्थः । भू सत्तायाम् । अस्मात् लेटि अडागमः । 'इतश्च लोपः परस्मैपदेषु' ( पा ३,४,९७ ) इति इकारलोपः । 'बहुलं छन्दसि' ( पा २,४,७३ ) इति शपो लुक् । 'भूसुवोस्तिङि' ( पा ७,३,८८ ) इति गुणप्रतिषेधे उवङ् ।

या रोहि॑णीर्दे॒व॒त्या॒३॒॑ गावो॒ या उ॒त रोहि॑णीः ।
रू॒पंरू॑पं[1] वयो॑वय॒स्ताभि॑ष्ट्वा॒ परि॑ दध्मसि ॥ ३ ॥

याः । रोहि॑णीः । दे॒व॒त्याः॑ । गावः॑ । याः । उ॒त । रोहि॑णीः ।
रू॒पम्ऽरू॑पम् । वयः॑ऽवयः । ताभिः॑ । त्वा॒ । परि॑ । द॒ध्म॒सि॒ ॥ ३ ॥

देवत्याः देवतासु भवाः । 'भवे छन्दसि' ( पा ४,४,११० ) इति यत्प्रत्ययः । देवसंबन्धिन्यो रोहिणीः रोहिण्यः लोहितवर्णाः । रुह बीजजन्मनि प्रादुर्भावे [ च ]

१. द्र. पृ १२३ टि. ५. २. वैतु. W. B. BVC 'चौदे' ३. रूपं रूपेण यो वयस्तेन त्वा पैं १,२८,३.

इत्यस्मात् 'रुहेरश्च लो वा ( पाउ ३,९४ ) इति औणादिक इतन्प्रत्ययः। नित्त्वाद् आद्युदात्तत्वम्। ततो 'वर्णादनुदात्तात्तोपधात्तो नः' ( पा ४,१,३९ ) इति ङीप्। तत्संनियोगेन तकारस्य नकारः। ङीपः पित्त्वाद् अनुदात्तत्वे नित्स्वर एव शिष्यते। जसि 'वा छन्दसि' ( पा ६,१,१०६ ) इति पूर्वसवर्णदीर्घः। उक्तवर्णा याः कामधेन्वादयो गावः सन्ति। उत अपिच याः मनुष्यसंबन्धिन्यो रोहिणीः रोहिण्यः लोहितवर्णा गावः सन्ति। ताभिः उभयविधाभिर्गोभिः रूपंरूपम्' सर्वगोव्यक्तिगतं कृत्स्नम् अरुणरूपं तथा वयोवयः सर्वव्यक्तिगतं कृत्स्नं यौवनम्। उभयत्र 'नित्यवीप्सयोः' ( पा ८,१,४ ) इति द्विर्वचनम्। 'तस्य परमाम्रेडितम्' ( पा ८,१,२ ) इति परस्य आम्रेडितसंज्ञायाम् 'अनुदात्तं च' ( पा ८,१,३ ) इति अनुदात्तत्वम्। तत् सर्वम् आहृत्य हे रुग्ण त्वा त्वां परि दध्मसि परिदध्मः। गोगतवर्णवद् उज्ज्वलैर्वर्णवयोविशेषैस्त्वदीयं शरीरं संयोजयाम इत्यर्थः। यद्वा ताभिः उक्तवर्णोपेताभिर्गोभिः हे रुग्ण त्वां परि दध्मसि। परिधानप्रकारमेव आह — रूपंरूपम् रोगविशेषेण दूषितं सर्वशरीरगतं रूपं वयोवयः उक्तप्रकारं वयश्च परि दध्मसि। ताभिष्ट्वेति। 'त्वामौ द्वितीयायाः' ( पा ८,१,२३ ) इति युष्मदस्त्वादेशः। 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' ( पा ८,३,१०३ ) इति सकारस्य षत्वम्।

शुकेषु ते हरिमाणं रोपणाकासु दध्मसि।
अथो हारिद्रवेषु ते हरिमाणं नि दध्मसि ॥ ४ ॥

शुकेषु। ते। हरिमाणम्। रोपणाकासु। दध्मसि।
अथो इति। हारिद्रवेषु। ते। हरिमाणम्। नि। दध्मसि ॥ ४ ॥

पूर्वं गवादिगतस्य उज्ज्वलस्य रक्तवर्णस्य रुग्णशरीरे प्रवेशोभिहितः। तच्छरीरे पूर्वम् अवस्थितस्य रोगजनितस्य हरिद्वर्णस्य का तर्हि गतिरिति. तद् उच्यते — हे रोगार्त ते तव शरीरगतं हरिमाणम् रोगजनितं हरिद्वर्णम्। 'वर्णदृढादिभ्यः ष्यञ् च' ( पा ५,१,१२३ ) इति हरिच्छब्दाद् भावेऽर्थे इमनिच्। 'यचि भम्' ( पा १,४,१८ ) इति भसंज्ञायाम् 'टेः' ( पा ६,४,१५५ ) इति टिलोपः। 'चितः' ( पा ६,१,१६३ ) इत्यन्तोदात्तत्वम्। तद्वर्णं शुकेषु कीरेषु तथा रोपणाकासु काष्ठशुकाख्येषु हरिद्वर्णेषु पक्षिषु नि दध्मसि निदध्मः। वर्णतः समानाकृतिषु पक्षिविशेषेषु स्थापयाम इत्यर्थः 'इदन्तो मसि' ( पा ७,१,४६ ) इति मस इदन्तत्वम्। अथो अपिच हारिद्रवेषु गोपीतनकाख्येषु हरिद्वर्णेषु पक्षिविशेषेषु ते त्वदीयं हरिमाणम् हरिद्वर्णं नि दध्मसि निदध्मः स्थापयामः।

इति पञ्चमेनुवाके प्रथमं सूक्तम्।

---

१. शु, K, V, S, W[h], सा., सात., ऋ १,५०,१२: तैब्रा ३,७,६,१२, पै १,२८,४; वैतु. A, B, B[p], B[h], D, R, S[m], शंपा. RW. शुकेषु २. प्रपथाकाश पै. [मूको.] ३. अथो हारिद्रवेषु ऋ., तैब्रा.

'नक्तंजाता' 'सुपर्णो जातः' इति सूक्तद्वयेन श्वेतकुष्ठापनोदनाय भृङ्गराजहरिद्रेन्द्रवारुणीनीलिकाः पिष्ट्वा शुष्कगोमयेन श्वित्रप्रदेशम् आलोहितदर्शनं प्रघृष्य लेपयेत्। पलितनाशनेपि पलितानि आच्छिद्य सूक्तद्वयेन पूर्ववद् विलिम्पेत्। उक्तरोगद्वयशान्तये अनेनैव सूक्तद्वयेन आज्यहोमादीनि मारुतकर्माणि च वृष्टिकर्मोक्तवत् कुर्यात् सूत्रितं च — " 'नक्तंजाता' ( अ १,२३ ) 'सुपर्णो जातः' ( अ १,२४ ) इति मन्त्रोक्तं शकृतौ आलोहितं प्रघृष्य आलिम्पति । 'पलितान्याच्छिद्य। मारुतान्यपिहितः" ( कौसू २६,२२-२४ ) इति।

नक्तंजातास्योषधे रामे कृष्णे असिक्नि च ।
इदं रजनि रजय किलासं पलितं च यत् ॥१॥

नक्तम्ऽजाता । असि । ओषधे । रामे । कृष्णे । असिक्नि । च ।
इदम् । रजनि । रजय । किलासम् । पलितम् । च । यत् ॥१॥

हे ओषधे । ओषः फलपाकः अस्यां धीयत इति ओषधिः । डुधाञ् धारणपोषणयोः । तस्मात् 'कर्मण्यधिकरणे च' (पा ३, ३, ९३) इति अधिकरणे किप्रत्ययः । ततस्तत्पुरुषसमासे कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तत्वे प्राप्ते दासीभारादिषु पाठात् पूर्वपदप्रकृतिस्वरत्वम् । पूर्वपदं च घञन्तत्वाद् आद्युदात्तम् । अत्र तु संबुद्ध्यन्तत्वाद् 'आमन्त्रितस्य च' (पा ८, १, १९) इति आष्टमिकं सर्वानुदात्तत्वमेव । हे ओषधे हरिद्राख्ये त्वं नक्तं रात्रौ जाता उत्पन्ना असि भवसि । अतस्त्वं श्वैत्यनिवर्तनेन कार्ष्ण्यम् आपादयितुं शक्ता भवसीत्यर्थः । तथा हे रामे । व्याधितो जनः अनया ओषध्या रमत इति रामा भृङ्गराजाख्या ओषधिः । रमु क्रीडायाम् । अस्मात् करणे घञ् । 'कर्षात्वतो घञोन्त उदात्तः' (पा ६, १, १५९) इत्यन्तोदात्तत्वे प्राप्ते अस्य आमन्त्रितस्य पादादित्वेन आष्टमिकस्य सर्वानुदात्तस्य अप्राप्तेः 'आमन्त्रितस्य च' (पा ६,१,१९८) इति षाष्ठिकम् आद्युदात्तत्वम् । तथा हे कृष्णे कृष्णवर्णे कृष्णवर्णापादिके वा इन्द्रवारुणि, हे असिक्नि असितवर्णे असितवर्णापादिके वा नीलि । सर्वसमुच्चयार्थश्चकारः । असितशब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः' (पा ४,१,३९) इति प्राप्तयोर्ङीब्नकारयोः 'असितपलितयोः प्रतिषेधो वक्तव्यः' (पावा ४,१,३९) इति प्रतिषेधे 'छन्दसि क्नम् एक इच्छन्ति' (पावा ४,१,३९) इति वचनात् ङीप् । तत्संनियोगेन तकारस्य क्नादेशः । कृष्णे असिक्नि इत्यनयोः 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा ८, १,७२) इति पूर्वपूर्वामन्त्रितस्य अविद्यमानवद्भावेन पादादित्वात् षाष्ठिकम् आद्युदात्तत्वमेव । न च 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (पा ८,१,७३) इति

१. °कर्मंयोमो° S', Kd. २. शकृदा Bl. ३. रजय इति शोधः (तु. वैप. १, २९२४ l.),

अविद्यमानवद्भावनिषेधः। भिन्नार्थवृत्तित्वेन व्याख्यातत्वात्। पूर्वम् ओषधिशब्देन निर्दिष्टाया हरिद्राया जननक्रियासंबन्धित्वेन कुण्ठितशक्तित्वात् रञ्जनक्रियायामपि संबन्धं दर्शयितुं पुनराह — रजनीति। यद्वा अत्र निर्दिष्टानां रामादीनां चतसृणाम् ओषधीनामपि उत्पत्तिरुच्यते — नक्तंजातास्योषध इति। हे ओषधे रामादिरूपे त्वम् नक्तंजातासि। इत्यतो न पुनरुक्तिशङ्कावकाशः। हे रजनि। रञ्जयति स्वसंसृष्टं वस्त्रादिकम् अर्थम् इति रजनी। रञ्ज रागे। कर्तरि ल्युट्। 'रजकरजनरजःसूपसंख्यानम्' (पावा ६, ४, २४) इति उपधानकारलोपः। टित्वात् ङीप्। पदात् परत्वाद् 'आमन्त्रितस्य च' (पा ८,१,१९) इति आष्टमिकं सर्वानुदात्तत्वम्। हे रामाद्योषधे त्वम् इदम् वक्ष्यमाणम् अङ्गं रजय श्वित्रादिदोषनिबर्हणेन स्वकीयं रागं संश्लेषय। अत्र रामापादिकानाम् ओषधीनां बहुत्वेपि प्रत्येकापेक्षया एकवचनम्। रञ्ज रागे। अस्मात् णिचि 'रञ्जेर्णौ मृगरमण उपसंख्यानम्' (पावा ६,४,२४) इति विहितो नलोपश्छान्दसत्वाद् अत्रापि भवति। 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा ८,१,७२) इति रजनिशब्दस्य अविद्यमानवद्भावेपि इदंशब्दापेक्षया 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः। तदेवाङ्गम् आह — *[किलासं] किलासः कुष्ठरोगः तद्युक्तम् अङ्गम् तथा पलितम् जरावस्थाप्राप्तं केशानां शौक्ल्यं तद्युक्तम् अङ्गं च। उभयत्रापि अर्शआदित्वाद् अच्। ईदृशं यद् अङ्गम् अस्ति इदम् इति पूर्वेण संबन्धः॥

कि॒लासं॑ च पलि॒तं च॒ निरि॒तो ना॑शया॒ पृष॑त्[1] ।
आ त्वा॒ स्वो वि॑शतां[2][3] व॒र्णः परा॑ शु॒क्लानि॑[4] पातय ॥२॥

कि॒लास॑म् । च॒ । प॒लि॒तम् । च॒ । निः । इ॒तः । ना॒श॒य॒ । पृष॑त् ।
आ । त्वा॒ । स्वः । वि॒श॒ता॒म् । व॒र्णः । परा॑ । शु॒क्लानि॑ । पा॒त॒य॒ ॥ २ ॥

किलासम् पलितम् उक्तलक्षणम्। परस्परसमुच्चयार्थौ चकारौ। इतः अस्मात् व्याधिदूषितात् शरीरात् पृथक् पृथक्कृत्य हे ओषधे त्वं निर्णाशय निरवशेषं घातय। 'व्यवहिताश्च' (पा १,४,८२) इति निसो व्यवहितक्रियया संबन्धः। अनन्तरम् हे रुग्ण त्वा त्वां स्वः स्वकीयः प्रागवस्थितो वर्णः लौहित्यादिरूपः आ विशताम् प्रविशताम्। शौक्ल्यस्य पुनरुद्भवपरिहाराय आह — शुक्लानि शरीरकेशगतशुक्लरूपाणि परा पातय पराचीनं दूरं प्रेरय। यथा पुनरेनं पुरुषं न स्पृशन्ति तथा कुरु इत्यर्थः।

असि॑तं ते प्र॒लय॑न[5]मा॒स्थान॒मसि॑तं॒ तव॑ ।
असि॑क्न्यस्योषधे॒ निरि॒तो ना॑शया॒ पृष॑त्[6] ॥ ३ ॥

१. पृथक् K, S, V; पृषत् इति संशोध्य पृथक् Bh. २. नः तैत्रा ३, ४, ४, १. ३. अरुतां तैत्रा. ४. श्वेतानि तैत्रा. ५. वैतु. मंपा. यनि. ६. निलयं° तैत्रा.

असितम् । ते । प्रऽलयनम् । आऽस्थानम् । असितम् । तव ।
असिक्नी । असि । ओषधे । निः । इतः । नाशय । पृषत् ॥ ३ ॥

अनया नीलीमेव[1] अवयुत्य प्रार्थयते — हे नीलि[2] ते तव प्रलयनम् । प्रकर्षेण लीयते संश्लिष्यते अत्रेति प्रलयनम् उत्पत्तिस्थानम् । असितम् कृष्णवर्णं भवति । तथा तव आस्थानम् । पुरुषैः आनीता आ समन्तात् तिष्ठत्यत्रेति आस्थानम् प्रक्षेपणभाजनादिरूपम् । असितम् कृष्णं भवति । प्रपूर्वात् लीङ् श्लेषणे इत्यस्मात्, आङ्पूर्वात् तिष्ठतेश्च 'करणाधिकरणयोश्च' (पा ३,३,११७) इति अधिकरणे ल्युटि 'लिति' (पा ६,१,१९३) इति प्रत्ययात् पूर्वस्य उदात्तत्वम् । कुत एतद् इत्यत आह — हे ओषधे नीलि त्वम् असिक्नी असितवर्णा असि भवसि । यतस्तव अयं स्वभावः अतः इतः अस्मात् श्वित्रादिरोगदूषिताद् अङ्गात् आलेपादिना त्वत्संबद्धात्[3] पृथक् किलासं पलितं च पृथक्कृत्य निर्णाशयं[4] निःशेषेण विनष्टं कुरु ।

अस्थिजस्य किलासस्य तनूजस्य च यत् त्वचि ।
दूष्या कृतस्य ब्रह्मणा लक्ष्म श्वेतमनीनशम् ॥ ४ ॥

अस्थिऽजस्य । किलासस्य । तनूऽजस्य । च । यत् । त्वचि ।
दूष्या । कृतस्य । ब्रह्मणा । लक्ष्म । श्वेतम् । अनीनशम् ॥ ४ ॥

अनया अस्थ्यादिधातुगतस्य उत्सांद्यस्य[6] किलासस्यैव निवृत्तिम् आह — अस्थिजस्य तथा तनूजस्य । अत्र तनूशब्देन त्वगस्थ्नोर्मध्यवर्ती मांसधातुः उच्यते । तस्माद् यज्जातं तस्य । जनी प्रादुर्भावे । अस्माद् अस्थिशब्दोपपदात् तनूशब्दोपपदाच्च 'पञ्चम्यामजातौ' (पा ३,२,९८) इति डप्रत्ययः । 'टेः' (पा ६,४,१४३) इति टिलोपः । कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तत्वम् । तथा त्वचि त्वग्धातौ यद् वर्तमानं तस्य सर्वस्य किलासस्य कुष्ठव्याधेः । तथा दूष्या । दूषयति प्राणिनं हिनस्तीति दूषिः शत्रूत्पादिता कृत्या । तया कृतस्य उत्पादितस्य च किलासस्य लक्ष्म लक्ष्मभूतं चिह्नं श्वेतम शरीरावयवगतं श्वैत्यम् । ब्रह्मणा अनेन प्रयुज्यमानेन मन्त्रेण अनीनशम् नाशितवान् अस्मि । नश अदर्शने । अस्मात् ण्यन्तात् लुङि 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' (पा ३,१,४८) इति च्लेश्चङ् । 'चङि' (पा ६,१,११) इति द्विर्वचने 'सन्वल्लघुनि चङ्परेऽनग्लोपे' (पा ७,४,९३) इति सन्वद्भाव । 'सन्यतः' (पा ७,४,७९) इति अभ्यासस्य इत्वम् । 'दीर्घो लघोः' (पा ७,४,९४) इति दीर्घः । 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः ।

इति पञ्चमेनुवाके द्वितीयं सूक्तम् ॥

१. नीलमेव S', Kd.　२. नील S', Kd.　३. त्वत्संबंधात् S', Kd.　४. वैतु. मंपा. र्यान.　५. निर्नाशय S', Kd.　६. *शंपा., उत्साद्यस्य S',Kd.

'सुपर्णो जातः' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

सुपर्णो जातः प्रथमस्तस्य त्वं पित्तम् आसिथ ।
तद् आसुरी युधा जिता रूपं चक्रे वनस्पतीन् ॥ १ ॥

सुऽपर्णः । जातः । प्रथमः । तस्य । त्वम् । पित्तम् । आसिथ ।
तत् । आसुरी । युधा । जिता । रूपम् । चक्रे[1] । वनस्पतीन् ॥ १ ॥

अस्य औषधस्य वीर्यातिशयं प्रकटयितुम् आख्यायिकया उत्पत्तिम् आह । सुपर्णः शोभनपक्षोपेतो गरुत्मान् । बहुव्रीहौ समासे 'नञ्सुभ्याम्' (पा ६,२,१७२) इति उत्तरपदान्तोदात्तत्वम् । प्रथमः आदिभूतः सन् जातः उत्पन्नः । हे नील्या-द्योषधे त्वं तस्य गरुत्मतः पित्तम् शरीरगतः पित्ताख्यो दोषः आसिथ पूर्वं बभूविथ । अस्तेर्लिटि 'छन्दस्युभयथा' (पा ३,४,११७) इति लिटः सार्वधातुकसंज्ञायाम् 'अस्तेर्भूः' (पा २,४,५२) इति भूभावाभावः । आर्धधातुकसंज्ञाया अपि सद्भावाद् इडागमश्च । तत् तथाविधं पित्तम् आसुरी असुराणां माया काचन स्त्री । 'मायायामण्' (पा ४,४,१२४) इति अण्प्रत्ययः । 'टिड्ढाणञ्०' (पा ४,१,१५) इति ङीप् । सा युधा युद्धेन । युध संप्रहारे । 'क्विप् च' (पा ३,२,७६) इति क्विप् । सुपर्णेन सह संग्रामं कृत्वा जिता जितवती । जि जये । अस्मात् कर्तरि क्तः । जयेन लब्धं तत् पित्तं रूपं चक्रे ओषध्यात्मना सेव्यम् आकारम् अकार्षीत् । तदेव रूपम् आह — वनस्पतीन् नील्यादीन् । एतेषां नील्यादीनां सुपर्णपित्तकार्यत्वरूपप्रतिपादनेन अमोघवीर्यत्वम् उक्तं भवति ।

आसुरी चक्रे प्रथमेदं किलासभेषजम् इदं किलासनाशनम् ।
अनीनशत् किलासं सरूपाम् अकरत् त्वचम् ॥ २ ॥

आसुरी । चक्रे । प्रथमा । इदम् । किलासऽभेषजम् । इदम् । किलासऽनाशनम् ।
अनीनशत् । किलासम् । सऽरूपाम् । अकरत् । त्वचम् ॥ २ ॥

आसुरी पूर्वमन्त्रोक्ता असुरमायारूपा स्त्री प्रथमा श्वित्रचिकित्सकानाम्[2] आदिभूता सती इदम् सुपर्णपित्तेन निर्मितं नील्यादिकं किलासभेषजम् किलासस्य श्वित्रस्य निवर्तकम् औषधं चक्रे कृतवती । अतः इदम् नील्यादिकम् इदानीमपि लोके किलासनाशनम् किलासस्य रोगस्य निवर्तकं भवति । नश अदर्शने । 'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति कर्तरि ल्युट् । तद् नील्याद्यौषधं प्रयुज्यमानं सत् किलासम् श्वित्ररोगम् अनीनशत् नाशयति स्म । नशेर्ण्यन्तात् लुङि

---

१. चक्रे P, J. २. श्विवत्सचिकि S', Kd.

चर्कि रूपम्। तथा त्वचम् त्वग्धातुं श्वित्रदूषितं सरूपाम् समानरूपाम्। 'ज्योतिर्जनपद' (पा ६,३,८५) इत्यादिना समानशब्दस्य सभावः। श्वित्ररहितत्वचा समानवर्णाम् अकरत् अकार्षीत्। डुकृञ् करणे। अस्मात् लुङि 'कृमृदृरुहिभ्यश्छन्दसि' (पा ३,१,५९) इति च्लेः अङादेशः। 'ऋदृशोऽङि गुणः' (पा ७,४,१६) इति गुणः।

सरूपा नाम ते माता सरूपो नाम ते पिता।
सरूपकृत् त्वमोषधे सा सरूपमिदं कृधि ॥ ३ ॥

सऽरूपा। नाम। ते। माता। सऽरूपः। नाम। ते। पिता।
सरूपऽकृत्। त्वम्। ओषधे। सा। सऽरूपम्। इदम्। कृधि ॥ ३ ॥

हे ओषधे ते तव माता जननी भूमिः सरूपा त्वया समानरूपा कृष्णवर्णैव। तथा ते तव पिता द्यौः। 'द्यौः पिता पृथिवी माता' (तैब्रा ३,७,५,४) इति हि निगमः। बीजविशेषो वा पितृशब्देन विवक्षितः। सोपि सरूपः समानवर्णः। उभयत्रापि नामशब्दः प्रसिद्धपरः। हे ओषधे नील्यादिरूपे त्वम् सरूपकृत्। स्वसंसृष्टं पदार्थम् आत्मना समानवर्णं करोति सा सरूपकृत्। तादृश्यसि। करोतेः 'क्विप् च' (पा ३,२,७६) इति क्विप्। सा समानरूपमातापितृजाता त्वम् इदम् श्वित्ररोगदूषितम् अङ्गं सरूपं कृधि त्वया समानवर्णं कुरु। करोतेर्लोटि 'श्रुशृणु-पृकृवृभ्यश्छन्दसि' (पा ६, ४, १०२) इति हेर्धिरादेशः।

श्यामा [1] सरूपंकरणी पृथिव्या अध्युद्भृता।
इदमू षु प्र साधय पुना रूपाणि कल्पय ॥ ४ ॥

श्यामा। सरूपम्ऽकरणी। पृथिव्याः। अधि। उत्ऽभृता।
इदम्। ऊं इति। सु। प्र। साधय। पुनः। रूपाणि। कल्पय ॥ ४ ॥

श्यामा श्यामवर्णा सरूपंकरणी असरूपं सरूपं क्रियते अनयेति विगृह्य उपपदान्तरेपि 'आढ्यसुभग' (पा ३,२,५६) इत्यादिना व्यत्ययेन कृञः करणे ख्युन्। 'खित्यन-व्ययस्य' (पा ६,३,६६) इति पूर्वपदस्य मुमागमः। यद्वा सरूपं क्रियते अनयेति 'करणाधिकरणयोश्च' (पा ३,३,११७) इति कृञः करणे ल्युट्। पूर्वपदे सुपो लुगभावश्छान्दसः। उभयत्रापि 'टिड्ढाणञ्०' (पा ४,१,१५) इति ङीप्। तादृशी त्वम् पृथिव्या अधि भूमेरुपरि उद्भृता आसुर्या मायया उत्पादिता। अतः कारणात् हे ओषधे त्वम् इदम् किलासाक्रान्तम् अङ्गं सु प्र साधय सुष्ठु रोगविनिर्मुक्तं कुरु। उशब्दः पादपूरणः। 'पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्रु' इति हि यास्कः (१, ९)। तथा

१. सुरू° पै १,२६.३. २. °रूपास्योषधे तैब्रा २,४,४,२. ३. श्यामा B[h],D,K,R,P,P[2], J,V. ४. सुरू° पै १,२६,५. ५. अध्युद्भृता S[m], अभ्यर्भवम् पै. ६. °परिशब्दउद्भृता S', Kd.

रूपाणि व्याधिसंभवात् पूर्वम् अवस्थितानि पुनः व्याधिनिबर्हणानन्तरमपि कल्पय संपादय। कृपू सामर्थ्ये। अस्माद् णिच्। 'कृपो रो लः' (पा ८३,१८) इति लत्वम्। पुनरिति। रेफस्य 'रो रि' (पा ८,३,१४) इति लोपे कृते 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (पा ६, ३, १११) इति दीर्घः।

इति पञ्चमेनुवाके तृतीयं सूक्तम्।

ऐकाहिकादिशीतज्वरसंततज्वरवेलाज्वरादिशान्तये 'यदग्निरापः' इति सूक्तं जपेत्। लोहकुठारम् अग्नौ संताप्य उष्णोदकमध्ये स्थापयित्वा तेनोदकेन व्याधितम् अभिषिञ्चेत्। तथा च कौशिकः — 'यदग्निरिति जपति परशुं तापयति क्वाथयत्यवसिञ्चति' (कौसू २६,२५) इति।

यद॒ग्निरापो॒ अद॑हत् प्र॒विश्य॒ यत्राकृ॑ण्वन् धर्म॒धृतो॒ नमां॑सि।
तत्र॑ त आहुः पर॒मं ज॒नित्रं॒ स नः॑ संवि॒द्वान् परि॑ वृङ्ग्धि तक्मन् ॥१॥

यत्। अ॒ग्निः। आपः॑। अद॑हत्। प्र॒ऽविश्य॑। यत्र॑। अकृ॑ण्वन्। ध॒र्म॒ऽधृतः॑। नमां॑सि। तत्र॑। ते॒। आ॒हुः॒। प॒र॒मम्। ज॒नित्र॑म्। सः। नः॒। स॒म्ऽवि॒द्वान्। परि॑। वृ॒ङ्ग्धि॒। त॒क्म॒न् ॥ १ ॥

अग्निः अङ्गनादिगुणयुक्तो देवः आपः अपः। व्यत्ययेन जस्। उदकानि प्रविश्य ततपरशुद्वारा अन्तरनुप्रविश्य अदहत् क्वाथम् अकार्षीत्। दह भस्मीकरणे। 'निपातैर्यद्यदिहन्त०' (पा ८१,३०) इति निघातप्रतिषेधः। ततः उदकेषु औष्ण्यगुणविशिष्टोग्निर्वर्तत इत्यर्थः। अग्निविशिष्टेन उष्णोदकेन ज्वरितः अवसिच्यते इति यत् तस्मात् कारणात् हे तक्मन् कृच्छ्रजीवनकारिन्। तकि कृच्छ्रजीवने। अस्माद् औणादिको मनिन्प्रत्ययः। तथाविध ज्वर संविद्वान् सम्यक् स्वकारणम् अग्निं जानन्। विद् ज्ञाने इत्यस्मात् लटः शत्रादेशः। 'विदेः शतुर्वसुः' (पा ७,१,३६) इति वस्वादेशः। स त्वं नः अस्मान् उष्णोदकसिक्तगात्रान् परि वृङ्ग्धि परिवर्जय। अस्मच्छरीरं विहाय स्वकारणभूतेन अग्निना सह निर्गच्छेत्यर्थः। वृजी वर्जने। अस्मात् लोटि 'हुझल्भ्यो हेर्धिः' (पा ६,४,१०१) इति हेर्धिरादेशः। रुधादित्वात् श्नम्। 'चोः कुः' (पा ८,२,३०) इति कुत्वम्। 'श्नसोरल्लोपः' (पा ६,४,१११) इति अकारलोपे अनुस्वारपरसवर्णौ। अग्नेः कारणत्वे भवेद् एवम्, तदेव कुत इत्यत आह — यत्रेति। धर्मधृतः। धर्मशब्देन अत्र यागदानादिरुच्यते। तं धारयन्ति अनुतिष्ठन्तीति धर्मधृतः। धृञ् धारणे। अस्माद् धर्मशब्दोपपदात् 'क्विप् च' (पा ३,२,७६) इति क्विप्। उपपदसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन धातुस्वर एव शिष्यते। तथाविधा यजमाना यत्र यस्मिन्नग्नौ। नमांसि। अन्ननामैतत्। हविर्लक्षणानि अन्नानि। नम

१. परशुं जपंस्ताप° Bl. २. तक्मम् पै १,३२,१ [मूको.]

प्रहृत्वे[1]। अस्माद् औणादिकः असुन्प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम्। अकृण्वन् अकुर्वन् अयंजन् अजुहवुर्वा। कृवि हिंसाकरणयोश्च। इदित्त्वाद् नुम्। लङि 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः, तत्संनियोगेन अकारश्च अन्तादेशः। तस्य अन्त्यलोपे स्थानिवद्भावात् लघूपधगुणाभावः। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (पा ६,४,७१) इति अडागम उदात्तः। 'निपातैर्यद्यदिहन्तकुविन्नेच्चेण्कच्चिद्यत्रयुक्तम्' (पा ८,१,३०) इति निघातप्रतिषेधः। तत्र तथाविधे अग्नौ हे ज्वर ते तव परमम् उत्कृष्टं जनित्रम् जन्म आहुः कथयन्ति। दोषवशाज्जाठराग्नेरेवायं ज्वरो विकार इति हि चिकित्सकानां प्रसिद्धिः। ब्रूञ् व्यक्तायां वाचि। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (पा ३,४,८४) इति झेः उसादेशः, प्रकृतेः आहादेशश्च। जनित्रम् इति। जनी प्रादुर्भावे। अस्माद् भावे औणादिक इत्रप्रत्ययः। प्रत्ययाद्युदात्तत्वम्। यद्वा हे तक्मन् सेकसाधनभूता अपः प्रविश्य अग्निस्त्वाम् अवहत् धक्ष्यतीति यत्। 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति भविष्यदर्थे लङ्। अतो हेतोः अस्मान् परित्यज्य सेकोदकगताग्निना स्वकारणभूतेन सह निर्गच्छेत्यर्थः। अन्यत् पूर्ववद् योज्यम्।

यद्यर्चिर्यदि वासि शोचिः[2] शकल्येषि यदि वा ते जनित्रम्।
हूडुर्नामासि हरितस्य देव स नः संविद्वान् परि वृङ्ग्धि तक्मन् ॥ २ ॥

यदि । अर्चिः । यदि । वा । असि । शोचिः । शकल्यऽएषि । यदि । वा । ते । जनित्रम् ।
हूडुः । नाम । असि । हरितस्य । देव । सः । नः । समऽविद्वान् । परि । वृङ्ग्धि । तक्मन् ॥ २ ॥

हे तक्मन् कृच्छ्रजीवनकारिन् ज्वर[7] त्वं यदि अर्चिः अर्चिष्मान् औष्ण्यगुणयुक्तःअसि भवसि। यदि वा शोचिः शोचकः शरीरसंतापकोसि। यदि वा ते तव जनित्रम् जन्म शकल्येषि। शकलानां समूहः शकल्यः। समूहार्थे यप्रत्ययः। शकल्यं दाह्यं काष्ठसमूहम् इच्छतीति शकल्येट् अग्निः। इषु इच्छायाम्। अस्मात् 'अन्येभ्योऽपि दृश्यन्ते' (पा ३,२,७५) इति विच् प्रत्ययः। अग्नौ तव जन्मेत्यर्थः। तथापि हे देव दीप्यमान ज्वर त्वं हरितस्य[8] पीतवर्णस्य हूडुः[9] रोहकः पुरुषशरीरे उत्पादकः। रुह बीजजन्मनि[10] प्रादुर्भावे [च]। अस्माद् औणादिकस्तुन्प्रत्ययः। 'हो ढः' (पा ८,२,३१) इति ढत्वम्। 'झषस्तथोर्धोऽधः' (पा ८,१,४०) इति तकारस्य धत्वम्। ततष्टुत्वे ढो ढे लोपे च कृते 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (पा ६,३,१११) इति धातोरुकारस्य दीर्घः। नामशब्दः प्रसिद्धौ। रूढुः इति प्रसिद्धः असि भवसि। यद्यपि ते बहूनि नामानि सन्ति तथापि इदमेव नाम प्रसिद्धम् इत्यर्थः। व्याख्यातम् अन्यत्।

---

१. प्रह्व S',Kd. २. *शंपा., अपतन् S,Kd. ३. धूमरशाकल्येषु पै १,३२,२१. ४. हूडु° Sᵐ; हूडु°, रूडु° Bp; रूडु° V,S. ५. तु. पृ १३२ टि २. ६. हूडु P² ७. ज्वरि S', Kd. ८. वैतु. स्वरः मंपा. यनि. ९. वैतु. मंपा. यनि. १०. जन्मप्रादु° S',Kd.

यदि॑ शो॒को यदि॑ वाभिशो॒को यदि॑ वा॒ राज्ञो॒ वरु॑ण॒स्यासि॑ पु॒त्रः ।
हू॒डुर्नामा॑सि हरितस्य देव॒ स नः॑ संवि॒द्वान् परि॑ वृङ्ग्धि तक्मन् ॥ ३ ॥

यदि॑ । शो॒कः । यदि॑ । वा॒ । अ॒भि॒ऽशो॒कः । यदि॑ । वा॒ । राज्ञः॑ । वरु॑णस्य । असि॑ । पु॒त्रः ।
हू॒डुः॑ । नाम॑ । अ॒सि॒ । ह॒रि॒त॒स्य॒ । दे॒व॒ । सः । नः॒ । स॒म्ऽवि॒द्वान् । परि॑ । वृ॒ङ्ग्धि॒ । तक्म॒न् ॥ ३ ॥

हे तक्मन् शीतज्वर त्वं यदि शोकः शरीरस्यान्तःशोषकः । यदिशब्दयोगात् असीति क्रिया अत्रापि संबध्यते । तापकोसि भवसि । यदि वा अभिशोकः अभितः सर्वतः कृत्स्नस्य शरीरस्य शोषकोसि । शुच शोके । बाहुलकात् कर्तरि घञ् । 'चजोः कु घिण्ण्यतोः' ( पा ७,३,५२ ) इति कुत्वम् । यदि वा राज्ञः राजमानस्य वरुणस्य पापकारिणां शिक्षकस्य । 'अनृते खलु वै क्रियमाणे [वरुणो] गृह्णाति ( तैब्रा १,७,२,६ ) इति हि श्रुतिः । तथाविधस्य देवस्य पुत्रः असि भवसि । अनेन शीतज्वरस्य उत्पत्तिरुक्ता । अन्यत् पूर्ववद् योज्यम् ।

नमः॑ शी॒ताय॑ त॒क्मने॒ नमो॑ रू॒राय॑ शो॒चिषे॑ कृणोमि[1] ।
यो अ॒न्ये॒द्युरु॑भय॒द्युर॒भ्येति॑ तृ॒तीय॑काय॒ नमो॑ अस्तु त॒क्मने॑ ॥ ४ ॥

नमः॑ । शी॒ताय॑ । त॒क्मने॑ । नमः॑ । रू॒राय॑ । शो॒चिषे॑ । कृ॒णो॒मि॒ ।
यः । अ॒न्ये॒द्युः । उ॒भ॒य॒ऽद्युः । अ॒भि॒ऽएति॑ । तृ॒तीय॑काय । नमः॑ । अ॒स्तु॒ । त॒क्मने॑ ॥ ४ ॥

शीताय शीतजनकाय तक्मने कृच्छ्रजीवनकारिणे रोगाय नमः नमस्कारं कृणोमि । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' ( पा २,३,१६ ) इति चतुर्थी । तथा रूराय शीतानन्तरभाविने ज्वराय शोचिषे शोषकाय नमस्कृणोमि करोमि । कृवि हिंसाकरणयोश्च । शीतरूरौ शाखान्तरे स्पष्टम् आम्नायेते—'स इन्द्र आत्मनः शीतरूरावजनयत् तच्छीतरूरयोर्जन्म' ( तै २,५,२,३ ) इति । शीतज्वरविशेषान् आह—अन्येद्युः अन्यस्मिन् परदिने यः शीतज्वरः अभ्येति आगच्छति । 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति तिङो निघाताभावः । तथा उभयद्युः उभयस्मिन् द्वितीयेऽहनि यः शीतज्वर आयाति 'सद्यःपरुत्परारि' ( ५,३,२२ ) इत्यादिना अन्येद्युः उभयेद्युः इति शब्दौ निपातितौ । उभयद्युः इत्यत्र एत्वाभावश्छान्दसः । तस्मै ऐकाहिकाय द्व्याहिकाय च ज्वराय

१. तु. पृ १३३ टि ४. २. तु. पृ १३३ टि ६ ३. गृभ्णाति शंपा. ४. रूराय कृणमो वयं ते प १,३२,४. ५. सुरयागतः पै. ६. शोचिकाय S',Kd. ७. वैतु. पावा ५,३,२२.

तृतीयकाय तृतीयदिवसे आगच्छते त्र्याहिकाय ज्वराय । चातुर्थिकादीनामपि उपलक्षणम् एतत् । सर्वस्मै तक्मने शीतज्वराय नमः अस्तु नमस्कारो भवतु । एवं नमस्कारेण प्रीतः सन् सर्वो ज्वरः अस्मान् परिवर्जयतु इत्यर्थः ।

इति पञ्चमेनुवाके चतुर्थं सूक्तम्

'आरेसौ' इति सूक्तेन खड्गादिसर्वशस्त्रनिवारणकर्मणि फलीकरणतुषावतक्षणानां होमः कार्यः ।

तथैव प्रहरणोद्यतं शत्रुं दृष्ट्वा एतत् सूक्तं जपेत् । सूत्रं च — " 'आरेसौ' इत्यपनोदनानि । फलीकरणतुष[बुसा]वतक्षणानि" ( कौ १४,१४;१५ ) इत्यादि ।

तथा दुःशकुनदर्शने[1] काकमैथुनादिविरुद्धदर्शने अद्भुतादिदर्शने च एतत् सूक्तं जपेत् । सूत्रितं च — 'अपनोदनापाघाभ्याम् अन्वीक्ष्यं[2] प्रतिजपति' ( कौसू ४२,२२ ) इति । अत्र अपनोदनशब्देन अपनोदनकर्मसाधनत्वात् 'आरेसौ' इति सूक्तम् उच्यते ।

तथा विजयस्वस्त्ययनकर्मणि अनेन सूक्तेन आज्यं हुत्वा खड्गादिशस्त्रं संपात्य अभिमन्त्र्य प्रयच्छेत् ।

तथैव स्वस्त्ययनकामो रात्रौ शयनकाले एतत् सूक्तं जपित्वा प्रादेशेन मुखं प्रमाय स्वप्यात् ।

तथैव सुप्तोत्थितः स्वस्त्ययनार्थम् एतेन सूक्तेन त्रीणि पदानि तिस्रो दिष्टीर्वा प्रमाय उत्तिष्ठेत् ।

सूत्रं च — " 'आरे' ( अ १,२६ ) 'अमूः पारे' ( अ १,२७ ) 'पातं नः' ( अ ६,३ ) य एनं परिषीदन्ति' ( अ ६, ७६ ) इति यद् आयुधं दण्डेन व्याख्यातम् । दिष्टया मुखं विमाय संविशति । त्रीणि पदानि प्रमाय उत्तिष्ठति । तिस्रो दिष्टीः" (कौसू ५०, ४-७) इति । दिष्टिः प्रादेश इत्यर्थः ।

तथैव उपाकर्मणि एतत् सूक्तम् आज्यहोमे विनियुक्तम् । 'आरेसावस्मदस्तु', 'यस्ते पृथु स्तनयित्नुः' ( [अ ७,] १२ कौसू १३९,८ ) इति हि सूत्रम्[3] ।

[4]आरे३सावस्मदस्तु हेतिर्देवासो असत् । आरे अश्मा यमस्यथ ॥ १ ॥

आरे । असौ । अस्मत् । अस्तु । हेतिः । देवासः । असत् ।
आरे । अश्मा । यम् । अस्यथ ॥ १ ॥

हे देवासः देवाः । 'आज्जसेरसुक्' ( पा ७,१,५० ) इति असुगागमः । युष्मत्प्रसादाद् असौ दूरे परिदृश्यमाना हेतिः हननसाधनं शत्रुभिः प्रयुक्तं खड्गाद्यायुधम् । 'ऊति-

१. दर्शनकाक शंपा. २. तु. के.; वैतु. शंपा. °क्ष्य्, Bl. °र्यं (वैतु. तस्य मूको. अप्येके यनि.)
३. इति नास्ति Bl. ४. आरे३ A,D,B^h,S^m,V. ५. मन्तामशस्तिः पै १३,१,७.

यूतिजूतिसातिहेतिकीर्तयश्च' (पा ३,३,९७) इति क्तिनि एत्वम् उदात्तत्वं च निपात्यते। तद् आयुधम् अस्मत् अस्मत्तः सकाशात् आरे दूरे अस्तु भवतु। अस्मान् अस्पृष्ट्वैव दूरे निपततु इत्यर्थः। तथा हे शात्रवः यूयं यम् अश्मानम् अस्यथ अस्मद्धननाय क्षिपथ। असु क्षेपणे। दिवादित्वात् श्यन्। 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम्। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः। सः असा यन्त्रादिविनिर्मुक्तः पाषाणः। आरे अस्मद्दूरदेशे असत् भवतु। अस्तेर्लेटि अडागमः।

सखासावस्मभ्यमस्तु रातिः सखेन्द्रो भगः सविता चित्रराधाः ॥ २ ॥

सखा। असा। अस्मभ्यम्। अस्तु। रातिः। सखा। इन्द्रः। भगः[1]। सविता। चित्रऽराधाः ॥ २ ॥

पूर्वत्र शस्त्रनिवारकत्वेन देवाः प्रार्थिताः। तत्सिद्ध्यर्थं तेषां नामग्रहणपूर्वकं सखित्वं प्रार्थ्यते — असौ दिवि दृश्यमानो रातिः मित्रः सूर्यः अस्मभ्यम् अस्मत्कार्यसिद्ध्ये सखा समानख्यानो मित्रम् अस्तु भवतु। 'अनङ् सौ' (पा ७,१,९३) इति सखिशब्दस्य अनङादेशः। रातिरिति। रा दाने। 'क्तिच्क्तौ च संज्ञायाम्' (पा ३,३,१७४) इति कर्तरि क्तिच्। 'चितः' (पा ६,१,१६३) इत्यन्तोदात्तत्वम्। तथा इन्द्रः परमैश्वर्ययुक्तो देवानाम् अधिपतिः भगः भजनीयः भाग्यस्य प्रदाता देवः। 'भगो ह दाता भग इत् प्रदाता' (तैब्रा ३,१,९,८) इति हि श्रुतिः। सविता सर्वस्य प्राणिजातस्य प्रेरको देवः। यद्वा अभिमतसाधनस्य प्रदाता। श्रूयते हि — 'सवितारमेव स्वेन भागधेयेनोपधावति स एवास्मै सनिं प्रसुवति' (तै २,१,६,३) इति। तमेव विशिनष्टि — चित्रराधाः। 'राध इति धननाम राध्नुवन्त्यनेन' इति यास्कः (४,४)। चित्रं बहुविधं राधो धनं यस्य स तथोक्तः। राध साध संसिद्धौ। अस्मात् करणे असुन्प्रत्ययः। 'बहुव्रीहौ प्रकृत्या॰' (पा ६,२,१) इति पूर्वपदप्रकृतिस्वरत्वम्। स च सखा अस्तु। एते सर्वे देवाः अस्माकं सखायो भूत्वा शात्रवं शस्त्रनिकरं निवारयन्तु इत्यर्थः।

यूयं नः प्रवतो नपान्मरुतः सूर्यत्वचसः। शर्म यच्छाथ स

यूयम्। नः। प्रऽवतः। नपात्। मरुतः। सूर्यऽत्वचसः। शर्म। यच्छाथ[2]। सऽप्रथाः[3] ॥ ३ ॥

हे प्रवतो नपात्। प्रवतः प्रगतस्य भुवः सकाशात् प्रचण्डैः सूर्यकिरणैः उद्धृतस्य उदकस्य नपात् न पातयितः अकाले उदकं यथा अधो न पतति तथा उपरिष्टाद्

१. भगः। सविता RW. २. यच्छत पै १९,३,७; यरछाद् पै [मूको.] ३. सप्रथः सा. RW

मेघमण्डले धारयितः पर्जन्य 'उपसर्गाच्छन्दसि धात्वर्थे' ( पा ५, १, ११८ ) इति प्रोपसर्गाद् गमिधात्वर्थे वतिप्रत्ययः । 'वत्यन्ताश्च' इत्यव्ययत्वेपि लिङ्गसंख्याभ्यां योगः पूर्वत्र समर्थितः । नभ्पूर्वात् पातयतेः क्विप् । 'नभ्राण्नपात्' ( पा ६, ३, ७५ ) इत्यादिना नञः प्रकृतिभावः । 'सुबामन्त्रिते पराङ्गवत् स्वरे' ( पा २, १, २, ) इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य 'आमन्त्रितस्य च' (पा ८,१,१९) इत्याष्टमिकं सर्वानुदात्तत्वम् । हे मरुतः पतत्संज्ञकाः सप्तगणात्मका देवाः । पादादित्वाद् आष्टमिकनिघाताभावे षाष्ठिकम् 'आमन्त्रितस्य च' ( पा ६, १, १९८ ) इत्याद्युदात्तत्वम् । तान् विशिनष्टि—सूर्यत्वचसः सूर्यस्य त्वगिव त्वग् येषां ते तथोक्ताः । सूर्यसमानतेजस्का इत्यर्थः । ते सर्वे यूयं नः अस्मभ्यं सप्रथः प्रथसा विस्तारेण सहितं शर्म । गृहनामैतत् शरणं गृहं सुखं वा यच्छत यच्छत । दाण् दाने । अस्मात् लेटि आडागमः । शपि 'पाघ्रा' ( पा ७, ३, ७८ ) इत्यादिना यच्छादेशः । 'तिङ्ङतिङः' ( पा ८, १, २८ ) इति निघातः ।

सुषूदत मृडत मृडया नस्तनूभ्यो मयस्तोकेभ्यस्कृधि ॥ ४ ॥

सुसूदत । मृडत । मृडय । नः । तनूभ्यः । मयः । तोकेभ्यः । कृधि ॥ ४ ॥

हे इन्द्रादयो देवाः यूयं सुषूदत सूदयत शत्रुमुक्तानि आयुधानि अस्मत्तोऽन्यत्र प्रेरयत । षूद क्षरणे । अस्माद् ण्यन्तात् लोटि शप् । 'छन्दस्युभयथा' (पा ३,४,११७) इति शप आर्धधातुकत्वात् 'णेरनिटि' (पा ६,४,५१) इति णिलोपः । तथा मृडत सुखयत । मृड सुखने । सर्वापेक्षया बहुवद् उक्त्वा प्रत्येकं कर्तव्यतां दर्शयितुम् एकवद् आह—हे इन्द्रादिदेव त्वं नः अस्मान् मृडय सुखय । अनिष्टविनिबर्हणेन प्रीतिं जनयेत्यर्थः । तथा अस्माकं तनूभ्यः शरीरेभ्यः तोकेभ्यः । अपत्यनामैतत् । पुत्रेभ्यश्च मयः । सुखनामैतत् । सुखं कृधि कुरु । डुकृञ् करणे । लोटि 'श्रुशृणुपृकृवृभ्यश्छन्दसि' ( पा ६,४,१०२ ) इति हेर्धिरादेशः । 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' (पा ८,३,४६) इति विसर्जनीयस्य सत्वम् ।

इति पञ्चमेनुवाके पञ्चमं सूक्तम् ।

'अमूः पारे' इति सूक्तेन विजयार्थायुधप्रदानादीनि स्वस्त्ययनानि पूर्वसूक्तवत् कुर्यात् । सूत्रं तु पूर्वसूक्तोदाहृतं द्रष्टव्यम् ।

'प्रेतं पादौ' इति ऋचा मार्गस्वस्त्ययने पादम् अभिमन्त्र्य दद्यात् ।

अमूः पारे पृदाक्वस्त्रिषप्ता निर्जरायवः ।

तासां जरायुभिर्वयमक्ष्या३वपि व्ययामस्यघायोः परिपन्थिनः ॥ १ ॥

---

१. वैतु. मंपा. यनि. (तु. पृ १३६ टि ३) २. वैतु. मंपा. यनि. ३. सुमृळत पै १६,३,४. ४. °नूभ्यः । मर्य RW. ५. शं नस् पै. ६. स्वस्त्ययनादीनि स्व° S',Kd. ७. पाप° S',Kd. ८. दद्यात् इत्यतः परं सूत्रं तु × ⊠ द्रष्टव्यम् इति पुरस्ताद् गतम् इह पठतः S',Kd. ९. इमाः पै १६,३१,४. १०. जरायवा पै

अमूः । पारे । पृदाकूः । त्रिऽसप्ताः । निःऽजरायवः ।

तासाम् । जरायुऽभिः । वयम् । अक्ष्यौ । अपि । व्ययामसि । अघऽयोः । परिऽपन्थिनः ॥ १ ॥

अमूः परिदृश्यमानाः पृदाकूः सर्पजातयः त्रिषप्ताः त्रिगुणितसप्तसंख्याकाः 'ये त्रिषप्ताः' इत्यत्रोक्ताः निर्जरा इव जराया निर्गताः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' (पावा २,२,१८) इति गतिसमासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'इवेन विभक्त्य-लोपः पूर्वपदप्रकृतिस्वरत्वं च' (पावा २,१,१४) इति इवशब्दस्य समासः । जरारहिता देवा इव पारे भूम्याः पारदेशे नागलोके । वर्तन्त इति शेषः । तासाम् पृदाकूनां जरायुभिः । जरायुवत् शरीरस्य वेष्टकास्त्वचो जरायवः सर्पकञ्चुकाः । तैः साधनैः अघायोः । अघं हिंसनं परेषाम् इच्छतीति अघायुः । 'छन्दसि परेच्छाया-मपि' (पावा ३,१,८) इति अघशब्दात् कर्मणः क्यच् । 'अश्वाघस्यात्' (पा ७,४,३७) इति आत्वम् । 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः । प्रत्ययस्वरेण अन्तो-दात्तत्वम् । तथाविधस्य परिपन्थिनः युद्धादौ प्रत्यवस्थातुः शत्रोः । 'छन्दसि परि-पन्थिपरिपरिणौ पर्यवस्थातरि' (पा ५,२,८९) इति निपात्यते । तस्य अक्ष्यौ अक्षिणी वयम् अपि व्ययामसि अपिव्ययामः अपिनह्यामः । यथा युद्धादौ शत्रुरस्मान् हिंसितुं न पश्यति तथा तस्य चक्षुषी महासर्पनिर्मोकैः आच्छादयाम इत्यर्थः । व्येञ् संवरणे । 'इदन्तो मसि' (पा ७,१,४६) इति मस इदन्तत्वम् । 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः ।

विषूच्येतु कृन्तती पिनाकमिव बिभ्रती ।
विष्वक् पुनर्भुवा मनोऽसमृद्धा अघायवः ॥ २ ॥

विषूची । एतु । कृन्तती । पिनाकम्ऽइव । बिभ्रती ।

विष्वक् । पुनःऽभुवाः । मनः । असम्ऽऋद्धाः । अघऽयवः ॥ २ ॥

पिनाकमिव । ऐश्वरं धनुः पिनाकम्, तद्वत् शत्रुनिहननक्षमम् आयुधं बिभ्रती धारयन्ती । डुभृञ् धारणपोषणयोः । अस्मात् लटः शत्रादेशः । जुहोत्यादित्वात् शपः श्लुः । 'भृञामित्' (पा ७,४,७६) इत्यभ्यासस्य इत्वम् । 'उगितश्च' (पा ४,१,६) इति ङीप् । 'अभ्यस्तानामादिः' (पा ६,१,१८९) इत्याद्युदा-त्तत्वम् । अत एव कृन्तती छिन्दती खड्गाद्यायुधैः शत्रून् विदारयन्ती । कृती छेदने । अस्मात् लटः शत्रादेशः । 'तुदादिभ्यः शः' (पा ३,१,७७) इति शप्रत्ययः । 'शे मुचादीनाम्' (पा ७,१,५९) इति नुम् । 'उगितश्च' (पा ४,१,६) इति ङीप् । '°अनुपदेशाल्लसार्वधातुकमनुदात्तम्°' (पा ६,१,१८६) इति शतुरनुदात्तत्वे विकरणस्य

१. वैतु. मंपा. यनि. २. पारा° S', Kd. ३. वेम् S', Kd. ४. °भंवा पै १३,३१,५ सा., S, D.

प्रत्ययस्वरेण उदात्तत्वम् । 'अतो गुणे' (पा ६,१,९७) इति शत्रा सह एकादेशो 'एकादेश उदात्तेनोदात्तः' (पा ८,२,५) इति एकादेशस्य उदात्तता । 'शतुरनुमो नद्यजादी' (पा ६,१,१७३) इत्यन्तोदात्तात् शत्रन्ताद् उत्तरस्य ङीप उदात्तत्वम् । ईदृशी शात्रवी सेना विषूची विषु नाना अञ्चन्ती गच्छन्ती विप्रकीर्णा एव गच्छतु । नानामुखं वित्रस्ता धावतु इत्यर्थः । विषुशब्दोपपदाद् अञ्चतेः 'ऋत्विग्' (पा ३,२,५९) इत्यादिना क्विन् । 'अनिदिताम्°' (पा ६,४,२४) इति नलोपः । 'अञ्चतेश्चोपसंख्यानम् (पावा ४,१,६) इति ङीप् । भसंज्ञायाम् 'अचः' (पा ६,४,१३८) इत्यकारलोपे 'चौ' (पा ६,३,१३८) इति दीर्घत्वम् । तथाविधा सेना यदि पुनर्भवा पुनःसंघीभूता भवेत् तर्हि[४] मनः तत्सेनासंबन्धि मानसं विष्वक् नानामुखम् अनवस्थितं भवतु । पुनः संघश आगतानां शत्रुसेनाभटानां मनांसि कार्याकार्यविचारशून्यानि संभ्रान्तानि भवन्तु इत्यर्थः । भू सत्तायाम् । अस्मात् 'ऋदोरप्' (पा ३,३,५७) इति अप्प्रत्ययः । ततः पुनःशब्देन बहुव्रीहिः । यद्वा कर्तरि पचाद्यच् । यद्वा पुनर्भवायाः सेनायाः संबन्धि मन इति योजना । 'सुपां सुलुक्°' (पा ७,१,३९) इति षष्ठ्येकवचनस्य सुः आदेशः । एवं सेनायां संभ्रान्तायां तदधिष्ठातारः अघायवः अघं परेषाम् इच्छन्तः शात्रवः असमृद्धाः समृद्धिरहिताः राष्ट्रकोशादिभ्रष्टाः । भवन्तु इति शेषः ।

न बहवः समशकन् नार्भका अभि दाधृषुः ।
वेणोरद्गा इवाभितोऽसमृद्धा अघायवः ॥ ३ ॥

न । बहवः । सम् । अशकन् । न । अर्भकाः । अभि । दधृषुः ।
वेणोः । अद्गाःऽइव । अभितः । असम्ऽऋद्धाः । अघऽयवः ॥ ३ ॥

बहवः हस्त्यश्वरथपदातियुक्ता बहुलाः शात्रवः न सम् अशकन् न संशक्नुवन्तु[५] । बहवोपि युद्धरङ्गे अस्मान् जेतुम् अशक्ताः पराजिता भवन्तु इत्यर्थः । शक्लृ शक्तौ । अस्मात् 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति प्रार्थनायां लुङ् । 'पुषादिद्युताद्यॢदितः°' (पा ३,१,५५) इति च्लेः अङादेशः । तथा अर्भकाः अल्पाः । 'दभ्रम् अर्भकम् इत्यल्पस्य' इति यास्कः (३,२०) । परिमिताः शात्रवः न अभि दादृशुः[६] आभिमुख्येन अस्मान् न पश्यन्तु । युद्धार्थम् अस्मान् द्रष्टुमपि असमर्था दूरत एव पलायन्ताम् इत्यर्थः । दृशिर् प्रेक्षणे । अस्मात् पूर्वोक्तसूत्रेण लिट् । तुजादित्वाद् अभ्यासदीर्घत्वम् । पराजितानां शत्रूणाम् अवस्थानप्रकारम् आह उत्तरार्धेन । वेणोः वंशकाण्डस्य [३]परितः परितो वर्तमाना उद्गाः इव ।

१. ईदृशी यात्रवी शात्रवी S', Kd. २. अंचती S', Kd. ३. वैतु. मंपा. यनि. ४. तर्हि त्वं मनः S', Kd. ५. संशक्नुवन् पै १९,३१,६. ६. °धृष्णुवन् पै.

उद्गच्छन्तीति उद्गाः शाखाः । 'डोऽन्यत्रापि दृश्यते' (पा ३,२,४८) इति उदुपसृष्टाद् गमेर्डप्रत्ययः । 'टेः' (पा ६,४,१४३) इति टिलोपः । तथाविधाः शाखा इव अघायवः शत्रवः असमृद्धाः समृद्धिरहिता भवन्तु । यथा परितो वर्तमाना वेणुशाखा असंहता कृशाश्च दृश्यन्ते तथा युद्धभूमौ पराजिताः शत्रवः सेनादिरहिता राज्यभ्रष्टास्तुच्छा भवन्तु इत्यर्थः । ऋधु वृद्धौ । 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (पा ३,४,७६) इति कर्तरि क्तप्रत्ययः । 'यस्य विभाषा' (पा ७,२,१५) इति इट्प्रतिषेधः । ततो नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।

प्रेतं पादौ प्र स्फुरतं वहतं पृणतो गृहान् ।
इन्द्राण्येतु प्रथमाजीतामुषिता पुरः ॥ ४ ॥

प्र । इतम् । पादौ । प्र । स्फुरतम् । वहतम् । पृणतः । गृहान् ।
इन्द्राणी । एतु । प्रथमा । अजीता । अमुषिता । पुरः ॥ ४ ॥

हे पादौ जिगमिषतो जनस्य संबन्धिनौ युवां प्रेतम् प्रकर्षेण गच्छतम् । इण् गतौ । लोटि थसस्तम् आदेशः । तदर्थं प्र स्फुरतम् पुनःपुनः शीघ्रचलनेन गमनं निष्पादयतम् इत्यर्थः । गमनस्य अवधिम् आह — पृणतः इष्टफलदानेन अस्मान् प्रीणयतः गन्तव्यत्वेन उद्दिष्टपुरुषस्य गृहान् वहतम् प्रापयतम् । यद्वा पृणतः पालकस्य परराष्ट्राधीशस्य शत्रोः गृहान् वहतम् अस्मदीयां सेनां प्रापयतम् । पॄ पालनपूरणयोः । अस्मात् लटः शत्रादेशः । क्र्यादित्वात् श्नाप्रत्ययः । 'प्वादीनां ह्रस्वः' (पा ७, ३, ८०) इति ह्रस्वत्वम् । 'श्नाभ्यस्तयोरातः' (पा ६,४,११२) इति आल्लोपः । 'शतुरनुमः०' (६, १, १७३) इति विभक्तेरुदात्तत्वम् । गन्तृजनरक्षार्थं पुरः पुरस्तात् पूर्वभागे । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा ५,३,३९) इति असिप्रत्ययः, पूर्वशब्दस्य पुरादेशश्च । इन्द्राणी इन्द्रस्य पत्नी । 'इन्द्रवरुणभवशर्व' (पा ४,१,४९) इत्यादिना ङीष्प्रत्ययः आनुगागमश्च । प्रत्ययस्वरेण अन्तोदात्तत्वम् । ततो यणादेशे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा ८,२,४) इति परोऽनुदात्तः स्वर्यते । एतु गच्छतु । तामेव विशिनष्टि— प्रथमा प्रथमभाविनी अजिता केनचिदपि अनिर्जिता । तथा अमुषिता अनपहृता । सेनाभिमानिदेवतात्वेन सर्वैरनभिभाव्येत्यर्थः । श्रूयते हि — 'इन्द्राणी वै सेनायै देवता' (तै २, २, ८, १) इति । पुरोगामिन्या सेनाभिमानिन्या इन्द्राण्या देवतया अनुगृहीता अस्मदीया सेना शत्रून् निर्जित्य तद्गृहानपि आक्रामतु इत्यर्थः ।

इति पञ्चमेऽनुवाके षष्ठं सूक्तम् ।

'उप प्रागात्' इति सूक्तेन उद्विग्नस्य उद्वेगनिवृत्तये शुक्लवीरणेषीकाकृतमणि-

१. तथा S', Kd. २. गृहम् पै १६,३१,७. ३. पथः पै., पथा पै [मूको.] ४. वैतु. मंपा यनि. ५. °भिहिताभ्ये° S', Kd. ६. °वीरिणे° शंपा., Bl.

बन्धनम्, उल्मुकद्वयघर्षणं च कुर्यात्। सूत्रं च—" 'उप प्रागाद्' इत्युद्विजमानस्य शुक्लप्रसूनस्य वीरणस्य चतसृणाम् इषीकाणाम् उभयतः" ( कौसू २६, २६ ) इत्यादि।

उप॒ प्राग॑द् दे॒वो अ॒ग्नी र॑क्षो॒हामी॑व॒चात॑नः ।
द॒हन्नप॑ द्व॒या॒विनो॑ यातु॒धाना॑न् किमी॒दिनः॑ ॥ १ ॥

उप॑ । प्र । अ॒गा॒त् । दे॒वः । अ॒ग्निः । र॒क्षः॒ऽहा । अ॒मी॒व॒ऽचात॑नः ।
दह॑न् । अप॑ । द्व॒या॒विनः॑ । या॒तु॒ऽधाना॑न् । कि॒मी॒दिनः॑ ॥ १ ॥

देवः द्योतमानः, दानादिगुणयुक्तो वा। आह च यास्कः— 'देवो दानाद् वा, दीपनाद् वा, द्योतनाद् वा, द्युस्थानो भवतीति वा' ( या ७, १५ ) इति। तथाविधः अग्निः अङ्गनादिगुणयुक्तः उप प्रागात् उद्विजमानं पुरुषम् उपागमत्। उद्वेगकारिणो रक्षःप्रभृतीन् विनाशयितुं प्राप्त इत्यर्थः। इण् गतौ। 'इणो गा लुङि' ( पा २, ४, ४५ ) इति गादेशः। 'गातिस्था०' ( पा २, ४, ७७ ) इति सिचो लुक्। तस्य तथाविधं सामर्थ्यं कुत इत्यत आह— रक्षोहा रक्षसां हिंसकानां पिशाचादीनां हन्ता। 'रक्षो रक्षितव्यमस्मात्' इति यास्कः (४,१८)। रक्ष पालने इत्यस्माद् अपादाने असुन्प्रत्ययः। रक्षःशब्दोपपदात् हन्तेः 'बहुलं छन्दसि' ( पा ३, २, ८८) इति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। 'अग्निः खलु वै रक्षोहा' ( तै ६, १, ४, ६) इति हि तैत्तिरीयकम्। तथा अमीवचातनः अमीवानां रोगाणां चातयिता नाशयिता। 'चातयतिर्नाशने' इति हि यास्कः ( ६,३० )। उपागतस्य अग्नेः उद्वेगकारिणां रक्षसां नाशने कालव्यवायाभावम् आह दहन्निति। द्वयाविनः द्वयं वाचिकं क्रौर्यं कायिकं हिंसनं च येषाम् अस्तीति द्वयाविनः। यद्वा मायामयं सौम्यरूपं स्वाभाविकं हिंस्ररूपं च द्वयम् एषाम् अस्तीति द्वयाविनः। 'बहुलं छन्दसि' ( पा ५,२,१२२ ) इत्यत्र विनिप्रकरणे 'अष्ट्राभिखलाद्वयोभयरुजाहृदयानां दीर्घश्च' इति वचनाद् विनिप्रत्ययः तत्संनियोगेन दीर्घश्च। किमीदिनः किम् इदानीं किम् इदानीं वर्तत इति रन्ध्रान्वेषणबुद्ध्या चरणशीलान्। 'किमीदिने किम् इदानीम् इति चरते' इति यास्कः ( ६,११)। यातुधानान्। यातवो यातनाः पीडाविशेषाः धीयन्ते विधीयन्ते क्रियन्त एभिरिति यातुधानाः। यत निकारोपस्कारयोः। अस्मात् ण्यन्ताद् औणादिके उप्रत्यये यातुशब्दः। डुधाञ् धारणे इत्यस्मात् 'कृत्यल्युटो बहुलम्' ( पा ३, ३, ११३ ) इति कर्तरि ल्युट्। 'लिति' ( पा ६, १, १९३ ) इति प्रत्ययात् पूर्वस्य उदात्तत्वम्। ततः समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। एवंभूतान् राक्षसान् अप दहन् अपकर्षन् दहन् भस्मसात् कुर्वन्। उपागात् इति पूर्वेण संबन्धः। यद्वा दह भस्मीकरणे इत्यस्मात् 'लक्षणहेत्वोः क्रियायाः ( पा ३,२,१२६ ) इति हेतौ शतृप्रत्ययः। यातुधानानां दहनाद्धेतोरुपागाद् इत्यर्थः।

१. वीरियस्य शंपा., Bl. २. उपप्रा° D. ३. नास्ति Kd.

प्रति॑ दह यातु॒धाना॒न् प्रति॑ देव कि॒मीदिनः॑ ।
प्र॒तीचीः॑ कृष्णवर्तने[1] सं द॑ह यातु॒धान्यः॑ ॥ २ ॥

प्रति॑ । द॒ह॒ । या॒तु॒ऽधाना॑न् । प्रति॑ । दे॒व॒ । कि॒मीदिनः॑ ।
प्र॒तीचीः॑ । कृ॒ष्ण॒ऽव॒र्त॒ने॒ । सम् । द॒ह॒ । या॒तु॒ऽधा॒न्यः॑ ॥ २ ॥

पूर्वस्याम् ऋचि दहन्नुपागाद् इति आगमनशेषत्वेन दहनम् अभिहितम् । अनया तु रक्षसां दहनमेव प्राधान्येन अभिधीयते । हे अग्ने यातुधानान् यातूनां यातनानां विधातॄन् राक्षसान् प्रति दह प्रत्येकं प्रतिमुखं वा भस्मसात्[2] कुरु । तथा हे देव द्योतनात्मक अग्ने किमीदिनः किम् इदानीं किम् इदानीम् इति चरणशीलान् रन्ध्रान्वेषणपरान् पिशाचविशेषान् । प्रति इत्युपसर्गश्रवणाद् अत्रापि दहेत्यनुषङ्गः । कृष्णवर्त्मने हे कृष्णवर्त्मन् अग्ने प्रतीचीः प्राणिजातस्य प्रतिकूलम् अञ्चन्तीः । प्रतिपूर्वाद् अञ्चतेः 'ऋत्विग्' (पा ३, २, ५९) इत्यादिना क्विन् । 'अनिदिताम्०' ( पा ६,४, २४) इति नलोपः । 'अञ्चतेश्चोपसंख्यानम्' (पावा ४, १, ६) इति ङीप् । ततो भसंज्ञायाम् 'अचः' (पा ६, ४,१३८) इत्यकारलोपः । 'चौ' (पा ६, ३,१३८) इति दीर्घत्वम् । 'अनिगन्तोञ्चतावप्रत्यये' (पा ६,२,५२) इति प्रतेरिगन्तत्वेन पर्युदस्तत्वात् 'चौ' ( पा ६, १, २२२ ) इति पूर्वपदस्यान्तोदात्तत्वम् । तादृशीः यातुधान्यः यातुधानीः यातुधानशब्दात् 'पुंयोगादाख्यायाम्' ( पा ४ १, ४८ ) इति ङीष् । शसि 'वा छन्दसि' ( पा ६, १, १०६ ) इति पूर्वसवर्णदीर्घाभावे यण् । [3][प्र] ताश्च[4] सं दह सम्यक् निरवशेषं दह ।

या श॒शाप॒ शप॑नेन॒ याघं मूर॑मा॒दधे[5] ।
या रस॑स्य॒ हर॑णाय जा॒तमा॑रे॒भे तो॒कम॑त्तु॒ सा ॥ ३ ॥

या । श॒शाप॑ । शप॑नेन । या । अ॒घम् । मूर॑म् । आ॒ऽद॒धे ।
या । रस॑स्य । हर॑णाय । जा॒तम् । आ॒ऽरे॒भे । तो॒कम् । अ॒त्तु॒ । सा ॥ ३ ॥

सं दह यातुधान्य इति पूर्वत्र सामान्येन उक्ता एव राक्षस्यः अत्र विशेषतो निर्दिश्यन्ते । या यातुधानी शपनेन आक्रोशेन । शप आक्रोशे । करणे ल्युट् । नाशहेतुभूतेन परुषवाक्येन[6] शशाप शापं कृतवती । शप आक्रोशे इत्यस्मादेव लिटि तिपो णल् आदेशः 'लिति' ( पा ६, १, १९३ ) इति प्रत्ययात् पूर्वस्योदात्तत्वम् । 'यद्वृत्तान्नित्यम्' ( पा ८, १, ६६ ) इति निघातप्रतिषेधः । तथा या अन्या यातुधानी मूरम् मूलम् । 'वारमूररघ्वरमुसराङ्गुरीणां वा रो लम् आपद्यते' ( पावा ८, २, १८ ) इति लत्वस्य विकल्पितत्वाद् अत्राभावः । सर्वेषां दुरितानाम् आदिभूतम् अघम् हिंसारूपं पापम् आदधे परिजग्राह । [7][स्वी] कृतवतीत्यर्थः । डुदाञ् दाने । 'आङो दोऽनास्यविहरणे' ( पा १,३,२० ) इत्यात्मनेपदम् । लिटि 'लिटस्तझयोरेशिरेच्' ( पा ३, ४, ८१ ) इति तशब्दस्य एश्

१. कृष्णवर्त्मने Bh,S,V. २. भावस्मसात् S', Kd. ३. वैतु. मंपा. यनि. ४. ताश्च S', Kd. ५. °दधे K, S, V. ६. पुरुष° S', Kd. ७. संकृत° S', Kd.

आदेशः। प्रत्ययस्वरेण अन्तोदात्तत्वम्। पूर्ववद् निघातप्रतिषेधः। यद्वा मूरम् करम् अघम्। मुर्छा मोहसमुच्छ्राययोः। 'क्विप् च' (पा ३,२,७६) इति क्विप्। 'राल्लोपः' (पा ६,४,२१) इति छकारस्य लोपः। तथा या अपरा यातुधानी जातम् अपत्यम् उद्दिश्य रसस्य असृगादिरूपस्य शरीरगतस्य हरणाय अपहरणाय पानाय आरेभे उपचक्रमे। रभ राभस्ये। लिटि 'अत एकहल्मध्ये०' (पा ६,४,१२०) इति एत्वाभ्यासलोपौ। पूर्वस्वरः। निघातप्रतिषेधः। तासां सर्वासां हिंस्यं दर्शयति। सा प्रत्येकापेक्षया समुदायापेक्षया वा एकवचनम्। सा सर्वा यातुधानी तोकम्। अपत्यनामैतत्। स्वकीयम् अपत्यम् अस्मच्छत्रुसंबन्धि वा अत्तु भक्षयतु। अद भक्षणे।

पुत्रमत्तु यातुधानीः स्वसारमुत नप्त्यम्।
अधा मिथो विकेश्योई वि घ्नतां यातुधान्योई वि तृह्यन्तामराय्यः ॥४॥

पुत्रम्। अत्तु। यातुऽधानीः। स्वसारम्। उत। नप्त्यम्।
अध। मिथः। विऽकेश्यः। वि। घ्नताम्। यातुऽधान्यः।
वि। तृह्यन्ताम्। अराय्यः ॥ ४ ॥

सपुत्रबान्धवानां यातुधानीनां नाशम् आह—यातुधानी काचन उदीरितलक्षणा राक्षसी पुत्रम् स्वकीयमेव तनयम् अत्तु भक्षयतु। तथा स्वसारम् भगिनीम्। अत्तु इत्यनुषङ्गः। सुपूर्वाद् असु क्षेपणे इत्यस्मात् 'सावसेर्ऋन्' (पाउ २,९६) इति औणादिकः ऋन्प्रत्ययः। 'ऋन्नेभ्यः°' (पा ४,१,५) इति प्राप्तस्य ङीपो 'न षट्स्वस्रादिभ्यः' (पा ४,१,१०) इति प्रतिषेधः। 'ञ्नित्यादिर्नित्यम्' (पा ४,१,५) इत्याद्युदात्तत्वम्। उत अपि च नप्त्यम् नप्त्रीं पौत्रस्य अपत्यरूपां संततिम् अत्तु। नप्तृशब्दात् 'ऋन्नेभ्यः°' (पा ४,१,५,) इति ङीप्। द्वितीयैकवचने 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वरूपस्य विकल्पितत्वाद् यणादेशः। रेफलोपश्छान्दसः। अध स्वस्वपुत्रादिहननानन्तरं यातुधान्यः राक्षस्यः विकेश्यः परस्परताडनेन विकीर्णाः केशा यासां तास्तथोक्ताः। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (पा ४,१,५४) इति ङीष्। तथाभूताः सत्यः मिथः परस्परं वि घ्नताम् विशेषेण घ्नन्तु। परस्परताडनेन म्रियन्ताम् इत्यर्थः। हन हिंसागत्योः। लोटि बहुवचने अदादित्वात् शपो लुक्। 'गमहन°' (पा ६,४,९८) इत्युपधालोपः। 'हो हन्तेर्ञ्णिन्नेषु' (पा ७,३,५४) इति कुत्वम्। तथा अराय्यः अदायिन्यः। रा दाने। अस्माद् भावे घञ्। आतो युक् चिण्कृतोः' (पा ७,३,३३) इति युक्। ततो नञा बहुव्रीहिः। 'पुंयोगादाख्यायाम्' (पा ४,१,४४) इति ङीष्। दानप्रतिबन्धिकाः पिशाच्यश्च मिथो वि तृह्यन्ताम् विविधं हिंस्यन्ताम्। तृह हिंसि हिंसायाम्। कर्मणि लोट्।

इति सप्तमं सूक्तम्।

इति सायणाचार्यविरचिते अथर्वसंहिताभाष्ये प्रथमकाण्डे पञ्चमोऽनुवाकः।

---

१. विकेश्यो१ A. २. °धान्यो१ A. ३. वैतु. मंपा. यनि. ४. पाठः? पुत्रस्य इति शोधः।

षष्ठेऽनुवाके सप्त सूक्तानि। तत्र 'अभीवर्तेन' इति प्रथमं सूक्तम्। अस्य आद्याभिश्चतसृभिर्ऋग्भिः शत्रुमर्दितराष्ट्राभिवृद्धये रथचक्रनेमिमणिं सूत्रोक्तलक्षणं कृत्वा संपात्य अभिमन्त्र्य 'उदसौ सूर्यः' ( अ १,२९,५;६ ) इति उत्तमाभ्यां बध्नीयात्। तथा च कौशिकः—" 'अभीवर्तेन' इति रथनेमिमणिम् अयःसीसलोहरजतताम्रवेष्टितं हेमनाभिं वासितं बध्नाति सूत्रोतं बर्हिषि[2] कृत्वा संपातवन्तं [भृष्टीः] प्रत्यृचम् अभीवर्तोत्तमाभ्याम् आवृतति" (कौसू १६,२९ ) इति।

'माहेन्द्रीं राज्यकामस्य अद्भुतोत्पत्तिविकारेषु च' ( शाक १७,३ ) इति विहितायां माहेन्द्यां महाशान्तौ रथनेमिमणिबन्धने एतत् सूक्तम्। तथा च शान्तिकल्पे—" 'अभीवर्तेन' इति रथनेमिमणिं माहेन्द्र्याम्" (शाक १७, ४) इति।

अभीवर्तेन मणिना येनेन्द्रो अभिवावृधे।
तेनास्मान् ब्रह्मणस्पतेऽभि राष्ट्राय वर्धय ॥ १ ॥

अभिऽवर्तेन। मणिना। येन। इन्द्रः। अभिऽववृधे।
तेन। अस्मान्। ब्रह्मणः। पते। अभि। राष्ट्राय। वर्धय ॥ १ ॥

येन समृद्धिसाधनत्वेन प्रसिद्धेन अभीवर्तेन। अभितो वर्तते चक्रम् अनेनेति अभीवर्तो नेमिः। वृतु वर्तने। अस्मात् 'अकर्तरि च कारके संज्ञायाम्' ( पा ३,३,१९ ) इति करणे घञ्। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' ( पा ६,३,१२२ ) इति दीर्घः। 'थाथघञ्क्ताजबित्रकाणाम्' ( पा ६,२,१४४ ) इति उत्तरपदान्तोदात्तत्वम्। अत्र कार्ये कारणशब्दः। चक्रनेमिनिर्मितो मणिः। यद्वा अभितः सर्वतः परराष्ट्रादौ अप्रतिहतगतिर्वर्तते अनेन पुरुष इति अभीवर्तो मणिः। तेन[12] मणिना धृतेन इन्द्रः देवानाम् अधिपतिर्देवः अभिवावृधे अभितः सर्वतः प्रवृद्धोऽभूत्। परमैश्वर्योपेतस्त्रिलोकीपतिर्बभूवेत्यर्थः। वृधु वृद्धौ। अस्मात् लिटि 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा ६,१,७ ) इत्यभ्यासस्य दीर्घः। प्रत्ययस्वरेण अन्तोदात्तत्वम्। 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति निघातप्रतिषेधः। हे ब्रह्मणस्पते वेदराशेरधिपते। 'षष्ठ्याः पतिपुत्र°' ( पा ८,३,५३ ) इति विसर्जनीयस्य सत्वम्। 'सुबामन्त्रिते पराङ्गवत् स्वरे' ( पा २,१,२ ) इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य 'आमन्त्रितस्य च' ( पा ८,१,१९ ) इति आष्टमिकं सर्वानुदात्तत्वम्। एतत्संज्ञक देव[13] तेन प्रागुदीरितमहिमोपेतेन मणिना अस्मान् शत्रुभिः पीडितान् राष्ट्राय। तादर्थ्ये चतुर्थी। स्वराष्ट्राभिवृद्ध्यर्थम् अभि

१. बध्वा इति शोधः (तु. Bl.) २. बर्हिषदं कृत्वा S', Kd. ३. तु. Bl., दा. ४. चर्वृतीति S', Kd. ५. माहेन्द्री S', Kd. ६. वहितायां S', Kd. ७. द्रविणा ऋ १०,१७४,१. ८. °वृते ऋ., पै १,११,१. ९. तेनेमं पै. १०. ब्रह्म° B. ११. °तेष ऋ., पै. १२. वैतु. शंपा. तेन [येन] मणिना; धृतेन S', Kd. १३. देवेन S', Kd.

वर्धय करितुरगधनादिभिः समृद्धान् कुरु। त्वत्प्रसादात् समृद्धैरस्माभी रक्षितं राष्ट्रं शत्रुभयरहितं यथा अभिवृद्धं भवति तथा कुरु इत्यर्थः।

अभिवृत्य सपत्नानभि या नो अरातयः।
अभि पृतन्यन्तं तिष्ठाभि यो नो दुरस्यति[2] ॥ २ ॥

अभिऽवृत्य। सऽपत्नान्। अभि। याः। नः। अरातयः।
अभि। पृतन्यन्तम्। तिष्ठ। अभि। यः। नः। दुरस्यति ॥ २ ॥

हे अभीवर्त मणे त्वं सपत्नान्। सपत्नीव सपत्नाः सहजशत्रवः। अस्मदीयांस्तान् शत्रून् अभिवृत्य अभिमुखं पर्यावृत्य। तिष्ठेति वक्ष्यमाणक्रिया अत्रापि संबध्यते। त्वमेव प्रतिपक्षी भूत्वा तान् पराकुरु इत्यर्थः। तथा याः नः अस्माकम् अरातयः अदातारः अस्मदीयं राष्ट्रधनादिकम् अपहृत्य शात्रवं कुर्वाणा बाह्याः शत्रवः तानपि। अभि इत्युपसर्गश्रवणात् तिष्ठेति संबन्धः। अभिमुखं तिष्ठ। तथा पृतन्यन्तम् युद्धार्थं पृतनां सेनाम् आत्मन इच्छन्तम्। पृतनाशब्दात् 'सुप आत्मनः क्यच्' (पा ३,१,८) इति क्यच्। 'कव्यध्वरपृतनस्यर्चि लोपः' (पा ७,४,३९) इत्याकारलोपः। युद्धोन्मुखमपि शत्रुम् अभि तिष्ठ। तथा यः शत्रुः नः अस्माकं दुरस्यति दुष्टम् अभिचारादिरूपं क्षुद्रं कर्म कर्तुम्[3] इच्छति। 'दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति' (पा ७,४,३६) इति क्यचि दुष्टशब्दस्य दुरस्भावो निपात्यते। तथाविधमपि शत्रुम् अभितिष्ठ। शतिपोः पित्त्वाद् अनुदात्तत्वे क्यच्स्वरेण मध्योदात्तत्वम्। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः।

अभि त्वा देवः सविताभि सोमो अवीवृधत्[4]।
अभि त्वा विश्वा भूतान्यभीवर्तो यथाससि ॥ ३ ॥

अभि। त्वा। देवः। सविता। अभि। सोमः। अवीवृधत्।
अभि। त्वा। विश्वा। भूतानि। अभिऽवर्तः। यथा। अससि ॥ ३ ॥

हे मणे त्वा त्वां देवः द्योतनात्मकः सविता सर्वस्य प्राणिजातस्य प्रेरकः एतत्संज्ञको देवः। अभि इत्युपसर्गश्रवणाद् अवीवृधत् इति क्रिया अत्रापि संबध्यते। अभ्यवीवृधत् अभितः समृद्धम् अकार्षीत्। वृधु वृद्धौ। अस्मात् ण्यन्तात् लुङि चङि गुणे प्राप्ते 'नित्यं छन्दसि' (पा ७,४,८) इति उपधऋवर्णस्य ऋकारादेशः। तथा सोमो देवः अभ्यवीवृधत्। 'व्यवहिताश्च' (पा १,४,८२) इति उपसर्गस्य व्यवहितप्रयोगः। तथा हे मणे त्वा त्वां विश्वा विश्वानि निखिलानि। 'शेश्छन्दसि

१. अभि वरि सपत्नहा अभि पै १,११,२.  २. दु॰ पै [मूको.], दुरस्यति ऋ १०,१७४,२.
३. कर्तम् S', Kd.  ४. अवीवृतत् पै १,११,३, ऋ १०,१७४,३; अभीभृशत् पै [मूको.]

बहुलम्' (पा ६,१,७०) इति शोर्लोपः । भूतानि । *[भवन्ति] सत्तां लभन्त इति भूतानि चराचरात्मकानि । 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (पा ३,४,७६) इति भवतेः कर्तरि क्तप्रत्ययः । उपसर्गश्रवणाद् अत्रापि प्रकृतक्रियासंबन्धः । अभ्यवीवृधन् । अभिवर्धनाविधिम् आह — यथा येन प्रकारेण हे मणे त्वम् अभीवर्तः त्वद्धारयितुः पुरुषस्य अभितः स्वराष्ट्रपरराष्ट्रादौ वर्तनसाधनभूतः असति भवसि तथा त्वाम् अवीवृधन् इति पूर्वेण संबन्धः । अस भुवि । 'बहुलं छन्दसि' (पा २,४,७३) इति शपो लुगभावः । 'यावद्यथाभ्याम्' (पा ८,१,३६) इति निघातप्रतिषेधः ।

अभीवर्तो अभिभवः संपत्नक्षयणो मणिः ।
राष्ट्राय मह्यं बध्यतां सपत्नेभ्यः पराभुवे ॥ ४ ॥

अभिऽवर्तः । अभिऽभवः । सपत्नऽक्षयणः । मणिः ।
राष्ट्राय । मह्यम् । बध्यताम् । सऽपत्नेभ्यः । पराऽभुवे ॥ ४ ॥

अभीवर्तः अभिवर्तनसाधनभूतः । तत्र हेतुम् आह — अभिभवः शत्रूणाम् अभिभविता । अभिभवनं विशिनष्टि — सपत्नक्षयणः सपत्नानां भ्रातृव्याणां क्षयकरः । यत एवम् अतः अभीवर्त इत्यर्थः । तादृशो मणिः मह्यम् । षष्ठ्यर्थे चतुर्थी । 'ङयि च' (पा ६,१,२१२) इत्याद्युदात्तत्वम् । मम बध्यताम् । बन्ध बन्धने । कर्मणि लोट् । मणिबन्धनप्रयोजनम् आह — राष्ट्राय राष्ट्राभिवृद्धये । तथा सपत्नेभ्यः । पूर्ववत् षष्ठ्यर्थे चतुर्थी । भ्रातृव्याणां पराभुवे पराभवनाय । परापूर्वाद् भवतेः संपदादिलक्षणो भावे क्विप् । बध्यमानोऽयं मणिः पूर्वं शत्रुभिः पीडितस्य स्वराष्ट्रस्य अभिवृद्धिं, बाधकानां शत्रूणां नाशनं च करोतु इत्यर्थः ।

उदसौ सूर्यो अगादुदिदं[3] मामकं वचः ।
यथाहं शत्रुहोऽसान्यसपत्नः संपत्नहा ॥ ५ ॥

उत् । असौ । सूर्यः । अगात् । उत् । इदम् । मामकम् । वचः ।
यथा । अहम् । शत्रुऽहः । असानि । असपत्नः । सपत्नऽहा ॥ ४ ॥

असौ नभोमण्डले परिदृश्यमानः सूर्यः सर्वस्य प्राणिजातस्य प्रेरको देवः । 'राजसूयसूर्य॰' (पा ३,१,११४) इत्यादिना क्यपि निपात्यते । उदगात् उदितवान् । इण् गतौ । 'इणो गा लुङि' (पा २,४,४५) इति गादेशः । 'गातिस्था॰' (पा २,४,७७) इति सिचो लुक् । किंच मामकम् मदीयम् इदम् अधुनोच्चार्यमाणं वचः आत्मनो जयाशंसात्मकं शत्रूणाम् अभिभवप्रतिपादकं च वाक्यम् । यद्वा जयोद्देशेन प्रयुज्य-

१. प्रकृति॰ S', Kd. २. 'कारः S', Kd. ३. ॰दुदयं ऋ १०,१५९,१ पै १,११,४ [मूको.]
४. मामको भगः ऋ. ५. ॰हा पै.

मानं मन्त्रात्मकं वाक्यम्। उत् इति उपसर्गश्रवणात् प्रकृतक्रियासंबन्धः। उदगात्। मामकम् इति। अस्मच्छब्दात् 'तस्येदम्' (पा ४,३,१२०) इत्यण्। 'तवकममकावेकवचने' (पा ४,३,३) इत्यस्मदो ममकादेशः। सूर्योदयस्य वाग्व्यवहारस्य च प्रतिदिनं सत्त्वेऽपि विशेषतस्तत्कथनस्य प्रयोजनम् आह — अहम् अभीवर्तमणिधारकः यथा येन प्रकारेण शत्रुहः शत्रूणां हन्ता असानि भवानि। हन हिंसागत्योः। 'आशिषि हनः' (पा ३,२,४९) इति डप्रत्ययः। अस्तेर्लोटि 'आडुत्तमस्य पिच्च' (पा ३,४,९२) इति आडागमः। 'यावद्यथाभ्याम्' (पा ८,१,३६) इति निघातप्रतिषेधः। मिपि पित्त्वाद् अनुदात्तत्वे 'आगमा अनुदात्ताः' (पाम ३,१,३) इति आटोपि अनुदात्तत्वे धातुस्वरेण आद्युदात्तत्वम्। यथाहम् एवं भवानि तथा उदगाद् इति पूर्वेण संबन्धः। मणिप्रभावात् अद्यतनसूर्योदयः अधुनाप्रयुज्यमानवचश्च शत्रुहननानुकूलम् अभूद् इत्यर्थः। यत एवम् अतः अहम् असपत्नः शत्रुरहित एव। यदि च सपत्ना भवेयुस्तर्हि सपत्नहा सपत्नानां शत्रूणां हन्ता अस्मि। हन्तेः 'क्विप् च' (पा ३,२,७६) इति क्विप्।

सपत्नक्षयणो वृषाभिराष्ट्रो विषासहिः।
यथाहमेषां वीराणां विराजानि जनस्य च ॥ ६ ॥

सपत्नऽक्षयणः। वृषा। अभिऽराष्ट्रः। विऽससहिः।
यथा। अहम्। एषाम्। वीराणाम्। विऽराजानि। जनस्य। च ॥ ६ ॥

उत्तरवाक्ये यथेति श्रवणात् पूर्ववाक्येऽपि अर्थात् तथेत्यध्याह्रियते। सपत्नक्षयणः सपत्नानां शत्रूणां नाशकः। क्षि क्षये। 'नन्दिग्रहिपचादिभ्यः°' (पा ३,१,१३४) इति कर्तरि ल्युप्रत्ययः। अतः वृषा प्रजानाम् इष्टफलस्य वर्षकः। वृष सेचने। 'कनिन् युवृषि (पाउ १,१५६) इत्यादिना कनिन्प्रत्ययः। अत एव अभिराष्ट्रः स्वराष्ट्रं परराष्ट्रं च अभिगतः अधिपतित्वेन प्राप्तः। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (पावा २,२,१८) इति प्रादिसमासः। अतो विषासहिः विविधं पुनःपुनः परेषां सोढा अभिभविता। षह अभिभवे। अस्माद् यङन्तात् 'सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ' (पावा ३,२,१७१) इति किप्रत्ययः। अतोलोपयलोपौ। मणिप्रभावाद् एवंगुणविशिष्टः तथा भूयासम्। कथम् इत्यत आह — अहम् मणिधारकः यथा येन प्रकारेण एषाम् शत्रुसंबन्धिनां पूर्वम् आत्मनो बाधकानां वीराणाम् शत्रुभटानां जनस्य स्वकीयस्य परकीयस्य प्राणिजातस्य च विराजानि। राजतिरैश्वर्यकर्मा। नियन्ता भवानि। तथेति पूर्वेण संबन्धः। उदीरितगुणोपेतः सन् मणिप्रभावात् शत्रुप्रभृतीनां सर्वेषां शासिता भवामीति भावः। यद्वा उक्तगुणोपेतः सन् अहं वीराणां जनस्य च यथा विराजानि हे

१. प्रकृति° S', Kd.　२. अत S', Kd.　३. असपत्नः सपत्नहाऽभि° ऋ १०,१७४,५.
४. भूतानां ऋ.　५. यथे° S', Kd.　६. आत्मने S', Kd.

मणे त्वत्प्रभावात् तथा। भूयासम् इति शेषः।

इति षष्ठेऽनुवाके प्रथमं सूक्तम्।

'विश्वे देवाः' इति सूक्तेन आयुष्यकर्मणि स्थालीपाके घृतपिण्डत्रयं निक्षिप्य, संपात्य, अभिमन्त्र्य, तद् घृतं स्थालीपाकं च अश्नीयात्। सूत्रं च — " 'विश्वे देवाः' इत्यायुष्याणि। स्थालीपाके घृतपिण्डान् प्रतिनीयाऽश्नाति' ( कौसू ५२,१८;१९ ) इति।

उपनयनकर्मणि एतत् सूक्तं माणवकस्य नाभिदेशे संस्तभ्य जपेत्। तथा च सूत्रम् — " बाहुगृहीतं प्राञ्चम् अवस्थाप्य दक्षिणेन पाणिना नाभिदेशे [अभि] संस्तभ्य जपति। 'अस्मिन् वसु वसवो धारयन्तु' ( अ १,९ ) 'विश्वे देवा वसवः' " ( [अ १,३०] कौसू ५५,१६;१७ ) इति।

आयुष्कामस्य वैश्वदेवयागे तदुपस्थाने च एतत् सूक्तम्। सूत्रितम् — " 'विश्वे देवाः' इति विश्वान् देवान् आयुष्कामो यजते। उपतिष्ठते" ( कौसू ५९,१;२ ) इति।

अध्यायोत्सर्जनकर्मणि अस्य सूक्तस्य आज्यहोमे विनियोगः। "द्वैयान् रसान् उपसादयति। 'विश्वे देवाः' ( अ १,३० ), 'अहं रुद्रेभिः' " ( [अ ४,३०] कौसू १३९,१४;१५ ) इति हि सूत्रम्।

अथ अस्य सूक्तस्य आयुष्यगणे पाठात् 'मेधाजननायुष्यैर्जुहुयात्' ( कौसू ५७,३१ ), 'आयुष्यैः स्वस्त्ययनैराज्यं जुहुयात्' ( कौसू १३९,७ ) इति च सूत्राद् उपनयनोपाकर्मणोरपि आज्यहोमे अस्य विनियोगः।

'ऐरावतीं गजक्षये' ( शाक १७, ५ ) इति शान्तिकल्पविहितायाम् ऐरावत्याख्यायां महाशान्तौ 'आयुष्यशान्तिस्वस्तिगण ऐरावत्याम्' (शाक १८,८) आयुष्यगणस्य विधानात् तद्गणप्रयुक्तोऽस्य विनियोगः।

तथा 'वैश्वदेवीं गतायुषाम्' ( शाक १७,१ ) इति विहितायां वैश्वदेव्याख्यायां महाशान्तावपि एतद् विनियुक्तम् शान्तिकल्पे — " 'विश्वे देवाः' इति वैश्वदेव्याम्" (शाक १८,१) इति।

'आयुष्यश्चाभयश्चैव तथा स्वस्त्ययनो गणः।
एतान् पञ्च गणान् हुत्वा ××× ॥' ( अप ५,३,५;४,१ )

इति परिशिष्टोक्ते पुष्याभिषेकेऽपि अस्य गणप्रयुक्तो विनियोगः।

'ये देवा दिवि' (अ १,३०,३ ) इत्येषा दर्शपूर्णमासयोर्वषट्कारानुमन्त्रणे विनियुक्ता। उक्तं वैताने — " 'ये देवा दिवि ष्ठ' इत्यनुवषट्कारम्" ( वैताश्रौ ४,४ ) इति।

१. बहु° S', Kd. २. तु. Bl. ३. नास्ति Bl. ४. मद्वान् S', Kd. ५. तु. S', Kd.; वैतु. Bl. मेधाजनन आयु°. ६. ष्यः स्ना° S', Kd.

विश्वे॑ दे॒वा वस॑वो॒ रक्ष॑तेमम॒ुतादि॑त्या जागृ॒त यू॒यम॒स्मिन् ।
मेमं सना॑भिरु॒त वा॒न्यना॑भि॒र्मेमं प्राप॑त् पौरु॑षेयो व॒धो यः ॥ १ ॥

विश्वे॑ । दे॒वाः । वस॑वः । रक्ष॑त । इ॒मम् । उ॒त । आ॒दि॒त्याः । जा॒गृ॒त । यू॒यम् । अ॒स्मिन् ।
मा । इ॒मम् । सऽना॑भिः । उ॒त । वा॒ । अ॒न्यऽना॑भिः । मा । इ॒मम् । प्र । आ॒प॒त् । पौरु॑षेयः ।
व॒धः । यः ॥ १ ॥

विश्वे सर्वे हे देवाः इन्द्राद्याः । यद्वा विश्वेदेवाख्या गणदेवाः । 'आमन्त्रितस्य च' (पा ६,१,१९८) इति विश्वशब्दस्य षाष्ठिकम् आद्युदात्तत्वम् । तस्य 'विभाषितं विशेषवचने बहुवचनम्' (पा ८,१,७४) इति विकल्पेन अविद्यमानवद्भावनिषेधात् ततः परस्य देवशब्दस्य 'आमन्त्रितस्य च' (पा ८,१,१९) इत्याष्टमिकं सर्वानुदात्तत्वम् । तथा हे वसवः एतत्संज्ञा देवाः । अत्र 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा ८,१,७२) इति पूर्वामन्त्रितद्वयस्य अविद्यमानवद्भावेन पदात् परत्वाभावाद् 'आमन्त्रितस्य च' (पा ६,१,१९८) इति षाष्ठिकम् आद्युदात्तत्वम् । ते सर्वे यूयम् इमम् आयुष्कामं पुरुषं रक्षत पालयत । रक्ष पालने । '॰अदुपदेशाल्लसार्वधातुकमनुदात्तम्॰' (पा ६,१,१८६) इति तिङ्विभक्तेरनुदात्तत्वम् । शपश्च पित्त्वादेव अनुदात्तत्वम् । ततो धातुस्वरेण आद्युदात्तता । 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा ८,१,७२) इति आमन्त्रितत्रयस्यापि अविद्यमानवद्भावेन पदात्परत्वाभावात् 'तिङ्ङतिङः' (पा ८,१,२८) इति निघाताभावः । उत अपि च हे आदित्याः अदितेः पुत्रा धात्रर्यमादयो देवाः । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (पा ४,१,८५) इति अदितिशब्दाद् अपत्यार्थे प्राग्दीव्यतीयो ण्यप्रत्ययः । यूयम् अपि अस्मिन् आयुष्कामपुरुषविषये जागृत रक्षणार्थम् अवहिताः संनद्धा भवत । जागृ निद्राक्षये । अदादित्वात् शपो लुक् । 'जाग्रोऽविचिण्णल्ङित्सु' (पा ७,३,८५) इति ङितः पर्युदासाद् गुणाभावः । आदित्यकर्तृकस्य जागरणस्य प्रयोजनम् आह — इमम् आयुष्कामं पुरुषं सनाभिः समानो नाभिः गर्भाशयो यस्यासौ सनाभिर्ज्ञातिः । णह बन्धने । 'नहो भश्च' (पाउ ४,१२६) इति औणादिक इञ्प्रत्ययः । तत्संनियोगेन हकारस्य भकारादेशः । ततः समानशब्देन बहुव्रीहौ 'ज्योतिर्जनपद' (पा ६,३,८५) इत्यादिना समानशब्दस्य सभावः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा ६,२,१) इति स *[स्वरः] एव भवति । उत वा अपि वा अन्यनाभिः असमानजन्मा । ज्ञातिरूपः अज्ञातिरूपः इति द्विविधोपि शत्रुः । अत्र माङ्श्रवणाद् भाविनी क्रिया संबध्यते । मा प्रापत् हिंसितुं मैव प्राप्नोतु । तथा यः पौरुषेयः पुरुषकृतः । 'पुरुषाद् वधविकार॰' (पावा ५,१,१०) इति ढञ्प्रत्ययः । तथाविधो वधः हिंसनम् । 'हनश्च वधः' (पा ३,३,७६) इति भावे हन्तेरप्प्रत्ययः धातोर्वधादेशश्च । सोपि इमम् आयुष्कामं पुरुषं मा प्रापत् । आपॢ व्याप्तौ । लुङि 'पुषादिद्युताद्यॢदितः॰' (पा ३,१,५५) इति

१. देवासो अभि पै १,१४,१, २. समान उत पै. ३. तङ्वि S', Kd. ४. समाननाभिः S', Kd. ५. हिंसहनश्च S', Kd.

च्लेः अङादेशः । उक्ताभिर्देवताभिः परिरक्षितः सन् सर्वबाधाविनिर्मुक्तश्चिरं जीवतु इत्यर्थः ।

ये वो॑ दे॒वाः पि॒तरो॒ ये च॑ पु॒त्राः सचे॑तसो मे शृणुते॒दमु॒क्तम् ।
सर्वे॑भ्यो वः॒ परि॑ ददाम्ये॒तं स्व॒स्त्ये॑निं ज॒रसे॑ वहाथ ॥ २ ॥

ये । वः॒ । दे॒वाः । पि॒तरः॑ । ये । च॒ । पु॒त्राः । सऽचे॑तसः । मे॒ । शृ॒णु॒त॒ । इ॒दम् । उ॒क्तम् ।
सर्वे॑भ्यः । व॒ः । परि॑ । द॒दा॒मि॒ । ए॒तम् । स्व॒स्ति । ए॒न॒म् । ज॒रसे॑ । व॒हा॒थ॒ ॥ २ ॥

हे देवाः दानादिगुणयुक्ताः प्रागुदीरिताः वः युष्माकं ये पितरः ये च पुत्राः सन्ति ते सर्वे यूयं सचेतसः अस्मिन्नायुष्कामपुरुषविषये समानमनस्काः सन्तः । 'समानस्य च्छन्दसि॰' ( पा ६,३,८४ ) इति समानशब्दस्य सभावः । मे मदीयम् इदम् वक्ष्यमाणम् उक्थम् वाक्यम् । वच परिभाषणे । अस्माद् औणादिको भावे क्थन्प्रत्ययः । 'वचिस्वपि' ( पा ६,१,१५ ) इत्यादिना संप्रसारणम् । तद् वचनं शृणुत उक्तप्रकारेण कर्तुम् आकर्णयत । श्रु श्रवणे । 'श्रुवः शृ च' ( पा ३,१,७४ ) इति श्नुप्रत्ययः, धातोः शृभावश्च । किं तद् वाक्यम् इत्यत आह — हे देवाः सर्वेभ्यो वः । 'बहुवचनस्य वस्नसौ' (पा ८,१,२१ ) इति चतुर्थीबहुवचनान्तस्य युष्मदो वसादेशः । युष्मभ्यम् एतम् आयुष्कामं पुरुषं परि ददामि । रक्षणार्थं दानं परिदानम् । रक्षितुं प्रयच्छामि । अतो यूयम् रक्षार्थं दत्तं पुरुषं स्वस्ति आध्यात्मिकादिदुःखपरिहाण्या जरसे जरायै । 'जराया जरसन्यतरस्याम्' ( पा ७,२,१०१ ) इति जरसादेशः । जराप्राप्तिपर्यन्तं वहाथ प्रापयत । वह प्रापणे । लेटि आडागमः । जरोपलक्षितं शतसंवत्सरपरिमितं दीर्घम् आयुः अस्मै प्रयच्छतेत्यर्थः ।

ये दे॑वा दि॒वि ष्ठ ये पृ॑थि॒व्यां ये अ॒न्तरि॑क्ष॒ ओष॑धीषु प॒शुष्व॒प्स्व॑१॒॑न्तः ।
ते कृ॑णुत ज॒रस॒मायु॑र॒स्मै श॒तम॒न्यान् परि॑ वृणक्तु मृ॒त्यून् ॥ ३ ॥

ये । दे॒वाः । दि॒वि । स्थ । ये । पृ॒थि॒व्याम् । ये । अ॒न्तरि॑क्षे । ओष॑धीषु । प॒शुषु॑ । अ॒प्ऽसु । अ॒न्तः ।
ते । कृ॒णु॒त॒ । ज॒रस॑म् । आयु॑ः । अ॒स्मै । श॒तम् । अ॒न्यान् । परि॑ । वृ॒ण॒क्तु॒ । मृ॒त्यून् ॥ ३ ॥

हे देवाः अग्निवायुसूर्यप्रभृतयः देवताकाण्डे समाम्नाताः । द्युपृथिव्यादिस्थानभेदेषु विभज्य वक्ष्यमाणानां सर्वेषां देवानां साधारणोयं निर्देशः । 'आमन्त्रितस्य च' ( पा ८,

१. नयाथ पै १,१४,२. २. वैतु. मंपा. यनि. ३. °स्वं॑ B,B[h],D,R,S[m], ४. वृणक्त पै १,१४,३. ५. मृत्युं॰ पै [मूको.]

इत्याष्टमिकं सर्वानुदात्तत्वम्। ये सूर्यादयो यूयं दिवि द्युलोके स्थ भवथ जगदनुग्रहार्थं निवसथ। 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' (पा ६, १, १७१) इति दिव उत्तरस्याः[1] सप्तम्या उदात्तत्वम्। अस्तेर्लट्। मध्यमबहुवचने अदादित्वात् शपो लुक्। 'श्नसोरल्लोपः' (पा ६, ४, १११) इति अकारलोपः। 'यद्वृत्तान्नित्यम्' (पा ८, १, ६६) इति निघातप्रतिषेधः। तथा ये अग्न्यादयो देवाः यूयं पृथिव्याम् भूमौ। समनन्तरक्रियानुषङ्गः। स्थ भवथ। तथा ये वाय्वादयो यूयम् अन्तरिक्षे अन्तरिक्षलोके स्थ। प्रकाशप्रवर्षणपवनाद्युपकारनिमित्तत्वेन त्रिषु लोकेषु वर्तध्वम् *[?ध्वे] इत्यर्थः। यद्वा 'ये देवा दिव्येकादश स्थ पृथिव्याम् अध्येकादश स्थ। अप्सुषदो महिनैकादश स्थ' (तै १, ४, १०, १) इति मन्त्रप्रसिद्धाः स्थानत्रये वर्तमानास्त्रयस्त्रिंशद्देवा अत्र संबोध्यन्ते। तथा ओषधीषु व्रीहियवादिषु पशुषु गवादिषु अप्सु उदकेषु अन्तः मध्ये तत्तदभिमानित्वेन वर्तमाना ये यूयं स्थ। 'ऊडिदम्' (पा ६, १, १७१) इत्यादिना अप्शब्दात् परस्य सुप उदात्तत्वम्। अन्तर्शब्दः स्वरादिष्वन्तोदात्तः पठितः। संहितायां यणादेशे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा ८, २, ४) इत्यन्तर्शब्दाकारः स्वर्यते। ते सर्वे देवा यूयम् अस्मै आयुष्कामाय पुरुषाय जरसम् जराम्। जरापर्यन्तम् इत्यर्थः। 'जराया जरसन्यतरस्याम्' (पा ७, २, १०१) इति जरसादेशः। तथाविधम् आयुः जीवनं कृणुत कुरुत। भवत्प्रसादात् असौ शतसंवत्सरपरिमितम् आयुर्जीवतु इत्यर्थः। तदर्थम् अन्यान् कालमृत्युव्यतिरिक्तान् शतम्। अपरिमितनामैतत्। अपरिमितान् मृत्यून् मरणहेतुभूतान् ज्वरादिरूपान्। 'ये ते सहस्रम् अयुतं पाशा[2] मृत्यो मर्त्याय हन्तवे' (तैब्रा ३, १०, ८, २) इत्यादिमन्त्रप्रसिद्धान्[3] अपमृत्युविशेषान् परि वृणक्त परिवर्जयत। परमायुर्भङ्गकरान् अपमृत्यून् निवारयतेत्यर्थः। वृजी वर्जने। लोण्मध्यमबहुवचनादेशस्य तशब्दस्य 'तप्तनप्तनथनाश्च' (पा ७, १, ४५) इति तबादेशः। तस्य पित्त्वेन ङित्त्वाभावात् श्नस्य लोपाभावः। यद्वा शतमिति आयुःशब्देन संबध्यते। शतसंवत्सरपरिमितम् आयुः कुरुतेत्यर्थः।

येषां प्रयाजा उत वानुयाजा हुतभागा अहुतादश्च[4] देवाः।
येषां वः पञ्च प्रदिशो[5] विभक्तास्तान् वो[6] अस्मै[7] सत्रसदः कृणोमि ॥ ४ ॥

येषाम्। प्रऽयाजाः। उत। वा। अनुऽयाजाः। हुतऽभागाः। अहुतऽअदः। च। देवाः।
येषाम्। वः। पञ्च। प्रऽदिशः। विऽभक्ताः। तान्। वः। अस्मै। सत्रऽसदः। कृणोमि ॥ ४ ॥

प्रयाजाः। प्रधानयागात् प्रथमभाविनः समित्तनूनपादादयः[8] पञ्च यागाः प्रयाजाः। ते येषां देवानां स्वभूताः। 'अथ किंदेवताः प्रयाजानुयाजाः' इति प्रक्रम्य 'आग्नेया इति तु स्थितिः, भक्तिमात्रमितरत्' (या ८, २२) इत्यन्तेन यास्केन प्रपञ्चिताः

१. उत्तरस्य S', Kd. २. पाशमृत्यो S', Kd. ३. तु. पृ १५०, टि ४; वैतु. मंपा. यनि. ४. आहुता °Sm. ५. वयः पै १, १४, ४. ६. देवाः P. ७. अस्मे P. ८. पातादयः S', Kd.

प्रयाजदेवाः । ते चात्र येषाम् इति सर्वनाम्ना विवक्ष्यन्ते । 'प्रयाजान् मे अनुयाजांश्च केवलान् ऊर्जस्वन्तं हविषो दत्त भागम्' ( ऋ १०, ५१, ८ ) इति मन्त्रप्रसिद्धोऽग्निरेव वा विवक्षितः । अस्मिन् पक्षे येषाम् इति बहुवचनं पूजार्थम् । येषाम् इत्यत्र 'सावेकाचः' ( पा ६, १, १६८ ) इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्त्साववर्ण°' ( पा ६, १, १८२ ) इति प्रतिषेधः । प्रपूर्वाद् यजतेः 'अकर्तरि च कारके संज्ञायाम्' ( पा ३, ३, १९ ) इति घञ् । 'प्रयाजानुयाजौ यज्ञाङ्गे' ( पा ७, ३, ६२ ) इति कुत्वाभावो निपात्यते । 'थाथघञ्क्ताजबित्रकाणाम्' ( पा ६, २, १४४ ) इत्युत्तरपदान्तोदात्तत्वम् । उत वा अपि वा अनुयाजाः । अनु पश्चात् प्रधानयागानन्तरभाविनस्त्रयो यागा अनुयाजाः । ते च येषां देवानां स्वभूताः । प्रयाजशब्दवत् अनुयाजशब्दस्यापि पदस्वरप्रक्रिये वेदितव्ये । ये च अन्ये देवा हुतभागाः । हुतम् अग्नौ प्रास्तं चरुपुरोडाशादिकं हविः भागो येषां देवानां ते हुतभागा इन्द्रादयः । तथा ये च देवा अहुतादः । न हुतम् अहुतम् अग्नेरन्यत्र क्षिप्यमाणं हविरदन्ति भक्षयन्तीति अहुतादः बलिहरणादिदेवाः । अद भक्षणे इत्यस्माद् 'अदोऽनन्ने' ( पा ३, २, ६८ ) इति विट्प्रत्ययः । हे इन्द्रादयो देवाः येषाम् प्रसिद्धानां वः युष्माकं पञ्च पञ्चसंख्याकाः प्रदिशः प्रधानभूताः प्राच्याद्या दिशः विभक्ताः ईशितव्यत्वेन विभज्य स्थिताः । यद्वा 'पथ्यां स्वस्तिम् अयजन् प्राचीमेव तया दिशं प्राजानन्' ( तै ६, १, ५, २ ) इत्यादिश्रुतिप्रसिद्धाः पथ्या स्वस्तिः, अग्निः, सोमः, सविता, अदितिः इत्येतन्नामानो देवाः येषाम् इति यच्छब्देन विवक्षिताः । हे देवाः तान् उक्तान् सर्वान् वः युष्मान् अस्मै आयुष्कामस्य पुरुषस्य आयुर्वर्धनाद्युपकाराय सत्रसदः । सीदन्त्यस्मिन्निति सत्त्रम् सदनम् । तस्मिन् सीदतः संनिहितान् कृणोमि करोमि । षद्लृ विशरणगत्यवसादनेषु इत्यस्माद् अधिकरणे औणादिकस्त्रन् प्रत्ययः । तस्मिन्नुपपदे तस्मादेव धातोः 'सत्सूद्विष' ( पा ३, २, ६१ ) इत्यादिना कर्तरि क्विप् ।

इति द्वितीयं सूक्तम् ।

अत्र नित्यनैमित्तिककाम्यभेदेन द्वाविंशतिः सवयज्ञा विहिताः । ते च ब्रह्मौदनस्वर्गौदनचतुःशरावसवौदनसवशतौदनद्वयाजौदनपञ्चौदनब्रह्मास्यौदन *[ अति ] मृत्युसवानडुत्सवद्वयकर्कीपृश्निद्वयपौनःशिलपवित्रोर्वरऋषभवशाशालाबृहस्पतिसवाख्याः । तत्र चतुःशरावौदनसवे 'आशानाम्' इति सूक्तं विनियुक्तम् । तत्र तेन निरुप्तहविरभिमर्शनम्, संपातम्, दातृवाचनम्, दानं च कुर्यात् । यद् आह कौशिकः — ' "आशानाम्' इति चतुःशरावम्" ( कौसू ६४, १ ) इति । 'निरुप्तं सूक्तेनाभिमृशति' ( कौसू ६८, ३ ) इति । 'सूक्तेन पूर्वं संपातवन्तं करोति' ( कौसू ६३, १९ ) इति । 'तस्मिन्नन्वारब्धं दातारं वाचयति । तन्त्रं सूक्तं पच्छः' ( कौसू ६८, २४; २५ ) इति । 'सूक्तेनाभिमन्त्र्य दद्यात्' ( कौसू ६३, २० ) इति च ।

१. सीदंन्त्य° S', Kd. २. °पौनसिल° S', Kd. ३. मृग्यत इति S',Kd. ४. तन्त्रं सूक्तं Bl.

तथा अनेनैव सूक्तेन धूमकेतुरूपाद्भुतदर्शने दिग्देवताकस्य बहुरूपस्य अजस्य अवदानानि तद्देवताकं चरुं च प्रत्यृचं जुहुयात्। तथा च सूत्रम्—'अथ यत्रैतद् धूमकेतुः सप्तर्षीन् उपधूपयति तद् अयोगक्षेमाशङ्कम् इत्युक्तम्। पञ्च पशवस्तायन्ते' इति प्रक्रम्य " 'आशानाम्' इति दैवास्य" (कौसू १२७, १-६) इति।

तद्वदेव ग्रामनगरदेशप्राकाराद्यवदरणे 'अग्रामस्त्वा' इति तृतीयावर्जम् अनेन सूक्तेन पुरोडाशानां पाषाणानां च निखननं कुर्यात्। 'आशापालीयं तृतीयावर्जम्' इति प्रक्रम्य 'पुरोडाशान् अश्मोत्तरान् अन्तःस्रक्तिषु निदधाति। उभयान् संपातवतः' (कौसू ३८, ११-१४) इति हि सूत्रितम्।

अस्य प्रथमयर्चा सर्वरोगभैषज्ये आप्लावनावसेचनपायनादिकं कुर्यात्। सूत्रं च—'ओषधिवनस्पतीनामनुक्तान्यप्रतिषिद्धानि भैषज्यानाम्। अंहोलिङ्गाभिः' (कौसू ३२, २६; २७) इति। अत्र अंहोलिङ्गाभिरिति 'आशानाम् आशापालेभ्यः' (अ १, ३१, १) इत्येका, 'अग्नेर्मन्वे' (अ ४, २३-२९) इति सप्त सूक्तानि, 'या ओषधयः सोमराज्ञीः' (अ ६, ९६, १) इत्येका, 'वैश्वानरो न आगमत्' (अ ६, ३५, २) इत्येका, 'शुम्भनी द्यावापृथिवी' (अ ७, ११७, १) इत्येका, 'यदर्वाचीनम्' (अ १०, ४, २२) इत्येका, 'मुञ्चन्तु मा' (अ ११, ८, ७), 'भवाशर्वौ विदम्' (अ ११, ८, ९), 'या देवीः पञ्च' (अ ११, ८, २२), 'यन्मातली रथ°' (अ ११, ८, २३) इत्येताभिश्चतसृभिर्वर्जितम् 'अग्निं ब्रूमः' (अ ११, ८) इत्यर्थसूक्तम्। अयं सप्तप्रतीकः अंहोलिङ्गगणो विवक्षितः।

अश्वमेधे उत्सृष्टम् अश्वम् 'आशानाम्' इति सूक्तेन ब्रह्मा अनुमन्त्रयते। उक्तं वैताने 'आशापालीयेनोत्सृष्टं संवत्सरम्' (वैताश्रौ ३६, २०) इति।

तथा 'अंहोलिङ्गानाम् आपोभोजनहवींषि' (कौसू ५८, २४) इत्यादावपि एतद् द्रष्टव्यम्।

अद्भुतमहाशान्तौ दिग्देवताक आद्यो मन्त्रः। उक्तं शान्तिकल्पे—'अथातोऽद्भुतमहाशान्तौ दिशो यजते विदिशो यजते' इत्यारभ्य 'आशानाम्' (शाक १४, १) इति।

'स्वस्ति मात्रे' (अ १, ३१, ४) इत्यन्त्यया ऋचा सर्वस्वस्त्ययनकामः रात्रौ उपस्थानं कुर्यात्। " 'स्वस्ति मात्रे' इति निश्युपतिष्ठते" (कौसू ५०, ११) इति सूत्रम्।

आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः।
इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् ॥ १ ॥

आशानाम्। आशाऽपालेभ्यः। चतुःऽभ्यः। अमृतेभ्यः।
इदम्। भूतस्य। अधिऽअक्षेभ्यः।। विधेम। हविषा। वयम् ॥ १ ॥

---

१. दिश्यस्य Bl. २. पाषाणिनां S', Kd. ३. सर्वरोगभैषज्यो S', Kd. ४. नामुक्ताप्र° S', Kd., नामनूक्तान्य° Bl. ५ आशानामाशापालीयेन S', Kd. ६. °ताकस्याद्यो S', Kd. ७. स्वंसयया S', Kd.

आशानाम् प्राच्यादिदिशाम् । 'आशाया अदिगाख्या चेत्' ( फि १, १९ ) इति अन्तोदात्तत्वस्य पर्युदासाद् आद्युदात्तता । आशापालेभ्यः । आशाः पालयन्ति रक्षयन्तीति आशापालाः । 'कर्मण्यण्' ( पा ३, २, १ ) इति अण्प्रत्ययः । कृदुत्तरपद-प्रकृतिस्वरत्वेन अन्तोदात्तता । अत्र आशापालेभ्य इति समस्तेन पदेन स्वामित्वमात्रं विवक्षितम् । आशानाम् इति षष्ठ्यन्तेन ईशितव्यस्य बहुत्वम् अभिधीयत इति न पौनरुक्त्यम् । तेभ्यः चतुर्भ्यः चतुःसंख्याकेभ्यः इन्द्रयमादिभ्यः । 'झल्युपोत्तमम्' ( पा ६, १, १८० ) इति उपोत्तमस्य अच उदात्तत्वम् । अमृतेभ्यः । मृतं मरणम् । भावे निष्ठा । तद् न विद्यते येषां ते तथोक्तास्तेभ्यः । 'नञो जरमरमित्रमृताः' ( पा ६, २, ११६ ) इत्युत्तरपदाद्युदात्तत्वम् । भूतस्य सत्तां प्राप्तस्य स्थावरजङ्गमात्मकस्य जगतः अध्यक्षेभ्यः अधिपतिभ्यः इन्द्रादिभ्यः इदम् इदानीं चतुःशरावसवयागकाले हविषा ओदनेन मन्त्रसंस्कृतेन विधेम परिचरेम । 'विधतिः परिचरणकर्मा' ( तु. निघ ३, ५ ) । विध विधाने इति तुदादौ च पठ्यते । विकरणस्वरेण मध्योदात्तत्वम् । पादादित्वाद् निघाताभावः ।

य आशानामाशापालाश्चत्वार स्थन देवाः ।
ते नो निर्ऋत्याः पाशेभ्यो मुञ्चतांहसोअंहसः ॥ २ ॥

ये । आशानाम् । आशाऽपालाः । चत्वारः । स्थन । देवाः ।
ते । नः । निःऽऋत्याः । पाशेभ्यः । मुञ्चत । अंहसःऽअंहसः ॥ २ ॥

हे देवाः इन्द्रादयः चत्वारः चतुःसंख्याका ये प्रसिद्धा यूयम् आशानाम् दिशाम् आशापालाः अधिपतयः स्थन भवत । अस भुवि इत्यस्मात् लोण्मध्यमपुरुषबहुवचना-देशस्य तशब्दस्य 'तप्तनतनथनाश्च' ( पा ७, १, ४५ ) इति तनादेशः । 'श्नसोरल्लोपः' ( पा ६, ४, १११ ) इत्यकारलोपः । ते यूयं नः अस्मान् हविषा युष्मान् प्रीणयितॄन् निर्ऋत्याः । निर्ऋतिः आर्तिकरी पापदेवता । तस्याः संबन्धिभ्यः पाशेभ्यः मरणहेतुभ्यः तथा अंहसोअंहसः निर्ऋतिपाशव्यतिरिक्ताद् मरणहेतुभूताद् अन्यस्मात् पापात् मुञ्चत मोचयत । मुचॢ मोक्षणे । 'शे मुचादीनाम्' ( पा ७, १, ५९ ) इति नुम् ।

अस्रामस्त्वा हविषा यजाम्यश्लोणस्त्वा घृतेन जुहोमि ।
य आशानामाशापालस्तुरीयो देवः स नः सुभूतमेह वक्षत् ॥ ३ ॥

अस्रामः । त्वा । हविषा । यजामि । अश्लोणः । त्वा । घृतेन । जुहोमि ।
यः । आशानाम् । आशाऽपालः । तुरीयः । देवः । सः । नः । सुऽभूतम् । आ । इह । वक्षत् ॥ ३ ॥

१. पादेन S',Kd. २. वैतु. मंपा. यनि. ३. अस्राम° K,Bh,R,Sm,S,V,E[2],I,O,OP,K,[2] Kp. ४. अश्लोणस्ते पै १,२२,३. ५. विधेयमश्रामस्ते पै. ६. श्लोण° V. ७. तुर्यो पै.

अत्र उत्तरार्धे वक्ष्यमाणो देवः संबोधनीयः । हे धनद त्वा त्वाम् अभिमतधनादिसिद्ध्यर्थम् अश्रामैः अश्रमः । श्रमु तपसि खेदे च । अस्माद् घञि 'अत उपधायाः' (पा ७,२,११६) इति प्राप्ताया वृद्धेः 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (पा ७, ३, ३४) इति निषेधाभावश्छान्दसः । श्रमरहितः शरीरप्रयासम् अननुसंदधानः सन् हविषा चर्वादिरूपेण यजामि पूजयामि । तथा हे देव त्वा त्वाम् उद्दिश्य अश्रोणैः श्रोणाख्यव्याधिविशेषरहितः सन् घृतेन आज्येन जुहोमि । घृतेनेति । 'तृतीया च होश्छन्दसि' (पा २, ३, ३) इति तृतीया । तम् अभिमतं देवं दर्शयति—आशानाम् दिशाम् आशापालः स्वामी तुरीयः पूर्वोदीरितेन्द्रादिदिक्पालापेक्षया चतुर्थः । 'चतुरश्छयतावाद्यक्षरलोपश्च' (पावा ५,२,५१) इति छप्रत्ययः तत्संनियोगेन चकारलोपश्च । 'आयनादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थम्' (पाम ७, १, २) इति वचनात् प्रत्ययस्वरेण ईकार उदात्तः । एवंभूतो यः प्रसिद्धो देवः धनदाख्यदेवोऽस्ति स देवः नः अस्माकं सुभूतम् सुष्ठु प्रभूतं सुवर्णरजतादिरूपं धनम् इह अस्मिन् कर्मणि संनिहितः गृहे वा आ वक्षत् आवहतु प्रापयतु । मया दत्तेन हविराज्यादिना प्रीतः सन् मह्यं यथेष्टं धनम् आहृत्य प्रयच्छतु इत्यर्थः । वह प्रापणे । अस्मात् लेटि अडागमः । 'सिब्बहुलं लेटि' (पा ३, १, ३४) इति सिप् । ततः 'हो ढः' (पा ८, २, ३१) इति ढत्वम् । 'षढोः कः सि' (पा ८, २, ४१) इति कत्वम् । 'तिङ्ङतिङः' (पा ८, १, २८) इति निघातः ।

स्वस्ति मात्र उत पित्रे नो[1] अस्तु स्वस्ति गोभ्यो[2] जगते पुरुषेभ्यः[3] ।
विश्वं सुभूतं सुविदत्रं नो अस्तु ज्योगेव दृशेम सूर्यम् ॥ ४ ॥

स्वस्ति । मात्रे । उत । पित्रे । नः । अस्तु । स्वस्ति । गोभ्यः । जगते । पुरुषेभ्यः ।
विश्वम् । सुऽभूतम् । सुऽविदत्रम् । नः । अस्तु । ज्योक् । एव । दृशेम । सूर्यम् ॥ ४ ॥

आत्मनोऽभिलषितं धनादिकं संप्रार्थ्य स्वकीयानां मात्रादीनां कुशलम् आशास्ते । 'एभ्यो माता गरीयसी' (यास्मृ १,३५) इति स्मरणात् पित्रादिभ्यः श्रैष्ठ्यम् अभिप्रेत्य मातुः प्रथमतो निर्देशः । मात्रे स्वकीयायै जनन्यै । 'ऋन्नेभ्यः°' (पा ४,१,५) इति प्राप्तस्य ङीपो 'न षट्स्वस्रादिभ्यः' (पा ४,१,१०) इति प्रतिषेधः । 'नमःस्वस्तिस्वाहा°' (पा २,३,१६) इति चतुर्थी । 'उदात्तयणो हल्पूर्वात्' (पा ६,१,१७४) इति विभक्तेरुदात्तत्वम् । स्वस्ति क्षेमः अस्तु । 'स्वस्तीत्यविनाशिनाम । अस्तिरभिपूजितः सु अस्तीति' इति हि यास्कः (३,२१) । उत अपि च नः अस्माकं पित्रे जनकाय स्वस्त्यस्तु भवतु । उपलक्षणम् एतद् अन्येषामपि पुत्रपत्न्यादीनाम् । तथा गोभ्यः पशुभ्यः स्वस्त्यस्तु । 'सावेकाचस्तृतीयादि°' (पा ६,१,१६८) इति प्राप्तस्य विभक्त्युदा-

---

१. वैतु. मंपा. यनि. २. मजुलं° S', Kd. ३. णो' H, K[2]. ४. °भ्य उत पै १, २२,४. ५. पूरुषे° पै. ६. दृशये पै.

सत्वस्य 'नगोश्वन्त्सावर्ण°' ( पा ६,१,१८२ ) इति प्रतिषेधः। तथा पुरुषेभ्यः स्वकीयेभ्यो भृत्यादिभ्यः स्वस्त्यस्तु। किं बहुना जगते सर्वस्मै लोकाय स्वस्त्यस्तु। मात्रादीनां स्वस्त्यस्तु इत्युक्तम् तदेव विशिनष्टि—नः अस्माकं संबन्धि विश्वम् सर्वम् उक्तं मात्रादिकं सुभूतम् शोभनधनोपेतं सुविदत्रम् शोभनज्ञानयुक्तं च अस्तु भवतु। 'सुविदत्रः कल्याणविद्यः' इति हि यास्कः ( ६,१४ )। यद्वा सुभूतम् सु शोभनं भूतं भवनं यस्य तत् तथोक्तम्। सुविदत्रम्। विद्यते लभ्यत इति विदत्रम् धनम्। विद्लृ लाभे, विद ज्ञाने इत्यस्माद् वा 'सुविदेः' कत्रन्' ( पाउ ३,१०८ ) इति कत्रन् प्रत्ययः। शोभनं विदत्रं धनं यस्य तत् तथोक्तम्। यद्वा सुभूतम् सुसमृद्धं विश्वम् सर्वं सुविदत्रम् धनं नोस्तु। सुविदत्रशब्दं यास्कस्तु द्वेधा व्युत्पादयामास—'सुविदत्रं धनं भवति विन्दतेर्वा एकोपसर्गाद् ददातेर्वा स्याद् द्व्युपसर्गात्' ( या ७,९ ) इति। तथा उक्तमात्रादिसहितस्य आत्मनश्च दीर्घम् आयुः प्रार्थयते—ज्योगेव चिरकालमेव ...... पर्यन्तं सूर्यम् आदित्यं दृशेम पश्येम। दृशिर् प्रेक्षणे। 'लिङ्याशिष्यङ्' ( पा ३,१,८६ ) इत्यस्य स्थाने 'दृशेरग्व क्व्यः' ( पावा ३,१,८६ ) इति अक्प्रत्ययः। कित्त्वात् लघूपधगुणाभावः।

इति षष्ठेनुवाके तृतीयं सूक्तम्।

'इदं जनासः' इति सूक्तेन वन्ध्यायाः पुत्रप्रजननकर्मणि तस्याः शान्त्यौषधिसहितोदकाभिषेकम्, पुरोडाशकन्दुकालंकारप्रदानं च कुर्यात्। सूत्रितं हि—"'इदं जनासः' इत्यस्यै शिंशपाशाखासु उदकान्ते शान्ता अधिशिरोवसिञ्चति। [ आत्रजितायै ]" ( कौसू ३४,१;२ ) इति।

तथा अनेन सूक्तेन पुष्टिकामः संपत्कामो वा द्यावापृथिव्योर्यागम् उपस्थानं वा कुर्यात्। आह कौशिकः—"'इदं जनासः' इति द्यावापृथिव्यौ पुष्टिकामः। संपत्कामः" ( कौसू ५९,३;४ ) इति।

अत्र आद्या दर्शपूर्णमासयोः पत्न्यञ्जलौ उदपात्रनिनयने विनियुक्ता। सूत्रं च—"बर्हिषि पत्न्यौञ्जलौ निनयति 'समुद्रं वः प्र हिणोमि' ( अ १०,५,२३ ) इति 'इदं जनासः' ( अ १,३२,१ ) इति वा" ( कौसू ६,१७ )।

इदं जनासो विदथं महद् ब्रह्म वदिष्यति।
न तत् पृथिव्यां नो दिवि येन प्राणन्ति वीरुधः ॥ १ ॥

इदम्। जनासः। विदथं। महत्। ब्रह्म। वदिष्यति।
न। तत्। पृथिव्याम्। नो इति। दिवि। येन। प्राणन्ति। वीरुधः ॥ १ ॥

जनासः हे जनाः। 'आज्जसेरसुक्' ( पा ७,१,५० )। ज्ञातुकामा यूयम् इदम् वक्ष्यमाणं वस्तु विदथ जानीथ। विद ज्ञाने। लटि मध्यमबहुवचने व्यत्ययेन शः।

१. सुविदः S'. २. °मनः स्वदोर्घ° S', Kd. ३. संत्योषधि° S', Kd. ४. °कंदुकालंकालप्र° S', Kd. ५. तु. Bl., दा, के. ∠°स्न्याः ञ°; (वैतु. शंपा. °स्न्यञ°) ६. विदथं पै १,२३,१., वैप १ द्र. ७. यतः प्राणन्तु पै. ८. लिटि S', Kd.

किं तद् इत्यत आह—मन्त्रद्रष्टा ऋषिः महत् महत्त्वगुणयुक्तं व्यापकं ब्रह्म ब्रह्मणः प्रथमकार्यम्। श्रूयते हि—'आपो वा इदम् अग्रे सलिलम् आसीत्' (तै ७,१,५,१) इति। स्मर्यते च—

'अप एव ससर्जादौ तासु वीर्यमपाकिरन्[1] इति' ('मस्मृ १,८)।

तादृशं ब्रह्म वदिष्यति कथयिष्यति। तस्योदकस्य प्रतिनियतं निवासस्थानं वक्तुं लोकप्रतीतिसिद्धं स्थानम् अपवदति—तत् उदकात्मकं ब्रह्म पृथिव्याम् भूमौ न। तिष्ठतीति शेषः। वृष्ट्यूर्ध्वभाविनो जलस्यैव भूमौ अवस्थानम्। ननु[2] लोकप्रतीतिसिद्धं द्युलोक एवेत्यत आह—नो नैव दिवि द्युलोके। तिष्ठतीति शेषः। तर्हि[3] संभावितो[4] लोकद्वये अविद्यमानस्य तस्य खपुष्पकल्पनेत्यत आह—येन उक्तेन उदकेन वीरुधः विरोहणशीलाश्च कौशिकेनोक्ताश्चित्याद्या अन्याश्चौषधयः प्राणन्ति जीवन्ति। उदकम् अन्तरेण अनुपपद्यमानं वीरुधां जीवनं तत्सत्तायाः कल्पकम् इति तस्य नासत्त्वम् इत्यर्थः। श्वस प्राणने। अन च। अदादित्वात् शपो लुक्। 'अनितेः' (पा ८,४,१९) इति णत्वम्। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः।

अ॒न्तरि॑क्षं[5] आसां॒ स्थाम॑[6] श्रान्त॒सदा॑मिव।
आ॒स्थान॑म॒स्य॑[7] भू॒तस्य॑ वि॒दुष्टद् वे॒धसो॑ न वा॑ ॥ २ ॥

अ॒न्तरि॑क्षे। आ॒साम्। स्थाम॑। श्रा॒न्त॒सदा॑म्ऽइव।
आ॒ऽस्थान॑म्। अ॒स्य। भू॒तस्य॑। वि॒दुः। तत्। वे॒धस॑ः। न। वा॒ ॥ २ ॥

प्रतिपादितप्रकारेण उदकसत्ताया अवश्यंभावात् लब्धसत्ताकस्य च वस्तुनः क्वचिद् अवस्थाननियमात् अस्यापि केनचित् निवासस्थानेन भवितव्यम् इत्याशङ्क्य विवक्षितम् असाधारणं स्थानं दर्शयति—अन्तरिक्ष इति। आसाम् वीरुधां स्थाम स्थानं स्थितिहेतुभूतम् उदकम् अन्तरिक्षे द्यावापृथिव्योर्मध्यवर्तिनि लोके। वर्तत इति शेषः। स्थामेति। ष्ठा गतिनिवृत्तौ। अस्माद् मनिन्प्रत्ययः। यद्वा आसाम् वीरुज्जीवनहेतुभूतानाम् अपां स्थाम स्थानम् अन्तरिक्षे अन्तरिक्षलोके। आह च भगवान् पतञ्जलिर्महाभाष्ये—'अन्तरिक्षे महत् समुद्रं विततम् अस्ति' इति। श्रूयते च—'अस्मिन् महत्यर्णवेऽन्तरिक्षे' (तै ४,५,११,१) इति। तत्र दृष्टान्तः—श्रान्तसदामिव। तपसा कृच्छ्रचान्द्रायणादिना श्रान्ताः सन्तः सीदन्ति निवसन्ति सुखोपभोगार्थम् इति श्रान्तसदः यक्षगन्धर्वादयः। षद्लृ विशरणगत्यवसादनेषु। अस्मात् 'सत्सूद्विष' (पा ३,२,६१) इत्यादिना क्विप्। तेषां यथा अन्तरिक्षं स्थानम्। 'यक्षगन्धर्वाप्सरोगणसेवितम् अन्तरिक्षम्' (नृपू १,२) इति श्रुतेः। तथेति पूर्वेण

१. 'मवासृजत् इत्युपलभ्यमानः पाठः. २. नवास° S',Kd. ३. नर्कुं S', Kd. ४. संभावितो S', Kd. ५. °क्षं पै १,२३,२. ६. स्थामं पै. ७. °मस्य° B,Bh,V.

संबन्धः । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' ( पावा २,१,४ ) इति समासः। लोकान्तरगतत्वेन तद् उदकं भूलोकनिवासिनाम् अनुपकारकम् इत्याशङ्क्य आह – आस्थानम् इति। अस्य अस्मिन् लोके परिदृश्यमानस्य भूतस्य लब्धसत्ताकस्य स्थावरजङ्गमात्मकस्य जगतः आस्थानम्। आ समन्तात् तिष्ठन्ति जीवन्ति अनेनेति आस्थानम्। करणे ल्युट्। वृष्टिद्वारा जगज्जीवनकारणम् इत्यर्थः। तस्य दुर्ज्ञानत्वम् आह। तत् कारणभूतम् उदकं वेधसः विधातारो मन्वादयः विदुः जानन्ति न वा विदुः न वा जानन्ति। सर्वस्रष्टॄणां तेषामपि संदिग्धं किल तत्, किमु वक्तव्यम् अर्वाचीनानां मनुष्याणां दुर्ज्ञेयमिति इत्यर्थः। विदुष्टद् इति। 'युष्मत्तत्ततक्षुः-ष्वन्तःपादम्' ( पा ८,३,१०३ ) इति विसर्जनीयस्य षत्वम्।

यद् रोद॑सी॒ रेज॑माने॒ भूमि॑श्च नि॒रत॑क्षतम्[१] ।
आ॒र्द्रं तद॒द्य स॒र्वदा॑ स॒मु॒द्रस्ये॑व स्रो॒त्याः ॥ ३ ॥

यत् । रोद॑सी॒ इति॑ । रेज॑माने॒ इति॑ । भूमिः॑ । च॒ । निः॒ऽअत॑क्षतम् ।
आ॒र्द्रम् । तत् । अ॒द्य । स॒र्वदा॑ । स॒मु॒द्रस्य॑ऽइव । स्रो॒त्याः ॥ ३ ॥

तस्योदकस्य उत्पत्तिप्रकारम् आह। रोदसी हे[३] द्यावापृथिव्यौ रेजमाने कम्पमाने जलम् उत्पादयितुं व्याप्रियमाणे। रेजृ कम्पने इति धातुः। भ्यसते रेजत इति भयवेपनयोः इति यास्कः ( ३,२१ )। भूमिः चकारात् द्यौश्च युवां यत् प्रागुदीरितम् उदकं निर-तक्षतम् उदपादयतम्। सृष्टस्योदकस्य सर्वदा धारणात् प्राधान्यं सूचयितुं भूमेः अवयुत्यापि निर्देशः। तक्षू त्वक्षू तनूकरणे । अस्मात् लङि मध्यमद्विवचने रूपम्। 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति निघातप्रतिषेधः । तत् उदकम् अद्य इदानीं वर्तमानकाले सर्वदा सर्वस्मिन् काले आर्द्रम् आर्द्रगुणयुक्तं शोषरहितम्। वर्तत इति शेषः। वृष्टिद्वारा उदके निर्गतेपि पुनरपि अन्तरिक्षगतम् उदकम् अनुपक्षीणं वर्तत इत्यर्थः। तत्र दृष्टान्तः— समुद्रस्येव स्रोत्याः — यथा समुद्रगामिन्यो नद्यः अक्षीणोदका वर्तन्ते तद्वद् इत्यर्थः। 'स्रोतसो विभाषा ड्यड्ड्यौ' ( पा ४, ४, ११३ ) इति ड्यप्रत्ययः। डित्त्वात् टिलोपः।

विश्व॑म॒न्याम॑भी॒वार॒ तद॒न्यस्या॒मधि॑ श्रि॒तम् ।
दि॒वे च॑ वि॒श्ववे॑दसे[५] पृथि॒व्यै चा॑क॒रं नमः॑ ॥ ४ ॥

विश्व॑म् । अ॒न्याम् । अ॒भि॒ऽवार॑ । तत् । अ॒न्यस्या॑म् । अधि॑ । श्रि॒तम् ।
दि॒वे । च॒ । वि॒श्वऽवे॑दसे । पृथि॒व्यै । च॒ । अ॒क॒र॒म् । नमः॑ ॥ ४ ॥

१. दुर्ज्ञेयत्वमिति S', Kd. २. °क्षताम् पै १,२३,३. ३. वैतु. मंपा. वनि. ४. °न्याभि ववार विश्वमन्य° पै १,२३,४., वैप १,३७० k द्र., न्याऽभिवावृधे तैब्रा ३,७,१०,३. आपश्रौ ९,१४,२. ५. विश्वकर्मणे तैब्रा. आपश्रौ.

विशिष्टकारणजन्यत्वेन आप्यं श्रैष्ठ्यं सूचयितुं कारणत्वेन उक्ते द्यावापृथिव्यौ प्रशंसति । विश्वम् । कर्मणि षष्ठ्यभावश्छान्दसः विश्वस्य अन्याम् ।'सुपां सुपो भवन्ति' (पावा ७,१,३९) इति सोः अम् आदेशः । अन्या द्यौः अभीवारः अभितो वरणं छादनम् । भवतीति शेषः । वृञ् वरणे । वृणोतेराच्छादने' (पा ३,३,५४) इति अभिपूर्वादपि व्यत्ययेन घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा ६,३,१२२) इति पूर्वपदस्य दीर्घः । अथवा विश्वम् कृत्स्नं जगत् अन्याम् अन्यथा दिवा । व्यत्ययेन द्वितीया । अभीवारः अभिवृतम् । कर्मणि घञ् । आच्छन्नम् इत्यर्थः । लिङ्गव्यत्ययः । यद्वा । विश्वम् कर्तृभूतं जगत् अन्याम् दिवम् उद्दिश्य अभीवारः । अभितः संभजनयुक्तं वृष्टिविषयप्रार्थनायुक्तम् अभूत् । वृङ् संभक्तौ । भावे घञ् । तद् उक्तं विश्वम् अन्यस्याम् पृथिव्याम् अधि श्रितम आश्रितं वर्तते । दिवे उक्तलक्षणाय द्युलोकाय विश्ववेदसे । वेद इति धननाम । विश्वस्य जगतो धनभूताय । वृष्टिप्रदानेन सर्वधनहेतुत्वाद् धनात्मकत्वम् । यद्वा वेद इति ज्ञाननाम । विश्वं विश्वविषयं ज्ञानं यस्याः सा तथोक्ता तस्यै । तथा पृथिव्यै विश्वाधारभूतायै । परस्परसमुच्चयार्थौ चकारौ । नमः । अन्ननामैतत् । हविर्लक्षणम् अन्नं नमस्कारं वा अकरम् करोमि । 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति करोतेर्वर्तमाने लुङ् । 'कृमृदृरुहिभ्यश्छन्दसि' (पा ३,१,५९) इति च्लेः अङ् आदेशः । 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातः ।

इति षष्ठेऽनुवाके चतुर्थं सूक्तम् ।

'हिरण्यवर्णाः' इति सूक्तस्य बृहद्गणे, लघुगणे, अपां सूक्तेषु च पाठात् तेषां यत्रयत्र विनियोगस्तत्र अस्य सूक्तस्य विनियोगोऽनुसंधेयः । गणस्वरूपसूत्रं पूर्वमेव उदाहृतम् (अ १,४) ।

तथा अनेन सूक्तेन अर्थोत्थापनकर्मणि 'अम्बयो यन्ति' (अ १, ४) इति सूक्तोक्तानि कर्माणि कुर्यात् ।

तथा गोदानाख्ये संस्कारकर्मणि वपनानन्तरम् अनेन सूक्तेन माणवकं स्नापयेत् । सूत्र्यते हि — "अथैनम् उप्तकेशश्मश्रुं[1] कृत्तनखम् आप्लावयति 'हिरण्यवर्णाः' इत्येतेन सूक्तेन" (कौसू ७, ५) इति ।

तथैव मधुपर्के पाद्योदकाभिमन्त्रणे च एतत् सूक्तम् । "अथोदकम् आहारयति पाद्यं भो इति । 'हिरण्यवर्णाभिः' (अ १,३३) प्रतिमन्त्र्य" (कौसू ९०,८;९) इति सूत्रितम् ।

तद्वदेव अनुदकेदेशे उदकप्रादुर्भावलक्षणे अद्भुते अनेन सूक्तेन आज्यहोमः कार्यः । सूत्रितं हि — 'अथ यत्रैतद् अनुदक उदकोन्मीलो भवति 'हिरण्यवर्णाः' इत्यपां सूक्तैर्जुहुयात् । सा तत्र प्रायश्चित्तिः" (कौसू १२१,१;२) इति ।

१. वैतु. मंपा. यनि. २. यस्य स S',Kd. ३. °श्मश्रुनिकृत्तनख° S',Kd. ४. °ककेश. S', Kd.

उदकपूर्णकलशभङ्गे नवकलशम् आहृत्य तत्र अनेन सूक्तेन उदकम् अभिमन्त्र्य पूरयेत् । "अथ यत्रैतत् कुम्भ उदधानः सक्तुधानी वा उखा वा अनिङ्गिता विकसति' इति प्रक्रम्य सूत्रितम्—अन्यं कृत्वा ध्रुवाभ्यां दृंहयित्वा । तत्र 'हिरण्यवर्णाः' इत्युदकम् आसेचयेत्" (कौसू १३६,१-८) इति ।

पुष्याभिषेके कलशाभिमन्त्रणेऽपि एतत् सूक्तम् । तद् उक्तं परिशिष्टे—

'सावित्र्युभयतः कुर्यात् शं-नो-देवी तथैव च ।

हिरण्यवर्णाः सूक्तं च अनुवाक्यायमेव च' ( अप ५,२,४ ) इति ॥

**हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्वग्निः ।**
**या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥ १ ॥**

हिरण्यऽवर्णाः । शुचयः । पावकाः । यासु । जातः । सविता । यासु । अग्निः ।
याः । अग्निम् । गर्भम् । दधिरे । सुऽवर्णाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु ॥ १ ॥

हिरण्यवर्णाः हितरमणीयवर्णाः हिरण्यसदृशवर्णा वा, हिरण्यस्य वर्ण इव वर्णो यासां तास्तथोक्ताः । 'सप्तम्युपमान' (पावा २,२,२४) इत्यादिना बहुव्रीहिः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा ६,२,१) इति पूर्वपदप्रकृतिस्वरत्वेन आद्युदात्तत्वम् । शुचयः शुद्धाः, अत एव पावकाः अन्येषां स्नानपानादिना शोधयित्र्यः । 'प्रत्ययस्थात् कात् पूर्वस्य' ( पा ७,३,४४ ) इत्यादिना प्राप्तस्य इत्वस्य 'पावकादीनां छन्दस्युपसंख्यानम्' ( पावा ७,३,४५ ) इति प्रतिषेधः । अपां स्वरूपपर्यालोचनया शुद्धिहेतुताम् अभिधाय शोधकानां सवित्रादीनां जन्महेतुत्वेनापि तां समर्थयते—यासु इति । यासु अप्सु सविता सर्वस्य प्राणिजातस्य प्रेरक आदित्यो जातः प्रादुर्भूतः । प्रत्यहं हि समुद्रात् सूर्य उद्यन् दृश्यते तदपेक्षोऽयं निर्देशः । जनी प्रादुर्भावे । 'श्वीदितो निष्ठायाम्' ( पा ७,२,१४ ) इति इट्प्रतिषेधः । 'जनसनखनां सञ्झलोः' ( पा ६, ४,४२ ) इति आत्वम् । तथा यासु अप्सु मेघस्थासु सामुद्रीषु च अग्निः वैद्युतवाडवरूपेण जात इति संबन्धः । गर्भरूपेण शुचिना अग्निना नित्यसंबन्धादपि अपां पूतताम् आह—या अग्निम् इति । याः सुवर्णाः शोभनवर्णा आपः अग्निम् अङ्कनादिगुणयुक्तं देवं गर्भं दधिरे गर्भत्वेन धारयन्ति । तथा च निगमः—'अग्ने गर्भो अपाम् असि' ( तै ४,२,३,३ ) इति । डुधाञ् धारणपोषणयोः । 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ) इति वर्तमाने लिट् । बहुवचने आलोपे कृते तस्य 'द्विर्वचनेऽचि' ( पा १,१,५९ ) इति स्थानिवत्त्वाद् द्विर्वचनम् । इरेचश्चित्त्वाद् अन्तोदात्तत्वम् । 'यद्वृत्तान्नित्यम्' ( पा

१. सूक्ताधानीवोखावांनं गता S',Kd. २. कश्यपो° त ५,६,१,१ मै २,१३,१ पै १,२५,१. ३. यास्विन्द्रः तै., मै., पै. ४. विरूपास्ता तै. ५. स्योना P², J, K. ६. °पानादिना S',Kd. ७. °लोचनयाशुद्धिहेतुकाता° S',Kd. ८. रूपेणाशु° S' Kd. ९. अवर्णा शोभनवर्णा वा आपः S',Kd.

८,१,६६ ) इति निघातप्रतिषेधः । ताः उदीरितलक्षणाः सर्वा आपः नः अस्माकम् अवसेकादिना कर्मणा शम् रोगादिशमनहेतवः स्योनाः । सुखनामैतत् । सुखकारिण्यश्च भवन्तु ।

**यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् ।**
**या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥ २ ॥**

यासाम् । राजा । वरुणः । याति । मध्ये । सत्यानृते इति सत्यऽअनृते । अवऽपश्यन् । जनानाम् ।
याः । अग्निम । गर्भम् । दधिरे । सुवर्णाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु ॥ २ ॥

आप एव स्तूयन्ते । राजा राजमानो वरुणः एतत्संज्ञः पापिनो निग्रहकर्ता देवः यासाम् अपां मध्ये मध्यभागे । समुद्रमध्य इति यावत् । तत्र स्थित्वा [जनानां] सत्यानृते । सत्यं यथार्थभाषणम्, तद्विपरीतम् अनृतम् । उभे अवपश्यन् तत्कर्तुर्निग्रहार्थम् अवयुत्य परस्परसांकर्यपरिहारेण जानन् याति गच्छति पाशहस्तस्तत्रतत्र संनिधत्ते । तथा च तैत्तिरीयकम्—'अनृते खलु वै क्रियमाणे वरुणो गृह्णाति' ( तैब्रा १,७,२,६ ) इति । अन्यद् व्याख्यातम् ।

**यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।**
**या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥ ३ ॥**

यासाम् । देवाः । दिवि । कृण्वन्ति । भक्षम् । याः । अन्तरिक्षे । बहुऽधा । भवन्ति ।
याः । अग्निम् । गर्भम् । दधिरे । सुऽवर्णाः । ताः । नः । आपः । शम् । स्योनाः । भवन्तु ॥ ३ ॥

देवाः इन्द्राद्याः यासाम् अपां सारभूतम् अमृतं सोमं वा दिवि द्युलोके भक्षम् उपभोग्यम् । भक्ष अदने । कर्मणि घञ् । 'णेरनिटि' ( पा ६,४,५१ ) इति णिलोपः 'एरजण्यन्तानाम्' ( पावै ३,३,५६ ) इति अचो न प्रसङ्गः । भक्ष मन्थ भोग देह इति उञ्छादिषु पाठाद् अन्तोदात्तता । कृण्वन्ति कुर्वन्ति । कृवि हिंसाकरणयोश्च । इदित्वाद् नुम् । 'धिन्विकृण्व्योर च' ( पा ३,१,८० ) इति उप्रत्ययः तत्संनियोगेन अकारश्चान्तादेशः । अतो लोपे तस्य स्थानिवद्भावात् लघूपधगुणाभावः । 'सतिशिष्टस्वरबलीयस्त्वम् अन्यत्र विकरणेभ्यः' ( पावा ६,१,१५८ ) इति उप्रत्ययस्वरं बाधित्वा तिङः प्रत्ययस्वरेण आद्युदात्तत्वम् । तथा या आपः अन्तरिक्षे अन्तरिक्षलोके

---

१. °सेकाना S[1],Kd. २. °पश्यंज° R., °पश्यञ्ज° सात., तै ५,६,१,१. ३. स्योना P[2],J,K, ४. भवन्ति D., निविष्टाः आप्मं. १,२,३. ५. विरूपास्ता O.

बहुधा बहुप्रकारेण। 'बहुगणवतुडति संख्या' (पा १,१,२३) इति *[संख्यासंज्ञा]। 'संख्याया विधार्थे धा' (पा ५,३,४२) इति धाप्रत्ययः। वृष्ट्यादिरूपेण नाना भवन्ति। व्याख्यातम् अन्यत्।

**शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे।**
**घृतश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु ॥ ४ ॥**

शिवेन। मा। चक्षुषा। पश्यत। आपः। शिवया। तन्वा। उप। स्पृशत। त्वचम्। मे।
घृतऽश्चुतः। शुचयः। याः। पावकाः। ताः। नः। आपः। शम्। स्योनाः। भवन्तु ॥ ४ ॥

हे आपः। 'आमन्त्रितस्य च' (पा ८,१,१९) इत्याष्टमिकं सर्वानुदात्तत्वम्। अबभिमानिन्यो देवताः यूयं शिवेन अक्रूरेण सुखकरेण चक्षुषा लोचनेन मा मां सेकादिना अनिष्टपरिहारेष्टप्राप्तिकामं पश्यत अवलोकयत। 'त्वामौ द्वितीयायाः' (पा ८,१ २३) इत्यस्मदो द्वितीयान्तस्य मादेशः। तथा शिवया कल्याण्या इष्टप्राप्तिहेतुभूतया तन्वा युष्मदीयेन शरीरेण मे मम युष्मदनुग्रहाकाङ्क्षिणः त्वचम् त्वग्धातुम् उप स्पृशत संमृशत। परोक्षवद् आह—घृतश्चुतः घृतं क्षरणशीलं दीप्यमानं वा अमृतं श्चोतन्ति क्षरन्तीति घृतश्चुतः अमृतस्राविण्य आपः। श्चुतिर् क्षरणे। 'क्विप् च' (पा ३,२,७६) इति क्विप्। अन्यद् व्याख्यातम्।

इति पञ्चमं सूक्तम्।

परिषज्जयकर्मणि सभाप्रवेशात् पूर्वम् 'इयं वीरुत्' इति सूक्तेन मधुकाख्यां वीरुधं भक्षयेत्। सूत्रितं हि—"'इयं वीरुद्' इति मधुकं खादन् अपराजितात् परिषदम् आव्रजति" (कौसू ३७,१७) इति।

विवाहकर्मण्यपि एतेन सूक्तेन मधुकमणिं रक्तसूत्रेण बद्ध्वा अङ्गुल्यां बध्नीयात्। सूत्रितं च—"'इयं वीरुद्' इति मधुकमणिं लाक्षारक्तेन सूत्रेण विग्रथ्य अनामिकायां बध्नाति" (कौसू ७६,८) इति।

विवाह एव चतुर्थिकाकर्मणि शयनकाले मधुकमणिं पिष्ट्वा औक्षे[१] प्रक्षिप्य अनेन सूक्तेन अभिमन्त्र्य वधूवरौ परस्परं संगच्छेयाताम्। "मधुघमणिम् औक्षेऽपनीय' इयं वीरुत् (अ १,३४)। अमोऽहम् (अ १४,२,७१) इति संस्पृशतः" (कौसू ७९,१०) इति सूत्रितत्वात्।

अश्वमेधे ब्रह्मोद्यवदनेऽपि एतत् सूक्तम्।

**इयं वीरुन्मधुजाता मधुना त्वा खनामसि।**
**मधोरधि प्रजातासि सा नो मधुमतस्कृधि ॥ १ ॥**

१. °श्च्युतः Bp², K². २. स्योना P², J, K. ३. तु. Bl., दा., के., साभा. (अ १, ३४,४); वैतु. शंपा. मधुक°. ४. विक्रय्यानामिकया S', Kd. ५. चतुर्थीका° S', Kd. ६. तु. साभा [अ २,३६,७] पैठीनसि उद्धरणम् ७. मधिक° S', Kd. ८. मधुने पै २,६,१.

इयम् । वीरुत् । मधुऽजाता । । मधुना । त्वा । खनामसि ।
मधोः । अधि । प्रऽजाता । असि । सा । नः । मधुऽमतः । कृधि ॥ १ ॥

इयम् पुरोवर्तिनी सभाजयादिकर्मसु विनियुज्यमाना वीरुत् विरोहणशीला लता मधुकाख्या मधुजाता मधुनि मधुररसोपेते भूतले जाता उत्पन्ना । यद्वा मधुने मध्वर्थम् उपभोक्तॄणां वचसि माधुर्यसंपादनाय जाता उत्पन्ना । अथवा मधुना क्षौद्ररसेन जाता उत्पन्ना । तस्या उत्पत्तौ क्षौद्ररस एव जलवत् कारणम् इत्यर्थः । जनी प्रादुर्भावे । कर्तरि निष्ठा । हे वीरुत् त्वा त्वाम् स्वभावतो मधुरां वयमपि मधुना मधुरूपेण खनित्रादिना खनामसि खनामः अवदारयामः । खनु अवदारणे । 'इदन्तो मसि' ( पा ७,१,४६ ) इति मस इदन्तत्वम् । यद्वा मधुना । इत्थंभावे तृतीया । मधुरेण प्रकारेण खनामः । माधुर्यरसोपेतामेव त्वां खनामः न तु केवलाम् इत्यर्थः । तथा त्वं मधोः मधुनः । लिङ्गव्यत्ययः । 'जनिकर्तुः प्रकृतिः' ( पा १,४,३० ) इति पञ्चमी । मधुरूपाद् उपादानकारणात् । अधिः पञ्चम्यर्थानुवादी । प्रजाता प्रकर्षेण जाता असि भवसि । या त्वम् उक्तप्रकारेण आश्रयतः स्वभावतः उपादानतश्च मधुमयी भवसि सा त्वं नः अस्मान् मधुमतः मधुररसोपेतान् कृधि कुरु । कायिकवाचिकमानसरूपः अस्मदीयः सकलो व्यापारः मधुररसोपेतः सन् सर्वैरुपादेयो भवतु इत्यर्थः । डुकृञ् करणे । मध्यमैकवचने छान्दसो विकरणस्य लुक् । 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' ( पा ६, ४, १०२ ) इति हेर्धिरादेशः । 'कःकरत्करतिकृधिकृतेष्वनदितेः' ( पा ८, ३, ५० ) इति विसर्जनीयस्य सत्वम् ।

जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम् ।
ममेदह क्रतावसो मम चित्तमुपायसि ॥ २ ॥

जिह्वायाः । अग्रे । मधु । मे । जिह्वाऽमूले । मधूलकम् ।
मम । इत् । अह । क्रतौ । असः । मम । चित्तम् । उपऽआयसि ॥ २ ॥

हे मधुकलते त्वं मे जिह्वायाः रसनाया अग्रे अग्रभागे मधु क्षौद्रं यथा भवति तथा वर्तस्व । तथा जिह्वामूले रसनाया मूलभागे मधूलकम् मधुररसबहुलं जलमधूलकवृक्षपुष्पं यथा भवति तथा तदात्मिका वा वर्तस्व । जिह्वायां मध्वादिसंनिधानेन तन्निर्वर्त्या वागपि मधुरा सर्वेषां सुश्रवा भवतु इत्यर्थः । तथा हे लते त्वं मम । इत् इति अहेति च निपातौ अवधारणार्थौ । उभाभ्याम् अन्ययोगायोगव्यवच्छेदौ क्रियेते । ममैव नान्यस्येत्यर्थः । क्रतौ कर्मणि शारीरे व्यापारे असः भव । अस भुवि । लेटि अडागमः । तथा मम चित्तम् अन्तःकरणम् उपायसि उपागच्छ । मदीयः शारीरो मानसो व्यापारश्च त्वत्संनिधानात् माधुर्यरसोपेतः सर्वश्लाघ्यो भवतु इत्यर्थः ।

---

१. करण° S', Kd.   २. मधुरेणा S',Kd.   ३. °दानकरणात् S',Kd.   ४. कृता° A,B[h].
५. मूललकं S', Kd.   ६. °मधूक° S', Kd.   ७. सर्वेषाश्रवा S', Kd.

मधु॑मन्मे नि॒क्रम॑णं॒ मधु॑मन्मे प॒राय॑णम् ।
वा॒चा व॑दामि॒ मधु॑मद् भू॒यासं॒ मधु॑संदृशः ॥ ३ ॥

मधु॑ऽमत् । मे॒ । नि॒ऽक्रम॑णम् । मधु॑ऽमत् । मे॒ । प॒रा॒ऽअय॑नम् ।
वा॒चा । व॒दा॒मि॒ । मधु॑ऽमत् । भू॒यास॑म् । मधु॑ऽसंदृशः ॥ ३ ॥

हे मधुकलते त्वद्धारणेन मे मम निक्रमणम् निकटगमनं संनिहितार्थेषु प्रवर्तनं मधुमत् मधुयुक्तं स्वस्य परेषां च प्रीतिकरम् । भवतु इति शेषः । तथा मे मम परायणम् परागमनं दूरगमनं मधुमत् भवतु । तथा वाचा वागिन्द्रियेण यद् वदामि कथयामि तत् सर्वं मधुमत् भवतु । इत्थं स्वकीयानां सर्वेषां व्यापाराणां मधुमयत्वात् तथाविधव्यापारयुक्तः अहमपि संदृशः संद्रष्टुः सर्वस्य पुरुषस्य मधु मधुवत् प्रीतिविषयो भूयासम् । संपूर्वाद् दृशेः 'क्विप् च' ( पा ३, २, ७६ ) इति क्विप् ।

मधो॑रस्मि॒ मधु॑तरो म॒दुघा॒न्मधु॑मत्तरः ।
मामित् किल॒ त्वं व॒नाः शा॒खां मधु॑मतीमिव ॥ ४ ॥

मधोः॑ । अ॒स्मि॒ । मधु॑ऽतरः । म॒दु॒घा॑त् । मधु॑मत्ऽतरः ।
माम् । इत् । कि॒ल॑ । त्वम् । वनाः॑ । शा॒खाम् । मधु॑मतीम्ऽइव ॥ ४ ॥

हे मधुकलते त्वत्संनिधानात् मधोः मधुनः क्षौद्रात् । लिङ्गव्यत्ययः । मधुतरः अतिशयेन मधुररसोपेतः अस्मि भवामि । मधुशब्दात् तरप् । मदुघात् मधुदुघात् । दुह प्रपूरणे । मधुशब्दोपपदाद् अस्माद् 'दुहः कब् घश्च' ( पा ३,२,७० ) इति कप् प्रत्ययः, तत्संनियोगेन घत्वं च । मधुशब्दे धुलोपश्छान्दसः । मधुस्राविणः पदार्थविशेषात् मधुमत्तरः अतिशयेन मधुमान् अस्मि । मधुशब्दाद् मतुप् । तदन्तात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' (पा ५,३,५७) इति तरप् । स्वस्य अतिशयेन मधुमत्त्वे हेतुम् आह-मामित् इति । हे मधुकलते त्वं मामित् । इच्छब्दः अवधारणे । किल शब्दः प्रसिद्धौ । मामेव खलु वनाः संभजेः । यतस्त्वं मय्येव संनिहिता अतोऽहं सर्वस्माद् मधुतर इत्यर्थः । वन षण संभक्तौ । अस्मात् लेटि मध्यमे 'लेटोऽडाटौ' ( पा ३,४,९४) इत्याडागमः । तत्र दृष्टान्तः — मधुमतीमिव मधुयुक्तां शाखाम् वृक्षसंबन्धिनीं यथा जनः सेवते तद्वद् इत्यर्थः ।

परि॑ त्वा परित॒त्नुने॒क्षुणा॑गा॒मवि॑द्विषे ।
यथा॒ मां का॒मिन्यसो॒ यथा॒ मन्नाप॑गा॒ असः॑ ॥ ५ ॥

१. वैतु. मंपा. यनि. २. तु. S',Kd.; वैतु. शंपा. मधुमत्. ३. म॒धु॒घा° B[a],H,K[a],L,M, O,O[p],P[3],R[2],T,W.

परि । त्वा । परिऽतत्नुना । इक्षुणा । अगाम् । अविऽद्विषे ।
यथा । माम् । कामिनी । असः । यथा । मत् । न । अपऽगाः । असः ॥ ५ ॥

हे जाये त्वा त्वां परितत्नुना परिततेन सर्वतो व्याप्तेन । तनु विस्तारे । 'तनिपत्योश्छन्दसि' ( पा ६,४,९९ ) इति उपधालोपः । तथाविधेन इक्षुणा इक्षुवद् अतिशयितमाधुर्यरसोपेतेन मधुकेन अविद्विषे आवयोः परस्परं विद्वेषणाभावाय पर्यगाम् परितः प्राप्तवान् अस्मि । इण् गतौ । 'इणो गा लुङि' (२,४,४५) इति गादेशः । 'व्यवहिताश्च' ( पा १,४,८२ ) इति परेर्व्यवहितप्रयोगः । परिगमनस्य न केवलम् अविद्वेषमात्रं फलम् अपितु यथा येन प्रकारेण हे जाये त्वं माम् पतिं कामिनी कामयमाना असः भवेः । अस्तेर्लेटि अडागमः । यथा च मत् मत्तः सकाशात् । 'एकवचनस्य च' ( पा ७,१,३२ ) इति अस्मद उत्तरस्य ङसेः अदादेशः । 'त्वमावेकवचने' ( पा ७,२,९७ ) इति मपर्यन्तस्य मादेशो 'शेषे लोपः' ( पा ७,२,९० ) इति लोपः । अपगाः अपहाय गच्छन्ती नाऽसः न भवेः । गाङ् गतौ । अस्माद् अपपूर्वाद् 'आतो मनिन्क्वनिब्वनिपश्च' ( पा ३,२,७४) इति विच्प्रत्ययः । तथा त्वां पर्यगाम् इति पूर्वेण संबन्धः ।

इति प्रथमकाण्डे षष्ठेनुवाके षष्ठं सूक्तम् ।

'यदाबध्नन्' इति सूक्तेन सर्वसंपत्कर्मसु वासितयुग्मकृष्णलमणिबन्धनम्, सारूपवत्सौदने पुरुषाकृतिम् आलिख्य तत्प्राशनं च कुर्यात् । तथा च सूत्रम्— "'यदाबध्न[1]न्' ( अ १,३५ ), 'नव प्राणान्' ( अ ५,२८ ) इति युग्मकृष्णलं वासितं बध्नाति । सारूपवत्सं पुरुषगात्रं द्वादशरात्रं संपातवन्तं कृत्वाऽनभिमुखम् अश्नाति" ( कौसू ११,१९;२० ) इति ।

तथा आयुष्कामः हिरण्यमणिं युग्मकृष्णलं संपात्य अभिमन्त्र्य स्थालीपाकं च संपात्य अभिमन्त्र्य तन्मणिब[2]न्धनं तदोदनप्राशनं च अनेनैव सूक्तेन कुर्यात् । तथा च सूत्रम् । "'यदाबध्नन्' ( अ १,३५ ), 'नव प्राणान्' ( अ ५,२८ ) इति युग्मकृष्णलम् आदिष्टानां स्थालीपाक आधाय बध्नाति । आशयति" ( कौसू ५२,२०;२१ ) इति ।

उपनयनकर्मण्यपि आयुष्कामस्य ब्रह्मचारिण आज्यहोमे विनियुक्तम् । तथा च सूत्रम्— 'मेधाजननायु[3]ष्यैर्जुहुयात्' ( कौसू ५७,३१ ) इति ।

तथा 'आदित्यां श्रुततेजोधनायुष्कामस्य' ( शाक १७,३ ) इति विहितायाम् आदित्याख्यायां महाशान्तौ युग्मकृष्णलमणिबन्धनेऽपि एतत् सूक्तम् । तद् उक्तं शान्तिकल्पे— "'यदाबध्नन्' इति युग्मकृष्णलम् आदित्यायाम्" ( शाक १९,५ ) इति ।

तथा प्रातःप्रातः अनेन सूक्तेन अलंकारान् अभिमन्त्र्य पुरोहितो राज्ञे प्रयच्छेत् । तथा च परिशिष्टे — 'अथ पुरोहितकर्माणि राज्ञः प्रातरुत्थितस्य कृतस्वस्त्ययनस्य' इति

१. अपंऽगा P,P²,J; अपऽगा Bᴰ² २. भूयान् विकृतः पाठः S', Kd.; यनि. व्यवस्थापितः शंपा.
३. जनन आयु° Bl. ४. श्रीतेजो° Bol.

प्रक्रम्य उक्तम् — " 'परिधत्त' (अ २,१३,२;३) इति द्वाभ्यां राज्ञे वस्त्रम् अभिमन्त्र्य प्रयच्छेत्। 'यदाबध्नन्' इत्यलंकारान्" ( अप ४,१,१-५ ) इति।

हिरण्यगर्भाख्ये महादानेपि अनेन सूक्तेन हिरण्यस्रजं यजमानस्य बध्नीयात्। तद् उक्तं तत्रैव — " 'अग्नेः प्रजातं परि यद्धिरण्यम्' ( अ १९,२६ ), 'यदाबध्नन्' ( अ १,३५) इति हिरण्यस्रजम् आग्रथ्य" ( अप १३,१,७ ) इति।

यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानाः।
तत् ते बध्नाम्यायुषे वर्चसे बलाय दीर्घायुत्वाय शतशारदाय ॥ १ ॥

यत्। आऽअबध्नन्। दाक्षायणाः। हिरण्यम्। शतऽअनीकाय। सुऽमनस्यमानाः।
तत्। ते। बध्नामि। आयुषे। वर्चसे। बलाय। दीर्घायुऽत्वाय। शतऽशारदाय ॥ १ ॥

दाक्षायणाः दक्षस्य अपत्यं दाक्षिः। 'अत इञ्' ( पा ४, १,९५ ) इति इञ्प्रत्ययः। दाक्षेरपत्यं दक्षस्य गोत्रम्। तत्र 'यञिञोश्च' ( पा ४,१,१०१ ) इति फक्। 'आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम्' ( पा ७,१,२ ) इति फस्य आयनादेशः। 'कितः' ( पा ६,१,१६५ ) इत्यन्तोदात्तत्वम्। दक्षापत्यभूता महर्षयः सुमनस्यमानाः। शोभनं मनो येषां ते सुमनसः। सुमनस इव आचरन्तः सुमनस्यमानाः। सुमनस्शब्दात् 'कर्तुः क्यङ् सलोपश्च' ( पा ३,१,११ ) इति क्यङ्। सलोपस्य विकल्पितत्वाद् अत्र अभावः। यद्वा प्राग् असुमनसः सुमनसो भवन्तीति च्व्यर्थविवक्षायां 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' ( पा ३,१,१२ ) इति क्यङ्। अन्त्यहलो लोपाभावश्छान्दसः। तदन्तात् लटः शानच्। 'कर्तरि शप्' ( पा ३,१,६८ ) इति शप्प्रत्ययः। तस्य पित्त्वाद् अनुदात्तत्वम्। "अदुपदेशाल्लसार्वधातुकम्" ( पा ६,१,१८६ ) इति शानचोनुदात्तत्वम्। क्यङः प्रत्ययस्वरेण उदात्तता। सौमनस्यं कुर्वाणाः सन्तः शतानीकाय। शतम् अनीकानि यस्यासौ शतानीकः। 'दिक्संख्ये संज्ञायाम्' ( पा २,१,५० ) इति समासः *[?]। 'शतानीकं सात्राजितम् अभिषिषेच' ( ऐब्रा ८,२१ ) इति श्रुतिप्रसिद्धाय राज्ञे यत् प्रसिद्धं कृष्णलादिरूपं हिरण्यम् हितरमणीयरूपं सुवर्णम्। हिरण्यशब्दं बहुधा यास्को निरवोचत् — 'हितरमणं भवतीति वा, हृदयरमणं भवतीति वा, हर्यतेर्वा स्यात् कान्तिकर्मणः' ( या २,१० ) इति। हर्य गतिकान्त्योः। 'हर्यतेः कन्यन् हिर् च' ( पाउ ५,४४ ) इति कन्यन् प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इत्याद्युदात्तत्वम्। आबध्नन् बन्धनं कृतवन्तः। बन्ध बन्धने। अस्मात् लङि श्नाप्रत्ययः। 'श्नाभ्यस्तयोरातः' ( पा ६,४,११२ ) इत्याकारलोपः। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' ( पा ६,४,७१ ) इति अट उदात्तत्वम्। 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति निघातप्रतिषेधः। तत् तथाविधं हिरण्यम् हे आयुरादिफलकाम ते तव बध्नामि बन्धनं

१. दाक्षः S', Kd. २. 'ञ्नित्यादिर्नित्यम् शंपा. ३. प्रेप्साकर्मणः ल. ४. बध S', Kd.

करोमि। तद्बन्धनस्य फलम् आह — आयुषे आयुरभिवृद्धये वर्चसे तेजसे बलाय बल-प्राप्तये। आयुष इत्युक्तं तदेव विवृणोति — दीर्घायुत्वाय दीर्घायुष्ट्वाय। छान्दसः सलोपः। चिरकालजीवनाय। कियत्परिमितम् आयुषो दैर्घ्यम् इति तद् आह — शत-शारदाय। शरदृतोः संबन्धिनः तद्विशिष्टाः संवत्सराः शारदाः। शतं शारदाः समाहृता यस्मिन् जीवने तत् शतशारदम्। तस्मै। शतसंवत्सरजीवनायेत्यर्थः। आयुर्दैर्घ्यपरिच्छेदस्तु मनुष्याणां परमायुर्विवक्षयेति द्रष्टव्यम्। तथा च श्रुत्यन्तरम् — 'शतायुः पुरुषः शतेन्द्रियः' ( तै २,३,११,५ ) इति।

नैनं[1] रक्षांसि न पिशाचाः सहन्ते[2] देवानामोजः प्रथमजं ह्ये३तत्[3]।
यो बिभर्ति दाक्षायणं हिरण्यं स जीवेषु[4] कृणुते दीर्घमायुः ॥ २ ॥

न। एनम्। रक्षांसि। न। पिशाचाः। सहन्ते। देवानाम्। ओजः। प्रथमऽजम्। हि। एतत्।
यः। बिभर्ति। दाक्षायणम्। हिरण्यम्। सः। जीवेषु। कृणुते। दीर्घम्। आयुः ॥ २ ॥

एनम् आबद्धहिरण्यं पुरुषं रक्षांसि राक्षसाः। 'रक्षो रक्षितव्यम् अस्मात्' इति हि यास्कः (४,१८)। न सहन्ते नाभिभवन्ति। ज्वराद्युपद्रवकरणेन[5] न बाधन्त इत्यर्थः। षह अभिभवे इति धातुः। तथा पिशाचाः पिशिताशिनो भूतविशेषाः न सहन्ते। धृतहिरण्यस्य ईदृशं सामर्थ्यं कुत[6] इत्यत आह — देवानाम् इति। एतत् सुवर्णं देवानाम् इन्द्रादीनां प्रथमजम् प्रथमत उत्पन्नम्। जनी प्रादुर्भावे। 'अन्येष्वपि दृश्यते' (पा ३,२,१०१) इति डप्रत्ययः। ओजो हि। ओजः शरीरधारको बलहेतुः अष्टमो धातुविशेषः। यद् आहुराचार्याः—

'× × × ओजो नामाष्टमी दशा।
क्षेत्रज्ञस्य तदोजस्तु केवलाश्रय इष्यते।' इति।

यद्वा देवानाम्। आदरार्थं बहुवचनम्। देवस्य अग्नेः एतत् हिरण्यं प्रथमजम् ओजः प्रथमोत्पन्नं रेतोरूपं तेजो हि। यस्मात् कारणाद् रक्षसां हन्तुरग्नेस्तेजो हिरण्यम् 'अग्निः खलु वै रक्षोहा' ( तै ६,१,४,६ ) इति श्रुतेः तस्मात् हिरण्यं रक्षोनिवर्तकम् इत्यर्थः। हिरण्यस्य अग्निरेतस्त्वं तैत्तिरीयके श्रूयते 'आपो वरुणस्य पत्नय आसन्। ता अग्निरभ्यध्यायत्। ताः समभवत्[7]। तस्य रेतः परापतत्[8]। तद्धिरण्यम् अभवत्' ( तैब्रा १,१,३,८) इति। यतो हिरण्यं रक्षोघ्नम् अतस्तद्[9] दाक्षायणम्। दाक्षायणैः शतानीकस्य प्रथमम् आबद्धत्वाद् हिरण्यमपि दाक्षायणम् उच्यते। तथाविधं हिरण्यं यः पुरुषो रक्षोवधकामो[10]

१. न तद् मा ३४,५१. २. तरन्ति मा. ३. ह्ये १ A, K, V. ४. देवेषु मा. ५. °कारणेन S', Kd. ६. सामर्थ्यमिति कुत S', Kd. ७. °भवन् शंपा. ८. परापतद्धिरण्य° S', Kd. ९. अत° S', Kd. १०. रक्षोकामो S', Kd.

बिभर्ति । डुभृञ् धारणपोषणयोः । जुहोत्यादित्वात् शपः श्लुः । 'श्लौ' (६,१,१०) इति द्विर्वचने 'भृञामित्' (७,४,७६) इत्यभ्यासस्य इत्वम् । 'भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति' (पा ६,१,१९२) इति प्रत्ययात् पूर्वस्योदात्तत्वम् । 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः । स पुरुषः जीवेषु मध्ये दीर्घम् शतसंवत्सरपरिमितम् आयुः जीवनकालं कृणुते करोति । रक्षाकरहिरण्यधारणात् निरामयः सन् शतसंवत्सरं जीवतीत्यर्थः । डुकृञ् करणे । व्यत्ययेन श्नुः ।

अपां तेजो ज्योतिरोजो बलं च वनस्पतीनामुत वीर्याणि ।
इन्द्र इवेन्द्रियाण्यधि धारयामो[1] अस्मिन् तद् दक्षमाणो बिभरद्धिरण्यम् ॥ ३ ॥

अपाम् । तेजः । ज्योतिः । ओजः । बलम् । च । वनस्पतीनाम् । उत । वीर्याणि ।
इन्द्रेऽइव । इन्द्रियाणि । अधि । धारयामः । अस्मिन् । तत् । दक्षमाणः । बिभरत् । हिरण्यम् ॥ ३ ॥

अपाम् उदकानां संबन्धि यत् तेजः स्नानपानादिना नैर्मल्यकरं सामर्थ्यम् । अपां तेजः वनस्पतीनाम् वीर्याणि इत्याद्यन्तयोर्गुणानां गुणिविशेषसंबन्धश्रवणात् मध्येपि ज्योतिरादीनां यथायोगं गुणिविशेषसंबद्धानामेव ग्रहणम् अत्र द्रष्टव्यम् । तथा च ज्योतिष्मतां सूर्यचन्द्रादीनां संबन्धि यत् ज्योतिः ओजस्विनाम् इन्द्रादीनां संबन्धि यद् ओजः बलहेतुभूतो धातुविशेषः । इन्द्रस्य ओजस्वित्वं यजुर्मन्त्रवर्णे प्रसिद्धम् । 'इन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूयाः' (तै ३,३,१,१) इति । बलवतां पुरुषाणां यद् बलम् शरीरसामर्थ्यम् । उक्तसर्वसमुच्चयार्थश्चकारः । उतशब्दः अप्यर्थे । वनस्पतीनाम् वृक्षविशेषाणां वीर्याणि उपकारजननसामर्थ्यान्यपि यानि सन्ति । वनानां पतयो वनस्पतयः । 'पारस्करप्रभृतीनि च संज्ञायाम्' (पा ६,१,१५७) इति सुडागमः । 'उभे वनस्पत्यादिषु युगपत्' (पा ६,२,१४०) इति पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वेन आद्युदात्तत्वम् । तानि सर्वाणि अस्मिन् उक्तहिरण्यधारके पुरुषे । अधिः सप्तम्यर्थानुवादी । धारयामः स्थापयामः । तत्र दृष्टान्तः—इन्द्रियाणि इन्द्रस्य असाधारणचिह्नानि । 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' (पा ५,२,९३) इति निपात्यते । तानि इन्द्र इव । यथा तानि इन्द्र एव असाधारण्येन वर्तन्ते तद्वद् अस्मिन्निति संबन्धः । यस्मात् तेजःप्रभृतीनि धारयामः तत् तस्मात् कारणाद् दक्षमाणः वर्धमानः असौ पुरुषः । दक्ष वृद्धौ इति धातुः । हिरण्यम् तेजःप्रभृतीनां प्रापकं कुण्डलादिमणिरूपं बिभरत् बिभर्तु । डुभृञ्

१. सचः S', Kd. २. रैतो पै १,८३,३. ३. इन्द्रियमवीरुधसो ? पै. ४. सुवक्ष्यमाणो पै. ५. बिभ्रद् पै. [मूको.] ६. गुणवि° S', Kd. ७. °संबंधा° S', Kd. ८. इव S', Kd.

धा॰णपोषणयोः। लेटि अडागमः। 'इतश्च लोपः परस्मैपदेषु' ( पा ३,४,९७ ) इति इकार-लोपः। जुहोत्यादित्वात् शपः श्लुः। 'श्लौ' ( पा ६,१,१० ) इति द्विर्वचने 'भृञामित्' ( पा ७,४,७६ ) इत्यभ्यासस्य इत्वम्।

समानां मासामृतुभिष्ट्वा वयं संवत्सरस्य पयसा पिपर्मि।
इन्द्राग्नी विश्वेदेवास्तेऽनु मन्यन्तामहृणीयमानाः ॥ ४ ॥

समानाम्। मासाम्। ऋतुऽभिः। त्वा। वयम्। सम्ऽवत्सरस्य। पयसा। पिपर्मि।
इन्द्राग्नी इति। विश्वे। देवाः। ते। अनु। मन्यन्ताम्। अहृणीयमानाः ॥ ४ ॥

हे सर्वसंपदादिफलकाम त्वा त्वां समानाम् संवत्सराणां मासाम् मासानाम्। 'पद्दन्नोमास्' ( पा ६,१,६३ ) इति मासशब्दस्य मास्भावः। 'ऊडिदंपदाद्य' (पा ६,१,१७१) इति विभक्तेरुदात्तत्वम्। व्यधिकरणे षष्ठ्यौ। संवत्सरसंबन्धिनां चैत्रादिमासानां संबन्धिभिः ऋतुभिः वसन्ताद्यैः। समाशब्दो यद्यपि नित्यबहुवचनान्तः तथाप्यत्र अर्थ-बहुत्व एव बहुवचनं विवक्षितम्। तत्सामर्थ्येन पुरुषायुषसंबन्धिशतसंवत्सरावयव-भूतमासारब्धैः ऋतुभिरित्यर्थः संपद्यते। तथाविधैः ऋतुभिः वयम्। व्यत्ययेन बहुवचनम्। अहं[1] पिपर्मि पूरयामि। एतत्सुवर्णधारणेन एनं पुरुषं शतसंवत्सरपर्यन्तं जीवयामीत्यर्थः। पृ पालनपूरणयोः। जुहोत्यादित्वात् शपः श्लुः। 'अर्तिपिपर्त्योश्च' ( पा ७,४,७७ ) इत्य-भ्यासस्य इत्वम्। यद्वा समानाम् आरम्भकैः ऋतुभिः। ऋतुसमुदायो हि संवत्सरः। तथा मासाम् मासानां कार्यभूतैः ऋतुभिः इति षष्ठीद्वयस्य ऋतुशब्देनैव संबन्धः। दरिद्रस्य दीर्घमपि आयुर्निरर्थकम् इत्यत आह — संवत्सरस्येति। संवत्सरस्य संवत्सर-कालसंबन्धिना। संवत्सरव्यापिनेत्यर्थः। तादृशेन पयसा क्षीरेण। एतद् अन्येषामपि फलानाम् उपलक्षणम्। गोधनधान्यादिरूपेण च पिपर्मि पूरयामि। एतत्सुवर्णधारकस्य पुरुषस्य आयुर्मध्ये यथा एकमपि दिनम् उक्तफलरहितं न भवति तथा करोमीत्यर्थः। क्रियमाणेऽर्थे देवानाम् अनुमतिं प्रार्थयते — इन्द्राग्नी इन्द्रश्च अग्निश्च। 'देवताद्वन्द्वे च' (पा ६,२,१४१) इति प्राप्तस्य उभयपदप्रकृतिस्वरत्वस्य 'नोत्तरपदेऽनुदात्तादौ' (पा ६,२,१४२) इति प्रतिषेधे 'समासस्य' (पा ६,१,२२३) इत्यन्तोदात्तत्वम्। तथा विश्वे सर्वे अन्येऽपि देवाः ये सन्ति ते सर्वे अहृणीयमानाः। हृणीयतिः क्रुध्यतिकर्मा। अक्रुध्यन्तः क्रियमाणकर्माणि संभवद्वै-कल्यनिमित्तं क्रोधम् अकुर्वन्तः अनु मन्यन्ताम् अनुजानन्तु। सुवर्णधारणादिक्रियाजनितम् आयुरादि फलम् अङ्गीकुर्वन्तु इत्यर्थः। हृणीङ् इति कण्ड्वादिषु पाठात् 'कण्ड्वादिभ्यो

१. अहं पै १,८३,४. २. चैत्रमासा° S', Kd.

यक्' ( पा ३,१,२७ ) । तस्य ङित्वाद् आत्मनेपदम् । नञ्समासे अव्ययपूर्वपदप्रकृति स्वरत्वम् ।

इति प्रथमकाण्डे षष्ठोनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरश्रीवीरहरिहरमहाराजधुरंधरेण सायणाचार्येण विरचिते अथर्वसंहिताभाष्ये प्रथमकाण्डः समाप्तः ॥

---

अथ

# द्वितीयं काण्डम्

श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानाम् उपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥

द्वितीये काण्डे षड् अनुवाकाः। तत्र प्रथमेऽनुवाके पञ्च सूक्तानि। तत्र 'वेनस्तत्' इति प्रथमं सूक्तम्। तस्य अभिमतफलसिद्ध्यसिद्धिविज्ञानकर्मसु[1] विनियोगः। तानि च — पञ्चपर्वयुतवेणुदण्डं[2] काम्पीलवृक्षशाखां युगं वा अभिमन्त्र्य अभिमतकार्यं संचिन्त्य समे देशे ऊर्ध्वं धारयेत्। यदि दण्डादयश्चिन्तितदिशि निपतेयुः तदा कार्यसिद्धिं जानीयात् विपर्यये तु असिद्धिम्। तद्वदेव इषुं संधाय अनेन सूक्तेन अभिमन्त्र्य विसृजेत्। निर्दिष्टलक्ष्यपतनेन अर्थसिद्धिः।

तथैवं[3] उदकपूर्णे कुम्भे कमण्डलौ वा दुग्धं प्रक्षिप्य आयाचेत्। ऊनेन अधिकेन वा यथासंकल्पम् अर्थसिद्धिः।

तथैव दर्भस्तम्बम् अनेन अभिमन्त्र्य कार्यं चिन्तयित्वा गणयेत्। समसंख्यायाम् अभिमतसिद्धिः।

एवम् इध्मम् अभिमन्त्र्य अग्नौ प्रक्षिपेत्। प्रदक्षिणज्वलनेन[4] इष्टसिद्धिः।

तथैव अक्षान् अनेन अभिमन्त्र्य प्रक्षिपेत्। इष्टसंख्यापतनेन कार्यसिद्धिः।

एवं हस्तयोरङ्गुलिद्वयम् अनेन अभिमन्त्र्य चिन्तयेत्। उद्दिष्टाङ्गुलिस्पर्शनेन अभिलषितसिद्धिः।

तथैव एकविंशतिसंख्याकाः शर्करा अभिमन्त्र्य ततो गृहीत्वा विभजेत्। यथोद्देशं समविषमभावेन अर्थसिद्धिः।

तथा नष्टद्रव्यविज्ञानार्थम् उदकुम्भम् हलम् अक्षान्[5] वा नववस्त्रेण आवेष्ट्य संपात्य अभिमन्त्र्य अरजोविसे कुमार्यौ हरतम् इति ब्रूयात्। ते च येन दिग्भागेन हरेतां ततो नष्टम् इति जानीयात्।

---

१. °सिद्धिसिद्धि° S', Kd. २. दंडकां° S', Kd. ३. तथैवोत्पादक° S', Kd.
४. °ज्वाल° S', Kd. ५. अजान् S', Kd.

तथैव विवाहात् प्राक् कुमार्याः सौभाग्यादिलक्षणविज्ञानकर्मण्यपि आकृतिलोष्टवल्मीकलोष्टचतुष्पथलोष्टश्मशानलोष्टरूपाश्चतस्रो मृत्तिका अनेनैव सूक्तेन अभिमन्त्र्य आसाम् अन्यतमां गृहाणेति कुमारीं ब्रूयात्। तत्र आकृतिलोष्टवल्मीकलोष्टयोः स्पर्शने कल्याणं भवति। आकृतिलोष्टः क्षेत्रमृत्तिकेति पूर्वम् उक्तम्। चतुष्पथलोष्टस्पर्शनेन [बहुचारिणी भविष्यति श्मशानलोष्टस्पर्शनेन] मरिष्यतीति जानीयात्।

तथा कुमार्या अञ्जलौ उदकम् आपूर्य अभिमन्त्र्य प्रक्षिपेति तां ब्रूयात्। यदि प्राचीं दिशं प्रति निनयेत् तदा कल्याणं प्रतीयात्।

अत्र सूत्रम्—"'वेनस्तत्' इति पञ्चपर्वेषुकुम्भकमण्डलुस्तम्बकाम्पीलशाखायुगेष्मा क्षेषु पाण्योरेकविंशत्यां शर्करासु" इत्यादि 'उदकाञ्जलिं निनयेत्याह। प्राचीनम् अपक्षिपन्त्यां कल्याणम्' (कौसू ३७,३-१२) इत्यन्तं द्रष्टव्यम्।

अत्र 'स नः पिता जनिता' (अ २,१,३) इत्यस्या ऋचः अग्निचयने षोडशगृहीतोत्तरार्धाज्येन वैश्वकर्मणहोमे विनियोगः। उक्तं वैताने—"'यो विश्वचर्षणिः' (अ १३,२,२६) इत्यौपवसथ्ये षोडशगृहीतार्धस्य 'स नः पिता जनिता' (अ २,१,३) इत्युत्तरार्धस्य" (वैताश्रौ २९,१४) इति।

वे॒नस्तत् प॑श्यत् प॒र॒मं गुहा॒ यद् यत्र॒ विश्वं॒ भव॒त्येक॑रूपम्।
इ॒दं पृश्नि॑रदुहज्जाय॑मानाः स्व॒र्विदो॑ अ॒भ्य॑नूषत॒ व्राः ॥ १ ॥

वे॒नः। तत्। प॒श्य॒त्। प॒र॒मम्। गुहा॑। यत्। यत्र॑। विश्व॑म्। भव॑ति। एक॑ऽरूपम्।
इ॒दम्। पृश्नि॑ः। अ॒दु॒ह॒त्। जाय॑मानाः। स्व॒ःऽविद॑ः। अ॒भि। अ॒नू॒ष॒त॒। व्राः ॥ १ ॥

वेनतेः कान्तिकर्मसु पाठाद् दीप्यमान आदित्यो वेनः इत्युच्यते। 'वेनो वेनतेः कान्तिकर्मणः' इति हि यास्कः (१०,३८)। गुहा गुहायाम्। 'सुपां सुलुक्°' (पा ७,१,३९) इति सप्तम्या लुक्। गुहारूपे सर्वप्राणिहृदये यत् श्रुत्यन्तरप्रसिद्धं सत्यज्ञानादिलक्षणं परमम् ब्रह्म। यत्र यस्मिन् अधिष्ठानरूपे ब्रह्मणि विश्वम् आरोपितं कृत्स्नं जगत् एकरूपम् एकाकारं भवति आरोपितस्य अधिष्ठानव्यतिरेकेण सत्त्वाभावात्। आह स्म भगवान् बादरायणः—'तदनन्यत्वम् आरम्भणशब्दादिभ्यः' (ब्रसू २,१,१४) इति। भवतीति। शप्तिपोः पित्त्वाद् अनुदात्तत्वे धातुस्वरेण आद्युदात्तत्वम्। 'तिङ्ङतिङः' (पा ८,१,२८) इति निघातस्य च 'निपातैर्यद्यदिहन्त°' (पा ८,१,३०)

१. कुमार्याञ्जलौ S', Kd. २. तु. Bl., दा.; वैतु. शंपा. विंशत्या शर्कराः इत्यादि. ३. इत्युप° S', Kd. ४. वेना° पै २,६,१.; वेन° पै [मूको.] ५. पश्यन्त पै.; वैप १,१९६६ e द्र. ६. निहितं मा ३२,८. ७. पदं पै. ८. सद् मा. ९. °क्नीडम् पै. मा. तैआ १०, १,३. १०. वेनुर° पै. ११. म्यनुक्ति विराड् पै. १२. परं S', Kd.

इति प्रतिषेधः । तत् उक्तलक्षणं ब्रह्म वेनः पश्यत् अपश्यत् । स्वानन्यत्वेन साक्षात्कृतवान् इत्यर्थः । दृशेर्लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा ६,४,७५) इति अडभावः । पृश्निः । दिवश्च आदित्यस्य च साधारणनामैतत् । प्राप्तोज्ज्वलवर्ण आदित्यः । आह च यास्कः — 'पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण[1] इति नैरुक्ताः' (नि २,१४) इति । इदम् भूतभौतिकप्रपञ्चजातम् अदुहत् । अनुद्भूतनामरूपात्मकं जगत् ब्रह्मानन्यत्वेन सर्वशक्तित्वाद् उद्भूतनामरूपत्वेन व्यक्तम् अकार्षीद् इत्यर्थः ।

अह्व । जायमानाः उत्पद्यमानाः व्राः । व्रियन्त इति व्राः । 'घञर्थे कविधानम् स्थास्नापाव्यधिहनियुध्यर्थम्' (पावा ३,३,५८) इति परिगणनस्य उपलक्षणार्थत्वाद् वृञ् वरणे इत्यस्मात् कप्रत्ययः । आवृतात्मानः प्रजाः स्वर्विदः । स्वःशब्दाभिधेयम् आदित्यं स्वोत्पादकं विदन्ति जानन्तीति स्वर्विदः । 'स्वरादित्यो भवति । सु अरणः, सु ईरणः' इति हि निरुक्तम् (२,१४) अभ्यनूषत आभिमुख्येन तम् आदित्यं स्तुवन्ति । णू स्तवने । 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति वर्तमाने लुङ् । व्यत्ययेन आत्मनेपदम् । कुटादित्वेन सिचो ङित्त्वाद् गुणाभावः । 'अनित्यमागमशासनम्' इति इडभावः । यद्वा । वेनः पर्जन्यात्मा मध्यमस्थानो देवः । 'वायुः वरुणः' इति प्रक्रम्य 'वेनः असुनीतिः' (निघ ५,४) इति मध्यमस्थानदेवगणे पाठात् । तत् आदित्यमण्डलस्थम् उदकं पश्यति । तदेव विशिनष्टि — परमम् उत्कृष्टं गुहारूपे आदित्यमण्डले यद् उदकम् अस्ति । यत्र च उदके विश्वम् जगत् एकरूपम् नैमित्तिकप्रलये उदकात्मकं भवति । 'आपो वा इदम् अग्रे सलिलम् आसीत्' (तै ७,१,५,१) इति, 'आपो वा इदं सर्वं विश्वा भूतान्यापः' (तैआ १०,२२,१) इति च श्रुतेः । अथवा यत्र यस्मिन्नुदके विषये विश्वम् एकरूपम् उपजीव्यत्वेन एकाकारबुद्धिमद् भवति । श्रूयते हि — 'नानामनसः खलु वै पशवो नानाव्रतास्तेऽप एवाभि समनसः' (तै ५,३,१,३) इति । तत् पश्यतीति संबन्धः । इदम् । उदकनामैतत् । उदकम् उक्तम् उदकं पृश्निः आदित्यः तद्रश्मिसमूहो वा अदुहत् वर्षति । 'यदौ[3] खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति' (तै २,४,१०,२) इति, 'याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति' (तैआ १०,६३,१) इति तैत्तिरीयकश्रुतेः ।

'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं[2] ततः प्रजाः' (मस्मृ ३,७६) ।

इति स्मृतेश्च । जायमानाः पृश्नेरुत्पद्यमानाः स्वर्विदः सुखस्य लम्भयित्रीः[4] व्राः व्रियमाणाः संभज्यमानाः स्वीक्रियमाणा अपः सर्वे जना अभ्यनूषत अभिष्टुवन्ति । एवम् उक्तलक्षणः सर्वज्ञ आदित्यः शुभाशुभविज्ञानं करोतु इति विज्ञानकर्मणो[5] संबन्धः ।

प्र तद् वो॑चेद्[6] अ॒मृत॑स्य[7] वि॒द्वान् ग॑न्ध॒र्वो धाम॑[8] प॒र॒मं गु॒हा यत्[10] ।
त्रीणि॑ प॒दानि॑[11] निहि॑ता[12] गुहा॑स्य॒ यस्तानि॑ वेद॒ स॑[13] पि॒तुष्पि॒ता[14]स॑त् ॥ २ ॥

---

१. वर्णमिति S', Kd.   २. °वृद्धि° S', Kd.   ३. असौ खलु वा आदित्यो S', Kd.
४. लंभयित्रीर्व्राः S', Kd.   ५. कर्मणः S', Kd.   ६. वोचे तैआ १०,१,३.   ७. अमृतं नु पै २,६,२, मा ३२,६. तैआ.   ८. नाम तैआ.   ९. विभृतं मा.   १०. गुहा सत् मा., गुहासु तैआ.   ११. पदा पै. तैआ.   १२. निहिता पै.   १३. सवितुः तैआ.   १४. पितुः पिता° A, B, Wh.

प्र । तत् । वोचेत् । अमृतस्य । विद्वान् । गन्धर्वः । धाम । परमम् । गुहा । यत् । त्रीणि । पदानि । निऽहिता । गुहा । अस्य । यः । तानि । वेद । सः । पितुः । पिता । असत् ॥ २ ॥

अमृतस्य अविनाशिनो ब्रह्मणो विद्वान् जानन् । 'क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२ ) इति कर्मणः संप्रदानत्वात् 'चतुर्थ्यर्थे बहुलं छन्दसि' (पा २,३,६२) इति षष्ठी । न त्वत्र 'कर्तृकर्मणोः कृति' ( पा २,३,६५ ) इति कर्मणि षष्ठी । 'न लोकाव्ययनिष्ठा°' ( पा २,३,६९ ) इति तस्याः प्रतिषेधविधानात् । स्वरूपपदाध्याहारेण वा संबन्धः अमृतस्य स्वरूपं विद्वान् इति । न विद्यते मृतं यस्येति बहुव्रीहौ समासे 'नञ्सुभ्याम्' ( पा ६,२,१७२ ) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नञो जरमरमित्रमृताः ( पा ६,२,११६ ) इत्युत्तरपदाद्युदात्तत्वम् । गन्धर्वः । गावो रश्मयः तान् धारयतीति गन्धर्व आदित्यः । 'सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरसः' ( तै ३,४,७,१ ) इति श्रुतेः । गां वेदलक्षणां वा धारयतीति गन्धर्वः । 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते' ( तैब्रा ३,१२,९,१ ) इत्यादिश्रुतेः । 'गवि गन् धृञो वः' पाउना ५,८४ ) इति गोशब्दोपपदाद् धृञो वप्रत्ययः । गोशब्दस्य गंनादेशः[1] । तत् उक्तलक्षणं ब्रह्म प्र वोचेत् प्रब्रवीतु । उपासकेभ्य इति शेषः । 'व्यवहिताश्च' (पा १,४,८२) इति प्रोपसर्गस्य व्यवहितक्रियया संबन्धः । ब्रूञ आशीर्लिङि वच्यादेशे 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ्प्रत्ययः । 'वच उम्' (पा ७,४,२०) इति उमागमः । किं तद् इति तद् आह — परमम् क्रियाफलभूतविनश्वरैस्वर्गाद्यपेक्षया उत्कृष्टं धाम पुनरावृत्तिरहितं स्थानम् । उक्तं हि भगवता—

'न तद् भासयते सूर्यो न शशाङ्को न पावकः ।
यद् गत्वा न निवर्तन्ते तद् धाम परमं मम ।' ( भगी १५,६ ) इति ।

अस्य गुहा गुहायां हृद्रूपायां स्थितं यत् तत्त्वं तद् वोचेत् इति संबन्धः । हृदयस्थस्य नित्यापरोक्षस्य परतत्त्वस्य उपदेश्यत्वम् अनुपपन्नम् इत्यत आह — त्रीणि पदानीति । परमात्मनस्त्रीणि पदानि गुहा गुहायां निहिता निहितानि । यद्यपि अत्र निरुपाधिकस्य ब्रह्मणो निरवयवत्वात् पादकल्पना नोपपद्यते तथापि भूतभौतिकप्रपञ्चजातात् तदुपादानस्य आत्मनो निरतिशयमहत्त्वं प्रतिपादयितुं त्रिपदत्वम् उक्तम् इति अविरोधः । यथा छान्दोग्ये—'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' ( छाउ ३,१२,६ ) इति । गुहानिहितपदार्थवत् अज्ञातम् अपरिच्छिन्नं ब्रह्म उपदेशैकसमधिगम्यम् अस्तीति तात्पर्यार्थः । निहितेति । निपूर्वाद् धाञः कर्मणि निष्ठा । 'दधातेर्हिः' ( पा ७,४,४२ ) इति हिरादेशः । 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपः[2] । 'गतिरनन्तरः' ( पा ६,

१. गंना° S', Kd. २. °भरः S', Kd.

२,४९) इति गतेः प्रकृतिस्वरत्वम् । यद्वा अस्य पूर्वोक्तस्य परब्रह्मणः त्रीणि पदानि । पद्यन्ते गम्यन्ते मुमुक्षुभिः प्राप्यन्त इति पदशब्देन अंशीभूता विराड्ढिरण्यगर्भेश्वरा उच्यन्ते । गुहा । गूहयति संवृणोति परिच्छिनत्ति परमात्मानम् इति गुहा माया । तत्र निहितानि समष्टिरूपेण उपहितानि । गुरूपदेशजनितब्रह्मावबोधस्य प्रयोजनम् आह— यः शमदमादिसंपन्नोऽधिकारी तानि तत् पादत्रयोपलक्षितं निष्कलं ब्रह्म वेद जीवेश्वरोपाधिपरित्यागेन साक्षात्करोति । वेत्तेः 'विदो लटो वा' (पा ३,४,८३) इति तिपो णलादेशः । 'लिति' (पा ६,१,१९३) इति प्रत्ययात् पूर्वस्य उदात्तत्वम् । 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः । स विद्वान् पितुः स्वजनकस्यापि पिता कारणभूतः असत् भवति । अस्तेर्लेटि अडागमः । सर्वजगदधिष्ठानभूतब्रह्मीभावेन स्वस्यापि सर्वजगत्कारणत्वोपपत्तेः । तद् उक्तं सामब्राह्मणे — 'शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृद् आसीत् स पितॄन् पुत्रका इत्यामन्त्रयत' (तां १३,३,२४) इत्यादि । स्मर्यते च —

'अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः ।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥
ते तम् अर्थम् अपृच्छन्त देवान् आगतमन्यवः ।
देवाश्चैनान् समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥' (मस्मृ २,१५१;१५२) इति ।

अथवा तानि विराड्ढिरण्यगर्भेश्वरतत्त्वानि वेद प्रणवावयवैः अकारादिभिः व्यष्टिरूपाणां विश्वतैजसप्राज्ञानां समष्टिरूपविराडादितादात्म्यज्ञानपुरःसरं तुरीयं वस्तु यो वेद स पितुः पिता असद् इति पूर्ववत् ।

**स नः पिता जनिता स उत बन्धुर्धामानि वेद भुवनानि विश्वा ।**
**यो देवानां नामध एक एव तं संप्रश्नं भुवना यन्ति सर्वा ॥ ३ ॥**

सः । नः । पिता । जनिता । सः । उत । बन्धुः । धामानि । वेद । भुवनानि । विश्वा ।
यः । देवानाम् । नामऽधः । एकः । एव । तम् । सम्ऽप्रश्नम् । भुवना । यन्ति । सर्वा ॥ ३ ॥

स सूर्यात्मकः परमात्मा नः अस्माकं पिता पालयिता । न केवलं पालकः किंतु जनिता जनयिता उत्पादकः । 'जनिता मन्त्रे' (पा ६,४,५३) इति निपातनात् णिलोपः । उत अपि च स उक्त एव बन्धुः भ्रात्रादिरूपो बन्धुवर्गः । पित्रादीनां चेतनानां तद्व्यतिरेकेण अभावात् तत्तन्नामभिः स एवाभिधीयत इत्यर्थः । बन्धुः । बन्ध बन्धने । 'शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (पाउ १,१०) इति उप्रत्ययः । 'धान्ये नित्' (पाउ १,९) इत्यतो नित् इत्यनुवृत्तेः 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इत्याद्युदात्तत्वम् । इदानीं तस्य सर्वज्ञताम् आह — धामानि कर्मफलभूतस्वर्गादिस्थानानि । 'धामानि त्रयाणि भवन्ति । स्थानानि नामानि जन्मानीति' । इति हि निरुक्तम् (९,२८) ।

१. शब्दजन° S',Kd. २. जंनि S', Kd. ३. यो ऋ १०,८२,३. ४. यो ऋ. ५. विधाता ऋ. ६. नामधा K,S,Bh,V, ऋ. ७. यन्त्यन्या ऋ. ८. नामऽधाः K. ९. पत्रा° S',Kd.

तत्र स्थितानि विश्वा विश्वानि सर्वाणि भवन्ति सत्तां लभन्ते उत्पद्यन्ते इति भुवनानि भूतजातानि च वेद । स्वाध्यस्तं कृत्स्नप्रपञ्चं स्वामिकं जानातीत्यर्थः । तथा य उक्तः परमात्मा एक एव देवानाम् इन्द्रादीनां स्वसृष्टानां नामधाः । इन्द्रमित्रादीनि नामानि दधाति विदधाति करोतीति नामधाः । श्रूयते हि— 'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन् यदास्ते' (तैआ ३,१२,७) इति । यद्वा इन्द्राग्न्यादिदेवतात्मकः सन् तत्तन्नामानि स्वयमेव धत्ते इति नामधाः । तथा चाम्नायते — 'तदेवाग्निस्तद् वायुस्तत् सूर्यस्तदु चन्द्रमाः । तदेव शुक्रं *[अमृतं] तद् ब्रह्म तदू आपः स प्रजापतिः' (तैआ १०,१,२) इति । 'इन्द्रं मित्रं वरुणम् अग्निम् आहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानम् आहुः' (ऋ १,१६४,४६) इति । नामोपपदात् दधातेः 'आतो मनिन्क्वनिब्वनिपश्च' (पा ३,२,७४) इति चकाराद् विच्प्रत्ययः । 'गतिकारकोपपदात् कृत्' (पा ६,२,१३९) इति उत्तरपदप्रकृतिस्वरत्वम् । तम् उक्तलक्षणम् आत्मानं विषयीकृत्य सर्वा सर्वाणि [भुवना] भुवनानि भूतजातानि । उभयत्र 'शेश्छन्दसि°' (पा ६,१,७०) इति शेर्लोपः । संप्रश्नम् । किंविधोऽयम् आत्मा इति संभूय क्रियमाणः प्रश्नः संप्रश्नः । तं यन्ति प्राप्नुवन्ति । 'यतो वाचो निवर्तन्ते' (तैआ ८,९,१) इत्यादिश्रुत्या परतत्त्वस्य अवाङ्मनसगोचरत्वात् तत्स्वरूपं निश्चेतुम् असमर्थाः सन्तो जिज्ञासवः किम् अयम् आत्मा ज्ञानादिगुणकः उत निर्गुणः, परिच्छिन्नः अपरिच्छिन्नो वा, जगतः किं निमित्तकारणमेव उत उपादानकारणमपि इत्येवमादिसंशयम् आपद्यन्त इत्यर्थः । अथवा संप्रश्नम् । क्रियाविशेषणम् एतत् । संगतः प्रश्नः संप्रश्नः । तत्पूर्वकं गुरुशास्त्रोपदेशतस्तमेव परमात्मानं यन्ति । तदैक्यं लभन्त इत्यर्थः । 'ब्रह्मैव सन् ब्रह्माप्येति' (तैआ २,३,२), 'ब्रह्मविद् आप्नोति परम्' (तैआ ८,१,१), 'ब्रह्म वेद ब्रह्मैव भवति' (मुंउ ३,२,९) इत्यादिश्रुतिभ्यः । विश्वं कृत्स्नं जगत् कर्म कर्तव्यं यस्येति व्युत्पत्त्या विश्वकर्मशब्देन परमात्मैवोच्यते इति वैश्वकर्मणहोमेऽपि अस्या ऋचो विनियोग उपपन्नः । संप्रश्न इति । प्रच्छ ज्ञीप्सायाम् इत्यस्मात् संपूर्वात् 'यजयाच' (पा ३,३,९०) इत्यादिना नङ् । 'प्रश्ने चासन्नकाले' (पा ३,२,११७) इति निपातनात् संप्रसारणाभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् । यन्तीति । इण् गतौ । 'इणो यण्' (पा ६,४,८१) इति यणादेशः ।

परि॒ द्यावा॑पृथि॒वी स॒द्य आ॑य॒मुपा॑तिष्ठे[1] प्रथम॒जामृ॒तस्य॑ ।
वाच॑मिव व॒क्तरि॑ भुवने॒ष्ठा धा॒स्युरे॑ष न॒न्वे॑३॒॑षो अ॒ग्निः ॥ ४ ॥

परि॑ । द्यावा॑पृथि॒वी इति॑ । स॒द्यः । आ॒य॒म् । उप॑ । आ॒ऽअ॒ति॒ष्ठे॒ । प्र॒थ॒म॒ऽजाम् । ऋ॒तस्य॑ । वाच॑म्ऽइव । व॒क्तरि॑ । भु॒व॒ने॒ऽस्थाः । धा॒स्युः । ए॒षः । न॒नु । ए॒षः । अ॒ग्निः ॥ ४ ॥

---

१. द्र पृ १७५ टि ६;८; वैतु. मंपा. द्र. २. स शंपा. ३. °तिष्ठेत् B,K,S,V. ४. प्रथमजा ऋ V,S, पै २,६,४ ५. °तिष्ठे Wh.

ज्ञानोत्तरकालं तत्त्वविद् ब्रूते — द्यावापृथिवी द्यौश्च पृथिवी च द्यावापृथिव्यौ। 'दिवसश्च पृथिव्याम्'[1] (पा ६,३,३०) इति द्यावादेशः आद्युदात्तः। 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। 'देवताद्वन्द्वे च' (पा ६,२,१४१) इत्युभयपदप्रकृतिस्वरत्वम्। तदुपलक्षितं कृत्स्नं जगत् सद्यः तदानीं तत्त्वज्ञानसमकालमेव पर्यायम् परितः प्राप्तवान् अस्मि। स्वाभेदेन अवगतस्य ब्रह्मणः सर्वात्मकत्वाद् इति भावः। तथा च श्रुत्यन्तरे — 'अहं मनुरभवं सूर्यश्च' (ऋ ४,२६,१) इति। इण् गतौ। लङि उत्तमैकवचने गुणायादेशयोः आडागमः। ऋतस्य सत्यस्य सत्याद् ब्रह्मणः। संबन्धसामान्ये षष्ठी। प्रथमजाः भूतभौतिकप्रपञ्चजातात् पूर्वम् उत्पन्नः सूत्रात्मा। श्रूयते हि—'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' (ऋ १०,१२१,१) इति। उपातिष्ठेत्[2]। स यथा समष्टिरूपेण कृत्स्नं जगद् व्याप्य अवतिष्ठते तद्वद् अहम् अस्मीत्यर्थः। प्रथमं जायत इति प्रथमजाः। जनी प्रादुर्भावे इत्यस्मात् 'जनसनखनक्रमगमो विट्' (पा ३,२,६७)। 'विड्वनोरनुनासिकस्यात्' (पा ६,४,४१) इति आत्त्वम्। सद्यःप्राप्तिं दृष्टान्तेन उपपादयति — वाचमिवेति। वक्तरि प्रयोक्तरि स्थितां वाचं निकटस्थिता बोद्धारो यथा प्रयोगसमकाल एव अवगच्छन्ति तथेत्यर्थः। यद्वा ज्ञानिना प्राप्यस्य तत्त्वस्य सर्वात्मकताम् आह — वाचमिवेति। प्रथमार्थे द्वितीया। 'सुपां सुपो भवन्तीति वक्तव्यम्' (पावा ७,१,३९) इति वचनात्। वाक् रवात्मकं विततं शब्दब्रह्म वक्तरि पुरुषे परिच्छिन्नं सत् यथा आविर्भवति। यथाहुराचार्याः —

'स रवः श्रुतिसंपन्नैः शब्दब्रह्मेति कथ्यते।
स तु सर्वत्र संस्यूतो जाते भूताकरे पुनः॥
आविर्भवति देहेषु प्राणिनाम् अर्थविस्तृतः।' इति।

एवं परमात्मा भुवनेष्ठाः। मायातत्कार्यात्मके भुवने भूतजाते तिष्ठति उपहितः सन् वर्तत इति भुवनेष्ठाः। तिष्ठतेर्विच् 'तत्पुरुषे कृति बहुलम्' (पा ६,३,१४) इति सप्तम्या अलुक्। सुषामादित्वात् षत्वम्। एष परमात्मा धास्युः पोषणेच्छावान्। हेतुगर्भविशेषणम् एतत्। पोषणाद्धेतोस्तत्रतत्र भूतेषु वर्तत इत्यर्थः। डुधाञ् धारणपोषणयोः इत्यस्मात् 'सर्वधातुभ्योऽसुन्' (पाउ ४,१८९) इति भावे असुन्प्रत्यये धा इति रूपम्। धाः धारणं पोषणं जगत इच्छतीति 'छन्दसि परेच्छायामपि' (पावा ३,१,८) इति क्यच्। 'क्याच्छन्दसि' (पा ६,२,१७०) इति उप्रत्ययः। यद्वा धासिरित्यन्ननाम (निघ २,७)। तदुपलक्षितं भोग्यजातम् आत्मन इच्छतीति धास्युः। धाञः औणादिकः सिप्रत्ययः। ततः क्यचि अन्त्यलोपश्छान्दसः। निष्क्रियस्य सतः कथं पोषकत्वं भोक्तृत्वं चेति तत्राह—नन्वेषो अग्निरिति। एष परमात्मा अग्निर्नु वैश्वानरात्मना पोषको भोक्ता खलु। श्रूयते हि वाजसनेयके — 'एतावद् वा इदम् [सर्वम्] अन्नं चैवान्नादश्च सोम एवान्नम् अग्निरन्नादः'

1. 'दिवो द्यावा' शंपा. 2. तु. पृ १७६ टि ४; वैतु. मंपा. द्र. 3. तु. पृ १७६ टि ३ वैतु. मंपा. द्र.

( माश १४,४,२,१३ ) इति । भगवताप्युक्तम्—

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥' ( भगी १५,१४ ) इति ।

परि॒ विश्वा॒ भुव॑नान्यायमृ॒तस्य॒ तन्तुं॒ वित॑तं दृ॒शे कम् ।
यत्र॑ दे॒वा अ॒मृत॑मानशा॒नाः स॑मा॒ने॑ योना॒वध्यैर॑यन्त ॥ ५ ॥

परि॑ । विश्वा॑ । भुव॑नानि । आ॒य॒म् । ऋ॒तस्य॑ । तन्तु॑म् । वि॒ऽत॑तम् । दृ॒शे । कम् ।
यत्र॑ । दे॒वाः । अ॒मृत॑म् । आ॒न॒शा॒नाः । स॒मा॒ने । योनौ॑ । अधि॑ । ऐर॑यन्त ॥ ५ ॥

विश्वा विश्वानि भुवनानि पृथिव्यादीन् कर्मफलभूतान् लोकान् पर्यायम् ज्ञानोत्पत्तेः प्राक् खलु परितः प्राप्तवम् । परितो गमनस्य प्रयोजनम् आह—ऋतस्य सत्यस्य ब्रह्मणः तन्तुम् पटस्य तन्तुवत् जगतः कारणभूतं विततम् व्याप्तं स्वरूपं दृशे द्रष्टुम् । पर्यायम् इति संबन्धः । कम् इति पदपूरणः । तथा च यास्कः—'पदपूरणास्ते मिताक्षरेष्वनर्थकाः । कमीमिद्विति' (नि १,९) इति । यद्वा ऋतस्य पुण्यापुण्यलक्षणकर्मणः कारणभूतं तन्तुम् तन्तुवद् बन्धनहेतुं मूलज्ञानं विततम् अनादित्वेन विस्तीर्णम् । 'ऋतस्य तन्तुं विततं विचृत्य' ( तैआ १०,१,४ ) इति श्रुत्यन्तराद् अत्रापि छित्त्वेत्यध्याहारः । कम् सुखात्मकं ब्रह्म । 'कं ब्रह्म खं ब्रह्म' ( छाउ ४,१०,५ ) इति श्रुतेः । दृशे द्रष्टुं पर्यायम् इति योजना । 'दृशे विख्ये च' ( पा ३,४,११ ) इति दृशेस्तुमर्थे केप्रत्ययान्तो निपातितः । द्रष्टव्यं ब्रह्मैव विशिनष्टि—यत्र देवा इत्यर्धर्चेन । यत्र यस्मिन् ब्रह्मणि देवाः इन्द्राद्या अमृतम् अविनश्वरं परमानन्दम् आनशानाः अश्नुवानाः प्राप्नुवन्तः समाने योनौ एकस्मिन्नेव कारणभूते ब्रह्मणि । अधिः सप्तम्यर्थानुवादी आधिक्यार्थो वा । ऐरयन्त स्वात्मानम् अगमयन् । तदेकीभूता इत्यर्थः । अथवा तत्त्ववित् स्वानुभवम् आविष्करोति । यत्र ब्रह्मणि मनोवृत्तिभिः साक्षात्कृते अमृतम् अनश्वरनिरतिशयानन्दम् आनशानाः प्राप्नुवन्तो देवा इन्द्रियाणि समाने योनौ साधारणे कारणभूते ब्रह्मणि अध्यैरयन्त प्राप्नुवन्ति । लीना भवन्तीत्यर्थः । अर्थद्वयेपि तद् ब्रह्म द्रष्टुम् इति संबन्धः । आनशानाः । अश्नोतेश्छान्दसे लिटि 'लिटः कानज्वा' ( पा ३,२,१०६ ) इति कानजादेशः । 'अश्नोतेश्च' ( पा ७,४,७२ ) इति नुडागमः । 'चितः' ( पा ६,१,१६३ ) इत्यन्तोदात्तत्वम् ।

इति द्वितीयकाण्डे प्रथमेऽनुवाके प्रथमं सूक्तम् ।

'दिव्यो गन्धर्वः' इत्येतत् सूक्तं मातृनामगणे पठितम् । सूत्रितं हि—" 'दिव्यो गन्धर्वः' ( अ २,२ ) 'इमं मे अग्ने' ( अ ६,१११ ) 'भौ ते माता' ( अ ८,६ ) इति मातृनामानि" ( कौसू ८,२४ ) इति ।

१. तृतीये मा ३२,१० तैआ १०,१,४ २. धामन्नध्यै °मा., धामान्यभ्यै तैआ.; वैप १,१७१४ p.

**अस्य सूक्तस्य गन्धर्वराक्षसाप्सरोभूतग्रहादिशान्तये घृताक्तसर्वौषधिहोमे चतुष्पथे ग्रहगृहीतशिरःस्थितमृन्मयकपालाग्निहोमादौ च विनियोगः ।** 'मातृनाम्नोः सर्वसुरभिचूर्णान्यन्वक्तानि हुत्वा शेषेण प्रलिम्पति । चतुष्पथे च शिरसि दर्भेण्डुकेऽङ्गारकपालेऽन्वक्तानि' । **इत्यादि** 'मौञ्जे त्रिपादे वयोनिवेशने प्रबध्नाति' (कौसू २६,२९-३२) **इत्यन्तं सूत्रम् अत्र द्रष्टव्यम् ।**

**तथा घृतमांसमधुहिरण्यपांस्वादिघोरवर्षणाद्भुते, मर्कटश्वापदादिरूपयक्षाद्भुते, गोमायुनामकमण्डूकवदनादिषु अद्भुतेषु [च] अनेन सूक्तेन आज्यं जुहुयात् ।** 'अथ यत्रैतानि वर्षाणि वर्षन्ति घृतं मांसं मधु च यद्धिरण्यम्' **इति प्रक्रम्य** "'दिव्यो गन्धर्वः' इति मातृनामभिर्जुहुयात् । ××× सा तत्र प्रायश्चित्तिः' (कौसू ९४,१-१८) **इति तत्रतत्रोदाहृतं सूत्रं द्रष्टव्यम् ।**

**तथा ग्रहयज्ञे प्रधानहोमानन्तरं शान्त्यर्थम् अनेन सूक्तेन आज्यं जुहुयात् । तद् उक्तं शान्तिकल्पे ग्रहयज्ञं प्रक्रम्य—**'अथ शान्तिः कृत्यादूषणैः' ( अ २, ११; ४, १७-१९; ४०; ५, १४; ३१; ८, ५; १०, १ ), चातनैः ( अ १, ७; ८; २, १४; १८; २५; ४, २०; ३६; ३७; ५, २९; ८, ३, ४ ), मातृनामभिः ( अ २, २; ६, १११; ८, ६ ), 'वास्तोष्पत्यैः ( अ ३, १२; ६, ७३; ९३; १२, १ ) आज्यं जुहुयात्' ( शाक १६ [?] ) **इति ।**

**तथा प्राग् उदीरितानां त्रिंशच्छान्तीनां तन्त्रभूतायां महाशान्तौ अनेन सूक्तेन आज्यं हुत्वा कुम्भे संपातान् आनयेत् । उक्तं हि शान्तिकल्पे —**

'संपातान् आनयेत् कुम्भे जुह्वन्मन्त्रैरथोत्तरैः'

**इत्यारभ्य**

'चातनो मातृनामा च वास्तोष्पत्योऽथ पाप्महा' ( शाक २२,५;२३,१ ) ) **इति ।**

**तथा यत्रयत्र महाशान्त्यादौ मातृनामगणस्य विनियोगस्तत्रतत्रैतत् सूक्तं द्रष्टव्यम् ।**

**तथा अश्वमेधे** 'दिव्यो गन्धर्वः' **इत्यनया ऋचा ब्रह्मा संवत्सरान्ते युज्यमानम् अश्वम् अनुमन्त्रयेत ।** "'दिव्यो गन्धर्वः' इत्येतया कौशिकः" ( वैताश्रौ ३६,२८ ) **इति हि वैतानं सूत्रम् ।**

दिव्यो गन्धर्वो भुवनस्य यस्पतिरेकं एव नमस्यो विक्ष्वीड्यः ।
तं त्वां यौमि ब्रह्मणा दिव्यं देव नमस्ते अस्तु दिवि ते सधस्थम् ॥ १ ॥

दिव्यः । गन्धर्वः । भुवनस्य । यः । पतिः । एकः । एव । नमस्यः । विक्षु । ईड्यः । तम् । त्वा । यौमि । ब्रह्मणा । दिव्य । देव । नमः । ते । अस्तु । दिवि । ते । सधऽस्थम् ॥ १ ॥

१. °सुरभिश्च° S', Kd. २. तु. S', Kd; वैतु. शंपा., Bl. दर्भेण्ड्वेऽङ्गार° ३. °यज्वा' S', Kd. ४. तत् ऋ १,२४,११. ५. यामि ब्रह्मणा ऋ. ६. देव दिव्य पै १,७,१.

दिवम् अर्हतीति दिव्यः। द्युस्थान इत्यर्थः। 'छन्दसि च' (पा ५,१,६७) इति यः। प्रत्ययस्वरेण अन्तोदात्तः। गाः रश्मीन् उदकं वा धारयतीति गन्धर्वः सूर्यः भुवनस्य पृथिव्यादिलोकस्य वृष्ट्यादिना पतिः पोषकः। श्रूयते हि—'यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति' (तै २,४,१०,२) इत्यादि। अथवा भुवनस्य प्राणिजातस्य पतिः प्राणरूपेण पालकः। तथा च आथर्वणोपनिषदि आम्नायते—'सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानाम् उदयत्येष सूर्यः' (प्रउ १,८) इति। 'योसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणान् आदायोदेति' (तैआ १,१४,१) इति हि तैत्तिरीयके। विक्षु प्रजासु एक एव नमस्यः नमस्कार्यः ईड्यः स्तुत्यश्च। नमःशब्दात् 'नमोवरिवश्चित्रङः क्यच्' (पा ३,१,१९) इति पूजायां क्यच्। तदन्ताद् 'अचो यत्' (पा ३,१,९७) अतोलोपयलोपौ। यद्वा नमस्कारार्हः। 'तदर्हति' (पा ५,१,६३) इति छान्दसो यत्। 'तित् स्वरितम्' (पा ६,१,१८५) इति स्वरितत्वम्। विक्षु। 'सावेकाचः°' (पा ६,१,१६८) इति विभक्तेरुदात्तत्वम्। ईड्यः। ईड स्तुतौ इत्यस्मात् 'ऋहलोर्ण्यत्' (पा ३,१,१२४)। 'ईड्वन्दवृशंसदुहां ण्यतः' (पा ६,१,२१४) इत्याद्युदात्तत्वम्। ईदृशो यो गन्धर्वः। तं त्वा ब्रह्मणा परमात्मना यौमि संयोजयामि। तद्रूपेण भावयामीत्यर्थः। यद्वा ब्रह्मणा स्तुतिलक्षणेन मन्त्रेण हविर्लक्षणेन अन्नेन वा यौमि संयोजयामि। यु मिश्रणे। 'उतो वृद्धिर्लुकि हलि' (पा ७,३,८९) इति वृद्धिः। हे दिव्य दिवि भव, हे देव द्योतनादिगुणविशिष्ट। दीव्यतेः इगुपधलक्षणे के प्राप्ते 'देवसेवमेषादयः पचादिषु द्रष्टव्याः' (पावा ३,१,१३४) इति अच् प्रत्ययः। किंच ते तुभ्यं नमोस्तु मया क्रियमाणो नमस्कारो भवतु। 'नमःस्वस्ति°' (पा २,३,१६) इति युष्मदश्चतुर्थी। 'तेमयावेकवचनस्य' (पा ८,१,२२) इति ते आदेशः। 'अनुदात्तं सर्वमपादादौ' (पा ८,१,१८) इत्यनुदात्तः। नमस्कार्यत्वमेव उपपादयति दिवि द्युलोके खलु ते तव सधस्थम् सहस्थानम्। आवासस्थानम् इत्यर्थः। दिवि। 'ऊडिदम्' (पा ६,१,१७१) इत्यादिना विभक्तेरुदात्तता। सह तिष्ठन्त्यत्रेति 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (पा ३,३,५८) इत्यधिकरणे कप्रत्ययः। 'सध मादस्थयोश्छन्दसि' (पा ६,३,९६) इति सहस्य सधादेशः। 'अद्रिसध्र्योरन्तोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थम्' (पावा ६,३,९२) इत्यत्र सध्रिग्रहणस्य सहादेशोपलक्षणार्थत्वात् सधशब्दस्य अन्तोदात्तता। अस्या ऋचः अश्वमेधे बध्यमानाश्वानुमन्त्रणे विनियोगस्य दर्शितत्वात् तदनुसारेण अर्थो नेयः। गन्धर्वः गन्धर्वकुलजातोश्व इत्यर्थः। 'उषा वा अश्वस्य मेध्यस्य' (बृउ १,१,१) इत्यादिना अश्वमेधाङ्गस्य अश्वस्य बृहदारण्यके विराडात्मना उपास्यत्वदर्शनात् सर्वाणि विशेषणानि अश्वपक्षेपि युज्यन्ते।

दि॒वि[4] स्पृ॒ष्टो य॑ज॒तः सूर्य॑त्वगवया॒ता हर॑सो॒ दैव्य॑स्य।
मृ॒डाद् ग॑न्ध॒र्वो भुव॑नस्य॒ यस्पति॒रेक॑[5] ए॒वो नम॒स्यः॑ सु॒शेवाः॑ ॥ २ ॥

१. योज° S', Kd. २. °भगुणे S', Kd. ३. वध्य° S', Kd. ४. दिव पै १,७,२ [मूको.]
५. एकायसो मनसा सुशेवः ? पै.

दिवि । स्पृष्टः । यजतः । सूर्यऽत्वक् । अवऽयाता । हरसः । दैव्यस्य ।
मृडात् । गन्धर्वः । भुवनस्य । यः । पतिः । एकः । एव । नमस्यः । सुऽशेवाः ॥ २ ॥

दिवि द्युस्थाने स्पृष्टः स्प्रष्टा । तत्र स्थित इत्यर्थः । स्पृश संस्पर्शने इत्यस्मात् कर्तरि क्तः । यजतः यष्टव्यः । 'भृमृदृशियजिपच्यमिनमिहर्यिभ्योऽतच्' ( पाउ ३,११० ) इति अतच्प्रत्ययः । चित्त्वाद् अन्तोदात्तः । सूर्यस्य त्वगिव त्वग् यस्य स सूर्यत्वक् । सूर्यसमानवर्ण इत्यर्थः । 'राजसूयसूर्य' ( पा ३,१,११४ ) इत्यादिना सुवतेः सरतेर्वा क्यबन्तो निपातितः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । दैव्यस्य देवसंबन्धिनो हरसः । क्रोधनामैतत् । क्रोधस्य अवयाता अपगमयिता । 'देवाद् यञञौ' ( पावा ४,१,८५ ) इति प्राग्दीव्यतीयेषु अर्थेषु यञ् । 'ञ्नित्यादिर्नित्यम्' ( पा ६,१,१९७ ) इत्याद्युदात्तः । न केवलं दैव्यस्य क्रोधस्य निवारकः अपितु सुखप्रदोपि अयमेव इत्याह — मृडात् मृडयतु । मृड सुखने इत्यस्मात् लेटि आडागमः । 'इतश्च लोपः परस्मैपदेषु' (पा ३,४,९७) इति इकारलोपः । गन्धर्व इत्यादि पूर्ववत् । सुशेवाः । शेवम् इति सुखनाम । शोभनं सुखं यस्य स तथोक्तः । व्यत्ययेन बहुवचनम् । 'इण्शीङ्भ्यां वन्' ( पाउ १,१५२ ) इति वन्प्रत्ययः । 'आद्युदात्तं द्व्यच् छन्दसि' ( पा ६,२,११९ ) इति बहुव्रीहौ उत्तरपदाद्युदात्तत्वम् । यद्वा षेवृ शेवृ केवृ सेवने तालव्यादिः पठ्यते । अस्माद् भावे असुनि शोभनं शेवः शेवनं यस्येति बहुव्रीहौ 'सोर्मनसी अलोमोषसी' ( पा ६,२,११७ ) इत्युत्तरपदाद्युदात्तत्वम् । अनायासेन सेव्य इत्यर्थः ।

अनवद्याभिः समु जग्म आभिरप्सरास्वपि गन्धर्व आसीत् ।
समुद्र आसां सदनं म आहुर्यतः सद्य आ च परा च यन्ति ॥ ३ ॥

अनवद्याभिः । सम् । ऊं इति । जग्मे । आभिः । अप्सरासु । अपि । गन्धर्वः । आसीत् ।
समुद्रे । आसाम् । सदनम् । मे । आहुः । यतः । सद्यः । आ । च । परा । च । यन्ति ॥ ३ ॥

अनवद्याभिः अगर्ह्याभिः । प्रशस्तरूपाभिरित्यर्थः । 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' ( पा ३,१,१०१ ) इति गर्ह्यार्थे अवद्यशब्दो यत्प्रत्ययान्तो निपातितः । बहुव्रीहौ 'नञ्सुभ्याम्' ( पा ६,२,१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । आभिरप्सरोभिः मरीचिरूपाभिः । 'सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरसः' ( तै ३,४,७,१ ) इति श्रुतेः । सूर्यरूपो गन्धर्वः सं जग्मे संगतवान् । उशब्दः पदपूरणार्थः प्रसिद्ध्यर्थो वा । 'समो गम्यृच्छि' ( पा १,३,२९ ) इत्यादिना अकर्मकाद् गमेरात्मनेपदम् । 'गमहन°' ( पा ६,४,९८ ) इत्युपधालोपः । अप्सरासु अप्सरःस्वपि गन्धर्वः सूर्यनामा आसीत् संमतोऽभवत् । गन्धर्वाप्सरसां परस्परसाहित्यप्रतिपादनेन तेषाम् अविनाभावस्य सिद्धत्वात् सहैव तेषां पूजाहोमादिकं कार्यम् इति तात्पर्यार्थः । अत एव तैत्तिरीयके 'गन्धर्वाप्सरसो वा एतम् उन्मादयन्ति'

१. स्वरतेर्वा S', Kd.    २. देव्यस्य S', Kd.    ३. ततः पै १,७,३.    ४. °पादकेन S', Kd.

य उन्मादयति' इति प्रक्रम्य 'तस्मै स्वाहा ताभ्यः स्वाहेति जुहोति तेनैवैनान् शमयति' ( तै ३,४,८,४ ) इति होमसाहित्यम् आम्नातम्। अप्सरास्विति। आप इत्यन्तरिक्षनाम, उदकं वा। तत्र सरतीत्यप्सरा। बाहुलकाद् अच्। यद्वा अप्स इति रूपनाम। रो मत्वर्थीयः। उभयत्र टाप्। अथवा अप्सु सरतीति अप्शब्दोपपदात् सर्तेः असुन्। अप्सुशब्दोपपदात् ला आदाने इत्यस्माद् वा रत्वे असुन्। रा दाने इत्यस्माद् वा असुन्। तथा च सकारान्तोऽप्सरःशब्दः। तस्यैव व्यत्ययेन सकारस्य आत्वम्। एतत् सर्वं यास्केनोक्तम्— 'अप्सरा अप्सारिणी। अपि वाऽप्स इति रूपनाम। अप्सातेः। अप्सानीयं भवति। आदर्शनीयम्। व्यापनीयं वा' इति। 'तद्रा भवति रूपवती। तदनयात्तम् इति वा। तदस्यै दत्तमिति वा।' ( नि ५,१३ ) इति च। अत एव व्युत्पत्त्यनवधारणात् पदकारा नावगृह्णते। अप्सरसां स्थानम् आह – समुद्र इति। आसाम् अप्सरसां मरीचिरूपाणां सदनम्। सीदन्त्यस्मिन्निति सदनम् आवासस्थानम्। अधिकरणे ल्युट्। समुद्रे समुद्द्रवन्ति अस्माद् आप इति वा, संमोदन्तेऽस्मिन् भूतानीति वा समुद्रशब्देन आदित्य उच्यते। तत्र इति मे मम आहुः कथयन्ति अभिज्ञाः। इति मन्त्रद्रष्टुर्वचनम् एतत्। तदेव उपपादयति — यतः यस्माद् आदित्यात् सद्यः सूर्योदयसमकालमेव आ यन्ति च आगच्छन्ति च परा यन्ति च अस्मात् स्थानात् तत् पुनः परागच्छन्ति च। अस्तमयकाले तदेव प्रविशन्तीत्यर्थः। अथवा गन्धर्वशब्दः प्रसिद्धगन्धर्वजातिवाचकः। अप्सरःशब्दोपि प्रसिद्धाप्सरोजातिवाची। समु जग्मे[4] इति परस्परानुरागविशेषेण स्त्रीपुंसात्मकानां तेषां गतिरुक्ता। समुद्रशब्देन अन्तरिक्षलोक उच्यते। यतः यस्माद् अन्तरिक्षलोकाद् आयन्ति प्रजापीडार्थम् आविर्भवन्ति[5] पुनस्तत्रैव परा[6] यन्ति[6]। तिरोभवन्तीत्यर्थः। अन्यत् पूर्ववद् योज्यम्।

अभ्रिये दिद्युन्नक्षत्रिये या विश्वावसुं गन्धर्वं सचध्वे।
ताभ्यो वो देवीर्नम इत् कृणोमि ॥ ४ ॥

अभ्रिये। दिद्युत्। नक्षत्रिये। याः। विश्वऽवसुम्। गन्धर्वम्। सचध्वे।
ताभ्यः। वः। देवीः। नमः। इत्। कृणोमि ॥ ४ ॥

हे अभ्रिये। अभ्रेषु भवा अभ्रिया। 'समुद्राभ्राद् घः' ( पा ४,४,११८ ) इति भवार्थे घप्रत्ययः। घस्य इयादेशः। हे दिद्युत् द्योतनस्वभावे। द्युत दीप्तौ इत्यस्मात् 'द्युतिगमिजुहोतीनां द्वे च' ( पावा ३,२,१७८ ) इति क्विपि द्विर्वचने 'द्युतिस्वाप्योः संप्रसारणम्' ( पा ७,४,६७ ) इत्यभ्यासस्य संप्रसारणम्। हे नक्षत्रिये नक्षत्ररूपिणि। 'नक्षत्राद् घः' ( पा ४,४,१४१ ) इति स्वार्थे घप्रत्ययः। 'चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसः' ( तै ३,४,७,१ ) इति श्रुतेर्नक्षत्राणाम् अप्सरस्त्वम्। यद्वा अभ्रिये। अभ्रम् अन्तरिक्षम्। तत्र भवः

१. तस्यै शंपा. २. समर्थयति शंपा. ३. °द्र: वा° S', Kd. ४. जग्मुः S', Kd.
५. °वति S', Kd. ६. पारयंत्विति S', Kd.

आयुश्चिरकालजीवनम् असि । अतः शतसंवत्सरपरिमितम् आयुर्मे [दाः] देहि ।

**श्रोत्रमसि श्रोत्रं मे दाः[1] स्वाहा ॥ ५ ॥**

श्रोत्रम् । असि । श्रोत्रम् । मे । दाः । स्वाहा ॥ ५ ॥

**चक्षुरसि चक्षुर्मे दाः[1] स्वाहा ॥ ६ ॥**

चक्षुः । असि । चक्षुः । मे । दाः । स्वाहा ॥ ६ ॥

पञ्चमीषष्ठ्यौ निगदसिद्धे ।

**परिपाणमसि परिपाणं मे दाः[1] स्वाहा ॥ ७ ॥**

परिऽपानम् । असि । परिऽपानम् । मे । दाः । स्वाहा ॥ ७ ॥

परिपाणम् परितः पालनम् । तद्धेतुत्वात् ताच्छब्द्यम् । परिपालक इत्यर्थः । अतः परिपाणम् परितः सर्वतः आयुर्भङ्गनिमित्तभूतेभ्यः पालनं [दाः] देहि । परिपूर्वात् पातेर्भावे ल्युट् । 'कृत्यचः' ( पा ८,४,२९ ) इति नस्य णत्वम् ।

इति द्वितीये काण्डे तृतीयेऽनुवाके सप्तमं सूक्तम् ।
इति द्वितीयोऽनुवाकः समाप्तः ।

चतुर्थेऽनुवाके नव सूक्तानि । तत्र 'भ्रातृव्यक्षयणम्' इति प्रथमसूक्तेन अभिचारकर्मणि शरसमिदाधानम् कृष्णव्रीहियवतिलाद्यावपनं च कुर्यात् ( तु. कौसू ४८,१;२ ) ।

अत्र 'अरायक्षयणम्' इत्याद्यास्तिस्रः चातनगणे ( कौसू ८,२५ ) पठिताः । अतस्तस्य गणस्य यत्रयत्र विनियोगस्तत्रतत्र आसां विनियोगो द्रष्टव्यः ।

**भ्रातृव्यक्षयणमसि भ्रातृव्यचातनं मे दाः[2] स्वाहा ॥ १ ॥**

भ्रातृव्यऽक्षयणम् । असि । भ्रातृव्यऽचातनम् । मे । दाः । स्वाहा ॥ १ ॥

अत्रापि होमाधारोऽग्निः संबोध्यः होमद्रव्यं वा । हे अग्ने त्वं भ्रातृव्यक्षयणम् असि भ्रातृव्यः शत्रुः । भ्रातृशब्दाद् 'व्यन्त्सपत्ने' ( पा ४,१,१४५ ) इति व्यन्प्रत्ययः । तस्य क्षयणं विनाशनम् असि । क्षि क्षये इत्यस्माद् भावे करणे वा ल्युट् । अतो मे मह्यं भ्रातृव्यचातनम् भ्रातृव्यनाशनम् । चातयतिर्नाशनकर्मा (तु. नि ६,३०) इत्युक्तम् । दाः देहि । स्वाहेति पूर्ववद् योज्यम् ।

**सपत्नक्षयणमसि सपत्नचातनं मे दाः[3] स्वाहा ॥ २ ॥**

सपत्नऽक्षयणम् । असि । सपत्नऽचातनम् । मे । दाः । स्वाहा ॥ २ ॥

१. पृ २२६ टि १ द्र.  २. नसो S', Kd.  ३. °जम्भनमसि पै २,४९,५;४.

सपत्नशब्दः शत्रुपर्यायः। 'व्यन्सपत्ने' (पा ४,१,१४५) इति सूत्रे सपत्नशब्दः सपत्नीव सपत्न इति इवार्थे अकारप्रत्ययान्तो व्याख्यातः। यद्यपि भ्रातृव्यसपत्नशब्दौ पर्यायौ तथाप्यत्र उभयोरपि पृथगुपादानाद् आत्मीयानात्मीयरूपेण भेदो द्रष्टव्यः। गतम् अन्यत्।

अरायक्षयणमस्यरायचातनं मे दाः स्वाहा ॥ ३ ॥

अरायऽक्षयणम् । असि । अरायऽचातनम् । मे । दाः । स्वाहा ॥ ३ ॥

अरायक्षयणम् अरायाः अदायिनः दानोपलक्षितनिखिलश्रेयोविघ्नकारिणः। तेषां क्षयणम्। रा दाने इत्यस्य नञा बहुव्रीहिः। अन्यत् पूर्ववत्।

पिशाचक्षयणमसि पिशाचचातनं मे दाः[1] स्वाहा ॥ ४ ॥

पिशाचऽक्षयणम् । असि । पिशाचऽचातनम् । मे । दाः । स्वाहा ॥ ४ ॥

पिशाचाः पिशिताशिनो भूतविशेषाः। पिशितं मांसम् अश्नन्तीति 'कर्मण्यण्' (पा ३,२,१)। पृषोदरादिषु पाठात् पिशिताशशब्दयोः पिशाचौ आदेशौ। गतम् अन्यत्।

सदान्वाक्षयणमसि सदान्वाचातनं मे दाः[1] स्वाहा ॥ ५ ॥

सदान्वाऽक्षयणम् । असि । सदान्वाऽचातनम् । मे । दाः । स्वाहा ॥ ५ ॥

सदान्वाक्षयणम् सदा नोनूयमाना आक्रोशकारिण्यः पिशाच्यः। सदान्वा इति निःसालसूक्ते (अ २,१४) व्याख्यातम्।

इति द्वितीयकाण्डे चतुर्थेऽनुवाके प्रथमं सूक्तम्॥

'अग्ने यत् ते' इत्यादिभिः पञ्चभिः सूक्तैरभिचारकर्मणि पुरस्ताद्धोमान् आज्येन[2] जुहुयात् (तु. कौसू ४७,८)।

अग्ने यत् ते तपस्तेन तं प्रति तप योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ १ ॥

अग्ने । यत् । ते । तपः । तेन । तम् । प्रति । तप । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ॥ १ ॥

हे अग्ने पृथिवीस्थान ते त्वदीयं यत् तपः संतापनशक्तिः तेन तपसा तम् शत्रुं प्रति लक्ष्यीकृत्य तप प्रज्वलितो भव। 'लक्षणेत्थंभूताख्यान' (पा १,४,९०) इत्यादिना प्रतेः कर्मप्रवचनीयसंज्ञा। 'कर्मप्रवचनीययुक्ते' (पा २,३,८) इति द्वितीया। यद्वा कर्मणि

१. °जम्भनमसि पै २,४६,१;३. २. आज्येना S', Kd. ३. योऽस्मान् D; यो॒ऽस्मान् A, B, K, S^m, V; यो॑ अ॒स्मान् मै १,५,२. इतोऽग्रेऽप्येवं द्र. ४. यं॑ च व॒यं॑ मै. काठ ६,६ पै २,४८,१ आपश्रौ ६,२१,६.

द्वितीया । तं शत्रुं प्रति तप । प्रतिकूलं प्रतिमुखं प्रत्यवयवं वा तपेत्यर्थः । यः शत्रुः अस्मान् द्वेष्टि द्वेषं करोति यं च शत्रुं वयं द्विष्मः अप्रियं कुर्मः । तम् इति पूर्वेण संबन्धः । अनेन व्यतिहारनिर्देशेन अभिचारप्रत्यभिचारयोरुभयत्रापि अस्य मन्त्रस्य सामर्थ्यं द्योतितं भवति ।

अग्ने॒ यत् ते॒ हर॒स्तेन॒ तं प्रति॑ हर॒ यो॒३॒॑ऽस्मान् द्वेष्टि॒ यं व॒यं द्वि॒ष्मः ॥ २ ॥

अग्ने॑ । यत् । ते॒ । हरः॑ । तेन॑ । तम् । प्रति॑ । ह॒र । यः ०० ॥ २ ॥

हरतीति हरः संहरणसामर्थ्यम् । क्रोधनामसु पाठात् क्रोधो वा । हरतेरसुन् । तेन हरसा तम् शत्रुं प्रति हर संहर । गतम् अन्यत् ।

अग्ने॒ यत् ते॒ऽर्चि॒स्तेन॒ तं प्रत्य॑र्च॒ यो॒३॒॑ऽस्मान् द्वेष्टि॒ यं व॒यं द्वि॒ष्मः ॥ ३ ॥

अग्ने॑ । यत् । ते॒ । अ॒र्चिः । तेन॑ । तम् । प्रति॑ । अ॒र्च॒ । यः ०० ॥ ३ ॥

अर्चतिरत्र धातूनाम् अनेकार्थत्वाद् दीप्त्यर्थः । तेन आर्चिषा तं प्रत्यर्च प्रतिदग्धुं दीप्तो भव । उक्तम् अन्यत् ।

अग्ने॒ यत् ते॒ शो॒चि॒स्तेन॒ तं प्रति॑ शोच॒ यो॒३॒॑ऽस्मान् द्वेष्टि॒ यं व॒यं द्वि॒ष्मः ॥ ४ ॥

अग्ने॑ । यत् । ते॒ । शो॒चिः । तेन॑ । तम् । प्रति॑ । शो॒च॒ । यः ०० ॥ ४ ॥

शोचिः शोकजननसामर्थ्यम् । शुच शोके इत्यस्मात् 'आर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः' (पाउ २,१०८) इति करणे इसिप्रत्ययः । तेन शोचिषा तं प्रति शोच शोकयुक्तं कुरु ।

अग्ने॒ यत् ते॒ तेज॒स्तेन॒ तम॑ते॒जसं॑ कृणु॒ यो॒३॒॑ऽस्मान् द्वेष्टि॒ यं व॒यं द्वि॒ष्मः ॥ ५ ॥

अग्ने॑ । यत् । ते॒ । तेजः॑ । तेन॑ । तम् । अ॒ते॒जस॑म् । कृ॒णु॒ । यः ०० ॥ ५ ॥

तेजः तीक्ष्णं पराभिभवनसामर्थ्यम् । तिज निशाने इत्यस्माद् असुन् । तेन तेजसा तम् शत्रुम् अतेजसं निस्तेजस्कं कृणु कुरु । गतम् अन्यत् । यद्यप्यत्र सूक्ते क्रमेण निर्दिष्टास्तपोहरोर्चिःशोचिस्तेजःशब्दाः पञ्चापि यास्केन ज्वलनामसु पठितास्तथापि सर्वेषाम् अत्रोपादानाद् उक्तप्रकारेण धात्वर्थभेदाद् भेदोवगन्तव्यः ।

इति चतुर्थेऽनुवाके द्वितीयं सूक्तम् ।

°१. अप्रियं द्विः S', Kd. २. शुक S', Kd. ३. °छादिछृदि° S', Kd. ४. ज्योतिस्. मै २,४८,५. ५. प्रति दह पै; प्रति तितिग्धि मै १,५,२ आपश्रौ ६,२१,१; प्रति तित्यग्धि काठ ६,६.

इत उत्तराणि 'वायो यत्' (अ २,२०), 'सूर्य यत्' (अ २,२१), 'चन्द्र यत्' (अ २,२२), 'आपो यत्' (अ २,२३) इति चत्वारि सूक्तानि 'अग्ने यत्' (अ २,१९) इति पूर्वसूक्तवद् व्याख्येयानि। तेषु वाय्वादिदेवतासंबोधनमेव विशेषः। 'आपो यद् वः' इत्यत्र अपां नित्यबहुत्वाद् बहुवचननिर्देशः।

वायो यत् ते तपस्तेन तं प्रति तप योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ १ ॥
वायो इति। यत्। ते। तपः। तेन। तम्। प्रति। तप। यः ०० ॥ १ ॥

वायो यत् ते हरस्तेन तं प्रति हर योऽ३स्मान् यं वयं द्विष्मः ॥ २ ॥
वायो इति। यत्। ते। हरः। तेन। तम्। प्रति। हर। यः ०० ॥ २ ॥

वायो यत् तेर्चिस्तेन तं प्रत्यर्च योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ ३ ॥
वायो इति। यत्। ते। अर्चिः। तेन। तम्। प्रति। अर्च। यः ०० ॥ ३ ॥

वायो यत् ते शोचिस्तेन तं प्रति शोच योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ ४ ॥
वायो इति। यत्। ते। शोचिः। तेन। तम्। प्रति। शोच। यः ०० ॥ ४ ॥

वायो यत् ते तेजस्तेन तमतेजसं कृणु योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ ५ ॥
वायो इति। यत्। ते। तेजः। तेन। तम्। अतेजसम्। कृणु। यः ०० ॥ ५ ॥

इति चतुर्थेऽनुवाके तृतीयं सूक्तम्।

सूर्य यत् ते तपस्तेन तं प्रति तप योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ १ ॥
सूर्य। यत्। ते। तपः। तेन। तम्। प्रति। तप। यः ०० ॥ १ ॥

सूर्य यत् ते हरस्तेन तं प्रति हर योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ २ ॥
सूर्य। यत्। ते। हरः। तेन। तम्। प्रति। हर। यः ०० ॥ २ ॥

सूर्य यत् तेर्चिस्तेन तं प्रत्यर्च योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ ३ ॥
सूर्य। यत्। ते। अर्चिः। तेन। तम्। प्रति। अर्च। यः ०० ॥ ३ ॥

सूर्य यत् ते शोचिस्तेन तं प्रति शोच योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ ४ ॥
सूर्य। यत्। ते। शोचिः। तेन। तम्। प्रति। शोच।। यः ०० ॥ ४ ॥

सूर्य यत् ते तेजस्तेन तमतेजसं कृणु योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ॥ ५ ॥

सूर्यं । यत् । ते । तेजः । तेन । तम् । अतेजसम् । कृणु । यः ०० ॥ ५ ॥

इति चतुर्थेऽनुवाके चतुर्थं सूक्तम् ।

चन्द्र यत् ते तपस्तेन तं प्रति तप योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ १ ॥

चन्द्र । यत् । ते । तपः । तेन । तम् । प्रति । तप । यः ०० ॥ १ ॥

चन्द्र यत् ते हरस्तेन तं प्रति हर योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ २ ॥

चन्द्र । यत् । ते । हरः । तेन । तम् । प्रति । हर । यः ०० ॥ २ ॥

चन्द्र यत् तेऽर्चिस्तेन तं प्रत्यर्च योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ ३ ॥

चन्द्र । यत् । ते । अर्चिः । तेन । तम् । प्रति । अर्च । यः ०० ॥ ३ ॥

चन्द्र यत् ते शोचिस्तेन तं प्रति शोच योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ ४ ॥

चन्द्र । यत् । ते । शोचिः । तेन । तम् । प्रति । शोच । यः ०० ॥ ४ ॥

चन्द्र यत् ते तेजस्तेन तमतेजसं कृणु योऽस्मान द्वेष्टि यं वयं द्विष्मः ॥ ५ ॥

चन्द्र । यत् । ते । तेजः । तेन । तम् । अतेजसम् । कृणु । यः ०० ॥ ५ ॥

इति चतुर्थेऽनुवाके पञ्चमं सूक्तम् ।

आपो यद् वस्तपस्तेन तं प्रति तपत योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ १ ॥

आपः । यत् । वः । तपः । तेन । तम् । प्रति । तपत । यः ०० ॥ १ ॥

आपो यद् वो हरस्तेन तं प्रति हरत योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ २ ॥

आपः । यत् । वः । हरः । तेन । तम । प्रति । हरत । यः ०० ॥ २ ॥

आपो यद् वोऽर्चिस्तेन तं प्रत्यर्चत योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ ३ ॥

आपः । यत् । वः । अर्चिः । तेन । तम् । प्रति । अर्चत । यः ०० ॥ ३ ॥

आपो यद् वः शोचिस्तेन तं प्रति शोचत योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ ४ ॥

आपः । यत् । वः । शोचिः । तेन । तम् । प्रति । शोचत । यः ०० ॥ ४ ॥

आपो यद् वस्तेजस्तेन तमतेजसं कृणुत योऽस्मान् द्वेष्टि यं वयं द्विष्मः ॥ ५ ॥

आपः । यत् । वः । तेजः । तेन । तम् । अतेजसम् । कृणुत । यः ०० ॥ ५ ॥

इति द्वितीयकाण्डे चतुर्थेऽनुवाके तृतीयचतुर्थपञ्चमषष्ठसूक्तानि ।

'शेरभक' इति सप्तमसूक्तेन अलक्ष्मीविनाशकर्मणि समुद्रमध्ये शीपेदस्थेऽग्नौ हुत्वा चरुं संपात्य अभिमन्त्र्य प्राश्नीयात्।

तथा तस्मिन्नेव कर्मणि 'शेरभक' इत्यनेनैव सूक्तेन खण्डितयवानां सक्तुं रक्तवर्णाया अजाया दध्युदके क्षिप्त्वा आज्येन हुत्वा संपात्य अभिमन्त्र्य अश्नीयात्।

तथैव तस्मिन्नेव कर्मणि अनेन सूक्तेन तृणग्रन्थीन् कृत्वा उदपात्रे प्रत्यृचं विन्यस्य तेनोदकेन आप्लावनं मुखमार्जनं च कुर्यात्।

उक्तं हि सूत्रे— " 'शेरभक' इति सामुद्रम् अप्सु कर्म व्याख्यातम् अनपहतधाना लोहिताजाया द्रप्सेन संनीयाश्नाति" ( कौसू. १९,९;१० )

**शेर॑भक॒ शेर॑भ॒ पुन॑र्वो यन्तु या॒तव॒: पुन॒र्हेति॑: किमीदिनः ।**
**यस्य॒ स्थ तम॑त्त॒ यो व॒: प्राहै॑त् तम॑त्त॒ स्वा मांसान्य॑त्त ॥ १ ॥**

शेर॑भक । शेर॑भ । पुन॑: । व॒: । यन्तु॑ । या॒तव॑: । पुन॑: । हे॒तिः । कि॒मी॒दि॒न॒: ।
यस्य॑ । स्थ । तम् । अ॒त्त॒ । यः । व॒: । प्र॒ऽअहै॑त् । तम् । अ॒त्त॒ । स्वा । मां॒सानि॑ । अ॒त्त॒ ॥१॥

हे शेरभक स्वाश्रितानां सुखस्य प्रापक। शरभवत् सर्वेषां हिंसको वा शेरभः यातुधानाधिपतिः। असौ ग्रामणीः प्रधानभूतो यस्य तत्सचिवादेः स शेरभकः। 'स एषां ग्रामणीः' ( पा ५,२,७८ ) इति कन्प्रत्ययः। हे शेरभ यातुधानाधिपते हे शेरभक तत्स्वामिक सचिवादे वः युष्मदीया अलक्ष्मीकरा युष्माभिः अस्मदभिमुखं प्रेरिता यातवः राक्षसाः पुनर्यन्तु अस्मत्तः प्रतिनिवर्तन्ताम्। तथा हेतिः हननसाधनं युष्मदीयम् आयुधजातं प्रतिनिवर्तताम्। किमीदिनः[1] किम् इदानीं किम् इदानीं वर्तते, किम् इदं किम् इदम् इति वा पैशुन्यार्थे चरन्तीति किमीदिनश्चोराः। आह च यास्कः—'किमीदिने किम् इदानीम् इति चरते किम् इदं किम् इदम् इति वा पिशुनाय चरते' ( नि ६,११ ) इति। युष्मदीयास्तथाविधा अनुचराश्च। पुनर्यन्तु इति संबन्धः। प्रतिनिवृत्तानां तेषां कर्तव्यम् आह—हे शेरभादयः सपरिकरा राक्षसाः यूयं यस्य स्थ यस्य अस्मद्विरोधिनः समीपे भवथ तम् अत्त भक्षयत। यः प्रयोक्ता वः युष्मान् प्राहैत् प्राहैषीत् अस्मत्सकाशं प्रेषितवान् तम् अत्त तमपि भक्षयत। हि गतौ। लुङि सिचि वृद्धौ 'बहुलं छन्दसि' (पा ७,३,९७) इति अपृक्तप्रत्ययस्य ईडभावे 'स्कोः संयोगाद्योः' ( पा ८,२,२९ ) इति सलोपः। अदने रुचिम् उत्पादयति सेर्त्यादिना। स्वा। 'सुपां सुलुक्°' ( पा ७,१,३९ ) इति षष्ठ्याः सुः। लिङ्गव्यत्ययः। तस्य शत्रोः मांसान्यत्त। यद्वा स्वा हेतिः यूयं च शत्रोर्मांसानि भक्षयत। प्रेरकजीवने प्रतिनिवृत्तानामपि रक्षसां पुनःपुनःप्रेषणसंभवात् तत्प्रेरकनाशनकथनेन तेषां पुनरागमनं निरस्तम् इति भावः।

१. श्वापेद° S', Kd. २. समुद्र° S', Kd. ३. तु. Bl, दा. च; वैतु. S', Kd. अपहृत. ४. रक्षसाः S', Kd. ५. पैशू° S', Kd. ६. वैतु. मंपा. द्र.

शेवृधक शेवृध पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत् तमत्त स्वा मांसान्यत्त ॥ २ ॥

शेवृधक । शेवृध । पुनः । वः । यन्तु । यातवः । ०० ॥ २ ॥

हे शेवृधक स्वाश्रितानां सुखस्य वर्धक । वृधेरन्तर्णीतण्यर्थाद् इगुपधलक्षणः कः । शेवृधो ग्रामणीर्यस्य सचिवादेः स शेवृधकः । अन्यत् पूर्ववत् ।

म्रोकानुम्रोक पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत् तमत्त स्वा मांसान्यत्त ॥ ३ ॥

म्रोक । अनुऽम्रोक । पुनः । वः । यन्तु । यातवः । ०० ॥ ३ ॥

हे म्रोक । म्रोचति धनादिकम् अपहृत्य छन्नः सन् गच्छतीति म्रोकः । म्रोकम् अनुसृत्य गच्छतीति अनुम्रोकः । म्रुचु म्लुचु गतौ । 'पुंसि संज्ञायां घः प्रायेण' (पा ३,३,११८) इति व्यत्ययेन कर्तरि घः । 'चजोः कु घिण्ण्यतोः' (पा ७,३,५२) इति कुत्वम् । उक्तम् अन्यत् ।

सर्पानुसर्प पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत् तमत्त स्वा मांसान्यत्त ॥ ४ ॥

सर्प । अनुऽसर्प । पुनः । वः । यन्तु । यातवः । ०० ॥ ४ ॥

हे सर्प । सर्पति कुटिलं गच्छतीति सर्पः एतत्संज्ञो यातुधानाधिपतिः । तम् अनुसृत्य गच्छतीति अनुसर्पः । सृप्लृ गतौ इत्यस्मात् पचाद्यच् । गतम् अन्यत् ।

जूर्णि पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनीः ।
यस्य स्थ तमत्त यो वः प्राहैत् तमत्त स्वा मांसान्यत्त ॥ ५ ॥

जूर्णि । पुनः । वः । यन्तु । यातवः । पुनः । हेतिः । किमीदिनीः । ०० ॥ ५ ॥

जीर्यति जीर्णं भवति प्राणिशरीरम् अनयेति जूर्णिः एतत्संज्ञा राक्षसी तस्याः संबुद्धिः । जॄ वयोहानौ इत्यस्मात् करणे क्तिन् । 'बहुलं छन्दसि' (पा ७,१,१०३) इति अनोष्ठ्यपूर्वस्यापि उत्वम् । 'ॠकारल्वादिभ्यः क्तिन् निष्ठावद् भवतीति वक्तव्यम्' (पावा ८,२,४४) इति निष्ठावद्भावाद् नत्वम् । यद्वा ज्वरति अनयेति करणे क्तिन् । 'ज्वरत्वर' (पा ६,४,२०) इत्यादिना वकारोपधयोरूठ् । छान्दसं नत्वम् संबुद्धिगुणाभावश्च । यद्वा 'वीज्याज्वरिभ्यो निः' (पाउ ४,४८) इति औणादिको निप्रत्ययः । पूर्ववद् ऊठ् । 'कृदिकारादक्तिनः' (पाग ४,१,४५) इति ङीषि 'अम्बार्थनद्योर्ह्रस्वः' (पा ७,३,१०७)

---

१. घः कर्तरि घः S', Kd.

इति ह्रस्वत्वम्। जूर्णेः स्त्रीत्वाद् यातवोऽत्र यातुधान्यः। किम् इदानीं किम् इदानीम् इति चरन्त्यो राक्षस्यः किमीदिन्यः[1]। जसि 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। अन्यत् समानम्।

उप॑ब्दे पुन॑र्वो यन्तु यातवः॒ पुन॑र्हे॒तिः किमीदिनीः।
यस्य॒ स्थ तम॑त्त॒ यो वः॒ प्राहै॑त् तम॑त्त॒ स्वा मां॒सान्य॑त्त ॥ ६ ॥

उप॑ब्दे। पुन॑ः। वः॒। य॒न्तु॒। या॒तव॑ः। ०० ॥ ६ ॥

हे उपब्दे क्रूरशब्दकारिणि। उपपूर्वाद् वदतेः शब्दनार्थात्, पद्यतेर्वा, बद स्थैर्ये इत्यस्माद् वा 'सर्वधातुभ्यः इन्' (पाउ ४,११८) इति इन्। पृषोदरादित्वाद् रूपसिद्धिः। गतम् अन्यत्।

अर्जु॑नि॒ पुन॑र्वो यन्तु यातवः॒ पुन॑र्हे॒तिः किमीदिनीः।
यस्य॒ स्थ तम॑त्त॒ यो वः॒ प्राहै॑त् तम॑त्त॒ स्वा मां॒सान्य॑त्त ॥ ७ ॥

अर्जु॑नि। पुन॑ः। वः॒। य॒न्तु॒। या॒तव॑ः। ०० ॥ ७ ॥

हे अर्जुनि अर्जुनशीले अर्जुनवर्णे वा। अन्यत् समानम्।

भ॒रू॑जि॒ पुन॑र्वो यन्तु यातवः॒ पुन॑र्हे॒तिः किमीदिनीः।
यस्य॒ स्थ तम॑त्त॒ यो वः॒ प्राहै॑त् तम॑त्त॒ स्वा मां॒सान्य॑त्त ॥ ८ ॥

भ॒रू॑जि। पुन॑ः। वः॒। य॒न्तु॒। या॒तव॑ः। ०० ॥८॥

हे भरूचि[3] भ्रियते पोष्यत इति भरुः शरीरम्। तद् अपहर्तुम् अञ्चति गच्छतीति भरूची। डुभृञ् धारणपोषणयोः इत्यस्मात् 'भृमृशी' (पाउ १,७) इत्यादिना उप्रत्यये भरुः। तस्मिन्नुपपदे 'ऋत्विग्' (पा ३,२,५९) इत्यादिना अञ्चतेः क्विन्। 'अञ्चतेश्चोपसंख्यानम्' (पावा ४,१,६) इति ङीप्। 'अचः (पा ६,४,१३८) इत्यकारलोपे 'चौ' (पा ६,३,१३८) इति दीर्घः। उक्तम् अन्यत्।

इति द्वितीये काण्डे चतुर्थेऽनुवाके सप्तमं सूक्तम्।

'शं नो देवी पृश्निपर्णी' इति सूक्तस्य चातनगणे पाठात् शान्त्युदकादौ अस्य विनियोगोऽवगन्तव्यः।

तथा कुष्ठादिसर्वरोगभैषज्यकर्मणि अनेन सूक्तेन पृश्निपर्णी पेषयित्वा लेपयेत्।

१. वैतु. मंपा. द्र. २. भरूचि K. ३. तु. K; वैतु. मंपा. द्र ४. °भूतशि° S', Kd. ५. °यित्वात्वाके° S', Kd.

सूचितं हि— 'अपचितां' ( अ २,७ ) 'शं नो देवी' ( अ २,२५ ) 'वरणः' ( अ ६,८५ ) 'पिप्पली' ( अ ६,१०९ ) इति प्रक्रम्य 'द्वितीयेन मन्त्रोक्तस्य संपातवतानुलिम्पति' ( कौसू २६,३३-३६ )

शं नो॑ दे॒वी पृ॑श्निप॒र्ण्यशं॒ निर्ऋ॑त्या अकः ।
उ॒ग्रा हि क॑ण्व॒जम्भ॑नी॒ ताम॑भक्षि॒ सह॑स्वतीम् ॥ १ ॥

शम् । नः॒ । दे॒वी । पृ॒श्नि॒ऽप॒र्णी । अशम् । निःऽऋ॑त्यै । अ॒कः॒ ।
उ॒ग्रा । हि । क॒ण्व॒ऽजम्भ॑नी । ताम् । अ॒भ॒क्षि॒ । सह॑स्वतीम् ॥ १ ॥

देवी द्योतमाना पृश्निपर्णी चित्रपर्णी ओषधिः नः अस्माकं शम् कुष्ठादिरोगशमनेन सुखम् अकः अकार्षीत् करोतु । 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ) इति लोडर्थे लुङ् । 'मन्त्रे घस' ( पा २,४,८० ) इत्यादिना च्लेर्लुक् । गुणे 'हल्ङ्याब्भ्यः' (पा ६,१,६८) इति तिलोपः । निर्ऋत्यै । षष्ठ्यर्थे चतुर्थी । निर्ऋत्याः रोगनिदानभूतायाः अशम् दुःखम् अकः करोतु । हि यस्मात् उग्रा उद्गूर्णबला सती कण्वजम्भनी कण्वस्य पापस्य नाशयित्री । अतः सहस्वतीम् रोगाभिभवनसामर्थ्ययुक्तां ताम् पृश्निपर्णीम् अभक्षि अहं भक्षे अनुलेपादिना सेवे । भक्षेर्लुङि आत्मनेपदोत्तमैकवचने रूपम् । सहस्वतीम् इति । 'तसौ मत्वर्थे' ( पा १,४,१९ ) इति भत्वेन अपदत्वात् रुत्वाभावः ।

सह॑माने॒यं प्र॑थ॒मा पृ॑श्निप॒र्ण्य॑जायत ।
तया॒हं दु॒र्णाम्नां॒ शिरो॑ वृ॒श्चामि॑ श॒कुने॑रिव ॥ २ ॥

सह॑माना । इ॒यम् । प्र॒थ॒मा । प्र॒श्नि॒ऽप॒र्णी । अ॒जा॒य॒त॒ ।
तया॑ । अ॒हम् । दुः॒ऽनाम्ना॑म् । शिरः॑ । वृ॒श्चामि॑ । श॒कुनेः॑ऽइव ॥ २ ॥

सहमाना रोगान् अभिभवन्ती इयं पृश्निपर्णी प्रथमा प्रथिता ओषधीनां मुख्या आदिभूता वा अजायत उत्पन्ना । जनी प्रादुर्भावे । 'ज्ञाजनोर्जा' ( पा ७,३,७९ ) इति जादेशः । तया उक्तलक्षणया पृश्निपर्ण्या दुर्णाम्नाम् दद्रुविसर्पकश्वित्रादिकुष्ठरोगविशेषाणां शिरः शिरोवत्प्रधानभूतं रोगनिदानम् अहं वृश्चामि छिनद्मि नाशयामि । तत्र दृष्टान्तः — शकुनेरिव यथा पक्षिणः शिरः खड्गादिप्रहरणसाधनम् अनपेक्ष्य अनायासेन छिद्यते एवं पृश्निपर्णीलेपनमात्रेण समूलम् उन्मूलयामीत्यर्थः ।

१. पिप्पलीम् S', Kd. २. तु. S', Kd., Bl.; वैतु. शंपा. °वता॰वसिञ्चत्यनुलि°. ३. निर्ऋतये पै ४,१३,१. ४. ऽकरत् पै. ५. तां त्वाहार्ष पै. ६. केडर्थे S', Kd. ७. पद° S', Kd. ८. तु. सात., W.; वैतु शंपा., RW. प्रभृ. वृश्चामि ; छिनद्मि पै.

अरायमसृक्पावानं यश्च स्फातिं जिहीर्षति ।
गर्भादं कण्वं नाशय पृश्निपर्णि सहस्व च ॥ ३ ॥

अरायम् । असृक्ऽपावानम् । यः । च । स्फातिम् । जिहीर्षति ।
गर्भऽअदम् । कण्वम् । नाशय । पृश्निऽपर्णि । सहस्व । च ॥ ३ ॥

असृक्पावानम् शरीरगतरक्तस्य पातारम् अरायम् अरातिं कुष्ठादिरोगात्मकम् । नाशयेति संबन्धः । कुष्ठादिरोगेण शरीरपोषकशुद्धरक्तस्यापगमात् पानव्यपदेशः । पिबतेः 'आतो मनिन्क्वनिब्वनिपश्च' (पा ३,२,७४) इति वनिप् प्रत्ययः । किञ्च यः रोगो ग्रहण्यादिरूपः स्फातिम् शरीरवृद्धिं जिहीर्षति हर्तुम् इच्छति नाशयितुम् उपक्रमते । तं नाशयेति सबन्धः । स्फायी वृद्धौ । क्तिनि 'तितुत्र०' (पा ७,२,९) इति इट्प्रतिषेधे वलि लोपः । हरतेः सनि 'अज्झनगमां सनि' (पा ६,४,१६) इति दीर्घे 'ॠत इद्धातोः' (पा ७,१,१००) इति इत्त्वम् । यद्वृत्तयोगेन निघातप्रतिषेधे नित्त्वाद् आद्युदात्तत्वम् । तथा हे पृश्निपर्णि गर्भादम् गर्भस्य भक्षकं कण्वम् रोगनिदानपापं नाशय सहस्व च गर्भध्वंसकान् शत्रूंश्च अभिभव । गर्भादम् इति । अद भक्षणे । अस्माद् गर्भोपपदाद् 'अदोऽनन्ने' (पा ३,२,६८) इति विट् प्रत्ययः ।

गिरिमेनाँ[1] आ वेशय कण्वान्[2] जीवितयोपनान्[8] ।
तांस्त्वं देवि पृश्निपर्ण्यग्निरिवानुदहन्निहि ॥ ४ ॥

गिरिम् । एनान् । आ । वेशय । कण्वान् । जीवितऽयोपनान् ।
तान् । त्वम् । देवि । पृश्निऽपर्णि । अग्निःऽइव । अनुऽदहन् । इहि ॥ ४ ॥

हे पृश्निपर्णि जीवितयोपनान् प्राणस्य मोहकान् । युप रुप लुप विमोहने । 'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति कर्तरि ल्युट् । एनान् उक्तविधान् कण्वान् कुष्ठादिरोगनिदानभूतान् पाप्मनः गिरिम् पर्वतं स्वसंचाररहितम् आ वेशय प्रवेशय । 'गतिबुद्धिप्रत्यवसानार्थ०' (पा १,४,५२) इति विशतेर्गत्यर्थाद् अणिकर्तुः पाप्मनः कर्मत्वम् । हे देवि द्योतमाने हे पृश्निपर्णि त्वं तान् गिरौ आवेशितान् कण्वान् अनुदहन् अग्निरिव अरण्यस्थितान् सर्पमृगादीन् अनुगम्य दहन् दावाग्निरिव अनुदहन्ती इहि गच्छ । अनुदहन्निति । अनुदहनलक्षणस्य साधारणधर्मस्य उपमानोपमेयनिष्ठत्वाद् उपमा-

---

१. जिहीरिषति D, R, P², J. २. कण्वां इत्येवं शोधः B, कण्वान् सात. ३. सहस्वति पै ४,१३,६. ४, विनि S', Kd. ५. वैतु. मंपा. द्र. ६. एना पै ४,१३,५. ७. कण्वाः पै. ८. °योपनीः पै.

नापेक्षया पुंलिङ्गता । इहीति । इण् गतौ । लोटि अदादित्वात् शपो लुक् ।[1]

परा॑च एना॒न् प्र णु॑द॒ कण्वा॒न् जीवि॒तयो॑पनान् ।
तमां॑सि॒ यत्र॒ गच्छ॑न्ति॒ तत् क्र॒व्यादो॑ अजीगमम् ॥ ५ ॥

परा॑चः । ए॒ना॒न् । प्र । नु॒द॒ । कण्वा॑न् । जी॒वि॒त॒ऽयोप॑नान् ।
तमां॑सि । यत्र॑ । गच्छ॑न्ति । तत् । क्र॒व्य॒ऽअद॑ः । अ॒जी॒ग॒म॒म् ॥ ५ ॥

हे पृश्निपर्णि जीवितयोपनान् एनान् अन्वाविष्टान् कण्वान् पराचः प्र णुद पराङ्मुखान् प्रेरय अपसारय। परापूर्वाद् अञ्चतेः क्विनि शसि अकारलोपे 'अनिगन्तोऽञ्चतावप्रत्यये' (पा ६,२,५२) इति पूर्वपदप्रकृतिस्वरत्वम्। तमांसि सूर्योदयानन्तरं यत्र सूर्यरश्मिसंचार-रहितं यं प्रदेशं गच्छन्ति तत् तथाविधं निःसूर्यं[1] स्थानं क्रव्यादः पिशितादिधातुभक्षकान् कुष्ठादिरोगान् अजीगमम् त्वल्लेपनेन अहमपि प्रापयामि। क्रव्यशब्दोपपदाद् अत्तेः 'क्रव्ये च' (पा ३,२,६९) इति विट्प्रत्ययः। गमेर्ण्यन्तात् लुङि चङि रूपम्।

इति चतुर्थेऽनुवाकेऽष्टमं सूक्तम्।

'एह यन्तु पशवः' इति सूक्तेन गोपुष्टिकामः अभिनवं पयः वत्सलालामिश्रितं संपात्य अभिमन्त्र्य अश्नीयात्।

तथा अनेन सूक्तेन गाम्[2] अभिमन्त्र्य दद्यात्।

तथैव अनेन उदपात्रम् अभिमन्त्र्य गोष्ठमध्ये निनयेत्।

एवं सारूपवत्सौदने गुग्गुलुलवणशकृत्पिण्डान् प्रक्षिप्य पश्चाद् अग्नेस्त्रिरात्रं निखाय चतुर्थेऽहनि उद्धृत्य अनेन संपात्य अभिमन्त्र्य अश्नीयात्।

अत्रोक्तं कौशिकेन 'एह यन्तु पशवः' (अ २,२६), 'सं वो गोष्ठेन' (अ ३,१४) इति प्रक्रम्य 'गृष्टेः पीयूषं श्लेष्ममिश्रम् अश्नाति। गां ददाति। उदपात्रं निनयति' (कौसू १९,१४-१७) इत्यादि।

एह य॑न्तु प॒शवो॒ ये प॑रे॒युर्वा॒युर्येषां॑ सह॒चारं॑ जु॒जोष॑ ।
त्वष्टा॒ येषां॑ रूप॒धेया॑नि॒ वेदा॒स्मिन् तान् गो॒ष्ठे स॑वि॒ता नि य॑च्छतु ॥ १ ॥

आ । इ॒ह । य॒न्तु॒ । प॒शवः॑ । ये । प॒रा॒ऽई॒युः । वा॒युः । येषा॑म् । स॒ह॒ऽचार॑म् । जु॒जोष॑ ।
त्वष्टा॑ । येषा॑म् । रू॒प॒ऽधेया॑नि । वेद॑ । अ॒स्मिन् । तान् । गो॒ऽस्थे । स॒वि॒ता । नि ।
य॒च्छ॒तु॒[3] ॥ १ ॥

१. निसूर्यं S',Kd. २. गा अभि° S', Kd. ३. यच्छात् पै २,१२,१.

ये पशवः परेयुः परागताः पराङ्मुखाः पुनरावृत्तिरहिता अगमन् ते सर्वे इह अस्मिन् गोष्ठे आ यन्तु पुनरागच्छन्तु । इण् गतौ । 'इणो यण्' ( पा ६,४,८१ ) इति यणादेशः । ईयुरिति । अस्मादेव धातोर्लिटि उसि पूर्ववद् यणि कृते 'द्विर्वचनेऽचि' ( पा १,१,५९ ) इति स्थानिवद्भावाद् द्विर्वचनम् । 'दीर्घ इणः किति' ( पा ७,४,६९ ) इत्यभ्यासस्य दीर्घः येषां पशूनां वायुः सहचारम् सहसंचरणं जुजोष सेवते तद्रक्षणार्थं सह वर्तते । जुषेर्व्यत्ययेन परस्मैपदम् । गोष्ठाद् विनिर्गतानां गवां वायुरेव रक्षक इत्ययम् अर्थस्तैत्तिरीयके स्पष्टम् आम्नायते — 'वायवः स्थेत्याह । वायुर्वा अन्तरिक्षस्याध्यक्षः । अन्तरिक्षदेवत्याः खलु वै पशवः । वायव एवैनान् परिददाति' ( तैब्रा ३,२,१,३;४ ) इति । येषाम् पशूनां त्वष्टा एतन्नामको देवः रूपधेयानि । 'भागरूपनामभ्यो धेयः' ( पावा ५,४,२५ ) इति स्वार्थे धेयप्रत्ययः । गर्भगतवत्सरूपाणि वेद कर्तुं जानाति । करोतीत्यर्थः । 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायते' (तै १,५,९,१) 'त्वष्टा वै पशूनां मिथुनानां रूपकृत्' (तैब्रा ३,८,११,२ ) इत्यादिश्रुतेः । यद्वा रूपधेयानि रूपाणि धेयानि विधातव्यानि वेद । धाञः कर्मणि यत् । 'ईद्यति' (पा ६,४,६५) इति ईत्वम् । तान् उक्तान् सर्वान् पशून् अस्मिन् गोष्ठे । गावस्तिष्ठन्त्यस्मिन्निति गोष्ठं तस्मिन् । सविता सर्वप्रेरको देवो नि यच्छतु नियमयतु । यथा पुनर्न गच्छन्ति तथा स्थापयतु इत्यर्थः । निपूर्वाद् यमेः शपि 'इषुगमियमां छः' ( पा ७,३,७७ ) इति छत्वम् ।

इमं गोष्ठं पशवः सं स्रवन्तु बृहस्पतिरा नयतु प्रजानन् ।
सिनीवाली नयत्वाग्रमेषामाजग्मुषो अनुमते नि यच्छ ॥ २ ॥

इमम् । गोऽस्थम् । पशवः । सम् । स्रवन्तु । बृहस्पतिः । आ । नयतु । प्रऽजानन् ।
सिनीवाली । नयतु । आ । अग्रम् । एषाम् । आऽजग्मुषः । अनुऽमते । नि । यच्छ ॥

पशवः गवाद्या इमम् अस्मदीयं गोष्ठं सं स्रवन्तु संप्राप्नुवन्तु । बृहस्पतिर्देवः प्रजानन् आनयनप्रकारं विद्वान् आ नयतु गोष्ठं प्रापयतु । तथा सिनीवाली एतन्नामिका देवपत्नी दृष्टेन्दुकलामावास्यादेवता वा । एषाम् । कर्मणि षष्ठी । इमान् पशून् अग्रम् पुरोदेशम् आ नयतु । सिनीवालीशब्दो यास्केन बहुधा व्याख्यातः । "सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ताः । अमावास्ये इति याज्ञिकाः । 'या पूर्वामावास्या सा सिनीवाली । योत्तरा सा कुहूः' (ऐब्रा ७,११) इति विज्ञायते । सिनीवाली । सिनम् अन्नं भवति । सिनाति भूतानि । वालं पर्व वृणोतेरतस्मिन्नन्नवती, वालिनी वा वालेनेवास्याम् अण्ुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा" (नि ११,३१) इति । आजग्मुषः आगतान् पशून् अनुमते हे अनुगमनकारिणि हे देवपत्नि पूर्वपौर्णमास्यभिमानिदेवते वा त्वं नि यच्छ गोष्ठे नियमय । आजग्मुष इति । आङ्पूर्वाद् गमेः क्वसुः । शसि 'वसोः संप्रसारणम्' ( पा ६,४,१३१ ) इति संप्रसारणम् ।

१. अनुमतिः पै २,१३,२. २. यच्छत् B, यच्छात् पै ३. तु. ल.; वैतु. शंपा वालेनैवा°
४. वैतु. संपा. इ.

सं सं स्रवन्तु पशवः समाश्वाः समु पूरुषाः ।
सं धान्यस्य या स्फातिः सं स्राव्येण हविषा जुहोमि ॥ ३ ॥

सम् । सम् । स्रवन्तु । पशवः । सम् । अश्वाः । सम् । ऊं इति । पुरुषाः ।
सम् । धान्यस्य । या । स्फातिः । सम्ऽस्राव्येण । हविषा । जुहोमि ॥ ३ ॥

पशवः गवाद्याः सं सं स्रवन्तु सम्यग् आगच्छन्तु । 'प्रसमुपोदः पादपूरणे' (पा ८,१,६) इति समो द्विर्वचनम् । तथा अश्वाः । सम् इत्युपसर्गश्रवणात् सर्वत्र स्रवन्तु इति संबन्धः । तथा पुरुषाश्च सेवकाद्याः धान्यस्य व्रीहियवादेर्या स्फातिः अभिवृद्धिः सापि सं स्रवतु । अहमपि तत्सिद्धये संस्राव्येण संस्रावणार्हेण आज्येन हविषा जुहोमि ।

सं सिञ्चामि गवां क्षीरं समाज्येन बलं रसम् ।
संसिक्ता अस्माकं वीरा ध्रुवा गावो मयि गोपतौ ॥ ४ ॥

सम् । सिञ्चामि । गवाम् । क्षीरम् । सम् । आज्येन । बलम् । रसम् ।
सम्ऽसिक्ताः । अस्माकम् । वीराः । ध्रुवाः । गावः । मयि । गोऽपतौ ॥ ४ ॥

गवाम् । अत्र गोशब्देन गृष्टयो विवक्षिताः । गृष्टीनां क्षीरम् अभिनवं पयः आज्येन सं सिञ्चामि गवां क्षीरं सम् आज्येन संपातयामि । गवाम् इति । 'न गोश्वन्त्साववर्ण॰' (पा ६,१,१८२) इति विभक्त्युदात्तत्वप्रतिषेधः । तथा आज्येन बलम् बलकरम् अन्नं रसम् उदकं च बलकरं रसमेव वा । सं सिञ्चामीति संबन्धः । अस्माकं वीराः पुत्राद्याः संसिक्ताः घृतादिना संसिक्तशरीराः दृढगात्राः । भवन्तु इति शेषः । तदर्थं गोपतौ गोस्वामिनि मयि गावः ध्रुवाः स्थिरा भवन्तु । गोपताविति । 'पत्यावैश्वर्ये' (पा ६,२,१८) इति पूर्वपदप्रकृतिस्वरत्वम् ।

आ हरामि गवां क्षीरमाहार्षं धान्यं रसम् ।
आहृता अस्माकं वीरा आ पत्नीरिदमस्तकम् ॥ ५ ॥

आ । हरामि । गवाम् । क्षीरम् । आ । अहार्षम् । धान्यम् । रसम् ।
आऽहृताः । अस्माकम् । वीराः । आ । पत्नीः । इदम् । अस्तकम् ॥ ५ ॥

गवां क्षीरम् उक्तप्रयोगेण आ हरामि आनयामि । गोसंपत्त्या बहुतरं क्षीरसंपन्नो भवामीत्यर्थः । तथा धान्यं रसं च आहार्षम् आहृतवान् अस्मि । तथा अस्माकं वीराः

---

१. तु. पृ ६८, टि ७. २. संधान्यस्या स्फातिभिः पै ३,१२,३. ३. संस्रावेण पै. ४. पशवः द्विः S', Kd. ५. चसम् S', Kd. ६. अहरारिषम् H, अहर्षं पै ३,१२,५. [मूको] ७. धान्यं BB, °B, R, S; धान्यं D. ८. आहार्षम् पै. ९. वीरान् पै. १०. पत्नीभेद॰ पै. ११. अहारिषम् Bp[2] १२. आहृताः Bp[2].

पुत्राद्या आहृताः आनीताः प्राप्ताः । पत्नीः पत्न्यश्च । आ इत्युपसर्गश्रवणात् हृता इति संबन्धः । उक्तानां सर्वेषां किं प्रति आहरणम् इति तद् आह—इदम् संनिहितम् अस्मत्संबन्धि अस्तकम् । अस्तम् इति गृहनाम । स्वार्थे कः । गृहम् । गोधान्यपुत्रादिभिर-स्मद्गृहं सर्वतः पूर्णं भवतु इति भावः ।

इति द्वितीये काण्डे चतुर्थेऽनुवाके नवमं सूक्तम् ।
समाप्तश्चतुर्थोऽनुवाकः ।

पञ्चमेऽनुवाके पञ्च सूक्तानि । तत्र 'नेच्छत्रुः' इति प्रथमेन सूक्तेन विवादजयकर्मणि पाठामूलम् अभिमन्त्र्य खादन् अपराजिताद् देशात् सभास्थानं प्रविशेत् ।

तथा अनेन अभिमन्त्रितां पाठां खादन् प्रतिवादिनं ब्रूयात् ।

एवं पाठामूलं संपात्य अनेनाभिमन्त्र्य बध्नीयात् ।

एवमेव अनेनाभिमन्त्रितां पाठामालां सप्तभिः पत्रैर्विरचितां शिरसि धारयेत् ।

सूत्रितं हि—" 'नेच्छत्रुः' इति पाठामूलं प्रतिप्राशिनम् । अन्वाह । बध्नाति । मालां सप्त-पलाशीं धारयति" ( कौसू. ३८,१८-२१ ) इति ।

तथा 'अपराजितां विजयकामस्य' ( शाक १७,४ ) इति विहितायाम् अपराजिता-ख्यायां महाशान्तौ पाठामूलमणिबन्धनेऽपि एतत् सूक्तम् । उक्तं शान्तिकल्पे— " 'नेच्छत्रुः' इति पाटामूलम् अपराजितायाम्" ( शाक १७,६ ) इति ।

नेच्छत्रुः प्राशं जयाति सहमानाभिभूरसि ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥ १ ॥

न । इत् । शत्रुः । प्राशम । जयाति । सहमाना । अभिऽभूः । असि ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ १ ॥

हे पाठाख्ये ओषधे शत्रुः प्रतिवादी प्राशम् प्रष्टारं वादिनं त्वत्सेवकं मां नेत् जयाति । इदिति अवधारणे । नैव जयतु । प्राशम् इति । प्रच्छ ज्ञीप्सायाम् इत्यस्मात् 'क्विब्वचि' ( पावा ३,२,१७८ ) इत्यादिना क्विप् तत्संनियोगेन दीर्घः संप्रसारणाभावश्च । 'च्छ्वोः शूडनुनासिके च' ( पा ६,४,१९ ) इति सतुक्कस्य छकारस्य शकारः । जयातीति । जयते-र्लेटि आडागमः । यतस्त्वं सहमाना शत्रुसहनस्वभावा अतः अभिभूरसि प्रतिवादिनः शत्रोरभिभवित्री भवसि । एवम् अतिशयितवीर्ययुक्तायास्तव सेवया मां शत्रुर्न जयतु इत्यर्थः । अस्याः सहनशीलत्वं[3] श्रुत्यन्तरे सिद्धवद् आम्नातम्—'उत्तानपर्णे सुभगे सहमाने सहस्वति', 'उप तेऽधां सहमानाम्' (आपमं १,१५,२;६) इति च । प्राशम् प्रष्टारं वादिनं माम् उद्दिश्य प्रतिप्राशः प्रतिकूलप्रश्नकर्तॄन् प्रतिवादिनो जहि पराजितान्

१. तु. Bl, के, दा., म २,२७,४; वैतु. शंपा. पाठामूलम्　२. मा S', Kd.　३. सहन-शीलत्वश्च S', Kd.

कुरु । 'हन्तेर्जः' ( पा ६,४,३६ ) इति आदेशः । 'असिद्धवदत्राभात्' ( पा ६,४,२२ ) इति तस्यासिद्धत्वात् हेर्लुगभावः। यद्वा प्रतिप्राश इति षष्ठी। प्रतिवादिनः प्राशम् प्रश्नं जहीत्यर्थः । प्रतिपूर्वात् प्रच्छेः पूर्ववत् प्रक्रिया । पराजयप्रकारमेवाह—हे ओषधे प्रतिवादिवाक्यजनिततापापहर्त्रि। ओषः पाकोऽस्यां धीयत इति 'कर्मण्यधिकरणे च' ( पा ३,३,९३ ) इति दधातेरधिकरणे किप्रत्ययः। यद्वा ओषे दाहके ज्वरादौ पानं पाठादिरूपां वैद्योपदेशप्रकारेण धयन्ति पिबन्ति आतुरा इति ओषधिः। अपि वा दोषं वातपित्तादिकं धयति पिबति विनाशयतीति ओषधिः । पृषोदरादित्वाद् आदिवर्णलोपः। पक्षद्वयेपि धेटः अनुपसर्गे सुबन्तमात्र उपपदे व्यत्ययेन किप्रत्ययः। अत्र यास्कः—'ओषधय ओषंद्धयन्तीति वा, ओषत्येना धयन्तीति वा, दोषं धयन्तीति वा' ( नि ९, २७ ) इति। हे तथाविधौषधे प्रतिवादिनः अरसान् नीरसान् शुष्ककण्ठान् वक्तुम् असमर्थान् कृणु कुरु। यद्वा अरसान् रसरहितवाक्यान्। असंगतप्रलापिनः कुरु इत्यर्थः।

सुपर्णस्त्वान्वविन्दत् सूकरस्त्वाखनन्नसा ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥ २ ॥

सुऽपर्णः । त्वा । अनु । अविन्दत् । सूकरः । त्वा । अखनत् । नसा ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ २ ॥

सुपर्णः शोभनपक्षो वैनतेयस्त्वा त्वाम् अन्वविन्दत् विषाद्यपहरणाय अन्विष्य अलभत। विद्लृ लाभे। 'शे मुचादीनाम्' ( पा ७,१,५९ ) इति नुम्। सूकरः आदिवराहस्त्वा त्वां नसा नासिकया तत्सहितया दंष्ट्रया अखनत् विदारितवान्। भूम्या अन्तरवस्थितां त्वां लोकोपकारार्थम् उदहार्षीद् इत्यर्थः। अनेन अस्या अमोघवीर्यत्वम् उक्तम्। प्राशं प्रतिप्राशम् इत्यादि गतम्।

इन्द्रो ह चक्रे त्वा बाहावसुरेभ्य स्तरीतवे ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥ ३ ॥

इन्द्रः । ह । चक्रे । त्वा । बाहौ । असुरेभ्यः । स्तरीतवे ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ ३ ॥

हे पाठे [त्वा] त्वाम् इन्द्रस्त्रिलोकीपतिः असुरेभ्यः असुरान् तरीतवे तरीतुम्। हिंसितुम् इत्यर्थः। बाहौ दक्षिणभुजे चक्रे कृतवान् धृतवान् । तथा अहमपि प्रतिवादिविजयार्थं त्वाम्। गतम् अन्यत्। असुरेभ्य इति। 'क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२ ) इति कर्मणः संप्रदानत्वात् चतुर्थी। 'तुमर्थे सेसेनसे' ( पा ३,४,९ ) इत्यादिना तवेन्प्रत्ययः । 'वॄतो वा' ( पा ७,२,३८ ) इति इटो दीर्घः।

१. ओषधय॰ S', Kd. २ वैतु. मंपा. द्र.

पाटामिन्द्रो व्याश्नादसुरेभ्य स्तरीतवे ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥ ४ ॥

पाटाम् । इन्द्रः । वि । आश्नात् । असुरेभ्यः । स्तरीतवे ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ ४ ॥

पाठाम् उक्तप्रभावाम् ओषधिम् असुरांस्तरीतुम् इन्द्रो व्याश्नात् । अभक्षयत् । अश भोजने । क्र्यादित्वात् श्नाप्रत्ययः । गतम् अन्यत् ।

तयाहं शत्रून्त्साक्ष इन्द्रः सालावृकाँ इव ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥ ५ ॥

तया । अहम् । शत्रून् । साक्षे । इन्द्रः । सालावृकान्ऽइव ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ ५ ॥

या उदीरितप्रभावा पाठा तयाहं धारणभक्षणादिना शत्रून् प्रतिवादिनः साक्षे अभिभवामि । निरुत्तरान् असत्प्रायान् करोमीत्यर्थः । सहतेरभिभवार्थात् लेटि उत्तमे 'सिब्बहुलं लेटि' ( पा ३,१,३४ ) इति सिप् । 'सिब्बहुलं छन्दसि णिद् वक्तव्यः' ( पावा ३,१,३४ ) इति सिपो णिद्भावाद् वृद्धिः । तत्र दृष्टान्तः — इन्द्रो देवः सालावृकान् [इव] । अरण्यश्वानः सालावृकाः । तद्रूपान् असुरान् यथा विगीर्णवान् । अयमेवार्थो दाशतय्यां स्पष्टम् आम्नातः । 'त्वमिन्द्र सालावृकान्त्सहस्रम् आसन् दधिषे' ( ऋ १०,७३,३ ) । इति ।

रुद्र जलाषभेषज नीलशिखण्ड कर्मकृत् ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥ ६ ॥

रुद्र । जलाषऽभेषज । नीलऽशिखण्ड । कर्मऽकृत् ।
प्राशम् । प्रतिऽप्राशः । जहि । अरसान् । कृणु । ओषधे ॥ ६ ॥

रौति शब्दायते तारकं ब्रह्म उपदिशतीति रुद्रः । तथा च जाबालश्रुतिः — 'अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे' ( जाउ १ ) इति । शब्दब्रह्मात्मना रोरूयमाणो द्रवति सर्वप्राणिहृदये वर्तत इति वा, अस्त्रेण छिन्नशिरसं शोचन्तं प्रजापतिम् अनु स्वयमपि शोकवशाद् अरोदीद् इति वा, उत्पत्तिकाले स्वयम् अरुदद् इति वा, रोदयति सर्वम् अन्तकाल इति वा रुद्रः । तद् उक्तं यास्केन — 'रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा, रोदयतेर्वा' । यद् अरुदत् तद् रुद्रस्य रुद्रत्वम् इति विज्ञायते । 'यद् अरुदत् तद् रुद्रस्य रुद्रत्वम् इति काठकम् (२५,१) यद् अरोदीत् तद् रुद्रस्य रुद्रत्वम्' (तु. तै १,५,१,१) इति हारिद्रविकम्'

---

१. वैतु. मंपा. द्र. २. साक्ष्य पै २,१६,३, मक्षीये पै. [मूको.] ३. °वृकँ R. ४. निरुत्तरोनसत्प्रायान् S', निरुत्तरोनसतप्रायान् Kd. ५. °षूत्क्रमणेषु S', Kd. ६. अरुजत् इत्युपलभ्यमानः पाठः ७. तु. ल.; वैतु. शंपा. हारिद्रवकम् .

(नि १०,५) इति। तथा महोपनिषदि — 'तस्य ध्यानान्तस्थस्य ललाटात् त्र्यक्षः शूलपाणि[1]: पुरुषोऽजायत[2]। बिभ्रच्छ्रियं यशः सत्यम्' (महा १)। अथर्वशिरस्यपि — 'संयुगस्यान्तकाले संहृत्य विश्वा भुवनानि गोप्ता तस्माद् उच्यत एको रुद्रः' (तु. अउ ५,४) इति। अथवा रुत् रोदनकरं सांसारिकं दुःखं तद्धेतुभूताम् अविद्यां वा द्रावयति विनाशयतीति रुद्रः। तद् उक्तं वायवीयसंहितायाम् —

'रुद् दुःखं दुःखहेतुर्वा तद् द्रावयति नः प्रभुः।
रुद्र इत्युच्यते तस्मात् शिवः परमकारणम् ॥' इति।

हे उक्तमहिमोपेत रुद्र जलाषभेषज। जलाषम् इति सुखनाम। जायन्त इति जाः जनाः। 'डोऽन्यत्रापि दृश्यते' (पावा ३,२,५८) इति जनेः केवलादपि डः। तैर्लष्यते वाञ्छ्यत इति जलाषं सुखम्। जशब्दे उपपदे लषेः कर्मणि घञ्। जलाषं सुखकरं भेषजं यस्य। यद्वा उदकनामैतत्। जलाषम् उदकमात्रं यस्य स्मरणेन भेषजं भवति स तथोक्तः। तस्य ध्येयम् आकारं दर्शयति — नीलशिखण्ड नीलवर्णकपर्दोपेत। अनेन नित्यतारुण्यम् उक्तम्। हे कर्मकृत् स्वोपासकानां दुष्कर्माणि कृन्ततीति कर्मकृत्। अथवा साध्वसाधुरूपाणि कर्माणि कारयतीति कर्मकृत्। करोतेरन्तर्भावितण्यर्थात् क्विप्। 'एष ह्येव साधु कर्म कारयति' (कौउ ३,९) इत्यादिश्रुतेः। यद्वा सृष्ट्यादीनि पञ्च कृत्यानि करोतीति कर्मकृत्। उक्तं हि —

'पञ्चविधं तत् कृत्यं सृष्टिः स्थितिसंहृती तिरोभावः।
तद्वद् अनुग्रहकरणं प्रोक्तं सततोदितस्यास्य ॥' इति।

एवंमहानुभाव रुद्र मया सेव्यमानाम् इमां पाठाख्याम् ओषधिं प्रतिवादितिरस्करणसमर्थां कुरु इति शेषः। एवं रुद्रानुगृहीते पाठाख्ये ओषधे। प्राशं प्रतिप्राशो जहीत्यादि पूर्ववत्।

तस्य॒ प्राशं॒ त्वं ज॑हि॒ यो न॑ इन्द्राभि॒दास॑ति[3]।
अधि॑ नो ब्रूहि॒ शक्ति॑भिः प्रा॒शि[4] माम॑ुत्त॒रं कृ॑धि ॥ ७ ॥

तस्य॑। प्राशम्। त्वम्। ज॒हि॒। यः। न॒ः। इन्द्र॒। अ॒भि॒ऽदास॑ति।
अधि॑। न॒ः। ब्रू॒हि॒। शक्ति॑ऽभिः। प्रा॒शि। माम्। उ॒त्ऽत॒रम्। कृ॒धि॒ ॥ ७ ॥

हे इन्द्र यः प्रतिवादी नः अस्मान् अभिदासति उपक्षपयति युक्तिभिस्तिरस्करोति। दसु उपक्षये इत्यस्माद् ण्यन्तात् परस्य शपः 'छन्दस्युभयथा' (पा ३,४,११७) इति आर्धधातुकत्वात् 'णेरनिटि' (पा ६,४,५१) इति णिलोपः। तस्य उपक्षपयितुः प्राशम् प्रतिकूलप्रश्नरूपं वाक्यं त्वं जहि नाशय। तथा शक्तिभिः त्वदीयैः सामर्थ्यविशेषैः नः अस्मान् अधि ब्रूहि अधिकवचनयुक्तान् ग्राह्यवाचः कुरु। फलितम् आह —

१. त्र्यक्षशूलपाणिपुरु° S', Kd. २. जायते निसा. ३. °दासते पै २,१६,५. ४. प्राशम् K,V.

प्राशम् प्रष्टारं वादिनं माम् उत्तरम् प्रतिवादिनोऽप्युत्कृष्टतरं कृधि कुरु। 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा ६,४,१०२) इति हेर्धिरादेशः।

इति पञ्चमेऽनुवाके प्रथमं सूक्तम्।

'तुभ्यमेव जरिमन्' इति सूक्तेन गोदानचौलकर्मणोर्मातापितरौ परस्परं पुत्रं त्रिः प्रत्यर्पयतः।

तथा तत्रैव कर्मणि अनेन सूक्तेन त्रीन् घृतपिण्डान् संपात्य अभिमन्त्र्य पुत्रं प्राशयतः।

सूत्रितं हि — " 'तुभ्यमेव जरिमन्' इति कुमारं मातापितरौ त्रिः संप्रयच्छेते। घृतपिण्डान् आशयतः" (कौसू ५४,१३;१४) इति।

तुभ्यमेव जरिमन् वर्धतामयं मेममन्ये मृत्यवो हिंसिषुः शतं ये।
मातेव पुत्रं प्रमना उपस्थे मित्र एनं मित्रियात् पात्वंहसः॥ १॥

तुभ्यम्। एव। जरिमन्। वर्धताम्। अयम्। मा। इमम्। अन्ये। मृत्यवः। हिंसिषुः। शतम्। ये।
माताऽइव। पुत्रम्। प्रऽमनाः। उपऽस्थे। मित्रः। एनम्। मित्रियात्। पातु। अंहसः॥ १॥

जरिमन्। जरतिः स्तुतिकर्मा। 'जरा स्तुतिर्जरतेः स्तुतिकर्मणः' इति यास्कः (नि १०,८)। तस्मात् कर्मणि औणादिक इमनिच्। हे स्तूयमान अग्ने तुभ्यमेव त्वत्परिचरणार्थमेव अयम् कुमारो वर्धतां रोगादिरहितः सन् अभिवृद्धो भवतु। यद्वा जरिमन्। जरैव जरिमा। हे जरे तुभ्यं त्वदर्थं त्वदागमनपर्यन्तं चिरकालम् अयं वर्धताम्। किञ्च। शतम् शतसंख्योपलक्षिता अपरिमिता अन्ये त्वद्व्यतिरिक्ता ये मृत्यवः हिंसका रक्षःपिशाचादिरोगाद्याः सन्ति ते सर्वेपि इम बालकं मा हिंसिषुः मा हिंसन्तु। तथा प्रमनाः प्रमुदितमना मित्रः एतन्नामा देवः मातेव पुत्रम् माता पुत्रमिव एनम् बालकम् उपस्थे उत्सङ्गे निकटप्रदेशे कृत्वा मित्रियात् मित्रसंबन्धिनः अंहसः द्रोहजनितात् पापात् पातु रक्षतु।

मित्र एनं वरुणो वा रिशादा[3] जरामृत्युं कृणुतां संविदानौ।
तदग्निर्होता वयुनानि विद्वान् विश्वा देवानां जनिमा विवक्ति[4]॥ २॥

मित्रः। एनम्। वरुणः। वा। रिशादाः। जराऽमृत्युम्। कृणुताम्। समऽविदानौ।
तत्। अग्निः। होता। वयुनानि। विद्वान्। विश्वा। देवानाम्। जनिम। विवक्ति॥ २॥

मित्रः अहरभिमानी देवः वरुणः रात्र्यभिमानी। 'मैत्रं वा अहः वारुणी रात्रिः' (तैब्रा

१. तु. K, V; वैतु. मंपा. द्र. २. तु. Bl; वैतु. शंपा. प्रयच्छते ३. रिशादौ पै १,१२,२.
४. विश्वानि देवो जनिमानि वक्ति पै. ५. तु. सा.; वैतु. K,P,P[2],J रिशादा.

१,७,१०,१ ) इति श्रुत्यन्तरात् । स च वरुणो रिशादाः रिशानां हिंसकानाम् अत्ता । रिश हिंसायाम् इत्यस्मात् इगुपधलक्षणः कः । अद भक्षणे इत्यस्माद् असुन् । चाशब्दः चार्थे । तावुभौ संविदानौ ऐकमत्यं प्राप्तौ । संपूर्वाद् वेत्तेरकर्मकात् 'समो गमादिषु विदिप्रच्छि°' ( पावा १,३,२९ ) इत्यात्मनेपदम् । लटः शानच् । एनम् माणवकं जरामृत्युम् जरयैव मृत्युर्मरणं यस्य तथाविधं कृणुताम् कुरुताम् । अहोरात्रयोरेव मरणसंभवात् तन्निवारणाय तदभिमानिदेवयोर्मित्रावरुणयोः प्रार्थनेति भावः । होता देवानाम् आह्वाता वयुनानि । प्रज्ञानामैतत् । इह तु सामर्थ्यात् प्रज्ञातव्यानि । विद्वान् जानन् अग्निः देवानां विश्वा विश्वानि सर्वाणि जनिमा जनिमानि जन्मानि प्रादुर्भावस्थानानि । प्राप्येति शेषः । तत्[१] प्रार्थितं दीर्घम् आयुः विवक्ति ब्रवीतु । अग्निप्रमुखाः सर्वे देवाश्चास्य दीर्घम् आयुः कुर्वन्तु इत्यभिप्रायः । विवक्तीति । वचेः पञ्चमलकारे छान्दसः शपः श्लुः । 'बहुलं छन्दसि' ( पा ७,४,७८ ) इत्यभ्यासस्य इत्त्वम् । जनिमेति । 'जनिमृङ्भ्याम्[२] इमनिन्' ( पाउ ४,१४९ ) इति इमनिन् ।

त्वमी॑शिषे प॒शूनां पार्थि॑वानां॒ ये जा॒ता उ॒त वा॒ ये ज॒नित्रा॑ः[३] ।
मेमं प्रा॒णो हा॑सी॒न्मो अ॑पा॒नो मेमं[४] मि॒त्रा व॑धिषु॒र्मो अ॒मित्रा॑ः ॥ ३ ॥

त्वम् । ई॒शि॒षे॒ । प॒शू॒नाम् । पार्थि॑वानाम् । ये । जा॒ताः । उ॒त । वा॒ । ये । ज॒नित्राः॑ ।
मा । इ॒मम् । प्रा॒णः । हा॒सी॒त् । मो इति॑ । अ॒पा॒नः । मा । इ॒मम् । मि॒त्राः । व॒धि॒षुः ।
मो इति॑ । अ॒मित्रा॑ः ॥ ३ ॥

हे अग्ने त्वं पार्थिवानाम् पृथिव्याम् उत्पन्नानाम् । 'पृथिव्या ञाञौ' ( पावा ४,१,८५ ) इत्यञ्प्रत्ययः । ञित्वाद् आद्युदात्तत्वम् । पशूनाम् द्विपाच्चतुष्पाद्रूपाणां प्राणिनाम् । 'अधीगर्थदयेशां कर्मणि' ( पा २,३,५२ ) इति षष्ठी । ईशिषे अधिपतिरसि । ईश ऐश्वर्ये । 'शासः से' ( पा ३,४,८० ) । अदादित्वात् शपो लुक् । 'ईशः से' (पा ७,२,७७) इति इडागमः । तानेव पशून् विशिनष्टि—ये जाताः पूर्वम् उत्पन्नाः उत वा । उतशब्दः अप्यर्थे । अपि वा ये जनित्राः जनिष्यमाणाः । तेषाम् इति संबन्धः । जनेरौणादिक इत्रप्रत्ययः । अतस्त्वत्प्रसादाद् इमम् माणवकं प्राणः ऊर्ध्वकायस्थो वायुः मा हासीन् मा त्याक्षीत् । अपानः अधरकायस्थो वायुः मो मैव हासीत् । ओहाक् त्यागे । 'यमरमनमातां सक् च' ( पा ७,२,७३ ) इति सगिटौ । तथा मित्राः । लिङ्गव्यत्ययः । मित्रभूता जनाः इमं कुमारं मा वधिषुः मा हिंसिषुः । अमित्राः शत्रवश्च मो मैव वधिषुः । हन्तेः 'लुङि च' (पा २,४,४३) इति वधादेशः । तस्य अदन्तत्वेन अनेकाच्त्वाद् एकाज्लक्षणेट्प्रतिषेधाभावात् सिच इट् । अल्लोपस्य स्थानिवत्त्वाद् 'अतो हलादेर्लघोः' ( पा ७,२,७ ) इति वृद्धेरप्रसङ्गः ।

१. ततः S', Kd. २. जनिहङ्भ्याम् S', Kd. ३. तु॰ सा.; वैतु. RW, पै १,१२,४ जनित्वाः. ४. मैनं पै.

द्यौष्ट्वा पिता पृथिवी माता जरामृत्युं कृणुतां संविदाने ।
यथा जीवा अदितेरुपस्थे प्राणापानाभ्यां गुपितः शतं हिमाः ॥ ४ ॥

द्यौः । त्वा । पिता । पृथिवी । माता । जराऽमृत्युम् । कृणुताम् । संविदाने इति सम्ऽविदाने । यथा । जीवाः । अदितेः । उपऽस्थे । प्राणापानाभ्याम् । गुपितः । शतम् । हिमाः ॥ ४ ॥

हे माणवक त्वा त्वां पिता पितृभूतो द्यौः द्युलोकः माता मातृभूता पृथिवी च संविदाने अन्योन्यम् ऐकमत्यम् आपन्ने जरामृत्युम् दीर्घायुषं कृणुताम् कुरुताम् । आयुषः परिमाणं दर्शयति — अदितेः अखण्डनीयायाः पृथिव्या उपस्थे उत्सङ्गे प्राणापानाभ्याम् उक्तलक्षणाभ्यां गुपितः रक्षितः । गुपू रक्षणे इत्यस्माद् निष्ठायां 'यस्य विभाषा' (पा ७,२,१५) इति इटः प्रतिषेधो व्यत्ययेन न प्रवर्तते । शतं हिमाः शतसंख्याकान् हेमन्तान् । संवत्सरान् इत्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे' (पा २,३,५) इति द्वितीया । हिमशब्दस्य हेमन्तपरत्वं तैत्तिरीयके समाम्नायते — 'शतं हिमा इत्याह । शतं त्वा हेमन्तान् इन्धिषीयेति वावैतद् आह' (तै १,५,८,५) इति । यथा येन प्रकारेण त्वं जीवाः जीवेः । जीव प्राणधारणे इत्यस्मात् लेटि आडागमः । तथा जरामृत्युं कृणुताम् इति पूर्वत्र संबन्धः ।

इममग्न आयुषे वर्चसे नय प्रियं रेतो वरुण मित्र राजन् ।
मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत्[11] ॥ ५ ॥

इमम् । अग्ने । आयुषे । वर्चसे । नय । प्रियम् । रेतः । वरुण । मित्रऽराजन् [?][12] । माताऽइव । अस्मै । अदिते । शर्म । यच्छ । विश्वे । देवाः । जरत्ऽअष्टिः । यथा । असत् ॥ ५ ॥

हे अग्ने इमम् माणवकम् आयुषे शतसंवत्सरजीवनाय वर्चसे तेजसे । 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाद् उभयत्र चतुर्थी । तद् उभयं[13] नय प्रापय । हे वरुण मित्र राजन् राजमान । उभयोर्विशेषणम् एतत् । अत एव दाशतय्याम् आम्नायते — 'राजाना मित्रावरुणा सुपाणी' (ऋ १,७१,९) इति । हे युवां प्रियम् पुत्रादिजनकत्वेन अभिमतम् । प्रीङ् प्रीतौ इत्यस्मात् 'इगुपधज्ञाप्रीकिरः कः' (पा ३,१,१३५) इति कः । यद्यपि वृत्तौ 'इगुपधज्ञा°' (पा ३,१,१३५) इत्यत्र प्रीणातेरेव ग्रहणं कृतं तथापि आत्रेयधातुवृत्त्यनुसारेण अस्मादपि को द्रष्टव्यः । 'अचि श्नुधातु' (पा ६,४,७७) इत्यादिना इयङ् । तथाभूतं रेतः इमं माणवकं नयतम् । पुत्रादिजननसमर्थं कुरुतम् इत्यर्थः । हे अदिते देवमातस्त्वं मातेव जननीव अस्मै माणवकाय शर्म सुखं यच्छ । हे

१. द्यौष्टे पै १,१२,३. २. दीर्घमायुः पै. ३. ऋत्या उपस्थे पै. ४. गुप्ते पै. ५ धाः पै १९,५,३ ; कृधि तै ३,३,१०,३ तैब्रा २,७,७,५ तैब्रा २,५,१ मै २,३,४. ६ तिग्ममोजो मै. तैब्रा. शांगृ. १,२७. ७. सोम राजन् मै. तैब्रा. शांगृ.; सं शिशाधि तैब्रा. ८. अदितिः शांगृ. ९. यंसत् शांगृ. १०. जरदष्टिर् तै. प्रभृ. ११. °थासद् मै. १२. द्वे पदे इ. (तु. पामे. सा. प्रभृ च) १३. उभये° S',Kd.

विश्वे देवाः यूयमपि अयं माणवको जरदष्टिः जरापर्यन्तजीवनस्य अष्टिर्व्याप्तिर्यस्य स तथोक्तः। 'जीर्यतेरतृन्' ( पा ३,२,१०४ ) व्यत्ययेन भावे कर्तृप्रत्ययः। यद्वा जरतो जीर्यतोऽपि अष्टिः सर्वव्यापारविषया व्याप्तिर्यस्य तादृशो यथा असत् भवेत्। तथा दीर्घायुषं कुरुतेति शेषः। अस्तेर्लेटि अडागमः।

इति द्वितीयकाण्डे पञ्चमेऽनुवाके द्वितीयं सूक्तम्।

'पार्थिवस्य' इति सूक्तेन तृषार्तभैषज्यकर्मणि सूर्योदयकाले सूत्रोक्तप्रकारेण व्याधितम् उपवेश्य मथितं सक्तूदकम् अभिमन्त्र्य पाययेत्।

अनेनैव सूक्तेन नद्यादिषु उदकम् अभिमन्त्र्य उद्धृत्य 'सवासिनौ' (अ २,२९,६ ) इत्यर्धर्चेन व्याधिताव्याधितौ एकासनस्थौ एकवस्त्रपरिहितौ कृत्वा उभावपि मन्थं पाययेत् प्रयोक्ता।

अत्र सूत्रम्— " 'पार्थिवस्य' इत्युद्यति पृष्ठसंहितावुपवेशयति। प्राङ्मुखं व्याधितं प्रत्यङ्मुखम् अव्याधितं शाखासूपवेश्य वैतसे चमसे उपमन्थनीभ्यां तृष्णागृहीतस्य शिरसि मन्थम् उपमथ्य अतृषिताय प्रयच्छति। तस्मिन् तृष्णां संनयति। उद्धृतम् उदकं पाययति। सवासिनाविति मन्त्रोक्तम्" (कौसू २७,९-१३ ) इति।

" 'पार्थिवस्य' (अ २,२९,१;२) इति द्वाभ्यां गोदानचौलकर्मणोः कुमारस्य मूर्ध्नि व्रीहियवशमीरभिमन्त्र्य प्रक्षिपेत्। सूत्रितं हि— " 'शिवे ते स्ताम् ( अ ८,२,१४;१५ )' इति परिदानान्तानि। 'पार्थिवस्य' (अ २,२९,१;२), 'मा प्र गाम' (अ १३,१,५९;६०) इति चतस्रः" (कौसू ५४,१७;१८ ) इति।

'आशीर्ण ऊर्जम्' इति तृतीयया तृतीयसवने पूतभृति आसिच्यमानम् आशिरम् अनुमन्त्रयते। उक्तं वैताने— "आशिरं पूतभृत्यासिच्यमानम् 'आशीर्ण ऊर्जम्' इत्यनुमन्त्रयते" ( वैताश्रौ २२,१६ ) इति।

पार्थिवस्य रसे देवा भगस्य तन्वो३ बले।
आयुष्यमस्मा अग्निः सूर्यो वर्च आ धाद् बृहस्पतिः ॥ १ ॥

पार्थिवस्य। रसे। देवाः। भगस्य। तन्वः। बले।
आयुष्यम्। अस्मै। अग्निः। सूर्यः। वर्चः। आ। धात्। बृहस्पतिः ॥ १ ॥

पार्थिवस्य पृथिव्याः संबन्धिनः। पूर्ववत् पृथिव्या अञ्। मथ्यमानसक्त्वादिकस्य रसे सारभूते मन्थोदके तृषारोगार्तपुरुषेण [13]पीते सति देवाः इन्द्राद्या भगस्य भजनीयस्य

१. विषयः S', Kd. २. पार्श्वा° S', Kd. ३. परिमितौ S', Kd. ४. तु. S', Kd, Bl, दा. ; वैतु. शपा. °संहता ५ वेतसे S', Kd. ६. मन्थनाभ्याम् S', Kd. ७. तृषिताय S', Kd. ८. प्रक्षिप्येत् S', Kd. ९. आसीन S', Kd. १०. °आयुष्य K,V. ११. देवाः P. १२. आयुष्यम् K, आयुष्यम् P. १३. प्रीते S', Kd. १४. तु. टि ११ ; वैतु. मंण ३.

एतनाम्नो देवस्य तन्वः शरीरस्य संबन्धिनि बले वीर्ये। योजयन्तु इति शेषः। भगस्य बलयुक्तं कुर्वन्तु इत्यर्थः[1]। भगदेवताया अतिशयितबलत्वं तैत्तिरीयके समाम्नातम् — 'श्रेष्ठो देवानां भगवो भगासि तत् त्वा विदुः फल्गुनीस्तस्य वित्तात्। अस्मभ्यं क्षत्रम् अजरं सुवीर्यं गोमद् अश्ववद् उपसन्नुदेह।' (तैब्रा ३,१,१,८) इति। भगस्येति। भज सेवायाम् इत्यस्मात् पुंसि संज्ञायां घः प्रायेण' (पा ३,३,११८) इति घः। चजोः कु घिण्यतोः' (पा ७,३,५२) इति कुत्वम्। यद्वा देवाः इन्द्राद्याः पार्थिवस्य व्रीहियवादिलक्षणस्य रसे सारांशे उक्तलक्षणे बले च इमं पुरुषम्। योजयन्तु इति वाक्यशेषः। अपि च अस्मै पुरुषाय अग्निः आयुष्यम् शतसंवत्सरलक्षणम् आ धात् आदधातु करोतु। तथा सूर्यः सर्वस्य प्रेरक आदित्यः बृहस्पतिः बृहतां मन्त्राणां पालको देवश्च अस्मै वर्चः शरीरकान्तिं श्रुताध्ययनजन्यं तेजश्च यथोचितम् आदधातु।

आयुरस्मै धेहि जातवेदः प्रजां त्वष्टरधिनिधेह्यस्मै[2]।
रायस्पोषं सवितरा सुवास्मै शतं जीवाति[3] शरदस्तवायम् ॥ २ ॥

आयुः। अस्मै। धेहि। जातऽवेदः। प्रजाम्। त्वष्टः। अधिऽनिधेहि। अस्मै।
रायः। पोषम्। सवितः। आ। सुव। अस्मै। शतम्। जीवाति। शरदः। तव। अयम् ॥२॥

हे जातवेदः जातानां वेदितरग्ने अस्मै आयुः शतसंवत्सरसंमितं धेहि प्रयच्छ। अग्नेरायुषो दातृत्वम् 'आयुर्दा अग्ने' (अ २,१३,१) इत्यादिमन्त्रसिद्धम्। तथा हे त्वष्टः अस्मै प्रजाम् पुत्रपौत्रादिलक्षणाम् अधिनिधेहि अधिकं स्थापय। 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायते' (तै १,५,९,१:२) इत्यादिश्रुतौ त्वष्टुः प्रजानां बहुधोत्पादकत्वं प्रसिद्धम्। तथा हे सवितः सर्वस्य प्रेरक देव अस्मै रायः धनस्य गवादिलक्षणस्य पोषम् पुष्टिं समृद्धिम् आ सुव अभिमुखं प्रेरय। षू प्रेरणे। तौदादिकः। रायः। 'ऊडिदम्' (पा ६,१,१७१) इत्यादिना विभक्तेरुदात्तत्वम्।'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु' (पा ८,३,५३) इति विसर्जनीयस्य सत्वम्। सवितुर्धनप्रदत्वम् 'स हि रत्नानि दाशुषे सुवाति सविता भगः' (ऋ ५,८२,३) इत्यादिश्रुतिप्रसिद्धम्। हे अग्न्यादिदेवाः तव। प्रत्येकापेक्षया एकवचनम्। युष्मदनुगृहीतः सन् अयं शतं शरदः जीवाति जीवतु। जीव प्राणधारणे। लेटि आडागमः।

आशीर्ण ऊर्जमुत सौप्रजास्त्वं[4] दक्षं धत्तं द्रविणं सचेतसौ।
जयं[5] क्षेत्राणि सहसायमिन्द्र कृण्वानो अन्यानधरान्त्सपत्नान् ॥ ३ ॥

आऽशीः। नः। ऊर्जम्। उत। सौप्रजाःऽत्वम्। दक्षम्। धत्तम्। द्रविणम्। सऽचेतसौ।
जयम्। क्षेत्राणि। सहसा। अयम्। इन्द्र। कृण्वानः। अन्यान्। अधरान्। सऽपत्नान् ॥ ३ ॥

नः अस्माकम् आशीः आशिषम् आशास्यमानां धनधान्यादिसंपत्तिं[6] धत्तम्

१. कुर्वित्यर्थः S', Kd. २. धेह्योजः पै १९,१७,११. ३. जीवातु पै. ४. सुप्रजास्त्वं पै १९,१७,१२. ५. सं जयत् पै., वैप १, १३७१ d. ६. धनधा° S', Kd.

इति संबन्धः। 'सुपां सुलुक्°' ( पा ७,१,३९ ) इति द्वितीयैकवचनस्य सुः। यद्वा आशीः फलप्रार्थना। सत्या भवतु इति शेषः। आङः शासु इच्छायाम् इत्यस्मात् कर्मणि भावे वा क्विप्। 'आशासः क्वावित्वम्' (पावा ६,४,३४) इति वचनाद् उपधाया इत्वम्। तथा ऊर्जम् अन्नं हे द्यावापृथिव्यौ धत्तम्। उत अपि च सौप्रजास्त्वम्। सुप्रजसो भावः सौप्रजास्त्वम्। शोभनापत्यत्वं कुरुतम्। 'नित्यमसिच् प्रजामेधयोः' ( पा ५,४,१२२ ) इत्यसिच् समासान्तः। छान्दसौ वृद्धिदीर्घौ। सचेतसौ समानमनसौ युवां दक्षम्। बलनामैतत्। बलं द्रविणम् धनं च धत्तम् प्रयच्छतम्। यद्वा आशीरिति रेफान्तोयं तृतीयसवने सोमावसेकार्थस्य पयसो वाचकः। तत् आशीराख्यं द्रव्यं पूतभृति आसिच्यमानं नः अस्मभ्यम् ऊर्जं शोभनापत्यत्वं च। करोतु इति शेषः। 'अपस्पृधेथाम्°' ( पा ६,१,३६ ) इत्यत्र 'श्राताःश्रितमाशीराशीर्ताः' इति आङ्पूर्वात् श्रीञ् पाके इत्यस्मात् क्विपि शिरादेशो निपातितः। हे इन्द्र त्वत्प्रसादाद् अयं पुरुषः सहसा अभिभवनसाधनेन बलेन शत्रूणां जयं क्षेत्राणि च कृण्वानः आत्मसात् कुर्वाणः अन्यानपि सपत्नान् शत्रून् अधरान् अधःकृतान् पराजितान्। करोतु इत्यर्थः।

इन्द्रे॑ण द॒त्तो वरु॑णेन शि॒ष्टो[1] म॒रुद्भि॑रु॒ग्रः प्रहि॑तो न॒ आग॑न्।
ए॒ष वां॑ द्यावापृथिवी उ॒पस्थे॑[2] मा क्षु॑ध॒न्मा तृ॑षत् ॥ ४ ॥

इन्द्रे॑ण । द॒त्तः । वरु॑णेन । शि॒ष्टः । म॒रुत्ऽभिः॑ । उ॒ग्रः । प्रऽहि॑तः । न॒ः । आ । अ॒ग॒न् ।
ए॒षः । वा॒म् । द्यावा॑पृथि॒वी इति॑ । उ॒पऽस्थे॑ । मा । । क्षु॒ध॒त् । मा । तृ॒ष॒त् ॥ ४ ॥

तृष्णागृहीतः पुरुषः इन्द्रेण देवेन दत्तः लब्धजीवनः। 'दो दद् घोः' ( पा ७,४,४६ ) इति दद्भावः। वरुणेन अरिष्टनिवारकेण देवेन शिष्टः अनुज्ञातः। 'शास इदङ्हलोः' ( पा ६,४,३४ ) इत्युपधाया इत्वम्। 'शासिवसिघसीनां च' ( पा ८,३,६० ) इति षत्वम्। मरुद्भिः मरुद्गणैः उग्रः उद्गूर्णबलः सन् प्रहितः प्रेषितः। हि गतौ इत्यस्मात् कर्मणि निष्ठा। नः अस्मान् आगन् आगमत्। गमेर्लुङि 'मन्त्रे घस°' ( पा २,४,८० ) इति च्लेर्लुक्। 'मो नो धातोः' ( पा ८,२,६४ ) इति नत्वम्। एवम् आगत एषः द्यावापृथिवी हे द्यावापृथिव्यौ वाम् युवयोरुपस्थे उत्सङ्गे वर्तमानो मा क्षुधत् क्षुत्पीडां मा प्रापत्। मा तृषत् तृषार्तिं मा गमत्। क्षुध बुभुक्षायाम्, ञितृष पिपासायाम्। उभयोर्माङि लुङि पुषादित्वाद् अङ्।

ऊर्ज॑मस्मा ऊर्ज॑स्वती धत्तं॒ पयो॑ अस्मै पय॑स्वती धत्तम्।
ऊर्ज॑म॒स्मै द्यावा॑पृथि॒वी अ॑धातां॒ विश्वे॑ दे॒वा म॒रुत॒ ऊर्ज॒मापः॑ ॥ ५ ॥

---

१. सृष्टो पै १,१३,१. २. परिददामि स मा पै. ३. तु. H, सा., RW, Wh.; वैतु. A,B,B[p],B[h],D,K,R,S[m],P[2],J,V द्यावापृथिवी. ४. तु. P[3],M, सा., शंपा., RW.; वैतु. A,B,D,K,R,S,P,P[2],J,V देवा ; देवा संशोध्य देवा B[h].

ऊर्जम् । अस्मै । ऊर्जस्वती इति । धत्तम् । पयः । अस्मै । पयस्वती इति । धत्तम् ।
ऊर्जम् । अस्मै । द्यावापृथिवी इति । अधाताम् । विश्वे । देवाः । मरुतः । ऊर्जम् । आपः ॥ ५ ॥

ऊर्जस्वती हे ऊर्जस्वत्यौ बलवत्यौ द्यावापृथिव्यौ । ऊर्ज बलप्राणनयोः इत्यस्माद् असुन् । 'तसौ मत्वर्थे' ( पा १,४,१९ ) इति भत्वाद् रुत्वाभावः । अस्मै तृषिताय ऊर्जम् बलं बलकरम् अन्नं वा धत्तम् प्रयच्छतम् । तथा पयस्वती हे पयस्वत्यौ अस्मै पयः उदकं धत्तम् । प्रार्थितं फलं लब्धम् इति सहसा रोगनिवृत्तये सिद्धवद् अनुवदति ऊर्जम् इत्यर्धर्चेन । द्यावापृथिवी उक्तलक्षणे ते द्यावापृथिव्यौ अस्मै ऊर्जम् प्रार्थितम् अन्नं बलं वा अधाताम् दत्तवत्यौ । तथा विश्वे देवाः मरुतः आपः अब्देवताश्च ऊर्जम् । अधुः इति वचनविपरिणामेन संबन्धः ।

शिवाभिष्टे हृदयं तर्पयाम्यनमीवो मोदिषीष्ठाः सुवर्चाः ।
सवासिनौ पिबतां मन्थमेतमश्विनो रूपं परिधाय मायाम् ॥ ६ ॥

शिवाभिः । ते । हृदयम् । तर्पयामि । अनमीवः । मोदिषीष्ठाः । सुऽवर्चाः ।
सऽवासिनौ । पिबताम् । मन्थम् । एतम् । अश्विनोः । रूपम् । परिऽधाय । मायाम् ॥ ६ ॥

हे तृषार्त ते तव हृदयं नीरसं शिवाभिः सुखकरीभिरद्भिस्तर्पयामि । 'युष्मत्ततक्षुः-ष्वन्तःपादम्' ( पा ८,३,१०३ ) इति भिसो विसर्जनीयस्य षत्वम् । अनन्तरं त्वम् अनमीवः तृषारोगरहितः सुवर्चाः शोभनतेजोयुक्तः सन् मोदिषीष्ठाः मोदस्व । मुद हर्षे इत्यस्माद् आशिषि लिङ् । अनमीव इति । बहुव्रीहौ 'नञ्सुभ्याम्' ( पा ६,२,१७२ ) इति उत्तरपदान्तोदात्तत्वम् । सुवर्चा इति । बहुव्रीहौ 'सोर्मनसी अलोमोषसी' ( पा ६,२,११७ ) इत्युत्तरपदाद्युदात्तत्वम् । सवासिनौ समानम् एकं वस्त्रं वसानौ, समानम् एकत्र वसन्तौ वा । वस आच्छादने इत्यस्माद् वस निवासे इत्यस्माद् वा समानशब्दोपपदाद् 'व्रते' ( पा ३,२,८० ) इति णिनिप्रत्ययः । तत्र सूत्रे व्रतशब्देन शास्त्रीयो नियम उक्तः । 'समानस्य च्छन्दसि' ( पा ६,३,८४ ) इत्यादिना समानशब्दस्य सभावः । व्याधिता-व्याधितौ तौ अश्विनोः देवभिषजो रूपं मायाम् मायामयं परिधाय धृत्वा एतं मन्थं पिबताम् पीतं कुरुताम् । यद्यपि सक्तूदकं द्विशलाकया समिधा मथितं मन्थ उच्यते तथापि अत्र सूत्रे ( कौसू २७,१० ) विशेषविधानाद् वैतसे चमसे वैतसशलाकाभ्यां मथितं सक्तूदकं मन्थशब्देन विवक्षितम् ।

इन्द्र एतां ससृजे विद्धो अग्र ऊर्जां स्वधामजरां सा त एषा ।
तया त्वं जीव शरदः सुवर्चा मा त आ सुस्रोद् भिषजस्ते अक्रन् ॥ ७ ॥

---

१. द्यावापृथिवी P², J, K; द्यावापृथिवी O, D², P (तु. पृ २५२ टि ३ च). २. देवाः P, P², J (तु. पृ २५२ टि ४ च). ३. शिवास्ते° पै १,१३,३. ४. तर्पयस्वन° पै. ५. मोदमानश्चरेह पै. ६. मथ° B, P, J. ७. °मेवाश्वि° पै. ८. अग्रम् पै १,१३,४. ९. ऊर्जा R, ऊर्जम् पै. १०. त्वया M, P³, W.

इन्द्रः । एताम् । सुसृजे । विद्धः । अग्रे । ऊर्जाम् । स्वधाम् । अजराम् । सा । ते । एषा ।
तया । त्वम् । जीव । शरदः । सुऽवर्चाः । मा । ते । आ । सुस्रोत् । भिषजः । ते । अक्रन् ॥ ७ ॥

अग्रे पुरा विद्धः वृत्राद्यसुरैस्ताडित इन्द्रः तृषार्तः सन् तन्निवृत्तये ऊर्जम् बलकरीं स्वधाम् । अन्ननामैतत् । अन्नवत्पुष्टिकरीम् अजराम् जराया निवर्तयित्रीम् एताम् मन्थलक्षणाम् ऊर्जं ससृजे सृष्टवान् । हे व्याधित ते तुभ्यं सा एषा दीयमाना । सेवकबलकरत्वाद्युक्तगुणसद्भावप्रतिपादनाय तत्तादात्म्यव्यपदेशः । विद्ध इति । व्यध ताडने इत्यस्माद् निष्ठायां 'ग्रहिज्या' ( पा ६,१,१६ ) इत्यादिना संप्रसारणम् । ऊर्जम् इति । ऊर्ज बलप्राणनयोः । अस्माद् भावे क्विप् । ऊर्ग् बलं तद्वन्तं करोतीति णिचि 'विन्मतोर्लुक्' ( पा ५,३,६५ ) । ततः कर्तरि क्विप् । यद्वा ऊर्ज्यते प्राण्यते अनयेति अण्यन्तादेव वा करणे क्विप् । स्वधेति । स्वेभ्यो धीयते स्वस्मिन् वा धीयत इति स्वधा । 'घञर्थे कविधानम्' ( पावा ३,३,५८ ) इति कः । स्वम् आत्मानं भोक्तृशरीरं दधाति पुष्णातीति वा स्वधा । 'आतोऽनुपसर्गे कः ( पा ३,२,३ ) । तया ऊर्जा सुवर्चाः सन् त्वं शरदः शतसंख्याका जीव । पीतो मन्थस्ते तव शरीरात् मा आ सुस्रोत् प्रच्युतो मा भूत् । शरीरे स्थित्वा बलादिकं करोतु इत्यर्थः । भिषजः आदिवैद्यास्ते तव अक्रन् इदं भैषज्यम् अकार्षुः । स्रु गतौ । लङि छान्दसः शपः श्लुः । अक्रन् । करोतेः 'मन्त्रे घस'' ( पा २,४,८० ) इति च्लेर्लुक् ।

इति पञ्चमेनुवाके तृतीयं सूक्तम् ।

'यथेदं भूम्याम्' इति सूक्तेन स्त्रीवशीकरणकर्मणि वृक्षत्वक्शरखण्डतगराञ्जनकुष्ठादिद्रव्याणि पेषयित्वा आज्येन आलोड्य स्त्रिया अङ्गम् अनुलिम्पेत् । 'यथेदं भूम्याम् अधि' ( अ २,३० ) 'यथा वृक्षम्' ( अ ६,८ ) इति प्रक्रम्य सूत्रितम् 'संस्पृष्टयोर्वृक्षलिबुजयोः शकलावन्तरेषुंतगराञ्जनकुष्ठमदुघरेष्ममथिततृणम् आज्येन संनीय संस्पृशति' ( कौसू ३५,२१ ) इति ।

यथेदं भूम्या अधि तृणं वातो मथायति ।
एवा मथ्नामि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः ॥ १ ॥

यथा । इदम् । भूम्याः । अधि । तृणम् । वातः । मथायति । एव । मथ्नामि । ते ।
मनः । यथा । माम् । कामिनी । असः । यथा । मत् । न । अपऽगाः । असः ॥ १ ॥

भूम्याम् पृथिव्याम् । अधिः उपर्यर्थः । भूम्या उपरि इदम् परिदृश्यमानं तृणं वातः वात्यालक्षणो वायुः यथा येन प्रकारेण मथायति मथ्नाति अनवस्थितं कृत्वा भ्रामयति ।

---

१. तु. पृ २५३ टि ६; वैतु. मंपा. द्र. २. ऊर्जम् द्विः S', Kd. ३. °क° नास्ति S',Kd. ४. वैतु. मंपा. द्र. ५. °लिब्जयोः S', Kd. ६. °वतरणेषु° S', Kd. ७. °रेषुस्थकरा° Bl. ८. कुष्ठंतृण° S', Kd. ९. अपऽगा P,P², J. १०. मथयति S', Kd.

'छन्दसि शायजपि' (पा ३,१,८४) इत्यत्र 'शायच् छन्दसि सर्वत्र' इति वचनाद् अहावपि श्नः शायजादेशः। शायचश्चित्त्वाद् अन्तोदात्तत्वम्। 'यावद्यथाभ्याम्' (पा ८,१,३६) इति निघातप्रतिषेधः। हे स्त्रि एव एवं ते मनः मथ्नामि आलोडयामि। यथा येन प्रकारेण मां कामयमानं कामिनी काङ्क्षिष्यन्ती असः भवेः। यथा येन प्रकारेण मत् मत्तः सकाशाद् अपगाः अपसृत्य अन्यत्र गन्त्री नासः न भवेः। तथा मथ्नामीति पूर्वत्र संबन्धः। कामिनीति। कमेर्णिङन्ताद् औणादिक इनिप्रत्ययः। तस्य 'भविष्यति गम्यादयः' (पा ३,३,३) इति भविष्यदर्थत्वम्। ततो ङीप्। 'अकेनोर्भविष्यदाधमर्ण्ययोः' (पा २,३,७०) इति कर्मणि षष्ठीप्रतिषेधः। तस्माद् माम् इति[1] द्वितीया। अपगा इति। 'जनसनखनक्रमगमो विट्' (पा ३,२,६७) इति गमेर्विट् प्रत्ययः। 'विड्वनोरनुनासिकस्यात्' (पा ६,४,४१) इति आत्त्वम्।

सं चेन्नयाथो अश्विना कामिना सं च वक्षथः।
सं वां भगासो अग्मत सं चित्तानि समु व्रता ॥ २ ॥

सम्। च। इत्। नयाथः। अश्विना। कामिना। सम्। च। वक्षथः।
सम्। वाम्। भगासः। अग्मत। सम्। चित्तानि। सम्। ऊं इति। व्रता ॥ २ ॥

अश्विना हे अश्विनौ कामनाविषयभूतां स्त्रियम्। इत् इत्यवधारणे। सं नयाथः मत्समीपं प्रापयतम्। नयतेर्लेटि आडागमः। 'चवायोगे प्रथमा' (पा ८,१,५९) इति प्रथमा तिङ्विभक्तिर्न निहन्यते। आनीय च कामिना मया सं वक्षथः संयोजयतम्। वहेर्लेटि अडागमः। 'सिब्बहुलम्०' (पा ३,१,३४) इति सिप्। परस्परसमुच्चयार्थौ चकारौ। वाम् युवयोर्भगासः भगाः भाग्यानि। 'आज्जसेरसुक्' (पा ७,१,५०)। सम् अग्मत संगच्छन्ताम्। मयेति शेषः। 'समो गम्यृच्छि०' (पा १,३,२९) इत्यात्मनेपदम्। छान्दसे लुङि च्लेर्लुक्। 'गमहन०' (पा ६,४,९८) इत्युपधालोपः। तथा चित्तानि ज्ञानानि। समग्मतेत्यनुषङ्गः। एवं व्रता व्रतानि। कर्मनामैतत्। उशब्दः अप्यर्थे। विविधानि कर्माण्यपि समग्मतेति संबन्धः।

यत् सुपर्णा विवक्षवो अनमीवा विवक्षवः।
तत्र मे गच्छताद्धवं शल्य इव कुल्मलं यथा ॥ ३ ॥

यत्। सुऽपर्णाः। विवक्षवः। अनमीवाः। विवक्षवः।
तत्र। मे। गच्छतात्। हवम्। शल्यःऽइव। कुल्मलम्। यथा ॥ ३ ॥

सुपर्णाः शोभनपक्षाः पारावतादयः पक्षिणः यत् स्त्रीविषयं वाक्यं विवक्षवः

१. न्यामिति S', Kd. २. नेषथः पै २,१७,३. ३. मनांस्यू पै. ४. वपूंषि पै.
५. याः पै २,१७,५. ६. इवा Sm. ७. गच्छताम् P.

वक्तुम् इच्छवो भवन्ति अनमीवाः अरोगिणो हृताः कामिजनाश्च यद् विवक्षवो भवन्ति तत्र विषये क्रियमाणं मे मम संबन्धिनं हवम् आह्वानं कुल्मलं यथा कुत्सितमलोपेतं मृदुलं शरीरावयवविशेषमिव सा कामिनी शल्यः बाण इव गच्छतात् प्राप्नोतु । मद्वाक्यं श्रुत्वा मत्परवशा भवतु इत्यर्थः । विवक्षवः । ब्रुवः सनि वच्यादेशो 'सनाशंसभिक्ष उः' (पा ३,२,१६८) इति उप्रत्ययः । 'न लोकाव्ययनिष्ठा°' (पा २,३,६९) इति षष्ठीप्रतिषेधे यद् इति द्वितीया । सुपर्णाः अनमीवा इत्युभयत्र 'नञ्सुभ्याम्' (पा ६,२,१७२) इत्युत्तरपदान्तोदात्तत्वम् । 'यथेति पादान्ते' (फि ४,१७) इति यथाशब्दो निहन्यते ।

यदन्त॑रं तद् बाह्यं यद् बाह्यं तदन्त॑रम् ।
क॒न्या॑नां वि॒श्वरू॑पाणां मनो॑ गृभायौषधे ॥ ४ ॥

यत् । अन्त॑रम् । तत् । बाह्य॑म् । यत् । बाह्य॑म् । तत् । अन्त॑रम् ।
क॒न्या॑नाम् । वि॒श्वऽरू॑पाणाम् । मन॑ः । गृ॒भा॒य॒ । ओ॒ष॒धे॒ ॥ ४ ॥

यत् अर्थजातम् अन्तरम् अभ्यन्तरं मनः विषयीकरोति तदेव बाह्यम् बहिष्ठं वाग्विषयो भवति । यद् बाह्यम् उक्तलक्षणं च तत् एव अन्तरं मानसं भवति । अनेन वाङ्मनसयोः परस्परं विसंवादो निरस्तः । बाह्यम् इति । 'बहिषष्टिलोपो यञ् च' (पावा ४,१,८५) इति यञ्प्रत्ययः टिलोपश्च । एवं निर्दिष्टं विश्वरूपाणाम् अनवद्यसंपूर्णावयवानां कन्यानाम् अभुक्तपूर्वाणां मनः हे ओषधे तृणादिरूपे गृभाय गृहाण । त्वदनुलेपनेन तां मदनुरक्तचित्तां कुर्वित्यर्थः । कन्यानाम् इति । 'तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' (फि ४,८) इति अन्तस्वरितत्वम् । गृभाय । ग्रहेर्लोटि 'छन्दसि शायजपि' (पा ३,१,८४) इति श्नः शायजादेशः । 'हग्रहोर्भश्छन्दसि' (पावा ८,२,३२) इति भत्वम् ।

एयम॑गन् पति॑कामा जनि॑कामो॒हमाग॑मम् ।
अश्व॑ः कनि॑क्रदद् य॒था भगे॑ना॒हं स॒हाग॑मम् ॥ ५ ॥

आ । इ॒यम् । अ॒ग॒न् । पति॑ऽकामा । जनि॑ऽकामः । अ॒हम् । आ । अ॒ग॒म॒म् ।
अश्व॑ः । कनि॑क्रदत् । यथा॑ । भगे॑न । अ॒हम् । स॒ह । आ । अ॒ग॒म॒म् ॥ ५ ॥

इयम् काम्यमाना स्त्री पतिकामा पतिं भर्तारम् अभिलष्यन्ती आगन् मत्समीपम् आगमत् । गमेर्लुङि तिपि च्लेर्लुकि 'मो नो धातोः' (पा ८,२,६४) इति नत्वम् । पतिकामेति । 'शीलिकामिभक्ष्याचरिभ्यो णः' (पावा ३,२,१) इति णप्रत्ययान्तत्वाद् ङीब् न भवति । अहमपि जनिकामः जनिर्जाया तां कामयमानः सन् आगमम् तां प्राप्तवान् अस्मि । किञ्च कनिक्रदद् भृशं हेषाशब्दं कुर्वन् अश्वः यथा वडवया संगच्छते तथा

---

१. गृहाणौषधे पै २,१७,४. २. अंतरमान° S', Kd.

अहं भगेन सह आगमम् । कनिक्रदद् इति । क्रन्देराह्वानार्थाद् 'दाधर्ति' ( पा ७,४,६५ ) इत्यादिसूत्रे इतिशब्दस्य प्रकारवाचित्वात् कनिक्रदच्छब्दः शत्रन्तोऽपि निपातितो द्रष्टव्यः ।

इति पञ्चमेऽनुवाके चतुर्थं सूक्तम् ।

'इन्द्रस्य या मही' इति सूक्तेन शरीरगतविविधक्रिमिरोगेषु तच्छान्तये घृतमिश्रान् कृष्णचणकान् जुहुयात् ।

तथा गोवालवेष्टितं शरकाण्डं संभिद्य अग्नौ प्रताप्य आदध्यात् ।

एवमेव रथ्यापांसुं सव्यहस्तेनादाय दक्षिणहस्तेन संमृज्य दक्षिणामुखः एतत् सूक्तं जपन् व्याधितस्योपरि किरति ।

तथैव एतत् सूक्तं जपन् व्याधितो हस्ताभ्यां पांसुं मर्दयेत् ।

तथा अनेन सूक्तेन पलाशोदुम्बराद्याः समिध आदध्यात् ।

तद् उक्तं कौशिकेन — " 'इन्द्रस्य या मही' इति खल्वङ्गान् अल्गण्डून् हननान् घृतमिश्रान् जुहोति । बालान् कल्माषे काण्डे सव्यं परिवेष्ट्य संभिनत्ति । प्रतपति । आदधाति । सव्येन दक्षिणामुखः पांसून् उपमथ्य परिकिरति । संमृद्नाति । आदधाति" (कौ २७,१४-२०) इति ।

इन्द्र॑स्य॒ या म॒ही दृ॒षत् [7]क्रिमे॒र्विश्व॑स्य॒ तर्ह॑णी ।

तया॑ पिनष्मि॒ सं [8]क्रिमी॑न् दृ॒षदा॒ खल्वाँ॑ [9] इव ॥ १ ॥

इन्द्र॑स्य । या । म॒ही । दृ॒षत् । क्रिमेः॑ । विश्व॑स्य । तर्ह॑णी ।

तया॑ । पि॒न॒ष्मि॒ । सम् । क्रिमी॑न् । दृ॒षदा॑ । खल्वा॑न्ऽइव ॥ १ ॥

इन्द्रस्य देवस्य संबन्धिनी या मही महती । अच्छब्दलोपश्छान्दसः । दृषत् शिलास्ति । तामेव विशिनष्टि — विश्वस्य सर्वस्य क्रिमेस्तर्हणी हन्त्री । तृहेर्हिंसार्थात् करणे ल्युट् । ङीप् । तया उक्तप्रभावया दृषदा क्रिमीन् शरीरान्तर्गतान् सर्वान् क्षुद्रजन्तून् सं पिनष्मि संचूर्णयामि । पिषॢ संचूर्णने । रुधादित्वात् श्नम् । तत्र दृष्टान्तः — दृषदा पेषण्या खल्वान् चणकान् इव ।

दृ॒ष्टम॒दृष्ट॑मतृह॒मथो॑ [10][11] कु॒रूरु॑मतृहम् [12] ।

अ॒ल्गण्डू॑न्त्स॒र्वा॑ञ्छ॒लुना॑न् [13][14] क्रिमी॑न् वच॑सा [15] जम्भयामसि ॥ २ ॥

दृ॒ष्टम् । अ॒दृष्ट॑म् । अ॒तृ॒ह॒म् । अथो॒ इति॑ । कु॒रूरु॑म् [16] । अ॒तृ॒ह॒म् ।

अ॒ल्गण्डू॑न् । सर्वा॑न् । श॒लुना॑न् । क्रिमी॑न् । वच॑सा । ज॒म्भ॒या॒म॒सि॒ ॥ २ ॥

१. दक्षिणमुखः S', Kd. २. °कौतु° S', Kd. ३. तु. Bl. दा.; वैतु शंपा. खल्वाङ्गान् अलाण्डुहननान्, S', Kd. खल्वांगानलांडूहननात्. ४. तु. Bl. दा.; वैतु. शंपा. बालान् असितकाण्डे, S', Kd. बालकमसिकांडे ५. तु. Bl., के.; वैतु. शंपा. पांसुम् ६. दृशत् $S^m$,O,$O^p$. ७. कृमे° A,K,V, Wh. ८. कृमीन् A,$B^h$,D,K,$S^m$,V,Wh. ९. खल्वाँ D. १०. °मतृहम् पं १,१५,२. ११. कुरीरं° K,V,S,. पै.; कुरूरं° $S^m$,J,$O^p$,$K^p$. १२. °मतृहम् $B^h$, $S^m$, पै. १३. अलाण्डून् RW. १४. सर्वांञ् श° K, सर्वां छ° R., सर्वान् छलूलान् पै. १५. वर्चसा B,$B^p$. १६. कुरीरम् K,S.

दृष्टम् चक्षुर्गोचरम् अदृष्टम् तदगोचरम् अन्तरवस्थितं क्रिमिजातम् अतृहम् तृणेह्मि हन्मि। तृह हिंसायाम्। छान्दसे लुङि व्यत्ययेन श्लेरङ्। अथो अपि च कुरीरम्। कुरीरं जालम्। तद्वद् अन्तरवस्थितं क्रिमिकुलम् अतृहम्। नाशयामीत्यर्थः। तानेव विशेषतो दर्शयति अल्गण्डून् इति। एतन्नाम्नः क्रिमिविशेषान् शलुनान् एतन्नाम्नश्च सर्वान् अन्यानपि क्रिमीन् वचसा मन्त्रेण जम्भयामसि जम्भयामः नाशयामः। जभेर्णौ 'रधिजभोरचि' (पा ७,१,६१) इति नुम्।

अ॒ल्गण्डू॑न्[4] हन्मि मह॒ता व॒धेन॑ दू॒ना अदू॑ना अ॒र॒सा अ॑भूवन्।
शि॒ष्टान॑शिष्टान्[5] नि ति॑रामि[6] वा॒चा यथा॒ क्रिमी॑णां[7] नकि॑रु॒च्छिषा॑तै[8] ॥ ३ ॥

अ॒ल्गण्डू॑न्। ह॒न्मि॒। म॒ह॒ता। व॒धेन॑। दू॒नाः। अदू॑नाः। अ॒र॒साः। अ॒भू॒व॒न्।
शि॒ष्टान्। अशि॑ष्टान्। नि। ति॒रा॒मि॒। वा॒चा। यथा॑। क्रिमी॑णाम्। नकिः॑। उ॒त्ऽशिषा॑तै ॥३॥

अल्गण्डून् शोणितमांसदूषकान् जन्तून् महता प्रभूतेन वधेन हननसाधनेन मन्त्रौषधादिना हन्मि। वधेनेति। 'हनश्च वधः' (पा ३,३,७६) इति करणे अप् वधादेशश्च। अल्लोपे उदात्तनिवृत्तिस्वरेण अन्तोदात्तत्वम्। ते च दूनाः मत्कृतौषधादिना परितप्ताः अदूनाः अपरितप्ताश्च ये सन्ति ते सर्वे अरसाः शुष्का निर्जीवा अभूवन्। दूना इति। टुदु उपतापे। तस्मान्निष्ठा। 'दुग्वोर्दीर्घश्च' (पावा ८,२,४४) इति दीर्घो निष्ठानत्वं च। दूङ् परितापे इत्यस्मादेव वा। 'स्वादय ओदितः' इति ओदित्त्वातिदेशाद् 'ओदितश्च' (पा ८,२,४५) इति निष्ठानत्वम्। तथा शिष्टान्। कान्। अशिष्टान् प्राग् अहतान् क्रिमिविशेषान् वाचा मन्त्रेण नि तिरामि निहन्मि। निपूर्वस्तिरतिर्हिंसने। यथा येन प्रकारेण क्रिमीणां नानाविधानां मध्ये कश्चिदपि नकिः उच्छिषातै नैवोच्छिष्यात्। तथा नि तिरामीति संबन्धः। नकिर्नेत्यर्थे। 'नकीम् नकिः आकृतम् इति नवोत्तराणि पदानि' (निघ ३,१२) इत्युक्तत्वात्। उच्छिषातै। शिष्लृ विशेषणे इत्यस्मात् उत्पूर्वात् लेटि आडागमः। व्यत्ययेन आत्मनेपदम्। टेरेत्वे कृते 'वैतोऽन्यत्र' (पा ३,४,९६) इति ऐत्वम्। छान्दसो विकरणस्य लुक्।

अ॒न्वा॒न्त्र्यं॑ शी॒र्ष॒ण्य॑१॒मथो॒ पार्ष्टे॑यं॒[10] क्रिमी॑न्[11]।
अ॒व॒स्क॒वं व्य॑ध्व॒रं क्रिमी॑न् वच॑सा जम्भयामसि ॥ ४ ॥

अ॒नु॒ऽआ॒न्त्र्यम्[12]। शी॒र्ष॒ण्य॒म्। अथो॒ इति॑। पार्ष्टे॑यम्। क्रिमी॑न्।
अ॒व॒स्क॒वम्। वि॒ऽअ॒ध्व॒रम्। क्रिमी॑न्। वच॑सा। ज॒म्भ॒या॒म॒सि॒ ॥ ४ ॥

अन्वान्त्र्यम् अनुक्रमेण आन्त्रेषु भवं क्रिमिजातं शीर्षण्यम् शिरसि भवं च। उभयत्र 'शरीरावयवाच्च' (पा ४,३,५५) इति यत्। 'ये च तद्धिते' (पा ६,१,६१) इति शिरःशब्दस्य

१. अंतरमंस्थि° S', Kd. २. तु. S, K; वैतु. मंपा. द्र. ३. वैतु. मंपा. द्र. ४. अलाण्डून् RW. ५. सृष्टानसृष्टान् पै २,१५,३. ६. किरामि पै. ७. क्रूमीणां इत्यपि एके शंपा. मूको. ८. वैप. १,२४३ i द्र. ९. शीर्ष्ण्यं° पै २,१५,४ १०. पार्ष्णेयं Bh,K,S. ११. क्रिमिम् A, Sm,P2,J,K,Bh,V; क्रिमीम् O,Op,Kp; क्रिमिन् R. १२. °आन्त्रम् P1,J.

शीर्षन्नादेशः। 'ये चाभावकर्मणोः' (पा ६,४,१६८) इति प्रकृतिभावः। 'तित् स्वरितम्' (पा ६,१,१८५) इत्युभयत्र स्वरितत्वम्। अथो अपि च पार्ष्णेयम् पार्ष्णिभवं क्रिमिम्। शरीरावयववाचिनः पार्ष्णिशब्दाद् व्यत्ययेन ढञ्। उक्तान् एतान् क्रिमीन् जम्भयामसीत्युत्तरत्र संबन्धः। अवस्कवम् अवाग्गमनस्वभावम्। अन्तरन्तः प्रविश्य वर्तमानम् इत्यर्थः। स्कुञ् आप्रवणे। अस्माद् अवपूर्वात् पचाद्यच्। व्यध्वरम् विविधमार्गोपेतम्। नानाद्वाराणि कृत्वा तत्र गच्छन्तम् इत्यर्थः। विविधोऽध्वा व्यध्वम्। 'उपसर्गादध्वनः' (पा ५,४,८४) इत्यच्प्रत्ययः समासान्तः। रो मत्वर्थीयः। यद्वा ध्वरो हिंसा। विविधैरौषधादिभिरपि न विद्यते ध्वरो यस्य स तथोक्तः। एवं नानाजातीयान् सर्वान् क्रिमीन् वचसा मन्त्रेण जम्भयामसि जम्भयामः।

ये क्रिमयः पर्वतेषु वनेष्वोषधीषु पशुष्वप्स्व[1]न्तः।
ये[2] अस्माकं तन्वमाविविशुः सर्वं तद्धन्मि जनिम क्रिमीणाम् ॥ ५ ॥

ये। क्रिमयः। पर्वतेषु। वनेषु। ओषधीषु। पशुषु। अप्ऽसु। अन्तः। ये। अस्माकम्। तन्वम्। आऽविविशुः। सर्वम्। तत्। हन्मि। जनिम। क्रिमीणाम् ॥ ५ ॥

पर्वतादिषु अन्तः मध्ये ये क्रिमयः स्थिताः ते[4] अस्माकं तन्वः तनूः शरीराणि आविविशुः व्रणमुखेन अन्नपानादिद्वारेण वा प्रविष्टाः। सर्वम् निरवशेषं तत् उक्तविधं क्रिमीणां जनिम जन्म उत्पत्तिमेव हन्मि नाशयामि।

इति द्वितीयकाण्डे पञ्चमेऽनुवाके पञ्चमं सूक्तम्।

इति पञ्चमोऽनुवाकः।

षष्ठेऽनुवाके पञ्च सूक्तानि। तत्र 'उद्यन्नादित्यः' इति प्रथमसूक्तेन गोक्रिमिभैषज्यकर्मणि संध्यात्रयेऽपि क्रिमियुतव्रणमुखं दर्भैस्ताडयेत्।

तथा अनेन सूक्तेन साज्यकृष्णचणकहोमादिकं पूर्वसूक्तोक्तप्रकारेणैव कुर्यात्।

सूत्रितं हि— " 'उद्यन्नादित्यः' इत्युद्यति गोनामेत्याह असाविति। सूक्तान्त 'ते...हताः' इति दर्भैरभ्यस्यति। मध्यंदिने च। प्रतीचीम् अपराह्णे। बालस्तुकाम् आच्छिद्य खल्वादीनि' (कौसू २७, २१-२६) इति।

१. वैतु. मंपा. द्र. २. ते K, S. ३. तन्वं आ S,K,V. ४. तु. K, S, वैतु मंपा. द्र. ५. तु. S,K,V; वैतु मंपा. द्र. ६. °सूत्रोक्त° S', Kd. ७. °रभिविध्य S', Kd. ८. बाह्य° S', Kd. ९. तु. S', Kd., दा; वैतु. शंपा. Bl. खल्वादीनि.

उद्यन्नादित्यः क्रिमीन् हन्तु निम्रोचन् हन्तु रश्मिभिः ।
ये अन्तः क्रिमयो गवि ॥ १ ॥

उत्ऽयन् । आदित्यः । क्रिमीन् । हन्तु । निऽम्रोचन् । हन्तु । रश्मिऽभिः ।
ये । अन्तः । क्रिमयः । गवि ॥ १ ॥

आदित्यः उद्यन् **उदयं प्राप्नुवन्** रश्मिभिर्**व्यापनशीलैः स्वकिरणैः** क्रिमीन् हन्तु **हिनस्तु** । निम्रोचन् **अस्तं गच्छंश्च रश्मिभिः क्रिमीन्** हन्तु । **रश्मिभिरिति** । 'अशे रश च' (पाउद १,१५) **इति मिप्रत्ययो रशादेशश्च । कुत्रत्यान् क्रिमीन् इति तत्राह**—ये क्रिमयः गवि । **जातावेकवचनम् । गोशरीरेषु** अन्तः **मध्ये सन्ति । तान् क्रिमीन् इति पूर्वत्र संबन्धः** ।

विश्वरूपं चतुरक्षं क्रिमिं सारङ्गमर्जुनम् ।
शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः ॥ २ ॥

विश्वऽरूपम् । चतुःऽअक्षम् । क्रिमिम् । सारङ्गम् । अर्जुनम् ।
शृणामि । अस्य । पृष्टीः । अपि । वृश्चामि । यत् । शिरः ॥ २ ॥

विश्वरूपम् **नानाकारं** चतुरक्षम् **चतुर्नेत्रम्** । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' (पा ५,४,११३) **इति षच् समासान्तः** । सारङ्गम् **शबलवर्णम्** अर्जुनम् **शुभ्रवर्णम् एवम् अनेकाकारं** क्रिमिं शृणामि **हन्मि । शॄ हिंसायाम्** । 'प्वादीनां ह्रस्वः' (पा ७,३,८०) । अस्य **उक्तलक्षणस्य क्रिमेः** पृष्टीः **पार्श्वावयवान्** अपि[4] यच्छिरः **शरीरान्तर्गतमांसादिभक्षकं प्रधानम् अङ्गं तदपि** वृश्चामि **छिनद्मि** ।

अत्रिवद् वः क्रिमयो[5] हन्मि कण्ववज्जमदग्निवत् ।
अगस्त्यस्य ब्रह्मणा सं पिनष्म्यहं क्रिमीन् ॥ ३ ॥

अत्रिऽवत् । वः । क्रिमयः । हन्मि । कण्वऽवत् । जमदग्निऽवत् ।
अगस्त्यस्य । ब्रह्मणा । सम् । पिनष्मि । अहम् । क्रिमीन् ॥ ३ ॥

हे क्रिमयः वः **युष्मान्** अत्रिवत् कण्ववत् जमदग्निवत् । **सर्वत्र प्रथमार्थे वतिः । ते यथा मन्त्रसामर्थ्यात् क्रिमीन् निघ्नन्ति एवम्** अहम् **अपि** हन्मि । **तथा** अगस्त्यस्य **महर्षेर्**ब्रह्मणा **मन्त्रेण अहं** क्रिमीन् **सर्वान्** सं पिनष्मि **पुनरुद्भवो यथा न भवति तथा नाशयामि । एतेषां क्रिमिनिवारकत्वं श्रुत्यन्तरे प्रसिद्धम्**— 'अत्रिणा त्वा क्रिमे हन्मि कण्वेन जमदग्निना विश्वावसोर्ब्रह्मणा हतः' (तैआ ४,३६,१) **इति** ।

---

१. पृष्ठी° A,J,K. २. °त्रादिना S',Kd. ३. पृष्ठीः S', Kd. ४. गतिः इ. (तु. वैप. प्रभृ.; वैतु. सा. ?) ५. त्वा क्रिमे पै २,१४,५.

हतो राजा क्रिमीणामुतैषां स्थपतिर्हतः ।
हतो हतमाता क्रिमिर्हतभ्राता हतस्वसा ॥ ४ ॥

हतः । राजा । क्रिमीणाम् । उत । एषाम् । स्थपतिः । हतः ।
हतः । हतऽमाता । क्रिमिः । हतऽभ्राता । हतऽस्वसा ॥ ४ ॥

क्रिमीणां राजा हतः अस्मत्प्रयुक्तमन्त्रौषधादिना नष्टः । उत अपि च एषां क्रिमीणां स्थपतिः सचिवो हतः । एवं हतमाता नष्टमातृकः हतभ्राता हतभ्रातृकः हतस्वसा नष्टभगिनीकश्च क्रिमिर्हतः नष्टः । सस्वामिकं सामात्यं[1] सबान्धवं कृत्स्नं क्रिमिकुलं निरवशेषं नष्टम् इत्यर्थः । हतमातेत्यादिषु 'नद्यृतश्च' (पा ५,४,१५३) इति नित्यं प्राप्तस्य कपः 'ऋतश्छन्दसि' (पा ५,४,१५८) इति प्रतिषेधः ।

हतासो अस्य वेशसो हतासः परिवेशसः ।
अथो ये क्षुल्लका इव सर्वे[2] ते[3] क्रिमयो हताः ॥ ५ ॥

हतासः । अस्य । वेशसः । हतासः । परिऽवेशसः ।
अथो इति । ये । क्षुल्लकाःऽइव । सर्वे । ते[3] । क्रिमयः । हताः ॥ ५ ॥

अस्य क्रिमिकुलस्य वेशसः निवेशनस्थानानि मुख्यगृहा हतासः हताः । एवं परिवेशसः परितः स्थिताः समीपगृहाश्च हतासः हताः । वेशसः । विशतेरधिकरणे औणादिकः असिप्रत्ययः । अथो अपि च ये क्षुल्लका इव बीजावस्थाः सूक्ष्मरूपा दुर्लक्ष्याः[4] क्रिमयः सन्ति ते सर्वेऽपि क्रिमयः हताः नाशिताः ।

प्र ते शृणामि शृङ्गे याभ्यां वितुदायसि[5] ।
भिनद्मि ते कुषुम्भं[6] यस्ते विषधानः ॥ ६ ॥

प्र । ते । शृणामि । शृङ्गे इति । याभ्याम् । विऽतुदायसि ।
भिनद्मि । ते । कुषुम्भम् । यः । ते । विषऽधानः ॥ ६ ॥

हे क्रिमे ते त्वदीये शृङ्गे विषाणे प्र शृणामि प्रभिनद्मि याभ्यां शृङ्गाभ्यां वितुदायसि विशेषेण तुदसि व्यथयसे[7] । ते[8] इति संबन्धः । तुद व्यथने इत्यस्मात् परस्य शस्यापि व्यत्ययेन शायजादेशः । ते तव कुषुम्भम् अवयवविशेषं भिनद्मि विदारयामि । तमेवावयवं विशिनष्टि — ते तव संबन्धी यः अवयवः विषधानः । विषं धीयतेस्मिन्निति

---

१. स्वस्वामिकं सामान्यं S', Kd. २. सर्वे ते क्रिमयो A,B,B^p,B^h,D,K,R,S^m,P,P², J,V,RW. ३. ते P,P²,J. ४. तु. S', Kd.; वैतु. शंपा. दुर्लक्ष्याः ५. वितुदा° P³,M,E². ६. पुकुंभं S, पुकुम्भं K, कुषुभं B^h J, कुषम्भं D, कुंपुभं कुषभं कशभं Wh, कुम्भं पै २,१४,४. ७. व्यथयते S', Kd. ८. वैतु. मंपा. द्र

विषधानः विषस्थानम्। तम् इति पूर्वत्र संबन्धः। 'करणाधिकरणयोश्च' ( पा ३,३,११७ ) इत्यधिकरणे ल्युट्।

इति षष्ठेऽनुवाके प्रथमं सूक्तम्।

'अक्षीभ्याम्' इति सूक्तेन अक्षिनासाकर्णशिरोजिह्वाग्रीवादिसर्वावयवजरोगभैषज्यकर्मणि बाह्वादिपर्वसु बद्धं व्याधितं संपातितोदकेन पर्वग्रन्थीन् विमुच्य अवसिञ्चेत्। सूत्रितं हि—" 'अक्षीभ्यां ते' इति वीबर्हम्। उदपात्रेण संपातवतावसिञ्चति" ( कौसू २७,२७;२८ ) इति।

तथा अस्य सूक्तस्य अंहोलिङ्गगणे पाठात् तस्य गणस्य यत्रयत्र सर्वरोगभैषज्यादिषु विनियोग उक्तस्तत्र सर्वत्र अस्य विनियोगोऽनुसंधेयः। सूत्रितं हि—'ओषधिवनस्पतीनाम् अनुक्तान्यप्रतिषिद्धानि भैषज्यानाम्। अंहोलिङ्गाभिः' ( कौसू ३२,२६;२७ ) इति। अत्र 'अक्षीभ्यां ते' ( अ २,३३ ), 'मुञ्चामि त्वा' ( अ ३,११ ), 'उत देवाः' ( अ ४,१३ ), 'आवतस्ते' ( अ ५,३० ), 'शीर्षक्तिम्' ( अ ९,८ ) इति पञ्चप्रतीको गणो विवक्षितः।

तथैव अश्वमेधादिषु दीक्षावतो यजमानस्य भैषज्यकर्मणि एतत् सूक्तं विनियुक्तं वैताने—"अथ भैषज्याय यजमानम् 'अक्षीभ्यां ते' 'मुञ्चामि त्वा' " ( वैताश्रौ ३८,,१ ) इति।

अ॒क्षीभ्यां॑ ते॒ नासि॑काभ्यां॒ कर्णा॑भ्यां॒ छुबु॑का॒दधि॑।
यक्ष्मं॑ शीर्ष॒ण्यं॑ म॒स्तिष्का॑ज्जि॒ह्वाया॒ वि वृ॑हामि ते ॥ १ ॥

अ॒क्षीभ्या॑म्। ते॒। नासि॑काभ्याम्। कर्णा॑भ्याम्। छुबु॑कात्। अधि॑।
यक्ष्म॑म्। शी॒र्ष॒ण्य॑म्। म॒स्तिष्का॑त्। जि॒ह्वायाः॑। वि। वृ॒हा॒मि॒। ते॒ ॥ १ ॥

हे यक्ष्मगृहीत ते तव अक्षीभ्याम् चक्षुर्भ्यां यक्ष्मम् रोगं वि वृहामि उद्धरामि। विश्लेषयामीत्यर्थः। 'ई च द्विवचने' ( पा ७,१,७७ ) इति अक्षिशब्दस्य ईकारान्तादेशः स चोदात्तः। तथा नासिकाभ्याम् घ्राणेन्द्रियाधिष्ठानाभ्यां कर्णाभ्याम् श्रोत्राभ्यां च चुबुकाद् ओष्ठस्याधःप्रदेशाच्च। अधिः अनर्थकः। अपि च शीर्षण्यम् शिरसि भवो रोगः शीर्षण्यः 'शरीरावयवाच्च' ( पा ४,३,५५ ) इति यत्। 'ये च तद्धिते' ( पा ६,१,६१ ) इति शिरसः शीर्षन्नादेशः। 'ये चाभावकर्मणोः' ( पा ६,४,१६८ ) इति प्रकृतिभावः। ईदृशं यक्ष्मं रोगं ते तव मस्तिष्कात्। शिरसोऽन्तरवस्थितो मांसविशेषो मस्तिष्कः। तस्मात् जिह्वायाः रसनायाश्च सकाशाद् वि वृहामि उद्धरामि। पृथक्करोमीत्यर्थः। वृहू उद्यमने इति धातुः।

१. °स्थाने S', Kd. २. विमुच्य हि: S', Kd. ३. तु. Bl., दा.; वैतु S', Kd. विवर्हम्
४. छु° इति संशोध्य चु° Bʰ, चु° S', Kd., चि° आपमं १,१७,१; आस्यादुत पै ४,७,१. ५. ललाटाद्
६. वृहामसि पै. ७. तु. Bʰ, S', Kd.; वैतु. मंपा. द्र.

ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्यं१ मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥ २ ॥

ग्रीवाभ्यः । ते । उष्णिहाभ्यः । कीकसाभ्यः । अनूक्यात् ।
यक्ष्मम् । दोषण्यम् । अंसाभ्याम् । बाहुऽभ्याम् । वि । वृहामि । ते ॥ २ ॥

हे व्याधिगृहीत ते तव ग्रीवाभ्यः । अत्र ग्रीवाशब्देन तदवयवभूतानि चतुर्दश सूक्ष्माण्यस्थीनि उच्यन्ते बहुवचननिर्देशात् । तद् उक्तं शतपथे ब्राह्मणे — 'ग्रीवाः पञ्चदशः । चतुर्दश वा एतासां करूकराणि वीर्यं पञ्चदशम् । तस्माद् एताभिरण्वीभिः सतीभिर्गुरुं४ भारं हरंति' ( माश १२,२,४,१० ) इति । ताभ्यो यक्ष्मं वि वृहामीति उत्तरत्र संबन्धः । तथा उष्णिहाभ्यः ऊर्ध्वं स्निग्धाभ्यः रक्तादिना उत्स्नाताभ्यो वा नाडीभ्यः । तद् उक्तं यास्केन — 'उष्णिग् उत्स्नाता भवति स्निह्यतेर्वा स्यात् कान्तिकर्मणः' ( नि ७,१२ ) इति । उष्णिगेव उष्णिहा । 'टाबं चापि हलन्तानाम्' इति टापः स्मरणात् । तथा चापि अन्यत्र श्रूयते — 'उष्णिहा छन्दः' ( तै ४,३,५,१ ) इति । 'सयुग्वोष्णिहया सविता सं बभूव' ( ऋ १०,१३०,४ ) इति च । अत्र प्रकरणाद् व्युत्पत्तिसामान्येन उष्णिहाशब्दो धमनीवाचकः । तथा कीकसाभ्यः जत्रुवक्षोगतास्थिभ्यः । अनूक्यात् अनुक्रमेण उच्यन्ति समवयन्ति अस्थीनि अस्मिन्निति अनूक्यम् तत्संधिः । तस्मात् । तथा च वाजसनेयकम् — 'अनूकं त्रयस्त्रिंशः । द्वात्रिंशद् वा एतस्य करूकराण्यनूकं त्रयस्त्रिंशम्' (शब्रा १२,२,४,१४) इति । अनुपूर्वाद् उच समवाये इत्यस्मात् 'कृत्यल्युटो बहुलम्' (पा ३,३,११३) इति अधिकरणे ण्यत् । 'तित् स्वरितम्' ( पा ६,१,१८५ ) इति स्वरितत्वम् । विवृहामीति सर्वत्र संबन्धः । तथा दोषण्यम् दोष्णोर्भवम् । पूर्ववद् यति 'पद्दन्' ( पा ६,१,६३ ) इत्यादिना दोषन्नादेशः । तथाविधं ते त्वदीयं यक्ष्मम् रोगम् अंसाभ्यां बाहुशिरोभ्यां बाहुभ्यां हस्ताभ्यां वि वृहामि उन्मूलयामि ।

हृदयात् ते परि क्लोम्नो हलीक्ष्णात् पार्श्वाभ्याम् ।
यक्ष्मं मतस्नाभ्यां प्लीह्नो यक्नस्ते वि वृहामसि ॥ ३ ॥

हृदयात् । ते । परि । क्लोम्नः । हलीक्ष्णात् । पार्श्वाभ्याम् ।
यक्ष्मम् । मतस्नाभ्याम् । प्लीह्नः । यक्नः । ते । वि । वृहामसि ॥ ३ ॥

हे रुग्ण ते तव हृदयात् हृदयपुण्डरीकाद् यक्ष्मं वि वृहामसीति उत्तरत्र संबन्धः । तथा परि क्लोम्नः । हृदयसमीपस्थो मांसपिण्डविशेषः क्लोमा तस्मात् । हलीक्ष्णात् एतत्संज्ञकात् तत्संबन्धाद् मांसपिण्डविशेषात् पार्श्वाभ्याम् दक्षिणोत्तराभ्यां मतस्नाभ्याम्

१. दोषण्यं३ B, Bp, Bh, D, Sm. २. उरस्तो पै ४,७,२. ३. वृहामसि पै.
४. दोषण्यम् P ४. गुरुं° S', Kd. ५. वृहति (?=वहति) S', Kd. ६. जत्रुवक्षो° S', Kd.
७. तस्य S', Kd. ८. °राण्यनेकं S', Kd. ९. हलीक्ष्मात् पै ४,७,३. १०. यक्ना° B.

उभयपार्श्वसंबन्धाभ्यां वृक्याभ्यां तत्समीपस्थपित्ताधारपात्राभ्यां वा प्लीह्नः उदरपार्श्वस्थितात् श्येनपत्राकाराद् मांसपिण्डात् यक्नः हृदयसमीपस्थाद् एतत्संज्ञकात् कालखण्डात् 'पद्दन:' ( पा ६,१,६३ ) इत्यादिना यकृच्छब्दस्य यकन्नादेशः। उदात्तनिवृत्तिस्वरेण प्लीह्नः यक्नः इत्युभयत्र विभक्त्युदात्तत्वम्। हे रुग्ण ते त्वदीयं यक्ष्मं तेभ्योऽवयवेभ्यो वि वृहामसि विवृहामः। 'इदन्तो मसि' ( पा ७,१,४६ )।

आन्त्रेभ्य॑स्ते गुदा॑भ्यो वनि॒ष्ठोरु॒दरा॒दधि॑ ।
यक्ष्मं॑ कु॒क्षिभ्यां॑ प्ला॒शेर्नाभ्या॒ वि वृ॑हामि ते ॥ ४ ॥

आ॒न्त्रेभ्यः॑ । ते॒ । गुदा॑भ्यः । व॒नि॒ष्ठोः । उ॒दरा॑त् । अधि॑ ।
यक्ष्म॑म् । कु॒क्षिऽभ्या॑म् । प्ला॒शेः । नाभ्याः॑ । वि । वृ॒हा॒मि॒ । ते॒ ॥ ४ ॥

हे यक्ष्मगृहीत ते तव आन्त्रेभ्यः पुरीतद्भ्यः गुदाभ्यः एतत्संज्ञकाभ्यः आन्त्रसमीपस्थेभ्यो मलमूत्रप्रवहणमार्गेभ्यः वनिष्ठोः स्थविरान्त्रात् उदरात् एतत्सर्वाधारभूताज्जठरात्। अधिः अनर्थकः । यक्ष्मं वि वृहामीति संबन्धः । तथा कुक्षिभ्याम् दक्षिणोत्तराभ्याम् उदरभागाभ्यां प्लाशेः बहुच्छिद्रात् मलपात्रात् नाभ्याः नाभिमण्डलाच्च ते त्वदीयं यक्ष्मं वि वृहामि नाशयामि। एतन्मन्त्रद्वयप्रतिपादितानाम् अवयवानां विभागो माध्यंदिनब्राह्मणे सौत्रामण्यां यज्ञाङ्गैः पुरोडाशादिभिः संस्कार्यत्वेन स्पष्टम् आम्नातः— 'हृदयमेवास्यैन्द्रः पुरोडाशः। यकृत् सावित्रः। क्लोमा वारुणः मतस्ने एवास्याश्वत्थं च पात्रम् औदुम्बरं च। पित्तं नैयग्रोधम्। आन्त्राणि स्थाल्यः। गुदा उपशयानि। श्येनपत्रे प्लीहासन्दी। नाभिः कुम्भः। वनिष्ठुः प्लाशिः शतातृण्णा । तद् यत् सा बहुधा वितृण्णा भवति तस्मात् प्लाशिर्बहुधा विकृत्तः' ( माश १२,९,१,३ ) इति।

ऊ॒रुभ्यां॑ ते अष्ठी॒वद्भ्यां॒ पार्ष्णि॑भ्यां॒ प्रप॑दाभ्याम् ।
यक्ष्मं॑ भस॒द्यं१ श्रोणि॑भ्यां॒ भास॑दं॒ भंस॑सो॒ वि वृ॑हामि ते ॥ ५ ॥

ऊ॒रुऽभ्या॑म् । ते॒ । अ॒ष्ठी॒वत्ऽभ्या॑म् । पार्ष्णि॑ऽभ्याम् । प्रऽप॑दाभ्याम् ।
यक्ष्म॑म् । भ॒स॒द्य॑म् । श्रोणि॑ऽभ्याम् । भास॑दम् । भंस॑सः । वि । वृ॒हा॒मि॒ । ते॒ ॥ ५ ॥

हे रोगार्त ते तव ऊरुभ्याम् अष्ठीवद्भ्याम् जानुभ्याम्। 'आसन्दीवदष्ठीवत्' ( पा ८,२,१२ ) इत्यादिना अस्थिशब्दस्य मतुपि अष्ठीभावो निपातितः। पार्ष्णिभ्याम् पादयोरपरभागाभ्यां प्रपदाभ्याम् पादाग्राभ्यां यक्ष्मम्। वि वृहामीति सर्वत्र संबन्धः। तथा भसद्यम् भसत् कटिप्रदेशः तत्र भवं यक्ष्मम् रोगं श्रोणिभ्याम् कट्योरधरभागाभ्यां वि

१. हृदयादधि ऋ १०,१६३,३. २. जङ्घाभ्याम् आपमं १,१७,१. ३. भसद्यं ३ D, R भसद्यं B, B[h], S[m]. ४. भासदाद् ऋ १०,१६३,४ वैप १, २३२६ O अपि द्र. ५. ध्वंससो आपमं. ६. वृहामसि पै ४,७,६. ७. उरु P, P[2]. ८. ष्ठीभावो S', Kd.

वृहामि। एवं ते त्वदीयं भासदम् गुह्यप्रदेशभवं रोगं भंससः भासमानाद् गुह्यस्थानाद् वि वृहामि।

अस्थिभ्यस्ते मज्जभ्यः[2] स्नावभ्यो धमनिभ्यः।
यक्ष्मं पाणिभ्यामङ्गुलिभ्यो[3] नखेभ्यो वि वृहामि[4] ते ॥ ६ ॥

अस्थिऽभ्यः। ते। मज्जऽभ्यः। स्नावऽभ्यः। धमनिऽभ्यः।
यक्ष्मम्। पाणिऽभ्याम्। अङ्गुलिऽभ्यः। नखेभ्यः। वि। वृहामि। ते ॥ ६ ॥

अस्थिमज्जशब्दौ सर्वधातूपलक्षकौ। सूक्ष्माः सिराः स्नावशब्देन उच्यन्ते। धमनिशब्देन स्थूलाः। शिष्टं निगदसिद्धम्।

अङ्गेअङ्गे लोम्निलोम्नि[6] यस्ते[7] पर्वणिपर्वणि।
यक्ष्मं त्वचस्यं ते वयं कश्यपस्य वीबर्हेण[8] विष्वञ्चं वि वृहामसि ॥ ७ ॥

अङ्गेऽअङ्गे। लोम्निऽलोम्नि। यः। ते। पर्वणिऽपर्वणि।
यक्ष्मम्। त्वचस्यम्। ते। वयम्। कश्यपस्य। विऽबर्हेण। विष्वञ्चम्। वि। वृहामसि ॥ ७ ॥

इत्थं प्रसिद्धावयवेभ्यो रोगस्यापनोदनं प्रतिपाद्य अप्रसिद्धावयवेभ्योपि अपनोदनं प्रतिपाद्यते। हे रुग्ण ते तव अङ्गेअङ्गे अनुक्तेषु सर्वेष्ववयवेषु लोम्निलोम्नि सर्वेषु रोमकूपेषु पर्वणिपर्वणि सर्वेषु संधिषु यो यक्ष्मो जातः। 'नित्यवीप्सयोः' (पा ८,१,४) इति सर्वत्र द्विर्वचनम्। तं यक्ष्मं वि वृहामसीत्युत्तरत्र संबन्धः। तथा ते तव त्वचस्यम् त्वचि भवं यक्ष्मम्। त्वच संवरणे इत्यस्माद् असुन्। पूर्ववद् यत्। 'यचि भम्' (पा १,४,१८) इति भत्वेन पदत्वाभावाद् रुत्वाभावः। वयं विवृहामः। सूक्तार्थम् उपसंहरति-विष्वञ्चम् चक्षुरादिसर्वावयवव्याप्तं रोगजातं कश्यपस्य महर्षेर्विबर्हेण[9] विवृहत्यनेनेति विबर्हं सूक्तम्। तेन वयं वि वृहामसि विवृहामः। मन्त्रद्रष्टुर्महर्षेः संकीर्तनेन इदानीं प्रयुज्यमानस्यापि मन्त्रस्य अमोघवीर्यत्वं सूचितं भवति।

इति षष्ठेऽनुवाके द्वितीयं सूक्तम्।

'य ईशे पशुपतिः' इति सूक्तेन वशाशमनकर्मणि आज्यं जुहुयात्। तद् उक्तं सूत्रे—" 'य ईशे पशुपतिः पशूनाम्' इति हुत्वा वशाम् अनक्ति" (कौसू ४४,७) इति।

तथा सर्वलोकाधिपत्यकामः अनेन सूक्तेन इन्द्राग्न्योर्यागम् उपस्थानं वा कुर्यात्।

१. भससो S', Kd. २. मज्जभ्य A,B$^{h}$,D,K,S$^{m}$; मांसेभ्यः पै ४,७,५. ३. पाण्योर् पै ४,७,४. ४. वृहामसि पै. ५. अङ्गादङ्गाल् ऋ १,१६३,६ आप म १,१७. ६. लोम्नोलोम्नो ऋ. आपमं. ७. जातं ऋ. आपमं, बद्धं पै ४,७,७. ८. विबर्हेण S, K, P$^{3}$, M. ९. वैतु. मंपा. द.

तथैव अनेन सूक्तेन इष्टम् अन्नम् अभिमन्त्र्य ब्राह्मणेभ्यो दद्यात् । सूत्रितं हि—"'य ईशे' (२,३४), 'ये भक्षयन्तः' (२,३५) इति इन्द्राग्नी लोककामः । अन्नं ददाति" (कौसू ५९,२१;२२) इति ।

तथैव अनेन पशुयागे संज्ञपनार्थं यूपात् प्रमुच्यमानं पशुम् अनुमन्त्रयेत । उक्तं वैताने—"अथ पशुर्वैष्णव पूर्णहोमम् 'उरु विष्णो'" इति प्रक्रम्य "'य ईशे' इति प्रमुच्यमानम् अनुमन्त्रयते" (वैताश्रौ १०,१६) इति ।

अत्र 'प्रजानन्तः' (अ २,३४,५) इत्यनया वशाख्यपशोः संज्ञपनं कुर्यात् । अत्र सूत्रम्—"अथ प्राणाम् आस्थापयति 'प्रजानन्तः' इति" (कौसू ४४,१५) इति ।

य[1] ईशे पशुपतिः पशूनां चतुष्पदामुत[3] यो[4] द्विपदाम्[5] ।
निष्क्रीतः स[7] यज्ञियं भागमेतु[6] रायस्पोषा यजमानं सचन्ताम् ॥ १ ॥

यः । ईशे । पशुऽपतिः । पशूनाम् । चतुःऽपदाम् । उत । यः । द्विऽपदाम् ।
निःऽक्रीतः । सः । यज्ञियम् । भागम् । एतु । रायः । पोषाः । यजमानम् । सचन्ताम् ॥ १ ॥

यः पशुपतिः पशूनां पालयिता रुद्रः चतुष्पदाम् गवादीनां पशूनाम् ईशे ईष्टे नियन्ता भवति उत अपि च यः पशुपतिर्द्विपदाम् मनुष्यादीनां च ईष्टे । ईश ऐश्वर्ये । 'लोपस्त आत्मनेपदेषु' (पा ७,१,४१) इति तलोपः । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'अधीगर्थदयेशां कर्मणि' (पा २,३,५२) इति कर्मणि षष्ठी । चतुष्पदां द्विपदाम् इत्युभयत्र 'संख्यासुपूर्वस्य' (पा ५,४,१४०) इति पादशब्दस्य अन्त्यलोपः समासान्तः । 'द्वित्रिभ्यां पाद्दन्°' (पा ६,२,१९७) इति द्विपदाम् इत्यस्य उत्तरपदान्तोदात्तत्वम् । तस्मात् पशुपतेः सकाशाद् निष्क्रीतः सः निष्क्रय्य स्वाधीनीकृतोऽयं वशारूपः पशुः यज्ञियम् यज्ञार्हं भागम् एतु गच्छतु यज्ञभागतां प्रतिपद्यताम् । 'यज्ञर्त्विग्भ्यां घखञौ' (पा ५,१,७१) इति घः । किञ्च रायः धनस्य पशुहिरण्यादिलक्षणस्य पोषाः समृद्धयः यजमानं सचन्ताम् समवयन्तु । 'ऊडिदम्°' (पा ६,१,१७१) इति रायः षष्ठ्या उदात्तत्वम् । 'षष्ठ्याः पतिपुत्र°' (पा ८,३,५३) इति सत्वम् ।

प्रमुञ्चन्तो[11] भुवनस्य रेतो[12] गातुं धत्त यजमानाय देवाः ।
उपाकृतं शशमानं यदस्थात् प्रियं[13] देवानामप्येतु[14] पाथः ॥ २ ॥

प्रऽमुञ्चन्तः । भुवनस्य । रेतः । गातुम् । धत्त । यजमानाय । देवाः ।
उपऽआकृतम् । शशमानम् । यत् । अस्थात् । प्रियम् । देवानाम् । अपि । एतु । पाथः ॥ २ ॥

१. तु. साभू. (७,२६); वैतु. S', Kd. विष्णोरिति. २. येषाम् तै ३,१,४,१ पै ३,३२,२. ३. चतुष्पाद उत काठ ३०,८. ४. च तै. ५. द्विपादः काठ. पै., द्विपदः पै. [मूको]. ६. निष्क्रीतासु काठ. पै. ७. ऽय तै, ते काठ. पै. ८. यन्तु काठ. पै., यन्ति पै. [मूको.]. ९. यजमानस्य तै. १०. सन्तु तै., विशन्तु काठ. ११. प्रमुञ्चमाना तै ३,१,४,३ काठ. १२. गोपा पै ३,३२,३. १३. जीवं तै. काठ. १४. °च्चैति पै.

प्रमुञ्चन्तः इमं हन्यमानं पशुं त्यक्त्वा गच्छन्तो हे देवाः चक्षुराद्याः प्राणा यूयम्। कीदृशं पशुम्। भुवनस्य भूतजातस्य रेतः[1] कारणं यागद्वारेण उत्पत्तिहेतुम् यजमानाय अस्मै गातुम् गतिं धत्त पुण्यलोकान् गन्तुं मार्गं कुरुत। किञ्च उपाकृतम् उपाकरणेन संस्कृतं शशमानम् शाम्यन्तम्। संज्ञप्यमानम् इत्यर्थः। शाम्यतेस्ताच्छीलिकश्चानश्। छान्दसः शपः श्लुः। यद्वा शशमानम् अस्मात् लोकाद् उत्प्लुत्य गच्छन्तम्। शश प्लुतगतौ। उदात्तेत्। पूर्ववत् चानश्। अत एव लसार्वधातुकानुदात्तत्वाभावः। एतादृशं पशुम्। व्याप्येति क्रियाध्याहारः। यद् मांसलक्षणं पाथः अन्नम् अस्थान् तिष्ठति तद् देवानां प्रियं पाथः मांसलक्षणम् अन्नम् अयम् उपाकृतः पशुः अप्येतु अपिगच्छतु। देवोपभोग्यान्नभावं प्रतिपद्यताम् इत्यर्थः। 'विश्वेषां देवानां प्रियं पाथो अपीहि' (तै ३,१,३,१) इत्यादौ यथा अनभिषुतस्य सोमस्य कर्तृत्वम् पाथसः कर्मत्वम् एवम् अत्रापि पशोरन्नकर्तृत्वम्। अत एव याज्ञिका द्विबहुपशुकेषु कर्मसु अपीताम् अपियन्तु इति ऊहं कुर्वन्ति। यद्वा देवा इति अग्न्यादय एव सबोध्याः। तथा हि — हे देवा अग्न्यादयः यूयम् भुवनस्य कृत्स्नस्य भूतजातस्य रेतः उत्पत्तिकारणं पुष्टिरूपम् उदकं प्रमुञ्चन्तः विसृजन्तः। अन्यत् समानम्।

ये बध्यमा॑नमनु॒ [2]दीध्या॑ना [3]अ॒न्वैक्ष॑न्त॒ मन॑सा॒ चक्षु॑षा च।
अ॒ग्निष्टानग्रे॒[4] प्र मु॑मोक्तु दे॒वो [5]वि॒श्वक॑र्मा प्र॒जया॑[6] संर॒राणः[7] ॥ ३ ॥

ये। ब॒ध्यमा॑नम्। अनु॑। दीध्या॑नाः। अ॒नु॒ऽऐक्ष॑न्त। मन॑सा। चक्षु॑षा। च।
अ॒ग्निः। तान्। अग्रे॑। प्र। मु॒मो॒क्तु॒। दे॒वः। वि॒श्वऽक॑र्मा। प्र॒ऽजया॑। स॒म्ऽर॒रा॒णः ॥ ३ ॥

ये सयूथ्याः पशवः [8]बध्यमानम् इमं पशुम् अनुदीध्यानाः[8] अनुदीप्यमाना अनुतप्ताः सन्तो मनसा चक्षुषा च स्नेहवशाद् अन्वैक्षन्त अनुपश्यन्ति न जहति स्नेहात् कारुण्याद् वा। ईक्ष दर्शने। छान्दसो लङ्। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः। तान् सर्वान् सयूथ्यान् पशून् अग्निर्देवः अग्रे प्रथमं प्र मुमोक्तु स्नेहपाशं प्रमोचयतु। विश्वकर्मा विश्वं कर्म कर्तव्यं यस्य सः प्रजया स्वसृष्ट्या संरराणः सह शब्दायमानः। दानार्थम् ऐकमत्यं प्राप्त इत्यर्थः। सोपि प्र मुमोक्तु। मुञ्चतेश्छान्दसः शपः श्लुः। रै शब्दे इत्यस्मात् लिटः कानच्। 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' (पा ८,३,१०३) इति अग्निष्टान् इत्यत्र षत्वम्।

ये [9]ग्रा॒म्याः प॒शवो॑ वि॒श्वरू॑पा॒ विरू॑पाः॒ सन्तो॑ बहु॒धैक॑रूपाः।
[10]वा॒युष्टानग्रे॒ प्र मु॑मोक्तु दे॒वः प्र॒जाप॑तिः प्र॒जया॑[11] संर॒राणः[12] ॥ ४ ॥

१. °रेतसः S', Kd. २. बध्यमाना तै ३,१,४,२ काठ ३०,८ मै १,२,१५. ३. अभ्यैक्षन्त तै. ४. °स्ताँ अग्रे तै., ष्टाँ अग्रे काठ., °ष्टं अग्रे मै. ५. प्रजापतिः तै. मै. काठ. ६. प्रजाभिः पै ३,३२,४. ७ संविदानः तै. पै. काठ. ८. वैतु. मंपा. द्र. ९. आरण्याः तै ३,१,४,३ तैब्रा ३,२,३२ काठ. पै ३,३२,६. १०. वायुस्ताँ अग्रे तै. तैब्रा., वायुष्टाँ अग्रे काठ. ११. प्रजाभिः पै. १२ संविदानः तै. काठ. पै.

ये । ग्राम्याः । पशवः । विश्वऽरूपाः । विऽरूपाः । सन्तः । बहुऽधा । एकऽरूपाः ।
वायुः । तान् । अग्रे । प्र । मुमोक्तु । देवः । प्रजाऽपतिः । प्रऽजया । सम्ऽरराणः ॥ ४ ॥

ग्राम्याः ग्रामे भवा गवाद्या ये पशवो विश्वरूपाः सर्वरूपान्विता विरूपाः विविधरूपा एवं बहुधा सन्तोऽपि एकरूपाः संज्ञप्यमानं पशुं प्रति एकस्वभावाः सन्ति तान् सर्वान् वायुः *[देवः] अग्रे प्र मुमोक्तु प्रथमं प्रमोचयतु । प्रजापतिश्च स्वकीयया प्रजया *[संरराणः]ऐकमत्यं गच्छन् पश्चात् प्रमोचयतु ।

प्रजानन्तः प्रति गृह्णन्तु[1] पूर्वे[2] प्राणमङ्गेभ्यः [3]पर्याचरन्तम् ।
दिवं[4] गच्छ प्रति तिष्ठा शरीरैः [5]स्वर्गं याहि पथिभिर्देवयानैः[6] ॥ ५ ॥

प्रऽजानन्तः । प्रति । गृह्णन्तु । पूर्वे । प्राणम् । अङ्गेभ्यः । परि । आऽचरन्तम् ।
दिवम् । गच्छ । प्रति । तिष्ठ । शरीरैः । स्वःऽगम् । याहि । पथिऽभिः । देवऽयानैः ॥५॥

प्रजानन्तः इह यागे उपयुक्तस्य तव माहात्म्यं प्रकर्षेण जानन्तः पूर्वे पूर्वमेवान्तरिक्षे स्थिता देवाः तव अङ्गेभ्यः शरीरावयवेभ्यः पर्याचरन्तम् परितः सर्वतो निष्क्रम्य आभिमुख्येन आगच्छन्तं तव प्राणम् तत्सहितम् आत्मानं प्रति गृह्णन्तु । ततस्त्वं देवैः परिगृहीतो दिवम् अन्तरिक्षं गच्छ । तत्र च शरीरैः दिव्यभोगार्हैः प्रति तिष्ठ प्रतिष्ठितो भव । 'द्व्यचोऽतस्तिङः' (पा ६,३,१३५) इति दीर्घत्वम् । ततो देवयानैः देवा यैर्यान्ति तैः पथिभिः मार्गैः स्वर्गम् अभिलष्यमाणसुखोपभोगस्थानं याहि गच्छ ।

इति द्वितीयकाण्डे षष्ठेऽनुवाके द्वितीयं सूक्तम् ।

'ये भक्षयन्तः' इति सूक्तेन बहुजनमध्ये भुञ्जानो दृष्टिदोषनिवारणाय [7]अन्नम् [7]अभिमन्त्र्य भुञ्जीत । अत्र सूत्रम्—" 'ये भक्षयन्तः' इति परिषद्येकभक्तम् अन्वीक्षमाणो भुङ्क्ते" (कौसू ३८,२२) इति ।

तथा सर्वलोकाधिपत्यकामः इन्द्राग्न्योर्यागम् उपस्थानम् अन्नदानं वा अनेन सूक्तेन कुर्यात् । सूत्रं तु पूर्वसूक्त एवोदाहृतम् ।

तथा सर्वेषु सवयज्ञेषु अनेन सूक्तेन पुरस्ताद्धोमान् जुहुयात् । सूत्रितं हि— " 'य ईशे' (अ २,३४), 'ये भक्षयन्तः' (अ २,३५)' इति प्रक्रम्य "प्रथमम् । पशूपाकरण[8] उत्तरेण[8] । सवपुरस्ताद्धोमान्[9] " (कौसू ५९,२१;२४) इति ।

साकमेधाख्यपर्वणि 'ये भक्षयन्तः' इत्यनेन वैश्वकर्मणयागानुमन्त्रणं कुर्यात् । उक्तं वैताने—'कार्तिक्यां साकमेधाः' इति प्रक्रम्य "वैश्वकर्मणं 'ये भक्षयन्तः' इति" (वैताश्रौ ९,७) इति ।

१. गृह्णन्तु तै ३,१,४,१ काठ ३०,८. २. देवाः पै ३,३२,७. ३. अभिनिश्चरन्तम् काठ., वैप १,१६३८ j,l अपि द्र. ४. द्यां पै., ओषधीषु तै. काठ. मै २,५,१०. ५. सुवर्गं तै., द्युलो मै. काठ. ६. शिवेभिः पै. ७. अन्नमभिमभि° S', Kd. ८. °रणमुत्तमम् Bl. ९. °होमाः Bl.

तथा अग्निचयने वैश्वकर्मणहोमानुमन्त्रणे अस्य विनियोगः। उक्तं वैताने—"'ये भक्षयन्तः' (अ २,३५), 'एतं सधस्थाः' (अ ६,१२३) इति द्वे 'येना सहस्रम्' (अ ९,५,१७) इति वैश्वकर्मणहोमान्" (वैताश्रौ २९,२३) इति।

'यज्ञस्य चक्षुः' इत्येषा दर्शपूर्णमासयोः पुरस्ताद्धोमे विनियुक्ता। "'अमावग्निः' (अ ४,३९,९), 'इदा पूतम्' (अ ४,३९,१०), 'पुरस्ताद् युक्तः' (अ ५,२९,१), 'यज्ञस्य चक्षुः' (अ २,३५,५) इति जुहोति" (कौसू ३,१६) इत्यादिसूत्रात्।

ये भक्षयन्तो न वसून्यानृधुर्यानग्नयो अन्वतप्यन्त धिष्ण्याः।
या[1] तेषामवया दुरिष्टिः[4] स्विष्टिं[5] नस्तां[6] कृणवद्[7] विश्वकर्मा ॥ १ ॥

ये। भक्षयन्तः। न। वसूनि। आनृधुः। यान्। अग्नयः। अनुऽअतप्यन्त। धिष्ण्याः।
या। तेषाम्। [8]अवऽयाः। दुःऽइष्टिः। सुऽइष्टिम्। नः। ताम्[9]। कृणवत्। विश्वऽकर्मा ॥ १ ॥

ये वयं भक्षयन्तो न भक्षयन्त इव अदन्त इव वसूनि धनानि आनृधुः। पुरुषव्यत्ययः। वर्धितवन्तः स्मः। यद्वा न भक्षयन्तः नादन्तः अपितु पृथिव्यां धनानि निक्षिप्तवन्तः। यद्वा वसूनि भक्षयन्तः अयागार्थेन व्ययेन[10] नाशयन्तः नानृधुः समृद्धा नाभूम। ऋधु वृद्धौ। अस्मात् लिटि द्विर्वचने 'अत आदेः' (पा ७,४,७०) इत्यभ्यासदीर्घत्वे 'तस्मान्नुड् द्विहलः' (पा ७,४,७१) इत्यत्र ऋकारैकदेशस्य रेफस्य हल्ग्रहणेन ग्रहणाद् द्विहल्त्वेन नुडागमः। धिष्ण्याः धिष्ण्येषु स्थानेषु स्थिता अग्नयः आहवनीयाद्याः यान् उद्दिश्य अन्वतप्यन्त अस्मद्विषयम् अनुतापं धृतवन्तः। यागादौ दक्षिणाद्यप्रदानेन यागवैकल्यात् तेषां धनवतां जन्म व्यर्थम् अहो शोच्या एत इति। एवम् अयष्टारो दुर्यष्टारश्च। तेषाम् द्विविधानाम् अस्माकं या अवयाः अवयजनं यागानुष्ठानं दुरिष्टिः दुर्यागश्चास्ति ताम् [11]अनिष्टिदुरिष्टिदोषपरिहारार्थं कृतां स्विष्टिम् शोभनाम् इष्टिं नः अस्माकं कृणवत् करोतु विश्वकर्मा विश्वकृद् देवः। [12]अनिष्टिदुरिष्टिनिवारणसामर्थ्यं शोभनत्वम् इष्टेः। अवया इति। 'अवे यजः' (पा ३,२,७२) इति ण्विनि कृते 'अवयाः श्वेतवाः०' (पा ८,२,६७) इति निपातितः। दुरिष्टिरिति। प्रत्ययान्तविशेषणत्वे दुरो गतित्वाभावाद् अव्ययपूर्वपदप्रकृतिस्वरत्वम्। धात्वर्थविशेषणत्वे गतित्वात् 'तादौ च निति०' (पा ६,२,५०) इति प्रकृतिस्वरत्वम्। स्विष्टिशब्देप्येवम्। सोः प्रकृतिस्वरत्वे 'उदात्तस्वरितयोर्यणः०' (पा ८,२,४) इति संहितायां ततः पर इकारः स्वर्यते।

१. सूक्तं ये S', Kd. २. °वृधु P², M, °नृहु° तै ३,२,८,३; °नधु° मै २,३,८. ३. इयं तै. ४ दुरिष्टि Bh,K,Sm; दुरिष्टचै तै., दुरिष्टा पै १,८८,३. ५. स्विष्टं पै. ६. तद् पै.; तान् RW., शंपा. Wh. मनु सर्वे मूको. च ७. कृणोतु पै. तै. मै. ८. अवऽया P,P²,J. ९. तान् P, P², J. १०. व्यत्ययेन S', Kd. ११. अनिष्टिदुरिष्टिदों° S', Kd. १२. अनिष्टिदु° S', Kd.

[1]यज्ञपतिमृषय एनसाहुर्निर्भक्तं[2] प्रजा[3] अनुतप्यमानम्[4] ।
[5]मथव्यान्त्स्तोकानप[6] यान्[7] रराध[8] सं [8]नष्टेभिः [9]सृजतु विश्वकर्मा ॥ २ ॥

यज्ञऽपतिम् । ऋषयः । एनसा । आहुः । निःऽभक्तम् । प्रऽजाः । अनुऽतप्यमानम् ।
[10]मथव्यान् । स्तोकान् । अप । यान् । रराध । सम् । नः । तेभिः । सृजतु । विश्वऽकर्मा ॥ २ ॥

ऋषयः अतीन्द्रियार्थदर्शिनः यज्ञपतिम् यजमानम् एनसा । इत्थंभावे तृतीया । युक्तम् एनस्विनम् आहुः । कथंभूतम् । निर्भक्तम् निर्भागं दौर्गत्ययुक्तम् प्रजाः अस्य यागवैकल्यनिमित्तेन एनसा परितप्यमानाः प्रजा अनु[11] स्वयं तप्यमानम् एवंभूतं यज्ञपतिम् एनसा युक्तम् आहुः । किञ्च मथव्यान्[11] । मधुरसः सोमो मधुः । तद्विकारभूतान्[12] यान् स्तोकान्[12] बिन्दून् अप रराध अपराद्धवान् । अन्तरितान् कृतवान् इत्यर्थः । तेभिस्तैः स्तोकैः नः अस्मदीयं यज्ञपतिं सं सृजतु संयोजयतु विश्वकर्मा विश्वं कर्म करणीयं यस्य स प्रजापतिः । यज्ञपतिम् । 'पत्यावैश्वर्ये' ( पा ६,२,१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । मधव्यान् इति । 'मये च' । 'मधोः' ( पा ४,४,१३८;१३९ ) इति विकारे यत्प्रत्ययः ।

[13]अदान्यान्त्सोमपान्[14] मन्यमानो यज्ञस्य[15] विद्वान्त्समये[16] न धीरः ।
यदेनश्चकृवान् बद्ध एष[17] तं विश्वकर्मन् प्र मुञ्चा[18] स्वस्तये[18] ॥ ३ ॥

अदान्यान् । सोमऽपान् । मन्यमानः । यज्ञस्य । विद्वान् । सम्ऽअये । न । धीरः ।
यत् । एनः । चकृऽवान् । बद्धः । एषः । तम् । विश्वऽकर्मन् । प्र । मुञ्च । स्वस्तये ॥ ३ ॥

यज्ञस्य वैदिकस्य क्रियाकलापस्य । 'क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२ ) इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । यज्ञम् विद्वान् जानन् । यद्वा यज्ञस्य स्वरूपं विद्वान् अहमेव विद्वानिति विद्यामदेन मोहितः सोमपान् । 'गापोष्टक्' ( पा ३,२,८ ) इति टक् । स्वव्यतिरिक्तान् कृतसोमयागान् पण्डितानपि अदान्यान् अज्ञत्वारोपेण दानानर्हान् मन्यमानः । 'छन्दसि च' ( पा ५,१,६७ ) इति यः । तत्र दृष्टान्तः — समये न धीरः समयन्ति संगच्छन्ते योद्धारोऽत्रेति समयः संग्रामः तत्र धीर इव । स यथा स्वभुजबलाभिमानेन प्रतिभटान् तिरस्कार्यान् मनुते एवम् अहंकारेण बद्ध एषः यद् एनश्चकृवान् तिरस्कारलक्षणं यत् पापं कृतवान् । करोतेर्लिटः क्वसुः । हे विश्वकर्मन् देव तम् एनोयुक्तं स्वस्तये अविनाशाय प्र मुञ्च तस्मात् पापात् प्रमोचय ।

१. यजमान° मे २,३,८. २. विहाय मै., निर्भक्ता. तै ३,२,८,२ पै १,८८,१. ३. प्रजाम् मै., भागाद् पै. ४. अनुतप्यमाना: पे. तै. मै. ५ मधव्यान् S,K,V, पै.; मधव्यौ तै. मै. ६. स्तोका अप तै. मै. ७. तौ रराध तै. मै. ८. नस्तेभिः RW., मा तेभिः पै., नस्ताभ्यां तै. मै. ९. सृजद् पै. १०. मध° K. ११. तु. टि ५; वेतु. मंपा. द्र. १२. °कारभूतां स्तोकानवधान् S', Kd. १३. अनन्यान् तै. ३,२,८,२ पै १,८८,२; अयज्ञियान् मै. २,३,८. १४. यज्ञियान् मै. १५. प्राणस्य तै. मै. १६. संमरे तै. मै. १७. एवस् B,Bp.; एवां तै. १८. मुमुग्ध्येनम् पै.

घोरा[1] ऋषयो नमो अस्त्वेभ्यश्चक्षुर्यदेषां मनसश्च [2]सत्यम् ।
[3]बृहस्पतये [4]महिष [5]द्युमन्नमो विश्वकर्मन्[6] नमस्ते[7] पाह्य१स्मान्[8] ॥ ४ ॥

घोराः । ऋषयः । नमः । अस्तु । एभ्यः । चक्षुः । यत् । एषाम् । मनसः । च । सत्यम् ।
बृहस्पतये । महिष । द्युऽमत् । नमः । विश्वऽकर्मन् । नमः । ते । पाहि[9] । अस्मान् ॥ ४ ॥

ये घोराः क्रूरा ऋषयः प्राणाश्चक्षुराद्याः । श्रूयते हि—'के ते ऋषय इति । प्राणा वा ऋषयः' ( बृउ २,२,३ ) इति । एभ्यः प्राणेभ्यो नमोऽस्तु । एषां प्राणानां मनसः अन्तःकरणस्य च मध्ये यत् सत्यम् यथार्थदर्शि चक्षुः तस्मा अपि नमोऽस्तु । अत्र ऋषिशब्देन सामान्येन उपात्तस्यापि चक्षुषः पृथग् उपदेशः प्राधान्यद्योतनाय । अत एव दृष्टिदोषनिवारणकर्मणि अस्य विनियोग उपपन्नः । तथा बृहस्पतये बृहतां देवानां पत्ये देवाय महि[10] महत् प्रभूतं सत्[10] शोभनं द्युमत् दीप्तिमत् । अनेन विशेषणत्रयेण करणत्रयस्यापि तदेकतानत्वम् उक्तम् । उक्तलक्षणं नमोऽस्तु । तथा हे विश्वकर्मन् ते तुभ्यं नमोऽस्तु । क्रूरचक्षुर्जन्यदोषादिपरिहारेण अस्मान् पाहि पालय । यद्वा नम इत्यन्ननाम । भुज्यमानम् अन्नम् इन्द्रियाधिष्ठातृदेवेभ्योऽस्तु । बृहताम् उक्तानाम् इन्द्रियाणां पतिः पालको नियन्ता[11] अन्तरात्मा[11] बृहस्पतिः । तस्मै महत्त्वाद्युक्तगुणविशिष्टं नमोऽस्तु । तथा हे विश्वकर्मन् विश्वं कर्म करणीयं यस्य स तादृग्रूप परमात्मन् ते नमोऽस्तु । अनेन बहुजनदृष्ट्युपहतस्यापि अन्नस्य उक्तप्रकारेण देवतार्थत्वाद् भोक्तुस्तद्भोजननिमित्तदृष्टिदोषादिकं न भवतीत्यर्थः ।

यज्ञस्य चक्षुः प्रभृतिर्मुखं च वाचा श्रोत्रेण मनसा जुहोमि ।
इमं यज्ञं विततं विश्वकर्मणा[12] देवा यन्तु सुमनस्यमानाः ॥ ५ ॥

यज्ञस्य । चक्षुः । प्रऽभृतिः । मुखम् । च । वाचा । श्रोत्रेण । मनसा । जुहोमि ।
इमम् । यज्ञम् । विऽततम् । विश्वऽकर्मणा । आ । देवाः । यन्तु । सुऽमनस्यमानाः ॥ ५ ॥

यज्ञस्य यागस्य चक्षुः चक्षुरिन्द्रियवत् प्रदर्शकः । तदधीनत्वाद् यज्ञसिद्धेः[13] । यद्वा यज्ञाधिदेवतायाश्चक्षुरिन्द्रियम् अयम् अग्निः । तथा च मन्त्रवर्णः—'अग्निना यज्ञश्चक्षुष्मान्' ( आपश्रौ ४,९,११ ) इति । तथा प्रभृतिः यज्ञस्य आदिभूतः । अग्निस्थापनपूर्वकत्वात् सर्वयज्ञानाम् । मुखं च आस्यमपि अग्निरेव । तथा च दाशतय्याम् आम्नायते—'त्वामग्न आदित्यास आस्यं त्वां जिह्वां शुचयश्चक्रिरे कवे' ( ऋ २,१,१३ ) इति । यद्वा

१. भीमा पै १,८८,४ २. चक्षुष: तै ३,२,८,२ ३. सन्धौ तै., संहक् पै. ४. बृहस्पते पै. ५. महि षद् तै.; महिषाय पै.; वैप १, २४०० g द्र. ६. दिवे पं. ७. °कर्मणे स उ तै. ८. पाह्य ३ स्मान् Sm., पात्वस्मान् तै. ९. स्वरः शोध्यः (तु. मंपा.). १०. तु. टि ५; वैतु. मंपा. द्र. ११. नियन्तरात्मा S', Kd. १२. °कर्मणा D,K,Bb,O. १३. °सिद्धिः S', Kd.

मुखम् मुखमिव मुख्यः सर्वदेवतानां प्रयाजादिषु प्रथमयष्टव्यत्वात् । 'अग्निर्मुखं प्रथमो देवतानाम्' (ऐब्रा १,४) इत्यादिश्रुतेः । यद्वा आज्यम् उच्यते यज्ञस्य चक्षुः। चक्षुःसंस्तुताज्यभागनिष्पादकत्वात् । प्रभृतिः आदिभूतं प्रथमं हूयमानत्वात् । मुखं च मुखवत् प्रधानभूतं मुख्यद्रव्यम् । 'तं देवा अब्रुवन् । एष वाव यज्ञो यद् आज्यमप्येव नोऽस्त्वास्तु' (तै २,६,३,१) इत्यादिश्रुतेः । एवंलक्षणम् आज्यं वाचा मन्त्रेण श्रोत्रेण श्रोत्रवता । मत्वर्थीयः अकारः । उपलक्षणम् एतत् सर्वेन्द्रियाणाम् । अनन्यव्यापारश्रोत्रादियुक्तेन मनसा अन्तःकरणेन यष्टव्यदेवतां ध्यायन् जुहोमि अग्नौ प्रक्षिपामि । 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद् वषट्करिष्यन्' (ऐब्रा ३,८) इति श्रुतेः । अग्निपक्षे उक्तगुण-विशिष्टम् अग्निम् उद्दिश्य जुहोमि । आज्यम् इति सामर्थ्यात् लभ्यते । ततः विश्वकर्मणा देवेन विततम् विस्तृतम् उत्पादितम् इमम् अनुष्ठीयमानं यज्ञं देवा इन्द्राद्या यष्टव्यदेवताः सुमनस्यमानाः सुमनस इव आचरन्तः अनुग्रहबुद्ध्युपेताः सन्तः आ यन्तु आगच्छन्तु । सुमनःशब्दात् 'कर्तुः क्यङ् सलोपश्च' (पा ३,१,११) इति क्यङ् । तत्र वाग्रहणस्य अनुवृत्तस्य सलोपेन अभिसंबन्धात् तस्य च व्यवस्थितविभाषात्वाद् अत्र सलोपाभावः ।

इति षष्ठेऽनुवाके चतुर्थं सूक्तम् ।

'आ नो अग्ने' इति सूक्तेन पतिलाभकर्मणि 'आगमकृशरं संपात्य कुमारीम् आशयेत् ।

तथा तस्मिन्नेव कर्मणि तस्या एव अलंकारगुग्गुल्वौक्षाणां संपातितानां क्रमेण बन्धनं धूपनं प्रलेपनं च कुर्यात् । [2]औक्षशब्दः अग्रे व्याख्यास्यते ।

तथैव अनेन सूक्तेन रात्रौ व्रीहीन् हुत्वा कुमारीं दक्षिणेन प्रक्रामयेत् ।

एवम् अनेनैव सूक्तेन संपातवतीं नावं कन्यकाम् आरोप्य 'भगस्य नावम्' (अ २,३६,५) इति पञ्चम्यर्चा ताम् उत्तारयेत् ।

तथा पतिलाभविज्ञानकर्मणि सप्तदामतन्त्र्यां संपातवत्यां सप्त वत्सान् बन्धयित्वा कुमार्या मोचयेत् । सा यदि प्रदक्षिणं मुञ्चेत् तर्हि पतिलाभं जानीयात् ।

तथा अनेनैव सूक्तेन अहतवस्त्रेण वेष्टितम् ऋषभं संपात्य विसर्जयेत् ।

अत्र "पतिवेदनानि[3] । 'आ[3] नो अग्ने' इत्यागमकृशरम् आशयति । मृगाखराद् वेद्या मन्त्रोक्तानि संपातवन्ति" (कौसू ३४,१२-१४) इत्यादि सूत्रं द्रष्टव्यम् ।

तथा अनेनैव सूक्तेन विवाहकर्मणि आगमकृशरं[1] संपात्य अभिमन्त्र्य कन्यकां प्राशयेत् । तद् उक्तं सूत्रकृता — 'अथ विवाहः' इति प्रक्रम्य " 'पूर्वापरम्' (अ ७,८६) इत्युपदधीत । 'पतिवेदनं' (अ २,३६) च " (कौसू ७५,१-७) इति । अत्र पतिवेदनशब्देन

१. °कृसरं S', Kd. २. अक्ष° S', Kd. ३. (°वेदनान्या°>) °वेदनाया S', Kd
४. तु. Bl. दा.; वैतु. शंपा. °कृसरम्.

पतिलाभसाधनत्वाद् इदमेव सूक्तं विवक्षितम् ।

आ नो॑ अग्ने सुम॒तिं 'सं॑भ॒लो ग॑मेदि॒मां कु॒मारीं॑ स॒ह' नो॒ भगे॑न ।
जु॒ष्टा व॒रेषु॒ सम॑नेषु व॒ल्गुरो॒षं पत्या॒ सौभ॑गमस्त्व॒स्यै ॥ १ ॥

आ । नः॒ । अ॒ग्ने॒ । सु॒ऽम॒तिम् । स॒म्ऽभ॒लः । ग॒मे॒त् । इ॒माम् । कु॒मारीम् । स॒ह । नः॒ । भगे॑न ।
जु॒ष्टा । व॒रेषु॑ । सम॑नेषु । व॒ल्गुः । ओ॒षम् । पत्या॑ । सौभ॑गम् । अ॒स्तु॒ । अ॒स्यै ॥ १ ॥

हे अग्ने संभलः संभाषकः समादाता वा कन्यार्थी पुरुषः नः अस्माकं कन्यावतां सुमतिम् शोभनां बुद्धिम् आ गमेत् आगच्छतु अस्मद्बुद्ध्यनुसारेण सर्वलक्षणसंपूर्णः [2]अभिलषितो वरः प्राप्नोतु । यद्वा संभलो हिंसकः पूर्वम् अभिलाषविघाती कन्याम् अनिच्छन् पुरुषः सुमतिम् एतत्कामनायुक्तां कल्याणीं बुद्धिं प्राप्य नः अस्मान् आ गमेत् । कन्यां वरयितुम् इति शेषः । भल भल्ल परिभाषणहिंसादानेषु । अस्मात् संपूर्वात् पचाद्यच् । गमेदिति । 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ्प्रत्ययः । आगत्य च भगेन भाग्येन सह नः अस्मदीयाम् इमां कुमारीम् । आ गमेत् इत्यनुषङ्गः । कुमारशब्दाद् 'वयसि प्रथमे' (पा ४,१,२०) इति ङीप् । ततः समनेषु समानमनस्केषु । सलोपश्छान्दसः । यद्वा समानं मन्यमानेषु सहृदयेषु । मन्यतेः पचाद्यच् । वरेषु वरयितृषु कन्यावरणार्थम् आगतेषु वरपक्षीयेषु । उक्तं हि वरप्रेषणम् आपस्तम्बेन— 'सुहृदः समवेतान् मन्त्रवतो वरान् प्रहिणुयात्' (आपगृ ४,१) इति । तेषु जुष्टा प्रीता वरयितृपुरुषसंमता [3]सती वल्गुः रुचिरा[3] प्रीतिजननी स्यात् । 'जुष्टार्पिते च च्छन्दसि', 'नित्यं मन्त्रे' (पा ६,१,२०९;२१०) इति जुष्टशब्द आद्युदात्तः[4] । ऊषम्[4] ऊषति रुजति अपनुदति दुःखजातम् इति ऊषम् सुखकरम् । ऊष रुजायाम् इति धातोरच् । यद्वा वस निवासे इत्यस्माद् 'घञर्थे कविधानम्' (पावा ३,३,५८) इति करणे कप्रत्ययः । यजादित्वात् संप्रसारणे 'कृञादीनां के द्वे भवतः' (पावा ६,१,१२) इति द्विर्वचने सवर्णदीर्घे 'शासिवसिघसीनाञ्च' (पा ८,३,६०) इति षत्वे च रूपम् । पत्या सह निवाससाधनं सौभगम् सौभाग्यम् अस्यै अस्याः[5] कुमार्यै कुमार्याः अस्तु भवतु । षष्ठ्यर्थे चतुर्थी । सौभगशब्दस्य अञ्प्रत्ययः उत्तरपदवृद्ध्यभावश्च प्राग् उक्तः ।

सोम॑जुष्टं॒ ब्रह्म॑जुष्टमर्य॒म्णा संभृ॑तं॒ भग॑म् ।
धा॒तुर्दे॒वस्य॑ स॒त्येन॑ कृणोमि पति॒वेद॑नम् ॥ २ ॥

सोम॑ऽजुष्टम् । ब्रह्म॑ऽजुष्टम् । अ॒र्य॒म्णा । सम्ऽभृ॑तम् । भग॑म् ।
धा॒तुः । दे॒वस्य॑ । स॒त्येन॑ । कृ॒णो॒मि॒ । प॒ति॒ऽवेद॑नम् ॥ २ ॥

१. स्कन्दश्लोके इदमां कुमार्यां मा पै २,२१,१. २. अपलषितो S',Kd. ३. सतीववल्गुः उत् चिरा Kd., सतीववल्गुः ववृचिरा S'. ४. वैतु. मंपा. द्र. ५. अस्या S', Kd.

सोमजुष्टम् सोमदेवेन सेवितं ब्रह्मजुष्टम् ब्रह्मणा परिवृढेन गन्धर्वेण च जुष्टम्। अर्यम्णा । अत्र अर्यमशब्देन विवाहाग्निरुच्यते— 'अर्यमणं नु देवं कन्या अग्निम् अयक्षत' (आश्वगृ १,७,१३) इति मन्त्रवर्णात्। तेन च संभृतम् स्वीकृतं भगम् कन्यारूपं भागधेयं धातुः 'धाता गर्भं दधातु ते' (ऋ १०,१८४,१) इति प्रसिद्धस्य देवस्य सत्येन अनुज्ञारूपेण यथार्थवचनेन पतिवेदनम् देवताव्यतिरिक्तस्य मनुष्यरूपस्य पत्युर्लम्भकं कृणोमि करोमि। सोमादिदेवतात्रयोपभोगानन्तरं कन्याया मानुषपतिसंबन्धः श्रुत्यन्तरे समाम्नायते— 'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः। तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः' (ऋ १०,८५,४०) इति।

इ॒यम॑ग्ने॒ नारी॑[1] पतिं॑ विदेष्ट॒ सोमो॒ हि राजा॑ सु॒भगां॑ कृ॒णोति॑[2] ।
सुवा॑ना पु॒त्रान् महि॑षी भवाति॒[3] ग॒त्वा पतिं॑ सु॒भगा॒[4] वि रा॑जतु[5] ॥ ३ ॥

इ॒यम् । अ॒ग्ने॒ । नारी॑ । पति॑म् । वि॒दे॒ष्ट॒ । सोमः॑ । हि । राजा॑ । सु॒ऽभगा॑म् । कृ॒णोति॑ ।
सुवा॑ना । पु॒त्रान् । महि॑षी । भ॒वा॒ति॒ । ग॒त्वा । पति॑म् । सु॒ऽभगा॑ । वि । रा॒ज॒तु॒ ॥ ३ ॥

हे अग्ने इयम् अस्मदीया नारी कुमारी पतिं विदेष्ट विन्दतां लभताम्। विद्लृ लाभे इत्यस्माद् आशिषि लिङि 'लिङ्याशिष्यङ्' (पा ३,१,८६)। 'छन्दस्युभयथा' (पा ३,४,११७) इति लिङः सार्वधातुकत्वात् सीयुटः सलोपः। 'सुट् तिथोः' (पा ३,४,१०७) इति सुडागमः। हि यस्मात् सोमो राजा सुभगाम् सौभाग्ययुक्तां[6] कृणोति करोति। सुभगाम् इति। 'आद्युदात्तं द्व्यच् छन्दसि' (पा ६,२,११९) इत्युत्तरपदाद्युदात्तत्वम्। पतिलाभानन्तरं पुत्रान् सुवाना जनयन्ती। षूङ् प्राणिगर्भविमोचने। आदादिकः। महिषी महनीया श्रेष्ठा भार्या भवाति भवतु। महिषीति। मह पूजायाम्। अविमह्योष्टिषच् (पाउ १,४५)। टित्त्वान्ङीप्। इत्थं पतिं गत्वा लब्ध्वा सुभगा सौभाग्ययुक्ता सती वि राजतु विशेषेण तेजस्विनी भवतु।

यथा॑ख॒रो [7]म॑घवं॒श्चारु॑रे॒ष [7]प्रि॒यो मृ॒गाणां॑ सु॒षदा॑ ब॒भूव॑ ।
ए॒वा भग॑स्य जु॒ष्टेयम॑स्तु॒ नारी॒ संप्रि॑या [8]पत्याविराधयन्ती ॥ ४ ॥

यथा॑ । आ॒ऽख॒रः । म॒घ॒ऽव॒न् । चारुः॑ । ए॒षः । प्रि॒यः । मृ॒गाणा॑म् । सु॒ऽसदाः॑ । ब॒भूव॑ ।
ए॒व । भग॑स्य । जु॒ष्टा । इ॒यम् । अ॒स्तु॒ । नारी॑ । सम्ऽप्रि॑या । पत्या॑ । अवि॑ऽराधयन्ती ॥४॥

मघवान्[9] मंहनीयभोग्यपदार्थयुक्तः चारुः शोभनः मृगाणाम् [एषः] आखरः निजावासप्रदेशः। खनु अवदारणे इत्यस्माद् आङ्पूर्वात् 'डरो वक्तव्यः' (पावा ३,३,१२५) इति

१. नारि B,O,P[1]; नारी D. २. कृणोतु पै २,२१. ३. भवासि पै. ४. सुभगे पै. ५. विराजः पै. ६. °युक्तं S', Kd. ७. मघवा॒ चारु° K., °रेष प्रि° A, B[h], R, Wh. ८. पत्याभिराध° K. ९. तु. K; वैतु. मंपा. द्र.

हरः । विलोपः । स प्रदेशः प्रियः सन् यथा येन प्रकारेण सुषदाः सुखेन स्थातुं योग्यो बभूव भवति । छान्दसो लिट् । सुपूर्वात् सदेरसुनि रूपम् । एव एवम् इयं नारी भगस्य भाग्येन जुष्टास्तु । किं कुर्वती । पत्या भर्त्रा सह संप्रिया संप्रियाणि सम्यक्प्रीतिकराणि भोग्यानि वस्तूनि [1]अभिराधयन्ती अभिवर्धयन्ती । यद्वा पत्या सह संप्रिया संप्रीयमाणा [1]अभिराधयन्ती पुत्रपश्वादिभिः समृद्धा भवन्ती ।

भग॑स्य॒ नाव॒मा रो॑ह पू॒र्णामनु॑पदस्वतीम् ।
तयो॑प॒प्रता॑रय॒[2] यो [3]व॒रः प्र॑तिका॒म्यः॑ ॥ ५ ॥

भग॑स्य । नाव॑म् । आ । रो॒ह॒ । पू॒र्णाम् । अनु॑पऽदस्वतीम् ।
तया॑ । उ॒प॒ऽप्र॒ता॑रय । यः । व॒रः । प्र॒ति॒ऽका॒म्यः॑ ॥ ५ ॥

भगस्य भाग्यस्य प्राप्तिसाधनभूतां पूर्णाम् अभिमतफलैः परिपूरितम् अनुपदस्वतीम् क्षयरहितां नावम् हे कन्ये त्वम् आ रोह । तया उक्तलक्षणया नावा उपं अभिलष्यमाणपतिसमीपं प्रतारय आत्मानं प्रापय । प्रतिकाम्यः अयमेव मे भर्ता स्याद् इति प्रतिनियतं काम्यमानो यो वरः पतिस्तस्य समीपम् इति पूर्वत्र संबन्धः ।

आ क्र॑न्दय धनपते व॒रमाम॑नसं कृणु ।
सर्वं॑ प्रदक्षि॒णं कृ॑णु॒ यो व॒रः प्र॑तिका॒म्यः॑ ॥ ६ ॥

आ । क्र॒न्द॒य॒ । ध॒न॒ऽप॒ते॒ । व॒रम् । आऽम॑नसम् । कृ॒णु॒ ।
सर्व॑म् । प्र॒ऽद॒क्षि॒णम् । कृ॒णु॒ । यः । व॒रः । प्र॒ति॒ऽका॒म्यः॑ ॥ ६ ॥

हे धनपते वैश्रवण वरम् वरयितारं पतिम् आ क्रन्दय एषा कन्या मे जाया भूयाद् इति संततम् उद्घोषय । अभिधापयेत्यर्थः । 'आङः क्रन्द सातत्ये' इति णिच् । यद्वा वरम् आ क्रन्दय एतत्कन्याभिमुखम् आह्वय । क्रदि आह्वाने । तथा आमनसम् अभिमुखमनस्कं कृणु कुरु । किञ्च सर्वम् प्राणिजातं प्रदक्षिणम् प्रदक्षिणाचारं विवाहानुकूलव्यापारं कृणु कुरु । यो वरः प्रतिकाम्यः । उक्तोर्थः । तस्मै सर्वं प्रदक्षिणं कुरु इति संबन्धः ।

इ॒दं हिर॑ण्यं॒ [4]गुल्गु॑ल्व॒यमौ॒क्षो अथो॒ भगः॑ ।
ए॒ते पति॑भ्य॒स्त्वाम॑दुः प्रतिका॒माय॒ वेत्त॑वे ॥ ७ ॥

इ॒दम् । हिर॑ण्यम् । [5]गुल्गु॑लु । अ॒यम् । औ॒क्षः । अथो॒ इति॑ । भगः॑ ।
ए॒ते । पति॑ऽभ्यः । त्वाम् । अ॒दुः॒ । प्र॒ति॒ऽका॒माय॑ । वेत्त॑वे ॥ ७ ॥

---

१. तु. K; वैतु. मंपा. द्र. २. प्रतारितो पै २,२१,५. ३. पतिः पै. ४. वैतु. मंपा. द्र.
५. तु. D, S[m], P, शंपा. सात; पै.; वैतु. A,B[h];K,R,P[2],J,V,Wh,RW. सा. गुग्गु°

इदं हिरण्यम् हिरण्मयालंकारः 'गुग्गुलु धूपनद्रव्यविशेषः[1] प्रसिद्धः। अयम् औक्षः प्रलेपनद्रव्यम्। तत्स्वरूपं च कौशिकसूत्रभाष्यकारैर्दर्शितम्—

[3]'आवपेत् सुरभि[4] गन्धान् क्षीरे[5] सर्पिष्यथोदके।
एतद् आयनम् इत्याहुरौक्षं तु मधुना सह॥' (केसू ३४,१४) इति।

अथो अपि च तेषाम् अलंकारादीनाम् अधिष्ठाता भगः एतन्नामा देवः एते सर्वे धारणधूपनलेपनैः हे कुमारि त्वां पतिभ्यः सोमगन्धर्वाग्निभ्यः प्रतिकामाय प्रतिनियतम् एनां कन्यां कामयमानं मानुषं पतिं वेत्तवे वेत्तुं लब्धुम् अदुः दत्तवन्तः। दाञो लुङि 'गातिस्था°' (पा २,४,७७) इति सिचो लुक्। प्रतिकामाय। 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वात् चतुर्थी। वेत्तवे इति। 'तुमर्थे सेसेनसे' (पा ३,४,९) इत्यादिना विदेर्लाभार्थात् तवेन्प्रत्ययः।

आ ते॑ नयतु सवि॒ता न॑यतु॒ 'पति॒र्यः' प्र॑तिका॒म्य॑ः। "त्वम॑स्यै धेह्योषधे॥८॥

आ। ते॒। न॒य॒तु॒। स॒वि॒ता। न॒य॒तु॒। पति॑ः। यः। प्र॒ति॒ऽका॒म्य॑ः।
त्वम्। अ॒स्यै॒। धे॒हि॒। ओ॒ष॒धे॒॥ ८॥

हे कन्ये ते त्वाम् अभिलक्ष्य सविता सर्वस्य प्रेरको देवः आ नयतु वरम् आगमयतु। यः प्रतिकाम्यः। उक्तोर्थः। पतिः सोपि नयतु उपयम्य त्वां स्वगृहं प्रापयतु। तथा हे ओषधे व्रीह्यात्मके त्वम् अस्यै कुमार्यै धेहि पतिं विधेहि। प्रयच्छेत्यर्थः। 'घ्वसोरेद्धावभ्यासलोपश्च' (पा ६,४,११९) इति एत्वाभ्यासलोपौ।

द्वितीये काण्डे षष्ठेऽनुवाके पञ्चमं सूक्तम्।
समाप्तश्च षष्ठोऽनुवाकः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरश्रीवीरप्रतापहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणार्येण विरचिते माधवीये अथर्ववेदार्थप्रकाशके द्वितीये काण्डे षष्ठोऽनुवाकः।
समाप्तं द्वितीयं काण्डम्॥

१. द्र. पृ २७५ टि ५; वैतु. मंपा. द्र. २. औक्षः नास्ति S', Kd. ३. आवयेत् S', Kd. ४. तु. Bl.; वैतु. शंपा. सुरभीन् गन्धान्. ५. तु. Bl.; वैतु. शंपा. क्षीरं. ६. बृहस्पतिः वै १०,२४,५. ७. तम् पै.

अथ

# तृतीयं काण्डम्

श्रीगणाधिपतये नमः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तम् अहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

तृतीयकाण्डे षडनुवाकाः । तत्र प्रथमेऽनुवाके पञ्च सूक्तानि । तत्र 'अग्निर्णः[1] शत्रून्' इति प्रथमं सूक्तम् । तस्य परसेनामोहनकर्मणि फलीकरणमिश्रितस्य वा कणिकिं-[2] कामिश्रितस्य वा ओदनपिण्डस्य सांग्रामिकाग्नौ उलूखलेन होमे विनियोगः ।

तथा अस्मिन्नेव कर्मणि एकविंशतिं शर्कराः शूर्पे कृत्वा परसेनां प्रति निष्पुनीयात् ।

तथैव अप्वाख्यायै देवतायै अनेन सूक्तेन चरुं जुहुयात् ।

तद् उक्तं कौशिकेन — " 'अग्निर्नः शत्रून्' (अ ३,१), 'अग्निर्नो दूतः' (अ ३,२) इति मोहनानि । ओदनेनोपयम्य फलीकरणान् उलूखलेन जुहोति एवमणून् । एकविंशत्या शर्कराभिः प्रतिनिष्पुनाति । अप्वां यजते (कौसू १४,१७-२१) इति ।

अग्निर्नः[3] शत्रून् प्रत्येतु विद्वान् प्रतिदहन्नभिशस्तिमरातिम् ।
स सेनां मोहयतु परेषां निर्हस्तांश्च कृणवज्जातवेदाः ॥ १ ॥

अग्निः । नः । शत्रून् । प्रति । एतु । विद्वान् । प्रतिऽदहन् । अभिऽशस्तिम् । अरातिम् ।
सः । सेनाम् । मोहयतु । परेषाम् । निःऽहस्तान् । च । [4]कृणवत् । जातऽवेदाः ॥ १ ॥

अङ्गति गच्छति सर्वं व्याप्नोतीति अग्निः । अगिर्गत्यर्थः अस्माद् 'अङ्गेर्नलोपश्च' (पाउ ४,५०) इति निप्रत्ययः[5] । 'नेड्वशि कृति' (पा ७,२,८) इति इट्प्रतिषेधः । नैरुक्तास्तु अग्नि-शब्दम् अक्षरसाम्येन बहुधा व्युत्पादयन्ति । तथा हि — अग्निरग्रणीः सर्वदेवतानां प्रधानभूतः 'अग्निरग्रे प्रथमो देवतानाम्' (तैब्रा २,४,३,३) इति श्रुतेः । देवासुरसंग्रामे

---

१. तु. टि ३ ; वैतु. मंपा. द्र. २. तु. S', Kd. ; वैतु. दा. कणिक्किका, के. कणिका (कौसू १५, १६). ३. अग्निर्णः S. ४. कृणुवत् P, कृणवत् P². ५. नप्रत्ययः S', Kd.

देवसेनाया अग्रे नयनाद् वा अग्रणीरग्निः । सेनानीरित्यर्थः । 'अग्निर्देवानां सेनानीः' ( तु. माश ५,३,१,१ ) इति हि ब्राह्मणम् । यद्वा अग्रं प्रथमं यज्ञेषु कर्तव्येषु तादर्थ्येन प्रणीयत इत्यग्निः । सर्वत्र अग्रशब्दोपपदान्नयतेः 'सत्सूद्विष' ( पा ३,२,६१ ) इत्यादिना कर्तरि कर्मणि वा क्विप् । पृषोदरादित्वाद् (पा ६, ३,१०८) रूपसिद्धिः । यद्वा अङ्गं शत्रुसेनारूपं नयति दाहेन आत्मसात् करोति इति वा अग्निः । अङ्गशब्दोपपदान्नयतेर्नमतेर्वा रूपसिद्धिः । अथवा न क्नोपयति स्वसंबद्धपदार्थजातम् अनार्द्रं करोतीति वा अग्निः । क्नूयी शब्दे उन्दे च । अस्मान्नञ्पूर्वाद् रूपम् । अपि वा अयनेन आहवनीयादिस्थानगमनेन[1] अभिव्यक्तः प्रज्वलितः नयति हवींषि देवान् प्रापयतीति । अयनेन हविषः स्वात्मप्राप्तिमात्रेण तद्धविर्दग्धं कुर्वन् देवान् नयतीति वा अग्निः । अस्मिन् पक्षे एतेः अञ्जेर्दहतेर्वा नयतेश्च यथाक्रमम् अकारादींस्त्रीन् वर्णान् उद्धृत्य अग्निः शब्दो व्युत्पाद्यः । एतत् सर्वं यास्केनोक्तम् —'अग्निः कस्मात् । अग्रणीर्भवति । अग्रं यज्ञेषु प्रणीयते । अङ्गं नयति संनममानः । अक्नोपनो भवतीति स्थौलाष्ठीविः । न क्नोपयति न स्नेहयति । त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः । इतात् । अक्ताद् दग्धाद्वा । नीतात् । स खल्वेतेः अकारम् आदत्ते गकारम् अनक्तेर्वा दहतेर्वा नीः परः ( नि ७,१४ ) इति । स च 'इन्द्रो मन्थतु' ( कौसू १६,९ ) इत्यादिसूत्रोक्तप्रकारेण [3]मन्थनादिसंस्कारसंस्कृतः सेनाग्निरत्र विवक्षितः । सोयम् अग्निः विद्वान् जयोपायं जानन् नः अस्माकं शत्रून् शातयितॄन् द्वेष्यान् प्रत्येतु प्रतिमुखं गच्छतु । प्रतिमुखो भवतु इत्यर्थः । किं कुर्वन् । अभिशस्तिम् आभिमुख्येन अभितो वा हिंसकम् । शसु हिंसायाम् । अस्मात् कर्तरि क्तिच् । छान्दसं पूर्वपदप्रकृतिस्वरत्वम् । क्तिन्नन्तेन वा बहुव्रीहिः । अरातिम् । रातिर्दानम् तेन च श्रेयोमात्रम् उपलक्ष्यते । अस्मच्छ्रेयोविघातिनं शत्रुं प्रतिदहन् प्रातिकूल्येन प्रत्यङ्गं प्रतिपुरुषं वा भस्मसात् कुर्वन् । यद्वा प्रतिदहन् इति 'लक्षणहेत्वोः क्रियायाः' ( पा ३,२,१२६ ) इति हेतौ शतृप्रत्ययः । प्रतिदहनाद्धेतोः शत्रून् प्रत्येतु इति संबन्धः । अपि च सः अग्निः परेषाम् शत्रूणाम् सेनाम् इनेन अधिपतिना सह वर्तमानां शत्रुहननाय संभूय गमनयुक्तां वा । यथाहुः—'सेना सेश्वरा समानगतिर्वा' ( नि २,११ ) इति । तां चतुरङ्गबलरूपिणीं मोहयतु व्याकुलचित्तां करोतु । युद्धविषयकार्याकार्यविभागज्ञानशून्यां करोतु इत्यर्थः । मुह वैचित्त्ये । किञ्च जातवेदाः जातानां प्राणिनां वेदिता सर्वज्ञोऽयम् अग्निः शत्रून् निर्हस्तान् हस्तव्यापारशून्यान् आयुधग्रहणासमर्थान् कृणवत् कुर्यात् । कृवि हिंसाकरणयोश्च । अस्मात् लिङर्थे लेटि अडागमः[4] । 'धिन्विकृण्व्योर च' ( पा ३,१,८० ) इति उप्रत्ययः । तत्संनियोगेन अकारोन्तादेशः । तस्य स्थानिवद्भावात् लघूपधगुणाभावः । जातवेदा इति । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' ( पाउद ९,८७ ) इति असुन् पूर्वपदप्रकृतिस्वरत्वं च ।

१. °गकमनेन S', Kd. २. अयथाक्रम° S', Kd. ३. मथ° S', Kd. ४. आडागमः S', Kd.

यूयमुग्रा मरुत ईदृशे स्थाभि प्रेत मृणत[1] सहध्वम् ।
अमीमृणन् वसवो नाथिता[2] इमे अग्निर्ह्ये[3]षां[4] दूतः प्रत्येतु विद्वान् ॥ २ ॥

यूयम् । उग्राः । मरुतः । ईदृशे । स्थ । अभि । प्र । इत । मृणत । सहध्वम् ।
अमीमृणन् । वसवः । नाथिताः । इमे । अग्निः । हि । एषाम् । दूतः । प्रतिऽएतु । विद्वान् ॥ २ ॥

हे[5] उग्राः उद्गूर्णबलाः हे मरुतः एतन्नामानो गणदेवाः यूयम् ईदृशे अप्रधृष्ये संग्रामलक्षणे कर्मणि स्थ मत्सहायाः सन्तः संनिहिता भवथ । ईदृशे इति । इदम्-शब्दोपपदात् 'त्यदादिषु दृशोऽनालोचने कञ्च' (पा ३,२,६०) इति कञ्प्रत्ययः । 'इदंकिमोरीश्की' (पा ६,३,९०) इति इदम ईशादेशः । ततः अभि प्रेत आभिमुख्येन शत्रून् प्रहरणाय गच्छत । अनन्तरं [6]मृणतः हिंसतः युध्यमानान् शत्रून् सहध्वम् अभिभवत । मृण हिंसायाम् । तुदादित्वात् शः । तथा इमे वसवः वस्वाख्या गणदेवा नाथिताः जयार्थं प्रार्थिताः सन्तः अमीमृणन् अस्माकम् शत्रून् अभिघातयन्तु । मृणतेर्ण्यन्ताच्छान्दसे लुङि चङि 'उर्ऋत्', 'नित्यं छन्दसि' (पा ७,४,७;८) इति ऋदादेशः । हिशब्दः चार्थे । एषाम् वसूनां दूतः दूतवद् अग्रेसरः प्रधानभूतः । 'अग्निः प्रथमो वसुभिर्नो अव्यात्' (तै २,१,११,२) इति हि मन्त्रवर्णः । तथाविधः विद्वान् जानन् अग्निश्च प्रत्येतु शत्रून् प्रतिगच्छतु । यद्वा हि यस्माद् एषां वसूनां दूतः अनुचरः । 'अग्निं दूतं वृणीमहे' (ऋ १,१२,१) इत्यादिश्रुतेः । अतः सोपि तत्प्रेरितः प्रत्येतु इति ।

अमित्रसेनां[6] मघवन्नस्मान्[7] छत्रूयतीमभि[8] ।
युवं[9] [10]तामिन्द्र वृत्रहन्नग्निश्च दहतं प्रति ॥ ३ ॥

अमित्रऽसेनाम् । मघऽवन् । अस्मान् । शत्रुऽयतीम् । अभि ।
युवम् । ताम् । इन्द्र । वृत्रऽहन् । अग्निः । च । दहतम् । प्रति ॥ ३ ॥

हे मघवन् धनवन्निन्द्र अस्मान् त्वत्परिचरणकर्तॄन् निरपराधानपि शत्रूयतीम् शत्रूनिव आचरन्तीम् अमित्रसेनाम् शत्रुसेनाम् अभि । गच्छेति योग्यक्रियाध्याहारः । शत्रूयतीम् इति । शत्रुशब्दात् 'उपमानादाचारे' (पा ३,१,१०) इति क्यच् । 'अकृत्सार्वधातुकयोः°' (पा ७,४,२५) इति दीर्घः । तदन्तात् शतरि 'उगितश्च' (पा ४,१,६) इति ङीप् । अनित्यम् आगमशासनम्' इति नुमभावः । 'शतुरनुमः°' (पा ६,१,१७३) इति ङीप उदात्तत्वम् । ननु शत्रूयतीम् इति शत्रुलक्षणस्य कर्मणः क्यजन्तधात्वर्थेऽन्तर्भावात् जीवति रोदिति इत्यादिवद् अकर्मकेण भवितव्यम् । सत्यम् ।

---

१. मृणतः K, V. २. नाथितेभ्यः पै ३,६,२. ३. येषां पै. ४. वैतु. मंपा. इ.
५. उ. K,V; वैतु. मंपा. इ. ६. O, Op, K[m], K, V, Wl, को २,११९५; वैतु. A, B, B[p], B[k], D, R, S[m], P, P[k], J, शंपा. RW. सात. °त्रसेनां. ७. °स्मां छ° R. ८. छत्रुयती. को.
९. त्वम् पै ३,६,३; इन्द्रौ को. १०. तु. को. पै. सा. वैप १,१४१६f; वैतु. शंपा. RW. सात. तान्. ..

उपमानकर्मणोऽन्तर्भावेपि उपमेयकर्मणः अनभिधानात् तदपेक्षया सकर्मकत्वाद् अस्मान् इति कर्मणि द्वितीया। तद् उक्तं भगवता पतञ्जलिना 'सुप आत्मनः क्यच्' ( पा ३,१,८ ) इत्यत्र। 'पुत्रीयति माणवकम्' इति प्रस्तुत्य — 'द्वे ह्यत्र कर्मणी उपमानकर्म उपमेयकर्म च। उपमानकर्म अन्तर्भूतम्। उपमेयेकर्मणा सकर्मको भवति' इति। हे वृत्रहन् वृत्रस्यासुरस्य घातक इन्द्र त्वम् अग्निश्च युवम् युवां ताम् उक्तां शत्रुसेनां प्रति दहतम् प्रातिकूल्येन भस्मीकुरुतम्।

प्रसू॑त[1] इन्द्र प्र॒वता॒ हरि॑भ्यां॒ प्र ते॒ वज्रः॑ प्रमृ॒णन्नै॑तु[2] शत्रू॑न् ।
ज॒हि [3]प्र॒तीचो॑ अ॒नूचः॑[3] परा॑चो॒ विष्व॑क्[4] स॒त्यं कृ॑णुहि [5]चि॒त्तमे॑षाम्[6] ॥४॥

प्रऽसूं॑तः । इन्द्र । प्रऽव॑ता । हरि॑ऽभ्याम् । प्र । ते॒ । वज्रः॑ । प्र॒ऽमृ॒णन् । ए॒तु । शत्रू॑न् ।
ज॒हि । प्र॒तीचः॑ । अ॒नूचः॑ । परा॑चः । विष्व॑क् । स॒त्यम् । कृ॒णु॒हि । चि॒त्तम् । ए॒षाम् ॥४॥

हे इन्द्र ते[7] तव रथः प्रवता प्रवणवता मार्गेण। इन्द्रस्थानापेक्षया शत्रुसेनाप्रदेशः प्रवणः। अनेन अध्वनि रथस्य गतिप्रतिबन्धाभाव उक्तः। 'उपसर्गाच्छन्दसि धात्वर्थे' ( पा ५,१,११८ ) इति वतिः। अत्र अर्थग्रहणसामर्थ्यात् वत्यन्तस्यापि अनव्ययत्वम्। हरिभ्याम् एतन्नामकाभ्याम् अश्वाभ्यां युक्तः सन् सु[8] सुष्ठु प्र[8] एतु शत्रुसेनां प्राप्नोतु। ततः ते त्वदीयो वज्रः प्रमृणन् प्रकर्षेण हिंसन् शत्रून् अस्मदरातीन् प्र एतु प्रगच्छतु। त्वं च प्रतीचः प्रतिमुखम् आगच्छतः अनूचः अनु पश्चाद् आगच्छतः पराचः पराङ्मुखम् गच्छतश्च शत्रून् जहि विनाशय। 'हन्तेर्जः' ( पा ६,४,३६ ) इति हो जादेशः। 'असिद्धवदत्राभात्' ( पा ६,४,२२ ) इति तस्यासिद्धत्वात् 'अतो हेः' (पा ६,४,१०५ ) इति हेर्लुगभावः। प्रतीच इत्यादिषु प्रत्याद्युपसर्ग उपपदे 'ऋत्विग्' ( पा ३,२,५९ ) इत्यादिना अञ्चतेः क्विन्। 'अनिदिताम्' ( पा ६,४,२४ ) इति नलोपः। शसि 'अचः' ( पा ६,४,१३८ ) इत्यकारलोपे 'चौ' (पा ६,३,१३८ ) इति दीर्घत्वम्। प्रतीचः अनूचः इत्यत्र उदात्तनिवृत्तिस्वरेण शस उदात्तत्वम्[8]। 'चौ' ( पा ६,१,२२२ ) इति पूर्वपदान्तोदात्तस्य तदपवादत्वेपि व्यत्ययेनात्र न प्रवृत्तिः। पराच इत्यत्र उदात्तनिवृत्तिस्वरापवादत्वेन च चुस्वरे प्राप्ते परत्वाद् 'अनिगन्तोऽञ्चतावप्रत्यये' ( पा ६,२,५२ ) इति गतेः प्रकृतिस्वरत्वम्। किंच एषाम् शत्रूणां सत्यम् व्यवस्थितं शत्रुहननलक्षणैककार्योद्यतं चित्तम् अन्तःकरणं विश्वक् सर्वतः अञ्चनशीलम् अव्यवस्थितं कार्याकार्यविभागज्ञानशून्यं कृणुहि कुरु। 'उतश्च प्रत्ययाच्छन्दसि वा वचनम्' ( पावा ६,४,१०६) इति हेर्लुगभावः।

१. प्र सू॒तं ऋ ३,३०,६ २. याहि पै ३,६,४. ३. प्र॒तीचो अ॒नूचः ऋ. ४. विश्वं ऋ. पै. ५. विष्टम् ऋ. पै. ६. अ॑स्तु ऋ. ७. तु. टि १ ; वैतु. मंपा. द्र. ८. तु. टि ३; वैतु. मंपा. द्र.

इन्द्र सेनां मोहयामित्राणाम् ।
अग्नेर्वातस्य ध्राज्या तान् विषूचो वि नाशय ॥ ५ ॥

इन्द्र । सेनाम् । मोहय । अमित्राणाम् ।
अग्नेः । वातस्य । ध्राज्या । तान् । विषूचः । वि । नाशय ॥ ५ ॥

हे इन्द्र अमित्राणाम् शत्रूणां सेनाम् स्वकीयया मायया मोहय मूढां विचित्तां विगतकर्तव्यताचेतसं कुरु । इन्द्रस्य मायासंबन्धः श्रुत्यन्तरे प्रसिद्धः — 'मायाभिरिन्द्र मायिनम्' ( ऋ १,११,७ ) इति । ततः अग्नेः वातस्य वायोश्च मिलितयोस्तयोः ध्राज्या ध्राजिः दहनविषये या वेगिता गतिस्तथाविधया वेगगत्या तयोरेव वा गत्या तान् सेनागतान् शत्रून् विषूचः सर्वतः पलायमानान् कृत्वा वि नाशय । ध्राज्येति । ध्रज गतौ इत्यस्मात् 'वसिवपियजिराजिव्रजिध्रजि' ( पाउ ४,१२५?) इत्यादिना औणादिक इञ्प्रत्ययः ।

[1]इन्द्रः सेनां मोहयतु[2] मरुतो घ्नन्त्वोजसा ।
चक्षूंष्यग्निरा दत्तां पुनरेतु पराजिता ॥ ६ ॥

इन्द्रः । सेनाम् । मोहयतु । मरुतः । घ्नन्तु । ओजसा ।
चक्षूंषि । अग्निः । आ । दत्ताम् । पुनः । एतु । पराऽजिता ॥ ६ ॥

इन्द्रः देवानाम् अधिपतिः सेनाम् शत्रुसंबन्धिनीं मोहयतु । तथा तत्सखिभूता मरुतश्च तां सेनाम् ओजसा बलेन घ्नन्तु । हन्तेर्लोटि 'गमहन[0]' ( पा ६,४,९८ ) इत्युपधालोपे 'हो हन्तेः[0]' ( पा ७,३,५४ ) इति घत्वम् । अग्निर्देवः चक्षूंषि शत्रूणाम् अक्षीणि आ धत्ताम् स्वयं स्वीकरोतु । अपहरतु इत्यर्थः । एवं मोहनादिना पराजिता पराभूता पुनरेतु प्रतिनिवर्तताम् ।

इति तृतीयकाण्डे प्रथमेऽनुवाके प्रथमं सूक्तम् ।

'अग्निर्णो[4] दूतः' इति द्वितीयसूक्तेन परसेनामोहनकर्मणि पूर्वसूक्तोक्तानि कर्माणि कुर्यात् । सूत्रं तु तत्रैवोदाहृतम् ।

अग्निर्नो[5] दूतः [6]प्रत्येतु विद्वान्[7] प्रतिदहन्नभिशस्तिमरातिम् ।
स चित्तानि मोहयतु परेषां निर्हस्तांश्च कृणवज्जातवेदाः ॥ १ ॥

१. तु. सा. ; वैतु. A,B,B^p,B^h,D,K^m,S^m,P,P^2,J,V, अन्ये च सर्वे मूको. (तु. Wh.) इन्द्र॰
२. मोहयम् पै ३,६,६ ३. वैतु. मंपा. द्र. ४. तु. टि ५; वैतु. मंपा. द्र. ५. अग्निर्णो S.
६. तु. RW.; वैतु. शंपा. सात. प्रत्येतु ७. शत्रून् पै ३,५,१.

अ॒ग्निः । नः॒ । दू॒तः । प्र॒ति॒ऽए॒तु॒ । वि॒द्वान् । प्र॒ति॒ऽदह॑न् । अ॒भिऽश॑स्तिम् । अरा॑तिम् ।
सः । चि॒त्तानि॑ । मो॒हय॒तु॒ । परे॑षाम् । निःऽह॑स्तान् । च॒ । कृ॒णव॒त् । जा॒तऽवे॑दाः ॥ १ ॥

अग्निः अङ्गनादिगुणयुक्तो दूतः देवानां दूतवद् अग्रेसरः विद्वान् नः अस्माकम् शत्रून् इति शेषः । अन्यत् पूर्वसूक्ते व्याख्यातम् । सेनापदस्थाने चित्तानीति विशेषः ।

अ॒यम॒ग्निर॑मूमुहद् यानि॑ चि॒त्तानि॑ वो हृ॒दि ।
वि वो॑ धम॒त्वोक॑सः॒ प्र वो॑[1] धमतु स॒र्वतः॑ ॥ २ ॥

अ॒यम् । अ॒ग्निः । अ॒मू॒मु॒ह॒त् । यानि॑ । चि॒त्तानि॑ । व॒ः । हृ॒दि ।
वि । व॒ः । ध॒म॒तु॒ । ओक॑सः । प्र । व॒ः । ध॒म॒तु॒ । स॒र्वतः॑ ॥ २ ॥

हे शत्रवः वः युष्माकं हृदि हृदये यानि चित्तानि अस्मदाक्रमणविषयज्ञानानि सन्ति तानि सर्वाणि अयं हूयमानोऽग्निः अङ्गनादिगुणयुक्तः अमूमुहत् मोहयतु । मुहेर्ण्यन्ताद् लुङि चङि रूपम् । ततो वः युष्मान् ओकसः स्वस्वनिवासस्थानाद् वि धमतु विशेषेण निःसारयतु । स्थानभ्रष्टान् करोतु इत्यर्थः । अपि च सर्वतः सर्वस्मादपि स्थानाद् वः युष्मान् प्र धमतु प्रकर्षेण गमयतु । स्थानशून्यान् करोतु इत्यर्थः । ध्मा शब्दाग्निसंयोगयोः । अस्मात् लोटि शपि 'पाघ्राध्मा' (पा ७,३,७८) इत्यादिना धमादेशः ।

इन्द्र॑ चि॒त्तानि॑ [2]मो॒हय॑न्न॒र्वाङाकू॑त्या चर[3] ।
अ॒ग्नेर्वात॑स्य॒ ध्राज्या॒ तान् विषू॑चो॒ वि ना॑शय ॥ ३ ॥

इन्द्र॑ । चि॒त्तानि॑ । मो॒हय॑न् । अ॒र्वाङ् । आऽकू॑त्या । च॒र॒ ।
अ॒ग्ने । वात॑स्य । ध्राज्या॑ । तान् । विषू॑चः । वि । ना॒श॒य॒ ॥ ३ ॥

हे इन्द्र चित्तानि शत्रूणां मनांसि मोहयन् आकूत्या अस्मच्छत्रुसंहरणबुद्धया सहितः सन् अर्वाङ् शत्रुसेनाभिमुखश्चर गच्छ । अन्यद् व्याख्यातम् ।

व्या॑कूतय एषामि॒ताथो॑ चि॒त्तानि॑[3] मुह्यत ।
अथो॒ यद॒द्यैषां॑ हृ॒दि तदे॑षां॒ परि॒ निर्जहि ॥ ४ ॥

वि । आऽकू॒तयः॒ । ए॒षा॒म् । [4]इ॒त । अथो॒ इति॑ । चि॒त्तानि॑ । मु॒ह्य॒त॒ ।
अथो॒ इति॑ । यत् । अ॒द्य । ए॒षा॒म् । हृ॒दि । तत् । ए॒षा॒म् । परि॑ । निः । ज॒हि॒ ॥ ४ ॥

1. वो इति शोध: B. 2. मोहयार्वाङाकूत्या अभि पै ३,५,३. 3. चित्तानि सा. RW.
4. इतः P[2].

हे [1]व्याकूतयः विरुद्धाः संकल्पाः यूयम् एषाम् शत्रूणां मनांसि इत प्रापुत। अथो अपि च हे [2]चित्तानि शत्रुसंबन्धीनि मनांसि यूयमपि मुह्यत मौढ्यं प्राप्नुत। यद्वा हे देवाः यूयम् एषाम् शत्रूणां व्याकूतयः विविधाकूत्युत्पादकाः सन्तः इत तान् गच्छत। अथो अपि च तदीयानि चित्तानि मुह्यत मोहयत। मुह्यतिरत्र अन्तर्णीतण्यर्थः। अथो अपि च हे इन्द्र एषाम् संग्रामार्थं प्रवृत्तानां शत्रूणां हृदि हृदये अद्य इदानीं यत् चिकीर्षितं कार्यजातम् अस्ति एषां संबन्धि तत् सर्वं परि निर्जहि परितः सर्वतो नाशय।

अमीषां [3]चित्तानि प्रतिमोहयन्ती गृहाणाङ्गान्यप्वे [4] परेहि।
अभि प्रेहि निर्दह हृत्सु शोकैर्ग्राह्यामित्रांस्तमसा विध्य शत्रून् [5] ॥ ५ ॥

अमीषाम्। चित्तानि। प्रतिऽमोहयन्ती। गृहाण। अङ्गानि। अप्वे। परा। इहि। अभि। प्र। इहि। निः। दह। हृत्ऽसु। शोकैः। ग्राह्या। अमित्रान्। तमसा। विध्य। शत्रून्॥

हे अप्वे [6]अपवाययति अपगमयति सुखं प्राणांश्चेति अप्वा पापदेवता। अपपूर्वाद् वेतेर्वायितेर्वा [7] 'डोऽन्यत्रापि दृश्यते' (पावा ३,२,४८) इति डप्रत्यये उपसर्गस्यान्त्यलोपश्छान्दसः। यास्कस्त्वाह—'अप्वा यद् एनया विद्धोऽपवीयते [8] व्याधिर्वा भयं वा' (नि ६,१२) इति। हे तथाविधे पापदेवते अमीषाम् अस्मच्छत्रूणां चित्तानि मनांसि प्रतिमोहयन्ती प्रत्येकं मौढ्यं गमयन्ती। हेतौ शतृप्रत्ययः। प्रतिमोहनाद्धेतोः अङ्गानि गृहाण। गृहाणेति। प्राप्तकाले लोट्। हे अप्वे त्वत्कर्तृकस्य शत्रुग्रहणस्यायं प्राप्तः कालः तदर्थं परेहि अस्मत्तः पराङ्मुखी सती शत्रून् गच्छ। गत्वा च अभि प्रेहि अभितः सर्वतः शत्रुशरीरं प्रसर्प। प्रविशेत्यर्थः प्रविश्य च हृत्सु हृदयेषु स्थिता सती शोकैः रोगभयादिजन्यैर् निर्दह। ततः तमसा तमोरूपया ग्राह्या पिशाच्या शत्रून् शातयितॄन् अमित्रान् द्वेष्यान् विध्य ताडय। मारयेत्यर्थः। व्यध ताडने। 'ग्रहिज्या' (पा ६,१,१६) इत्यादिना संप्रसारणम्।

असौ या सेना मरुतः परेषामस्मानैत्यभ्योजसा स्पर्धमाना।
तां [10]विध्यत तमसापव्रतेन यथैषामन्यो [11] अन्यं न जानात् [12] ॥ ६ ॥

असौ। या। सेना। मरुतः। परेषाम्। अस्मान्। आऽएति। अभि। ओजसा। स्पर्धमाना। ताम्। विध्यत। तमसा। अपऽव्रतेन। यथा। एषाम्। अन्यः। अन्यम्। न। जानात्॥

१. वैतु. मंपा द्र. २. तु. पू. २८२ टि ३; वैतु. मंपा. (तु. सर्वे. मूको.) ३. चित्तं प्रतिलोभयन्ती ऋ १०,१०३,१२ कौ २,१२११ मा १७,४४. ४. न्यप्वे १ B,Bp,B^h,D,R, न्यप्वे ३ प° S^m. ५. अन्धेनामित्रास्तमसा सचन्ताम्. ऋ. मा. कौ., † विश्य पै ३,५,५ ६. अवाययति अपवाययति $S'_3$, Kd. ७. °वायतेर्वा S′, Kd. ८. विद्धोपमीयते S′, Kd. ९. अभ्येति नः मा १७,४७; अभ्येति नः कौ २,१२१०. १०. गूहत मा. खि ३,२१,१ कौ. पै. ११. अमीषाम् खि., एतेषाम् कौ., अमी मा. १२ जानन् मा.

हे मरुतः असौ परिदृश्यमाना परेषाम् शत्रूणां या सेना ओजसा स्वकीयेन बलातिशयेन स्पर्धमाना अस्माभिः सह संघर्षे युद्धोद्यमं कुर्वाणा सती अस्मान् अभि ऐति अस्मदभिमुखम् आगच्छति । स्पर्ध संघर्षे । लटः शानच् । 'तास्यनुदात्तेत्'° ( पा ६,१,१८६ ) इति लसार्वधातुकानुदात्तत्वे शपः पित्त्वाद् अनुदात्तत्वे धातुस्वरः। ताम् तथाविधां शत्रुसेनाम् अपव्रतेन । व्रतम् इति कर्मनाम । अपगतकर्मणा सर्वव्यापारविघातकेन तमसा भवद्भिः प्रेरितेन मायामयेन अन्धकारेण विध्यत ताडयत । तत्प्रकारं दर्शयति — एषाम् शत्रूणां मध्ये अन्यः कश्चित् पुरुषः अन्यम् स्वव्यतिरिक्तं पुरुषं यथा येन प्रकारेण न जानात् न जानीयात् । तथा विध्यतेति संबन्धः । परस्परवार्तानभिज्ञान् कृत्वा विनाशयतेत्यर्थः । जानात् इति । ज्ञा अवबोधने । लेटि 'इतश्च लोपः'° ( पा ३,४,९७ ) इति इकारलोपः । 'ज्ञाजनोर्जा' (पा ७,३, ७९ ) इति जादेशः ।

इति तृतीये काण्डे प्रथमेऽनुवाके द्वितीयं सूक्तम्

'अचिक्रदत्' इति सूक्तेन शत्रूत्सादितस्य राज्ञः पुनः स्वराष्ट्रप्रवेशार्थं शत्रुसेनाकारं पुरोडाशम् उदकेषु दर्भान् संस्तीर्य तत्र निनयेत् । ततो निमज्जनार्थं तं पुरोडाशं लोष्टेन पूरयेत् ।

तथा अनेन सूक्तेन स्वराष्ट्रप्रवेशार्थं क्षीरौदनं संपात्य अभिमन्त्र्य राजानम् आशयेत् ।

अत्र सूत्रम् — " 'अचिक्रदत्' ( अ ३,३ ), 'आ त्वा गन्' ( अ ३,४ ) इति यस्माद् राष्ट्राद् अवरुद्धस्तस्याशायां [1]सेनाविधं पुरोडाशं दर्भेषूदके निनयति" ( कौसू १६,३० ) इत्यादि ।

अत्र 'अचिक्रदत्' इत्यस्य साकमेधाख्यपर्वणि पूर्वेद्युः क्रियमाणायाम् आग्नेय्याम् इष्ट्यां प्रधानयागानुमन्त्रणे विनियोगः । उक्तं वैताने — " कार्तिक्यां साकमेधाः । पूर्वेद्युरिष्टयाम् [2]अग्नेरनीकवतः 'अचिक्रदत्' " ( वैताश्रौ ९,१;२ ) इति ।

अचि॑क्रदत् स्व॒पा इ॒ह भु॑व॒दग्ने॒ व्य॑चस्व॒ रोद॑सी उ॒रूची ।
यु॒ञ्जन्तु॑ त्वा म॒रुतो॑ वि॒श्ववे॑दस॒ आमुं न॑य॒ नम॑सा रा॒तह॑व्यम् ॥ १ ॥[3]

अचिक्रदत् । स्व॒ऽपाः । इ॒ह । भु॒वत् । अग्ने॑ । वि । अ॒च॒स्व॒ । रोद॑सी॒ इति॑ । उ॒रूची॒ इति॑ । यु॒ञ्जन्तु॑ । त्वा॒ । म॒रुतः॑ । वि॒श्वऽवे॑दसः । आ । अ॒मुम् । न॒य॒ । नम॑सा । रा॒तऽह॑व्यम् ॥ १ ॥

१. शयनविधं Bl. २. अग्निरनीक° S', Kd. ३. पाभे. भूयस्त्वे सति = ऋ ६,११,४

हे अग्ने असौ स्वराष्ट्रात् प्रच्युतो राजा अचिक्रदत् पुनः स्वराष्ट्रप्रवेशाय त्वाम् आह्वयति। प्रार्थयत इत्यर्थः। कदि क्रदि क्लदि आह्वाने रोदने च। अस्माद् ण्यन्तात् लुङि चङि रूपम्। 'अनित्यम् आगमशासनम्' इति नुमभावः। स त्वदनुग्रहात् इह स्वराष्ट्रे स्वगाः स्वकीयानां प्रजानां पालकः सुकर्मा वा भुवत् भवतु। भवतेर्लेटि अडागमः। छान्दसः शपो लुक्। 'भूसुवोस्तिङि' ( पा ७,३,८८ ) इति गुणप्रतिषेधे उवङ्। तद्रक्षणार्थं त्वं च उरूची उरूच्यौ उर्वञ्चने। व्यापनशीले इत्यर्थः। उरुपूर्वाद् अञ्चतेः '[क्विन्]। 'अञ्चतेश्चोपसंख्यानम्' ( पावा ४,१,६ ) इति ङीप्। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। ईदृशौ रोदसी द्यावापृथिव्यौ [1]व्यचस्व व्याप्नुहि। व्यचतिर्व्याप्तिकर्मा। अपि च विश्ववेदसः सर्वविषयज्ञानयुक्ता मरुतः एतन्नामान एकोनपञ्चाशत्संख्याका देवाः हे अग्ने त्वा त्वां युञ्जन्तु प्राप्नुवन्तु। त्वत्सहाया भवन्तु इत्यर्थः। विश्ववेदस इति। विद ज्ञाने इत्यस्माद् भावे असुन्। 'बहुव्रीहौ विश्वं संज्ञायाम्' ( पा ६,२,१०६ ) इति पूर्वपदान्तोदात्तत्वम्। नमसा नमस्कारेण युक्तं रातहव्यम् दत्तहविष्कम्[2] अमुम् उक्तलक्षणं राजानम् आ नय पुनः स्वराष्ट्रं प्रापय। •

दूरे चित् सन्तमरुषास इन्द्रमा च्यावयन्तु सख्याय[3] विप्रम्।
यद् गायत्रीं बृहतीमर्कमस्मै सौत्रामण्या दधृषन्त देवाः ॥ २ ॥

दूरे। चित्। सन्तम्। अरुषासः। इन्द्रम्। आ। च्यवयन्तु। सख्याय[4]। विप्रम्।
यत्। गायत्रीम्। बृहतीम्। अर्कम्। अस्मै। सौत्रामण्या। दधृषन्त। देवाः ॥ २ ॥

अरुषासः आरोचमानाः दीप्यमानाः। '[5]अरुषीरारोचनाद्' इति यास्कः ( नि १२,७ )। ऋत्विजः दूरे चित् सन्तम्। चित्शब्दः अप्यर्थे। स्वर्गे वसन्तं विद्यमानमपि विप्रम्। मेधाविनामैतत्। मेधाविनम् इन्द्रं सख्याय अस्य राज्ञः सखिकर्मणे साहाय्याचरणाय। 'स युर्यः' ( पा ५,१,१२६ ) इति यः। आ च्यावयन्तु आगमयन्तु। आनेतव्यस्येन्द्रस्य आधिक्यं दर्शयति — यत् यस्मात् कारणाद् देवाः प्रसिद्धाः अस्मै इन्द्राय गायत्रीम् सोमाहरणादिना प्रख्यातवीर्यं गायत्र्याख्यं छन्दः बृहतीम् अस्मान्न्यूनाधिकाक्षराणाम् अन्येषां छन्दसां प्रधानभूताम्। बृहत्याः[6] प्राधान्यं च अन्यत्र श्रूयते — 'यानि च छन्दांस्यत्यरिच्यन्त। यानि च नोदभवन् तानि निर्वीर्याणि हीनान्यमन्यन्त। साब्रवीद् बृहती। मामेव भूत्वा माम् उपसंश्रयतेति' ( तैब्रा १,५,१२,३ )। 'बृहती छन्दसां स्वाराज्यं परीयाय' ( तु. ताब्रा २४,६,३ ) इति। अर्कम् अर्चनसाधनभूतं मन्त्रात्मकं बृहदुक्थात्मकं शस्त्रम् सौत्रामण्या। सुष्ठु त्रायत इति सुत्रामा इन्द्रः। तद्देवत्यया क्रियया दधृषन्त अधारयन्। गायत्र्यादिभिरिन्द्रम् अतिशयितवीर्यम् अकुर्वन्नित्यर्थः। यद्वा गाय-

१. वैतु. मंपा. पपा. द्र. २. दत्तहवि° S', Kd. ३. सख्याय B,Bp,Bh,D,R,P3J.
४. सुख्याय J,P. ५. अरुष आ° शंपा. ६. बृहतः S', Kd.

च्यावितम् अस्मा इन्द्राय । प्रायच्छन् इति शेषः । तथा सौत्रामण्या एतन्नामकेन हविर्यज्ञेन देवा दधृषन्त । पूर्वं विस्रस्तावयवम् इन्द्रं पुनः सर्वावयवोपेतम् अकुर्वन्नित्यर्थः । श्रूयते हि—'इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत् । तद् देवाः सौत्रामण्या समभरन्' (तै ५,६,३,४) इति । तस्माद् अतिशयितवीर्ययोगात् तमेव आ च्यावयन्तु इति संबन्धः ।

अ॒द्भ्यस्त्वा॒ राजा॒ वरु॑णो ह्वयतु॒[2] सोम॑स्त्वा ह्वयतु॒[3] पर्व॑तेभ्यः ।
इन्द्र॑स्त्वा [4]ह्वयतु वि॒ड्भ्य [5]आ॒भ्यः श्ये॒नो भू॒त्वा वि॒श आ प॑तेमाः ॥३॥

अ॒त्ऽभ्यः । त्वा॒ । राजा॑ । वरु॑णः । ह्व॒य॒तु॒ । सोम॑ः । त्वा॒ । ह्व॒य॒तु॒ । पर्व॑तेभ्यः ।
इन्द्र॑ः । त्वा॒ । ह्व॒य॒तु॒ । वि॒ट्ऽभ्यः । आ॒भ्यः । श्ये॒नः । भू॒त्वा । विश॑ः ।आ । प॒त । इ॒माः ॥३॥

हे परैरवरुद्धराष्ट्र राजन् त्वा त्वां वरुणो राजा अद्भ्यः स्वसंबन्धिनीभ्यः सकाशाद् ह्वयतु आकारयतु । अद्भ्य इति । 'अपो भि' (पा ७,४,४८) इति तकारः[5] । तथा सोमः लतारूपेणावस्थितः पर्वतेभ्यः स्वनिवासस्थानेभ्यः त्वा त्वां ह्वयतु । इन्द्रश्च विट्पतिः । 'स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः' (अ १,२१,१) इति श्रूयते । आभ्यः यासु प्रजासु त्वम् इदानीं निवससि आभ्यो विड्भ्यः प्रजाभ्यः सकाशात् त्वा त्वां ह्वयतु । राज्यभ्रष्टस्य राज्ञः त्रीणि निवासस्थानानि संभावितानि । समुद्रमध्यं पर्वताः देशान्तरं वा । तेभ्यः सर्वेभ्यः स्वकीयेभ्यो वरुणादयस्त्वाम् आह्वयन्तु । पुनः स्वराज्यप्रवेशायेत्यर्थः । एवं तैर्देवैराहूतस्त्वम् इमाः स्वकीयाः पूर्वं पालिता विशः प्रजाः श्येनो भूत्वा । श्येनः पक्षिविशेषः । स इव शीघ्रगतिः परैरनाधर्षितश्च भूत्वा आ पत आगच्छ । पत्लृ गतौ । लोटि 'अतो हेः' (पा ६,४,१०५) इति हेर्लुक् ।

श्ये॒नो [6]ह॒व्यं न॑यत्वा॒ पर॑स्माद॒न्यक्षे॑त्रे [7]अप॑रुद्धं॒ चर॑न्तम् ।
अ॒श्विना॑ [8]पन्थां॑ कृणुतां॒ सु॒गं ते॑ [9]इ॒मं स॑जाता अ॒भि॒सं॑विशध्वम् ॥ ४ ॥

श्ये॒नः । ह॒व्यम् । न॒य॒तु॒ । आ । पर॑स्मात् । अ॒न्य॒ऽक्षे॒त्रे । [10]अप॑ऽरुद्धम् । चर॑न्तम् ।
अ॒श्विना॑ । पन्था॑म् । कृ॒णु॒ताम् । सु॒ऽगम् । ते॒ । इ॒मम् । स॒ऽजा॒ता॒ः । अ॒भि॒ऽसं॒वि॑शध्वम् ॥ ४ ॥

श्येनः शंसनीयगतिः द्युस्थानो देवः अन्यक्षेत्रे परराष्ट्रे [7]अवरुद्धम् शत्रुभिर्निरुद्धं चरन्तम् वर्तमानम् अत एव हव्यम् ह्वातव्यम् । 'बहुलं छन्दसि' (पा ६,१,३४) इति ह्वः संप्रसारणम् । ईदृशं तं राजानं परस्मात् परराष्ट्राद् आ नयतु स्वदेशं प्रति प्रापयतु ।

१. दशधेर्येन्द्रियं S', Kd. २. जुहाव पै २,७४,३. ३. ह्वयति पै. ४. ह्वाभ्य B. ५. तकारः आकारयतु S', Kd. ६. हविर् पै २,७४,४. ७. अवरुद्धं S,K,V, सा.; अपरुद्धं अपि K. ८. पथां B[a],S[m]. ९. गमे पै. १०. अव° S', K.

तथा हे राजन् ते तव अश्विना अश्विनौ देवौ । 'सुपां सुलुक्०' ( पा ७,१,३९ ) इत्याकारः। पन्थाम् पन्थानम् । छान्दसम् आत्वं नलोपो वा । आगमनमार्गं सुगम् सुखेन गन्तुं योग्यं निरोधकशत्रुशून्यं कृणुताम् कुरुताम् । सुगम् इति । 'सुदुरोरधिकरणे' ( पावा ३,२,४८ ) इति डः । हे सजाताः समानजन्मानो बन्धवः यूयम् इमम् पुनः स्वराष्ट्रं प्रविष्टं राजानम् अभिसंविशध्वम् अभितः सर्वतः प्रविश्य संविशध्वम् उपविश्य सेवध्वम् । विशेर्व्यत्ययेन आत्मनेपदम् ।

[1]ह्वयन्तु त्वा प्रतिजनाः[2] प्रति मित्रा अवृषत[3] ।
इन्द्राग्नी विश्वे देवास्ते विशि क्षेममदीधरन् ॥ ५ ॥

ह्वयन्तु[5] । त्वा । प्रतिऽजनाः । प्रति । मित्राः । अवृषत ।
इन्द्राग्नी इति । विश्वे । देवाः । ते । विशि । क्षेमम् । अदीधरन् ॥ ५ ॥

प्रतिजनाः हे राजन् त्वा त्वां [6]वयन्तु सांतत्येन सेवन्ताम् । वेञ् तन्तुसंताने इत्यस्मात् लोट् । कर्तरि शप् । तथा [7]प्रतिमित्राः प्रतिकूलानि मित्राणि अवृषत विरोधं परित्यज्य संभजन्ताम् । वृङ् संभक्तौ इत्यस्मात् छान्दसे लुङि 'लिङ्सिचोरात्मनेपदेषु' ( पा ७,२,४२ ) इति पक्षे इडभावः । 'उश्च' ( पा १,२,१२ ) इति सिचः कित्त्वाद् गुणाभावः । इन्द्राग्नी विश्वे देवाश्च विशि । जातावेकवचनम् । विक्षु प्रजासु ते[8] तव क्षेमम् रक्षणम् अदीधरन् धारयन्तु कुर्वन्तु । धारयतेर्ण्यन्तात् लुङि चङि रूपम् ।

यस्ते हवं [8]विवदत् सजातो [9]यश्च निष्ट्यः ।
अपाञ्चमिन्द्र तं [10] कृत्वाथेममिहाव गमय ॥ ६ ॥

यः । ते । हवम् । विऽवदत् । सऽजातः । यः । च । निष्ट्यः ।
अपाञ्चम् । इन्द्र । तम् । कृत्वा । अथ । इमम् । इह । अव । गमय ॥ ६ ॥

हे राजन् ते तव हवम् स्वराष्ट्रप्रवेशविषयं पुनराह्वानं यः सजातः समानजन्मा । समबल इत्यर्थः । यश्च निष्ट्यः नीचः । निकृष्टबल इत्यर्थः । 'अव्ययात् त्यप्' (पा ४,२,१०४) इत्यत्र 'निसो गते' इति वचनात् त्यप् । 'ह्रस्वात् तादौ तद्धिते' ( पा ८,३,१०१ ) इति सकारस्य मूर्धन्यः । अनयोरन्यतरः कश्चिद् [11]विवदन् विवदेत्[11] नानुमन्येत । विपूर्वाद् वदेर्लेटि अडागमः । हे इन्द्र तम् उभयविधं शत्रुम् अपाञ्चम् अपगतं बहिष्कृतं कृत्वा अथ अनन्तरम् इमम् प्रकृतं राजानम् इह अस्मिन् राष्ट्रे अव गमय बोधय । अस्य राष्ट्रस्य अयमेव राजेति प्रख्यापयेत्यर्थः ।

इति प्रथमेऽनुवाके तृतीयं सूक्तम् ।

---

१. वयन्तु S, K, V; ह्वयन्ति पै २,७४,७. २. °जाना K,K^m,V,P^3,M,O,Op; पञ्चजना पै. ३. अवृषत् D,P. ४. देवास्त B^h. ५. वयन्तु K. ६. वैतु. मंपा. द्र. ७. वैतु. मंपा. द्र. ८. विविदत् S, प्रतितिष्ठन् पै २,७४,६ ९. उत पै. १०. मीत्वा पै., वैप १,२५०१० अपि द्र. ११. विविदत् विवदेत् S', Kd.

'आ त्वा गन्' इति सूक्तेन स्वराष्ट्रप्रवेशकर्मण्येव [1]पूर्वसूक्तोक्तानि कर्माणि कुर्यात्। सूत्रं तु तत्रैवोदाहृतम्।

अत्र 'पथ्या रेवतीः' (अ ३,४,७) इत्येषा प्रायणीयेष्ट्यां पथ्यास्वस्तियागानुमन्त्रणे विनियुक्ता। 'दीक्षान्ते [2]प्रायणीयायाम्' इति प्रक्रम्य 'पथ्या रेवतीः', 'वेदः स्वस्तिः' (अ ७,२९,१) इति हि वैतानं सूत्रम् (वैताश्रौ १३,२)।

आ त्वा गन् राष्ट्रं सह वर्चसोदिहि [3]प्राङ् विशां [4]पतिरेकराट् त्वं वि राज।
सर्वास्त्वा राजन् प्रदिशो ह्वयन्तूपसद्यो नमस्योऽभवेह ॥ १ ॥

आ । त्वा । गन् । राष्ट्रम् । सह । वर्चसा । उत् । इहि । प्राङ् । विशाम् । पतिः । एकऽराट् । त्वम् । वि । राज । सर्वाः । त्वा । राजन् । प्रऽदिशः । ह्वयन्तु । उपऽसद्यः । नमस्यः । भव । इह ॥ १ ॥

हे राजन् त्वा त्वां राष्ट्रम् शत्रुभिराक्रान्तं स्वकीयं राज्यम् आ गन् पुनरागमत्। गमेर्लुङि 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक्। 'मो नो धातोः' (पा ८,२,६४) इति नत्वम्। ततस्त्वं वर्चसा बलेन सह उदिहि उदितः प्रख्यातो भव। इणो लोट्। अनन्तरं [4]प्राक् [5]पूर्वं विशाम्[6] प्रजानां सर्वासां पतिः पालकः सन् एकराट् निःसपत्नो मुख्यो राजा भूत्वा त्वं वि राज विशेषेण दीप्यस्व। एकराडिति। एकशब्दोपपदाद् राजतेः 'सत्सूद्विष°' (पा ३,२,६१) इति क्विप्। [7]'व्रश्च°' (पा ८,२,३६) इत्यादिना[7] षत्वम्। जश्त्वचर्त्वे। हे राजन् त्वा त्वां सर्वाः प्रदिशः प्रकृष्टा दिशः प्राच्याद्याः तदभिमानिन्यो देवताः तत्रस्था जना वा ह्वयन्तु स्वामित्वेन अनुजानन्तु। इह अस्मिन् स्वकीये राष्ट्रे उपसद्यः सर्वैरुपसदनीयः सेव्यः। व्यत्ययेन यत्। नमस्यः नमस्कार्यश्च भव। 'नमोवरिवश्चित्रङः क्यच्' (पा ३,१,१९) इति क्यच्। तदन्ताद् 'अचो यत्' (पा ३,१,९७) इति कर्मणि यत्। अतोलोपयलोपौ। 'तित् स्वरितम्' (पा ६,१,१८५)। यद्वा नमस्यः नमस्कारार्हः। 'छन्दसि च' (पा ५,१,६७) इति यः। छान्दसम् अन्तस्वरितत्वम्।

त्वां विशो [8]वृणतां [9]राज्याय त्वामिमाः प्रदिशः पञ्च देवीः।
वर्ष्मन् राष्ट्रस्य ककुदि [10]श्रयस्व ततो[10] न उग्रो वि भजा[11] वसूनि ॥२॥

त्वाम् । विशः । वृणताम् । राज्याय । त्वाम् । इमाः । प्रऽदिशः । पञ्च । देवीः ।
वर्ष्मन् । राष्ट्रस्य । ककुदि । श्रयस्व । ततः । नः । उग्रः । वि । भज । वसूनि ॥ २ ॥

---

१. पूर्वसूत्रोक्तानि S', Kd. २. प्रायणीयाम् S', Kd. ३. प्राग् पै ३,१,१. ४. पति° Bh. ५. तु. टि ३; वैतु.मंपा.द्र. ६. पूर्वमिवशां S', Kd. ७. व्रश्चादिना S', Kd. ८. वृषताम् P', M, W. ९. वृणतां राज्या° Sm, K, Km, V, O, Op; राज्याय WI. १०. श्रयस्वातो पै ३,१,२. ११. भजासि पै.

हे राजन् त्वां विशः प्रजा राज्याय। राज्ञो भावः कर्म वा राज्यम्। 'पत्यन्तपुरोहितादिभ्यो यक्' (पा ५,१,१२८) इत्यत्र पुरोहितादिषु 'राजाऽसे' इति पाठाद् यक्[१]। राजभावाय राजकर्मणे वा वृणताम् संभजताम्। तथा त्वाम् इमाः परिदृश्यमानाः प्रदिशः प्राच्याद्याः पञ्च मध्यदिशा सह पञ्चसंख्याका देवीः देव्यो द्योतमानाः। वृणताम् इति संबन्धः। ततः राष्ट्रस्य वर्ष्मन् वर्ष्मणि शरीरे। सप्तम्या लुक्। 'न ङिसंबुद्ध्योः' (पा ८,२,८) इति नलोपप्रतिषेधः। स्वपालनीयभूशरीर इत्यर्थः। तत्रापि ककुदि ककुदी-[२]वोन्नते स्थाने प्रशस्ते वा सिंहासने श्रयस्व आस्स्व। ततः उपवेशानन्तरम् उग्रः उद्गूर्णबलः शत्रुभिरनभिभाव्यः सन् वसूनि धनानि नः अस्माकं सेवकानां वि भज यथायोग्यं प्रयच्छ। 'द्व्यचोऽतस्तिङः' (पा ६,३,१३५) इति सांहितिको दीर्घः।

अच्छ॑ त्वा यन्तु [३]ह॒विनः॑ सजा॒ता[३] अ॒ग्निर्दू॒तो [४]अ॑जि॒रः सं च॑रातै[४]।

जा॒याः पु॒त्राः सु॒मन॑सो भवन्तु ब॒हुं ब॒लिं प्रति॑ पश्यासा उ॒ग्रः ॥ ३ ॥

अच्छ॑। त्वा॒। य॒न्तु॒। ह॒विनः॑। स॒ऽजा॒ताः। अ॒ग्निः। दू॒तः। अ॒जि॒रः। सम्। च॒रा॒तै॒।

जा॒याः। पु॒त्राः। सु॒ऽमन॑सः। भ॒व॒न्तु॒। ब॒हुम्। ब॒लिम्। प्रति॑। प॒श्या॒सै॒। उ॒ग्रः ॥ ३ ॥

हे राजन् त्वा त्वां सजाताः समानजन्मानः अन्ये राजानो हविनः। हवम् आह्वानम् आज्ञारूपम् एषाम् अस्तीति हविनः तादृशाः सन्तः अच्छ इत्याभिमुख्ये यन्तु अभिगच्छन्तु। सर्वे राजानस्त्वदाज्ञावशवर्तिनो[५] भवन्तु इत्यर्थः। तथा अजिरः[५] त्वया प्रेरितः गमनशीलो वा दूतस्त्वदीयो भटः अग्निः। लुप्तोपमम् एतत्। अग्निरिव अप्रधृष्यः सं चरातै संचरतु। संपूर्वाच्चरतेर्लेटि आडागमः। 'वैतोऽन्यत्र' (पा ३,४,९६) इति ऐकारः। अजिर इति। अज गतिक्षेपणयोः इत्यस्मात् 'अजिरशिशिरशिथिल' (पाउ १,५३) इत्यादिना किरजन्तो निपातितः। अपि च जायाः भार्याः पुत्राश्च तदुपलक्षिताः सर्वे बान्धवाः सुमनसः पुनःस्वराष्ट्रप्राप्त्या सौमनस्ययुक्ता भवन्तु। 'सोर्मनसी अलोमोषसी' (पा ६,२,११७) इत्युत्तरपदाद्युदात्तत्वम्। उग्रः उद्गूर्णबलस्त्वं बहुम् अधिकं बहुविधं वा बलिम् उपायनं करं वा प्रति पश्यासै प्रतिमुखम् आगतं पश्य। प्रतिपूर्वाद् दृशोर्लेटि व्यत्ययेन आत्मनेपदम्। आडैत्वे पूर्ववत्।

अ॒श्विना॑ त्वाग्रे॑ मि॒त्रावरु॑णो॒भा विश्वे॑ दे॒वा म॒रुत॑स्त्वा ह्वयन्तु।

अधा[१] मनो॑ वसु॒देया॑य कृणुष्व[७] ततो॑ न उ॒ग्रो वि भ॑जा वसू॑नि ॥ ४ ॥

अ॒श्विना॑। त्वा॒। अग्रे॑। मि॒त्रावरु॑णा। उ॒भा। विश्वे॑। दे॒वाः[८]। म॒रुतः॑। त्वा॒। ह्व॒य॒न्तु॒।

अध॑। मनः॑। व॒सु॒ऽदेया॑य। कृ॒णु॒ष्व॒। ततः॑। नः॒। उ॒ग्रः। वि। भ॒ज॒। वसू॑नि ॥ ४ ॥

१. वैतु. मंपा. द्र. २. ककुद्वो S', Kd. ३. भुवनस्य जाता पै ३,१.३. ४. °तो ऽवचरसे दधाति पै. ५. प्रान्तवर्तिलेखः S', तदनुगामि Kd. स्थाने रिक्तन् पाठभङ्गं सूचयति इति शंपा. ६. अथा ऋ १,५४,६. ७. कृष्व ऋ. ८. दे॒वाः P², P.

हे राजन् त्वा त्वाम् अग्रे प्रथमम् अश्विना अश्विनौ देवौ उभा उभौ मित्रा-वरुणा मित्रावरुणौ च। ह्वयन्तु इति संबन्धः। तथा त्वा त्वां विश्वे देवाः मरुतश्च ह्वयन्तु राज्यप्रवेशं कारयन्तु। अध अथ राज्यप्रवेशानन्तरम्। 'निपातस्य च' (पा ६,३, १३६) इति सांहितिको दीर्घः। हे राजन् मनः त्वदीयं वसुदेयाय अर्थिभ्यो धन-प्रदानाय कृणुष्व कुरु। कृवि हिंसाकरणयोश्च। व्यत्ययेन आत्मनेपदम्। वसुदेयायेति। 'अचो यत्' (३,१,९७) इति भावे यत्। 'ईद्यति' (पा ६,४,६५) इति ईकारान्तादेशः। 'यतोऽनावः' (पा ६,१,२१३) इत्याद्युदात्तत्वम्। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। ततो नः इत्यादि व्याख्यातम्।

आ प्र द्र॑व[1] पर॒मस्याः॑ परा॒वतः॑ शि॒वे ते॒ द्यावा॑पृथि॒वी उ॒भे स्ता॑म्[2]।
तद॒यं राजा॒ वरु॑ण॒स्तथा॑ह॒ स त्वा॒यम॑ह्व॒त् स उ॒पेद॒मेहि॑[3] ॥ ५ ॥

आ। प्र। द्र॒व॒। प॒र॒मस्याः॑। प॒रा॒ऽवतः॑। शि॒वे इति॑। ते॒। द्यावा॑पृथि॒वी इति॑। उ॒भे इति॑। स्ता॒म्। तत्। अ॒यम्। राजा॑। वरु॑णः। तथा॑। [4]आ॒ह॒। सः। त्वा॒। अ॒यम्। अ॒ह्व॒त्। सः। उप॑। इ॒दम्। आ। इ॒हि॒ ॥ ५ ॥

हे दूरदेशस्थित राजन् परावतः। दूरनामैतत्। परमस्याः परावतः अत्यन्त-दूरदेशात् आ प्र द्रव स्वराष्ट्राभिमुखं शीघ्रम् आगच्छ। परमस्या इति। व्यत्ययेन स्याडागमः। परावत इति। 'उपसर्गाच्छन्दसि धात्वर्थे' (पा ५,१,११८) इति वतिः। अत्र अर्थग्रहणसामर्थ्यात् लिङ्गसंख्यायोगः समर्थितः। स्वराष्ट्रं प्रविशतः ते तव उभे द्यावापृथिवी द्यावापृथिव्यौ शिवे मङ्गलकारिण्यौ स्ताम् भवताम्। अस्तेर्लोटि तसस्ताम्। 'श्नसोरल्लोपः' (पा ६,४,१११) इति अकारलोपः। तत् तस्मिन् [5]त्वदागमनविषये अयं वरुणो राजा तथा यथा प्रागुक्तं तथा तेनैव प्रकारेण आह ब्रूते सोऽयम् उक्तो[6] वरुणस्त्वा त्वाम् [7]अह्वत् आह्वयति। ह्वयतेश्छान्दसे लुङि 'लिपिसिचिह्वश्च' (पा ३,१,५३) इति अङ्। 'आतो लोप इटि च' (पा ६,४,७२) इति आकारलोपः। स वरुणेनाहूतस्त्वम् इदम् स्वराष्ट्रम् उपेहि उपागच्छ।

इन्द्रे॑न्द्र मनु॒ष्या॒३ः॑ परे॑हि॒ सं ह्यज्ञा॑स्था॒ वरु॑णैः[8] संविदा॒नः।
स त्वा॒यम॑ह्व॒त् स्वे स॒धस्थे॒ स दे॒वान् य॑क्ष॒त् स उ॑ कल्पया॒द् विशः॑ ॥ ६ ॥

इन्द्र॑ऽइन्द्र। म॒नु॒ष्याः॑। परा॑। इ॒हि॒। सम्। हि। अज्ञा॑स्थाः। वरु॑णैः। सम्ऽवि॒दा॒नः। सः। त्वा॒। अ॒यम्। अ॒ह्व॒त्। स्वे। स॒धऽस्थे॑। सः। दे॒वान्। य॒क्ष॒त्। सः। ऊँ इति॑। क॒ल्प॒या॒त्। विशः॑ ॥ ६ ॥

१. प्रेहि मै २,२,११. २. बभूताम् पै ३,१,५. ३. एनमेहि पै. ४. अह P[2],P,J,K. ५. तदागम° S', Kd. ६. उक्तो S', Kd. ७. वैतु. भंपा. द्र. ८. प्रेहि पै ३,१,६. ९. वरुणेन पै.

इन्द्रेन्द्र। आदरार्थं पुनर्वचनम्। हे इन्द्र परमैश्वर्ययुक्त मनुष्याः मनुष्यान् अस्मान्। शसो नत्वाभावश्छान्दसः। यद्वा मनोरपत्यभूताः प्रजाः प्रति परेहि आगच्छ। हि यस्मात् कारणात् हे इन्द्र त्वं वरुणेन संविदानः ऐकमत्यं प्राप्तः। पूजायां बहुवचनम्। सम् अज्ञास्थाः एतदाह्वानविषये समानज्ञानवान् असि। तस्माद् आगच्छेति संबन्धः। ज्ञा अवबोधने। अस्मात् लुङि 'संप्रतिभ्यामनाध्याने' (पा १,३,४६) इत्यात्मनेपदम्। सोऽयं वरुणेन ऐकमत्यं प्राप्त इन्द्रः हे राजन् त्वा त्वाम् अह्वत् आह्वयति। ततः स्वराष्ट्रं प्रविशेति शेषः। प्रविश्य च स्वे स्वकीये सधस्थे सहस्थाने स्वराष्ट्रे। सहशब्दोपपदात् तिष्ठतेरधिकरणे कः। 'सध मादस्थयोश्छन्दसि' (पा ६,३,९६) इति सहस्य सधादेशः। तत्र वर्तमानः स राजा देवान् इन्द्रादीन् यक्षत् यजतु। यजेर्लेटि अडागमः। 'सिब्बहुलम् लेटि' (पा ३,१,३४) इति सिप्। स उ स एव राजा विशः प्रजाः कल्पयात् स्वस्वव्यापारेषु कल्पयतु नियुङ्क्ताम्। कल्पयतेर्लेटि आडागमः।

पथ्या॑ रे॒वती॑र्बहु॒धा विरू॑पाः स॒र्वाः स॒ङ्गत्य॒ वरी॑यस्ते अक्रन्।
तास्त्वा॒ सर्वाः॑ संविदा॒ना॑[1] ह्वयन्तु दश॒मीमु॒ग्रः सु॒मना॑ व॒शेह[2] ॥ ७ ॥

प॒थ्याः॑। रे॒वतीः॑। ब॒हु॒ऽधा। वि॒ऽरू॑पाः। स॒र्वाः॑। स॒म्ऽगत्य॑। वरी॑यः। ते॒। अ॒क्र॒न्। ताः। त्वा॒। सर्वाः॑। स॒म्ऽवि॒दा॒नाः। ह्व॒य॒न्तु॒। द॒श॒मीम्। उ॒ग्रः। सु॒ऽमनाः॑। व॒श॒[3]। इ॒ह ॥७॥

रेवतीः रैमत्यः धनवत्यः। 'छन्दसीरः' (पा ८,२,१५) इति मतुपो वत्वम्। 'रयेर्मतौ बहुलम्' (पावा ६,१,३४) इति संप्रसारणम्। पूर्वरूपत्वम्[4]। गुणः। 'रेशब्दान्मतुप उदात्तत्वं वक्तव्यम्' (पावा ६,१,१७३) इति मतुप उदात्तत्वम्। 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। पथ्याः पथोऽनपेताः मार्गहितकारिण्यः एतत्संज्ञा देवताः। 'धर्मपथ्यर्थन्यायाद् अनपेते' (पा ४,४,९२) इति यत्। यद्वा पथ्याः पथि साधवः। छान्दसो यत्। रेवतीः आपः। तदभिमानिन्यो देवताः 'आपो वै रेवतीः' (तैब्रा ३,२,८,२) इति श्रुतेः। ता विशेष्यन्ते — बहुधा बहुप्रकारं वर्तमाना विरूपाः विविधाकाराः एवंविधा याः सन्ति ताः सर्वाः संगत्य संभूय हे राजन् ते तव वरीयः उरुतरं श्रेयः अक्रन् कुर्वन्तु। वरीय इति। उरुशब्दाद् ईयसुनि 'प्रियस्थिर' (पा ६.४,१५७) इत्यादिना वरादेशः। अक्रन्निति। करोतेर्लुङि 'मन्त्रे घस॰' (पा २,४,८०) इति च्लेर्लुक्। हे राजन् ताः सर्वा देवताः संविदानाः ऐकमत्यं प्राप्ताः सत्यः त्वा ह्वयन्तु त्वां राष्ट्रप्रवेशार्थम् आह्वयन्तु। ताभिराहूतः इह अस्मिन् राष्ट्रे उग्रः उद्गूर्णबलस्त्वं सुमनाः संतुष्टमनाः सन् दशमीम् नवतिसंवत्सरोर्ध्वभाविनीं वर्षदशात्मिकां चरमावस्थाम्। अत्यन्तसंयोगे द्वितीया। तावत्पर्यन्तं वस[5] निवस[6]। जरापर्यन्तं स्वकीयं राज्यं निष्कण्टकं भुङ्क्ष्वेत्यर्थः।

इति तृतीयकाण्डे प्रथमेनुवाके चतुर्थं सूक्तम्।

---

१. नाः P[3],M,W,E,I,H. २. वसेह, वशेह इत्यपि च V, K. ३. वस K. ४. परपूर्वत्वम् शंपा. ५. तु. टि २; वैतु, मंपा. इ. ६. °वास S', Kd.

"आयमगन् पर्णमणिः" इत्यनेन सूक्तेन तेजोबलायुर्धनादिपुष्टये पलाशवृक्षमणिं वासितं कृत्वा संपात्य अभिमन्त्र्य बध्नीयात् । तथा च सूत्रम्— 'आयमगन्' (अ ३,५), 'अयं प्रतिसरः' (अ ८,५), 'अयं मे वरणः' (अ १०,३), 'अरातीयोः' (अ १०,६) इति मन्त्रोक्तान् वासितान् बध्नाति' (कौसू १९,२२) इति । उक्तो वासितशब्दार्थः[1] ।

तथा 'आङ्गिरसीं संपत्कामस्य (शाक १७,२) इति विहितायां महाशान्तौ पलाशमणिबन्धनेपि एतत् सूक्तम् । उक्तं शान्तिकल्पे — 'आयमगन्' इति मन्त्रोक्तम् आङ्गिरस्याम्' (शाक १९,३) इति ।

आयमगन् पर्णमणिर्बली बलेन प्रमृणन्त्सपत्नान् ।
ओजो देवानां पय ओषधीनां वर्चसा मा जिन्वत्वप्रयावन् ॥ १ ॥

आ । अयम् । अगन् । पर्णऽमणिः । बली । बलेन । प्रऽमृणन् । सऽपत्नान् ।
ओजः । देवानाम् । पयः । ओषधीनाम् । वर्चसा । मा । जिन्वतु । [2]अप्रऽयावन् ॥ १ ॥

अयम् अस्मदादिभिः संपदर्थं ध्रियमाणः पर्णमणिः । पर्णः पलाशवृक्षः सोमपर्णोद्भूतत्वात् 'सोयं पर्णः सोमपर्णाद्धि जातः' (तैब्रा १,२,१,६) इति श्रुतेः । आगन् आगच्छतु । किंविधः । बली अतिशयितबलवान् । अभिमतफलं दातुं समर्थ इत्यर्थः । अत एव बलेन स्वकीयेन सामर्थ्यातिशयेन सपत्नान् शत्रून् प्रमृणन् प्रकर्षेण हिंसन् । आगच्छतु इति संबन्धः । पुनस्तमेव विशिनष्टि — देवानाम् इन्द्रादीनाम् ओजः बलरूपः तथा ओषधीनाम् सर्वासां पयः सारभूतः । ओषधिसारसोमजन्यत्वात् । एवंलक्षणः पर्णमणिः अप्रयावन् अप्रयावा मां विहाय अनपगन्ता सन् मा मां वर्चसा तेजसा जिन्वतु प्रीणयतु । तेजस्विनं करोतु इत्यर्थः । हिवि दिवि धिवि जिवि प्रीणनार्थाः । इदित्त्वाद् नुम् । अप्रयावन्निति । यातेर्वनिप् । सुपां सुलुक्" (पा ७,१,३९) इति सोर्लुक् नलोपाभावश्छान्दसः । यद्वा हे अप्रयावन् अप्रयातः सर्वदा धार्यमाण । 'न ङिसंबुद्ध्योः' (पा ८,२,८) इति नलोपाभावः । हे मणे मा मां तेजसा जिन्वतु । पुरुषव्यत्ययः । जिन्वेत्यर्थः ।

मयि क्षत्रं[3] पर्णमणे मयि [4]धारयताद् रयिम्[5] ।
अहं राष्ट्रस्याभीवर्गे[6] निजो[7] भूयासमुत्तमः[8] ॥ २ ॥

मयि । क्षत्रम् । पर्णऽमणे । मयि । धारयतात् । रयिम् ।
अहम् । राष्ट्रस्य । अभिऽवर्गे । निऽजः । भूयासम् । उत्ऽतमः ॥ २ ॥

हे पर्णमणे [8]पलाशनिर्मितमणे क्षत्रम् । बलनामैतत् । बलं क्षत्रियजातिं[9] वा मयि मणिधारके धारयतात् धारय स्थापय । तथा रयिम् धनं च मयि धारयतात् । धारयतेर्हे-

१. साभ् १,६ द्र. २. वैप१,३११ g द्र. ३. राष्ट्रं पै. ३,१३,२. ४. धारय राष्ट्रम् पै. ५. °वर्गे Bp². ६. ? मजा पै. मूको. [>युजो Wh, यथा BKA. ]) वैप १,१८००j अपि द्र. ७. उत्तरः पै. ८. पालाश° S', Kd. ९. जातिर्वा S', Kd.

स्तातङ् आदेशः। अहं च त्वद्धारणाद् राष्ट्रस्य राज्यस्य अभीवर्गे आवर्जने स्वाधीनीकरणे निजः अनन्यसहायः उत्तमः उत्कृष्टतमो भूयासम्। स्वबाहुबलेनैव सर्वं राष्ट्रं वशीकृत्य सर्वश्रेष्ठो भवानीत्यर्थः। अभीवर्गे इति। अभिपूर्वाद् वृजेर्भावे घञ्। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा ६,३,१२२) इति दीर्घः। उत्तम इति। 'उत्तमशश्वत्तमौ सर्वत्र' (पाग ६,१,१६०) इति उञ्छादिषु पाठाद् अन्तोदात्तः।

यं निदधुर्वनस्पतौ गुह्यं देवाः प्रियं मणिम्[१]।
तमस्मभ्यं सहायुषा देवा ददतु भर्तवे ॥ ३ ॥

यम्। निऽदधुः। वनस्पतौ। गुह्यम्। देवाः। प्रियम्। मणिम्।
तम्। अस्मभ्यम्। सह। आयुषा। देवाः। ददतु। भर्तवे ॥ ३ ॥

देवाः इन्द्राद्या यम् अभीष्टफलवत्त्वेन प्रसिद्धम् अत एव प्रियम् प्रियंकरं गुह्यम् गोपनीयं मणिं वनस्पतौ पलाशवृक्षे निदधुः निहितवन्तः। वनानां पतिर्वनस्पतिः। पारस्करादित्वात् सुट्। 'उभे वनस्पत्यादिषु युगपत्' (पा ६,२,१४०) इत्युभयपदप्रकृतिस्वरत्वम्। गुह्यम् इति। गुहू संवरणे इत्यस्मात् 'शंसिगुहिदुहिभ्यो वेति वक्तव्यम्' (पावा ३,१,१०९) इति क्यप्। तम् तथाविधं मणिम् अस्मभ्यं भर्तवे भरणाय। तुमर्थे तवेन् प्रत्ययः। आयुषा सह देवाः ददतु प्रयच्छन्तु। डुदाञ् दाने इत्यस्मात् 'अदभ्यस्तात्' (पा ७,१,४) इति झस्य अदादेशः।

सोमस्य पर्णः सह उग्रमागन्निन्द्रेण दत्तो वरुणेन शिष्टः।
तं प्रियासं बहु रोचमानो दीर्घायुत्वाय शतशारदाय ॥ ४ ॥

सोमस्य। पर्णः। सहः। उग्रम्। आ। अगन्। इन्द्रेण। दत्तः। वरुणेन। शिष्टः।
तम्। प्रियासम्। बहु। रोचमानः। दीर्घायुऽत्वाय। शतऽशारदाय ॥ ४ ॥

सोमस्य द्युलोकस्थायाः सोमलतायाः पर्णः आहरणसमये भूमौ पतित उद्भूतः। श्रूयते हि— 'तृतीयस्याम् इतो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णम् अच्छिद्यत। तत् पर्णोऽभवत्। तत् पर्णस्य पर्णत्वम्' (तै ३,५,७,१) इति। उग्रम् उद्गूर्णं प्रभूतं सहः पराभिभवनक्षमं बलम् उक्तलक्षणबलरूपः एवंलक्षणो मणिः आगन् माम् आगच्छतु। कथंभूतः। इन्द्रेण देवेन दत्तः वरुणेन शिष्टः अनुशिष्टः अनुज्ञातः। तम् उक्तलक्षणं पर्णमणिम् बहु बहुविधं रोचमानः रोचमानम्। द्वितीयायाः 'सुपां सुलुक्॰' (पा ७,१,३९) इति सुः। मणिं प्रियासम् भ्रियासं धारयेयम्। किमर्थम्। शतशारदाय शतसंवत्सरपरिमिताय दीर्घायुत्वाय चिरकालजीवनाय। दीर्घायुत्वायेति

१. मावर्जने S', Kd.　२. वाजं पै ३,१३,३; वाजिं पै. [मूको.]　३. निधिम् पै.　४. तं म इन्द्रस् पै. ३,१३,४.　५. मणिं पै.　६. ददातु पै.　७. सत्यः पै ३,१३,४ [मूको.].　८. अहं बिभर्मि पै.

पदम् 'दीर्घायुत्वाय बृहते रणाय' ( अ २,४,१ ) इत्यत्र व्याख्यातम्। शरदेव शारदम्। प्रज्ञादेराकृतिगणत्वात् स्वार्थिकः अण्। यद्वा शरदः ऋतोः संबन्धी शारदः संवत्सरः। 'तस्येदम्' ( पा ४,३,१२० ) इति अण्। उभयत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्।

आ मा॑रुक्षत् प॒र्णम॒णिर्म॒ह्या अ॑रि॒ष्टता॑तये ।
[1]यथा॒हमु॑त्त॒रोसा॑न्यर्य॒म्ण उ॒त सं॒विदः॑ ॥ ५ ॥

आ । मा॒ । अ॒रु॒क्ष॒त् । प॒र्णऽम॒णिः । म॒ह्यै । अ॒रि॒ष्टऽता॑तये ।
यथा॑ । अ॒हम् । उ॒त्त॒रः । असा॑नि । अ॒र्य॒म्णः । उ॒त । स॒म्ऽवि॒दः॑ ॥ ५ ॥

अयं पर्णमणिः मह्यै महत्यै अरिष्टतातये। रिष्टं हिंसनम् तदभावः अरिष्टम्। तत्क्रियायै। 'शिवशमरिष्टस्य करे' ( पा ४,४,१४३ ) इति अरिष्टशब्दात् करोत्यर्थे तातिल् प्रत्ययः। 'लिति' ( पा ६,१,१९३ ) इति प्रत्ययात् पूर्वस्य उदात्तत्वम्। मा माम् आरुक्षत् आरोहतु मयि चिरं वर्तताम्। रुहेश्छान्दसे लुङि 'शल इगुपधादनिटः क्सः' ( पा ३,१,४५ ) इति क्सप्रत्ययः। अर्यम्णः। अरीन् यमयतीति अर्यमा अधिकबलः पुरुप्रदाता च। अर्यमा अधिकधनः। 'यः खलु वै ददाति सोऽर्यमा' ( तै २,३,४,१ ) इति श्रुतेः। तस्माद् अधिकाद् उत अपि च संविदः समानज्ञानात्। समबलाद् इत्यर्थः। तस्माद् यथा येन प्रकारेण अहम् मणिधारकः उत्तरः उत्कृष्टतरः असानि भवानि। तथा आरुक्षत् इति संबन्धः। अस्तेर्लोटि 'आडुत्तमस्य पिच्च' ( पा ३,४,९२ ) इति आडागमः। अर्यम्ण इति। 'अल्लोपोऽनः' ( पा ६,४,१३४ ) इत्यकारलोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्।

ये धीवा॑नो[2] रथका॒राः[3] क॒र्मा॑रा ये म॑नी॒षिणः॑ ।
उ॒प॒स्तीन् प॑र्ण॒ मह्यं॒ त्वं॒ सर्वा॑न् कृण्व॒भितो॒ जना॑न् ॥ ६ ॥

ये । धीवा॑नः । र॒थऽका॒राः । क॒र्मा॑राः । ये । म॒नी॒षिणः॑ ।
उ॒प॒ऽस्तीन् । प॒र्ण॒ । मह्य॑म् । त्वम् । सर्वा॑न् । कृ॒णु॒ । अ॒भितः॑ । जना॑न् ॥ ६ ॥

ये धीवानः धीवराः मात्स्यिकाः[4]। दधातेः कनिपि 'घुमास्था' ( पा ६,४,६६ ) इत्यादिना ईत्वम्। ये च रथकाराः रथनिर्मातारो जातिविशेषाः। उक्तं हि—

'रथकारस्तु माहिष्यात् करण्यां यस्य संभवः' इत्यमरः ( २,१०,४ )।

वैश्यायां क्षत्रियाद् [5]उत्पन्नो माहिष्यः[5]। शूद्रायां वैश्याद् उत्पन्ना करणी।

• १. °मुत्तरो° RW. २. द्रष्टव्यो पै ३,१३,७. ३. रथकारा कर्मा° B,Bp. ४. मात्सिकाः S', Kd. ५. उत्पन्ना माहिषी S', Kd.

ये कर्मारा: अयस्कारप्रभृतयः ये च मनीषिणः मनस ईशितारो बुद्धिविशेषोपजीविनः। हे पर्ण तद्विकार मणे त्वम्। विकारे प्रकृतिशब्दः। सर्वान् उक्तोपलक्षितान् जनान् मह्यम्। षष्ठ्यर्थे चतुर्थी। मम अभितः सर्वतः उपस्तीन् सेवार्थं समीपे विद्यमानान् उपासीनान् वा कृणु कुरु। उपपूर्वाद् अस्तेः कर्तरि क्विप्। 'छन्दस्युभयथा' (पा ३,४,११७) इति सार्वधातुकत्वाद् भूभावाभावः अल्लोपश्च। आसेर्वा आदिलोपश्छान्दसः।

ये राजा॑नो राज॒कृत॑: सू॒ता ग्रा॑म॒ण्य॑ऽ॒श्च ये।
उ॒प॒स्तीन् प॑र्ण॒ मह्यं॒ त्वं सर्वा॑न् कृ॒ण्व॒भितो॒ जना॑न् ॥ ७ ॥

ये। राजा॑नः। रा॒ज॒ऽकृत॑:। सू॒ताः। ग्रा॒म॒ऽन्य॑:[1]। च॒। ये।
उ॒प॒ऽस्तीन्। प॒र्ण॒। मह्य॑म्। त्वम्। सर्वा॑न्। कृ॒णु॒। अ॒भित॑:। जना॑न् ॥ ७ ॥

ये राजानः अन्यदेशाधिपा राजकृतः राजानं कुर्वन्ति राज्ये अभिषिञ्चन्तीति राजकृतः सचिवाः। [2]सूताः। ब्राह्मण्यां क्षत्रियाद् उत्पन्नः सूतः। तज्जातीयाः सारथ्योपजीविनो वा। ये च ग्रामण्यः ग्रामस्य नेतारः। 'सत्सूद्विष०' (पा ३,२,६१) इति क्विप्। 'एरनेकाचः०' (पा ६,४,८२) इति यण्। उपस्तीन् इत्यादि पूर्ववद् योज्यम्।

प॒र्णो॑ऽसि तनू॒पान॑: सयो॑नि॒र्वी॒रो वी॒रेण॒ मया॑।
सं॒व॒त्स॒रस्य॒ तेज॑सा तेन॑ बध्नामि त्वा मणे ॥ ८ ॥

प॒र्णः। अ॒सि॒। त॒नू॒ऽपान॑:। स॒ऽयो॑निः। वी॒रः। वी॒रेण॑। मया॑।
स॒म्ऽव॒त्स॒रस्य॑। तेज॑सा। तेन॑। ब॒ध्ना॒मि॒। त्वा॒। म॒णे॒ ॥ ८ ॥

हे मणे त्वं पर्णोऽसि [3]अमृतमयस्य सोमस्य पर्णविकारोसि। अत एव तनूपानः तन्वाः[4] शरीरस्य पाता रक्षितासि। वीरः वीरस्त्वं वीरेण वीर्यवता मया सयोनिः [5]वीर्यवत्त्वकारणेन समानजन्मासि। तेन उक्तेन कारणेन संवत्सरस्य एतदुपलक्षितकालभेदनिर्वाहकस्य आदित्यस्य तेजसा युक्तं त्वा त्वां बध्नामि धारयामि त्वदीयतेजोऽवाप्तये धारयामि।

इति तृतीयकाण्डे प्रथमाऽनुवाके पञ्चमं सूक्तम्।

इति प्रथमोऽनुवाकः।

द्वितीयेऽनुवाके पञ्च सूक्तानि। तत्र 'पुमान् पुंसः' इति प्रथमं सूक्तम्। तेन अभिचारकर्मणि खदिरोत्थाश्वत्थमणिं संपात्य अभिमन्त्र्य बध्नीयात्।

तथा अनेन सूक्तेन पाशान् इङ्गिडालंकृतान् संपात्य अभिमन्त्र्य शत्रुमर्मणि निखनेत्।

१. Kp, J यनि.; °ऽण्य१: > °ऽन्य१: Bp², °ऽन्य१: P, ग्राम॒ण्य१: (above: ण्य) शंपा. २. कृताः S', Kd. ३. अमृत° S', Kd. ४. तन्वः S', Kd. ५ °वत्त्वाकारेण S', Kd.

तथैव अनेन सूक्तेन पूर्ववत् पाशान् अभिमन्त्र्य 'तेधराव्ः' (७) इत्यृचा नदी-प्रवाहे प्रक्षिपेत् ।

एवमेव पूर्ववद् अभिमन्त्रितान् पाशान् 'प्रैणान्नुदे' (८) इति ऋचा अश्वत्थशाखया प्रणुदेत् ।

[सूत्रितं हि— " 'पुमान् पुंस इति मन्त्रोक्तम् अभिहुतालंकृतं बध्नाति । यावन्तः सपत्नास्तावन्तः[1]' पाशान् इङ्गिडालंकृतान् संपातवतोऽनूक्तान् ससूत्रांश्चम्वा मर्मणि निखनति । नावि 'प्रैणान्' (८) 'नुदस्व काम' (अ ९,२,४) इति मन्त्रोक्तं शाखया प्रणुदति । 'तेधराञ्चः' इति प्रप्लावयति" (कौसू ४८,३-६) इति । ]

तथा 'अभिचरतः अभिचर्यमाणस्य च' (शाक १७,१) इति विहितायां महाशान्तौ मणिबन्धनेऽपि एतत् सूक्तम् । तद् उक्तं शान्तिकल्पे— " 'आङ्गिरस्यां' पुमान् पुंसः' इति मन्त्रोक्तम् अभिचरतोऽभिचर्यमाणस्य च" ( शाक १९,३ ) इति ।

पुमा॑न् पुं॒सः परि॑जातो॒ऽश्व॒त्थः ख॑दि॒राद॑धि ।
स ह॑न्तु॒ शत्रू॑न् माम॒कान् [2]यान॒हं द्वे॒ष्मि॒ ये च॒ माम् ॥ १ ॥

पुमा॑न् । पुं॒सः । परि॑ऽजातः । अ॒श्व॒त्थः । ख॒दि॒रात् । अधि॑ ।
सः । ह॒न्तु॒ । शत्रू॑न् । मा॒म॒कान् । यान् । अ॒हम् । द्वेष्मि॑ । ये । च॒ । माम् ॥ १ ॥

पुंमान् पुंस्त्वोपेतो वीर्यातिशययुक्तो वृक्षः पुंसः तादृशाद् वृक्षात् परिजातः प्रादुर्भूतः । एतदेव विशिनष्टि— अश्वत्थः अश्वरूपः सन् अग्निस्तिष्ठत्यत्रेति अश्वत्थः । श्रूयते हि— 'अग्निर्देवेभ्यो निलायत[3] । अश्वो रूपं कृत्वा सोऽश्वत्थे संवत्सरम् अतिष्ठत् । तद् अश्वत्थस्याश्वत्थत्वम्' ( तैब्रा १,१,३,९ ) इति । अस्मादेव अग्निसंबन्धाद् अश्वत्थस्य शत्रुहननसमर्थत्वेन पुंस्त्वव्यपदेशः । खदिराद् अधि । अधिः पञ्चम्यर्थानुवादी खदिर-वृक्षाद् उद्भूतः । इतरवृक्षेभ्यः खदिरस्य अतिशयितसारवत्त्वेन पुंस्त्वनिर्देशः । तथात्वं च गायत्रीसारजत्वात् । श्रूयते हि— 'वषट्कारो वै [4]गायत्रियै शिरोऽच्छिनत् । तस्यै रसः परापतत् । स पृथिवीं प्राविशत् । स खदिरोऽभवत्' ( तै ३,५,७,१ ) इति । स खदिरोत्पन्नोऽश्वत्थो मणिरूपेण धार्यमाणः मामकान् मदीयान् शत्रून् शातयितॄन् हन्तु हिनस्तु । तानेव शत्रून् विशिनष्टि— अहं यान् शत्रून् द्वेष्मि अपकारकारिणो द्वेष्मि ये च शत्रवो माम् । द्विषन्तीति विपरिणामेन संबन्धः । तान् उभयविधान् हन्तु इति संबन्धः ।

तान॑श्वत्थ॒ [5]निः [6]शृ॑णीहि॒ शत्रू॑न् [7]वैबाध॒दोध॑तः ।
इन्द्रे॑ण वृत्र॒घ्ना मे॒दी मि॒त्रेण॒ वरु॑णेन च ॥ २ ॥

१. तावत: Bl. २. यांश्चाहं पै ३,३,१. ३. निरायत शंपा. ४. गायत्र्यै शंपा.
५. निश् °P³,M,W,E² ६. सृणीहि B. ७. मयि बाध पै ३,३,२.

तान् । अश्वत्थ । निः । शृणीहि । शत्रून् । वैबाधऽदोधतः ।
इन्द्रेण । वृत्रऽघ्ना । मेदी । मित्रेण । वरुणेन । च ॥ २ ॥

हे [1]वैबाध । विविधं बाधते कण्टकैरिति विबाधः खदिरः । तत्रोत्पन्नो वैबाधः । 'तत्र जातः' (पा ४,३,२५) इत्यण् । तादृश अश्वत्थ तद्विकारमणे । विकारे प्रकृतिशब्दः । [1]दोधतः भृशं कम्पयितॄन् । धूञो यङ्लुगन्तात् शतरि अन्त्यलोपश्छान्दसः । 'अभ्यस्तानामादिः' (पा ६,१,१८९) इत्याद्युदात्तत्वम् । ईदृशान् तान् उक्तान् विविधान् शत्रून् निः शृणीहि निःशेषं घातय । शॄ हिंसायाम् क्र्यादिः । प्वादित्वात् ह्रस्वत्वम् । मणेः शत्रुहननसामर्थ्यं दर्शयति इन्द्रेण इत्यादिना । वृत्रघ्ना वृत्राख्यम् असुरं हतवता । हन्तेः 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (पा ३,२,८७) इति भूते काले क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वे अल्लोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा ६,१,१६१) इति विभक्तेरुदात्तत्वम् । तादृशेन इन्द्रेण मित्रेण वरुणेन च मेदी स्नेही । इन्द्रादिभिः शत्रुहननसामर्थ्यं सारम् आपादितोऽयम् आश्वत्थो मणिरित्यर्थः । ञिमिदा स्नेहे । ग्रहादित्वाद् णिनिः । घञन्ताद् वा मत्वर्थीय इनिः ।

यथाश्वत्थ [2]निरभनोऽन्तर्महत्य[3]र्णवे ।
एवा तान्त्सर्वान्निर्भङ्ग्धि[4] यानहं द्वेष्मि ये च माम् ॥ ३ ॥

यथा । अश्वत्थ । निःऽअभनः[5] । अन्तः । [6]महति । अर्णवे ।
एव । तान् । सर्वान् । निः । भङ्ग्धि[7] । यान् । अहम् । द्वेष्मि । ये । च । माम् ॥ ३ ॥

हे अश्वत्थ मण्युपादानभूत वृक्ष महति विस्तीर्णे अर्णवे अन्तरिक्षे । 'अस्मिन् महत्यर्णवेऽन्तरिक्षे' (तै ४,५,११,१) इति लिङ्गाद् महार्णवः अन्तरिक्षम् । तत्र अन्तः मध्ये अन्तःखदिरकोटरे यथा येन प्रकारेण [1]निरभिनः निर्भिद्य उत्पन्नोऽसि । भिदिर् विदारणे । अस्मात् लङि हल्ङ्यादिना सिपो लोपे 'दश्च' (पा ८,२,७५) इति रुत्वम् । एव एवं तान् वक्ष्यमाणान् उभयविधान् सर्वान् शत्रून् निर्भिन्धि[1] निःशेषेण विदारय । भिदेर्लोटि 'हुझल्भ्यो०' (पा ६,४,१०१) इति हेर्धिरादेशः । 'श्नसोरल्लोपः' (पा ६,४,१११) इत्यकारलोपः । 'झरो झरि सवर्णे' (पा ८,४,६५) इति दकारलोपः । यान् अहम् इत्यादि गतम् ।

यः सहमानश्चरसि सासहान [8]इव ऋषभः[9] ।
तेनाश्वत्थ त्वया वयं सपत्नान्त्सहिषीमहि ॥ ४ ॥

१. वैतु. मंपा. द्र. २. निरभिन्नो K, Bp; भिनत्त्यन्त° पै ३,३,४. ३. °महत्यर्णवे A,D,K,P[3],M,E[2],H. ४. निर्भङ्ग्धि A,B[h],K[m],R,S[m]; निर्भिन्धि D; निर्भिन्द्धि K,V. ५. निःऽअभिनः K. ६. महति P,J, Bp[2]. ७. भङ्ग्धि P,P[2],J ८. चरसि K,V, पै ३,३,५. ९. इवऋषभः Wh., पै.

यः । सहमानः । चरसि[1] । ससहानःऽइव । ऋषभः ।
तेन । अश्वत्थ । त्वया । वयम् । सऽपत्नान् । सहिषीमहि ॥ ४ ॥

यः अश्वत्थः सहमानः परान् अभिभवन् चरति[2] वर्तते । किमिव । सासहानः स्वकीयेन दर्पेण सजातीयान् अन्यान् अत्यर्थम् अभिभवन् ऋषभ इव । सहेर्यङ्लुगन्तात् लटः शानच् । हे अश्वत्थ तेन उक्तलक्षणेन त्वया वयम् त्वद्विकारभूतमणिधारकाः । सपत्नान् शत्रून् सहिषीमहि सहामहै । नाशयाम इत्यर्थः । सहेराशीर्लिङि रूपम् ।

[3]सिनात्वे॑नान् निर्ऋ॑तिर्मृ॒त्योः पाशै॑रमो॒क्यैः[4] ।
अश्व॑त्थ शत्रू॑न् माम॒कान् यान॒हं[5] द्वेष्मि॑ ये च॒ माम् ॥ ५ ॥

सिनातु । एनान् । निःऽऋ॑तिः । मृत्योः । पाशैः । अमोक्यैः ।
अश्वत्थ । शत्रून् । मामकान् । यान् । अहम् । द्वेष्मि । ये । च । माम् ॥ ५ ॥

निर्ऋतिः पापदेवता अमोक्यैः सर्वथा मोक्तुम् अशक्यैः । 'कृत्याश्च', 'शकि लिङ् च' ( पा ३,३,१७१;१७२ ) इति शक्यार्थे मुचेर्ण्यत्प्रत्ययः । 'चजोः कु घिण्ण्यतोः' ( पा ७,३,५२ ) इति कुत्वम् । तथाविधैः मृत्योः पाशैः प्राणापहर्तृभिर्दामभिः एनान् उक्तान् शत्रून् सिनातु बध्नातु । षिञ् बन्धने क्र्यादिः । अश्वत्थ शत्रून् इत्यादि व्याख्यातम् ।

यथा॑श्वत्थ वानस्प॒त्याना॒रोह॑न् कृणु॒षेऽध॑रान् ।
ए॒वा मे॒ शत्रो॑र्मू॒र्धानं॒ विष्व॑ग् भिन्द्धि॒ सह॑स्व च ॥ ६ ॥

यथा । अश्वत्थ । वानस्पत्यान् । आऽरोहन् । कृणुषे । अधरान् ।
एव । मे । शत्रोः । मूर्धानम् । विष्वक् । भिन्द्धि । सहस्व । च ॥ ६ ॥

हे अश्वत्थ यथा त्वं वानस्पत्यान् । अत्र वनस्पतिप्ररोहार्हो देशो वनस्पतिशब्देनोच्यते । तत्र भवा वानस्पत्याः । 'दित्यदित्यादित्य०' ( पा ४,१,८५ ) इति भवार्थे ण्यः । यद्वा समूहार्थे ण्यः । तान् वृक्षान् आरोहन् अधरान् नीचान् कृणुषे करोषि । एव एवं मे मदीयस्य शत्रोर्मूर्धानं शिरो विष्वक् सर्वतो भिन्द्धि विदारय । तथा सहस्व च अभिभव विनाशयेत्यर्थः ।

[6]तेऽध॒राञ्चः॒ प्र प्ल॑वन्तां छि॒न्ना नौरि॑व॒ बन्ध॑नात् ।
न [7]वै॑बा॒धप्र॑णुत्ता॒नां पुन॑रस्ति॒ निव॑र्तनम् ॥ ७ ॥

१. च॑रति K. २. तु. पृ २६७ टि ८ ; वैतु. मंपा, द्र. ३. सिनात्वें° P[3],M,W,E[2]
४. °रविमोक्यैः पै ३,२,६. ५. यांश्चाहं पै. ६. तेष A,R,B[h]. ७. निर्बाध° पै., सायकप्र° ऋ ६,२,१२.

ते । अधराञ्चः । प्र । प्लवन्ताम् । छिन्ना । नौःऽइव । बन्धनात् ।
न । [1]वैबाधऽप्रनुत्तानाम् । पुनः । अस्ति । निऽवर्तनम् ॥ ७ ॥

ते पूर्वोक्ता द्विविधाः शत्रवः अधराञ्चः अधोमुखम् अञ्चन्तो गच्छन्तः प्र प्लवन्ताम् नदीप्रवाहस्य उपर्येव गच्छन्तु । न कदाचित् पारं प्राप्नुवन्तु इत्यर्थः । [2]अधरशब्दोपपदाद् अञ्चतेः क्विन् । प्लवन्ताम् इति । च्युङ् प्लुङ् गतौ । भ्वादिः । तत्र दृष्टान्तः— बन्धनात् । बध्यतेऽस्मिन्निति बन्धनं तीरवृक्षादिकम् बध्नात्यनेन नावम् इति वा बन्धनं रज्जुः । ततः छिन्ना वियुक्ता नौरिव । सा यथा तीरम् अप्राप्ता [3]नदीप्रवाहेण अधो[3] नीयते तद्वत् । अश्वत्थस्य महिमप्रख्यापनार्थं पारप्राप्तिशङ्कां वारयति न इति । वैबाधप्रणुत्तानाम् वैबाधः खदिरोत्पन्नोऽश्वत्थः तेन प्रणुत्तानां प्रणुन्नानाम् अवाङ्मुखं प्रेरितानां शत्रूणां पुनर्निवर्तनम् पुनरागमनं न अस्ति । 'नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्याम्' ( पा ८,२,५६ ) इति विकल्पनाद् निष्ठानत्वाभावः ।

प्रैणा॑न् [4]नु॒दे मन॑सा॒ प्र [5]चि॒त्तेनो॒त ब्रह्म॑णा ।
प्रैणा॑न् वृ॒क्षस्य॒ शाख॑याश्व॒त्थस्य॑ नुदामहे[6] ॥ ८ ॥

प्र । ए॒नान् । नु॒दे । मन॑सा । प्र । चि॒त्तेन॑ । उ॒त । ब्रह्म॑णा ।
प्र । ए॒नान् । वृ॒क्षस्य॑ । शाख॑या । अ॒श्व॒त्थस्य॑ । नु॒दा॒म॒हे॒ ॥ ८ ॥

एनान् प्रागुक्तान् शत्रून् मनसा शत्रुनिरसनविषयज्ञानवता अन्तःकरणेन प्र णुदे स्थानाद् उच्चाटयामि । चित्तेन मन्त्रार्थचिन्तनपरेण मनोवृत्तिविशेषेण प्र णुदे । उत अपि च ब्रह्मणा मन्त्रेण अभिमन्त्रितया अश्वत्थस्य वृक्षस्य शत्रुप्रध्वंसनसाधनस्य शाखया एनान् शत्रून् प्र णुदामहे । नुद प्रेरणे । तुदादिः । स्वरितेत्त्वाद् आत्मनेपदम् ।

इति तृतीयकाण्डे द्वितीयेऽनुवाके प्रथमं सूक्तम् ।

'हरिणस्य' इति सूक्तेन क्षेत्रियव्याधिभैषज्ये हरिणशृङ्गमणेर्बन्धनम्, तच्छृङ्गसहितोदकपायनम्, हरिणचर्मणः शङ्कुच्छिद्रभागं प्रज्वाल्य उदके प्रक्षिप्य तेनोदकेन उषःकाले व्याधितस्यावसेचनम्, यवहोमम्, अभिमन्त्रितभक्तभक्षणं च कुर्यात् । तद् उक्तं संहिताविधौ—" 'हरिणस्य' इति बन्धनपायनाचमनानि[8] शङ्कुधानज्वालेनापेनक्षत्रेऽवसिञ्चति" ( कौसू २७,२९ ) इत्यादि । अपनक्षत्रे उषःकाले इत्यर्थः ।

'कौमारीं व्याधितस्य बालस्य' ( शाक १७,५ ) इति विहितायां कौमार्याख्यायां महाशान्तौ हरिणविषाणाग्रमणिबन्धनेपि एतत् सूक्तम् । तद् उक्तं शान्तिकल्पे— " 'हरिणस्य' इति विषाणाग्रं कौमार्याम्" ( शाक १९,७ ) इति ।

१. वैबाध । प्रऽनुत्तानाम् Op. २. तत्र अधर° S', Kd. ३. °प्रवाहेणाधो S', Kd.
४. नुदामि पै ३,३,८. ५. चित्तैनो° B[h]. ६. नुदामसि पै. ७. °काळे S', Kd.
८. तु. वैप ४,१७९०c ; वैतु. Bl. °चमनशङ्कु°. ९. °धीनज्वा° S' Kd. १०. °नावनक्षत्रे° Bl.

हरिणस्य रघुष्यदोऽधि शीर्षणि भेषजम् ।
स क्षेत्रियं विषाणया विषूचीनमनीनशत् ॥ १ ॥

हरिणस्य । रघुऽस्यदः । अधि । शीर्षणि । भेषजम् ।
सः । क्षेत्रियम् । विऽसानया । विषूचीनम् । अनीनशत् ॥ १ ॥

रघुष्यदः रघु लघु शीघ्रं स्यन्दते गच्छतीति रघुष्यत् । स्यन्देः क्विप् । 'अनिदितां°' ( पा ६,४,२४ ) इति नलोपः । 'बालमूल' ( पावा ८,२,१८ ) इत्यादिना रघोर्लत्वविकल्पः । तथाविधस्य हरिणस्य कृष्णमृगस्य अधि शीर्षणि शिरसि । अधिः सप्तम्यर्थानुवादी । 'शीर्षश्छन्दसि' ( पा ६,१,६० ) इति सप्तम्यां शीर्षन्नादेशः । भेषजम् रोगनिवर्तकं शृङ्गरूपम् औषधम् अस्ति । सः हरिणः विषाणया स्वशृङ्गेण क्षेत्रियम् परक्षेत्रे चिकित्स्यं मातापितृशरीराद् आगतं क्षयकुष्ठापस्मारादिकं विषूचीनम् विष्वक् सर्वतः अनीनशत् नाशयतु । विषुपूर्वाद् अञ्चतेः क्विन् । 'अनिदिताम्°' ( पा ६,४,२४ ) इति नलोपः । 'विभाषाञ्चेरदिक्स्त्रियाम्' ( पा ५,४,८ ) इति स्वार्थिकः खः । 'अचः' (पा ६,४,१३८) इत्यकारलोपे 'चौ' ( ६,३,१३८ ) इति दीर्घः ।

अनु त्वा हरिणो [1]वृषा [2]पद्भिश्चतुर्भिरक्रमीत् ।
विषाणे वि ष्य [3]गुष्पितं यदस्य[4] क्षेत्रियं हृदि ॥ २ ॥

अनु । त्वा । हरिणः । वृषा । पत्ऽभिः । चतुःऽभिः । अक्रमीत् ।
विऽसाने । वि । स्य । गुष्पितम् । यत् । अस्य । क्षेत्रियम् । हृदि ॥ २ ॥

हे विषाणे [5]क्षेत्रियरोगविनाशनाय मणिरूपेण धृतां त्वा[5] त्वाम् अनु वृषा सेचनसमर्थो युवा हरिणः मृगः चतुर्भिः पद्भिः पादैः अक्रमीत् आक्रान्तवान् । क्षेत्रियरोगं पादप्रहारैः पीडितवान् इत्यर्थः । त्वं च अस्य रुग्णस्य हृदि हृदये [6]गुल्फितम् गुल्फवद् ग्रथितं यत् क्षेत्रियम् रोगजातम् अस्ति तद् वि ष्य विनाशय । षो अन्तकर्मणि । अस्मात् लोटि 'ओतः श्यनि' ( पा ७,३,७१ ) इति अकारलोपः ।

अदो यदवरोचते चतुष्पक्षमिव च्छदिः ।
तेना[7] ते सर्वं क्षेत्रियमङ्गेभ्यो नाशयामसि ॥ ३ ॥

अदः । यत् । अवऽरोचते । चतुष्पक्षम्ऽइव । छदिः ।
तेन । ते । सर्वम् । क्षेत्रियम् । अङ्गेभ्यः । नाशयामसि ॥ ३ ॥

१. मृगः आपश्रौ १३,७,१६ २. पद्भिश्च° O, आपश्रौ. ३. गुल्फितम् V, K [पदे च्छि. अपि], आपश्रौ. सा. ४. यत् किञ्चित् पै ३,२,२. ५. एतत्था. त्वा के° S' Kd. ६. वैतु. संपा. द्र. ७. तेन P[8],M, पै ३,२,३ [मूको.]

अदः चन्द्रमण्डलस्थं विप्रकृष्टं यद् हरिणरूपं वस्तु अवरोचते अवभासते। यद्वा अदः परिदृश्यमानं यद् भूमौ आस्तृतं हारिणं चर्म अवरोचते। किमिव। चतुष्पक्षम् चतुष्कोणं छदिरिव। छाद्यते अनेन गृहम् इति छदिस्तृणकटः स इव। छद अपवारणे इत्यस्माद् ण्यन्तात् 'अर्चिशुचिहुसृपिछादिछर्दिभ्य[1] इसिः' (पाउ २,१०८) इति इसिप्रत्ययः। 'इस्मन्त्रन्क्विषु च' (पा ६,४,९७) इत्युपधाह्रस्वत्वम्। तेन चन्द्रमण्डलस्थहरिणात्मकेन पुरोवर्तिना वा चर्मणा हे रुग्ण ते तव सर्वम् क्षयकुष्ठादिरूपेण बहुविधं क्षेत्रियम् रोगम् अङ्गेभ्यः कृत्स्नावयवेभ्यो नाशयामसि नाशयामः।

अमू ये दिवि सुभगे [2]विचृतौ नाम तारके।
वि क्षेत्रियस्य मुञ्चतामधमं पाशमुत्तमम् ॥ ४ ॥

अमू इति। ये इति। दिवि। सुभगे इति सुऽभगे। विऽचृतौ। नाम। तारके इति।
वि। क्षेत्रियस्य। मुञ्चताम्। अधमम्। पाशम्। उत्ऽतमम् ॥ ४ ॥

दिवि द्युलोके अमू परिदृश्यमाने सुभगे शोभनभाग्ययुक्ते ये प्रसिद्धे। विचृतौ नाम तारके इत्यादि शिष्टम् 'उदगातां भगवती' (अ २,८,१) इत्यत्र विस्तरेण व्याख्यातम्।

आप इद् वा उ भेषजीरापो अमीवचातनीः।
आपो [3]विश्वस्य भेषजीस्तास्त्वा मुञ्चन्तु क्षेत्रियात्[4] ॥ ५ ॥

आपः। इत्। वै। ऊं इति। भेषजीः। आपः। अमीवऽचातनीः।
आपः। विश्वस्य। भेषजीः। ताः। त्वा। मुञ्चन्तु। क्षेत्रियात् ॥ ५ ॥

आप इद्वै। इदित्यवधारणे। उः पूरणः। आप एव खलु भेषजीः भेषजभूताः अभिषेकपानादिना रोगापनोदनेन सुखहेतवः। 'केवलमामक' (पा ४,१,३०) इत्यादिना भेषजशब्दाद् ङीप्। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम्। 'वा छन्दसि' (पा ६,१,१०६) इति जसि पूर्वसवर्णदीर्घत्वम्। तथा [5]आप एव ओषधिरूपेण परिणताः अमीवचातनीः अमीवचातन्यः रोगाणां नाशयित्र्यः। चातयतिर्नाशने इत्युक्तम्। आप एव विश्वस्य सर्वस्य रोगस्य भेषजीः औषधान्तरवद् न कस्यचिदेव रोगस्य भेषजं किन्तु सर्वेषामपीत्यर्थः। अपां भेषजरूपत्वम् अन्यत्र स्पष्टम् आम्नातम्—'अप्सु मे सोमो अब्रवीद् अन्तर्विश्वानि भेषजा' (ऋ १,२३,२०) इति। ताः एवम् उक्तसामर्थ्योपेता आपः हे व्याधिगृहीत त्वा त्वां क्षेत्रियात् रोगाद् मुञ्चन्तु वियोजयन्तु।

---

१. छर्दिभ्य S', Kd.	२. विचृतौ A,S[m],P[2].	३. सर्वस्य ऋ १०,१३७,६	४. तास्ते कृण्वन्तु भेषजम् ऋ. अ ६,९१,३.	५. अप S', Kd.

यदास्रुतेः क्रियमाणायाः क्षेत्रियं [1]त्वा व्यानशे [1]।
वेदाहं [2]तस्य भेषजं क्षेत्रियं नाशयामि [3]त्वत् ॥ ६ ॥

यत् । आऽस्रुतेः । क्रियमाणायाः । क्षेत्रियम् । त्वा । विऽआनशे ।
वेद । अहम् । तस्य । भेषजम् । क्षेत्रियम् । नाशयामि । त्वत् ॥ ६ ॥

हे रुग्ण त्वा त्वां क्रियमाणायाः स्वीक्रियमाणाया आस्रुतेः । आस्रूयते आसिच्यते इत्यास्रुतिर्द्रवीभूतम् अन्नम् । तस्मात् अयथोपयुज्यमानाद् अन्नाद् यत् क्षेत्रियं कुष्ठादिरूपं व्यानशे व्याप्नोत् । अशू व्याप्तौ । लिटि 'अश्नोतेश्च' (पा ७,४,७२) इति दीर्घीभूताद् अभ्यासाद् उत्तरस्य नुट् । तस्य उक्तलक्षणस्य रोगस्य भेषजम् निवर्तकम् औषधं यवादिरूपम् अहम् चिकित्सको वेद जानामि । 'विदो लटो वा' (पा ३,४,८३) इति उत्तमे णलि रूपम् । अतः त्वत् त्वत्तः सकाशात् क्षेत्रियं नाशयामि । त्वद् इति । 'पञ्चम्या अत्', 'एकवचनस्य च' (पा ७,१,३१;३२) इति युष्मदुत्तरस्य ङसेरदादेशः ।

अपवासे नक्षत्राणामपवास उषसामुत ।
अपास्मत् सर्वं [6]दुर्भूतमप क्षेत्रियमुच्छतु [6]॥ ७ ॥

अपऽवासे । नक्षत्राणाम् । अपऽवासे । उषसाम् । उत ।
अप । अस्मत् । सर्वम् । [6]दुःऽभूतम् । अप । क्षेत्रियम् । उच्छतु ॥ ७ ॥

नक्षत्राणाम् तारकाणाम् । 'नक्षत्राणि नक्षतेर्गतिकर्मणः' (नि ३,२०) इति हि यास्कः । 'अमिनक्षि' (पाउ ३,१०५) इत्यादिना नक्ष गतौ [7]इत्यस्माद् अत्रन्[7] प्रत्ययः । तेषाम् अपवासे अपगमनकाले उषसः प्रारम्भे । उतशब्दो विकल्पार्थे । अथवा उषसाम् । प्रतिदिवसम् आवृत्त्यपेक्षया उषसाम् इति बहुवचननिर्देशः । तासाम् अपवासे [8]अपगमने । प्रभातकाले इत्यर्थः । तस्मिन् क्रियमाणेन अभिषेकादिना सर्वम् निखिलं दुर्भूतम् रोगनिदानभूतं दुष्कृतम् अस्मत् अस्मत्तः अप उच्छत्विति संबन्धः । अपगच्छतु इत्यर्थः । ततः क्षेत्रियम् कुष्ठापस्मारादिरूपम् अप उच्छतु अस्मत्तः अपगच्छतु । सकारणं रोगजातं निवर्तताम् इत्यर्थः । उछी विवासे ।

इति तृतीयकाण्डे द्वितीयेऽनुवाके द्वितीयं सूक्तम् ।

'आ यातु मित्रः' इति सूक्तेन उपनयनकर्मणि माणवकं नाभिदेशे संस्पृश्य अनुमन्त्रयेत । सूत्रितं हि — "दक्षिणेन पाणिना नाभिदेशे संस्तभ्य जपति 'अस्मिन् वसु वसवो धार-

१. त्वाम्यानशे पै ३,२,५. २. तस्मिन् पै. ३. ते पै. ४. नामयद्प पै. ५. अक्रमीद् पै. ६. दुः । भूतम् J. ७. इत्यत्रन् S', Kd. ८. अवगमने S', Kd.

यन्तु' ( अ १,९ ), 'विश्वे देवा वसवः' ( अ १, ३० ), 'आयातु मित्रः' ( अ २,८ ), 'अमुत्रभूयात्' ([ अ ७,५५]" कौसू ५४,१६;१७ ) इत्यादि।

अस्य सूक्तस्य आयुष्यगणे पाठात् 'मेधाजननीयुष्यैर्जुहुयात्' ( कौसू ५७,३१ ) इत्यादिष्वपि विनियोगो द्रष्टव्यः।

एवमेव शान्तिकल्पेपि — [१]"आयुष्यः शान्तिः स्वस्तिगण[२] ऐरावत्याम्' ( शाक १८,८ ) इत्यादिष्वपि अस्य विनियोगः।

परिशिष्टेपि—

'आयुष्यश्चाभयश्चैव तथा स्वस्त्ययनो गणः' ( अप ५,३,५ ) इत्यादिषु च।

'इहेदसाथ' ( ४, ) इत्यनया विवाहे शुल्कद्रव्यं पृथक्कृत्य इदं द्रव्यं तव इदं ममेति द्वाभ्यां निवर्तयेत्। सूत्रितं हि—"'इहेदसाथ' इत्येतया शुल्कम् अपाकृत्य। द्वाभ्यां [३]निवर्तयतीह[३] तव[४] राध्यताम् अत्र [५]ममेति यथा वा मन्यन्ते" ( कौसू ७९,१७-१९ ) इति।

'सं वो मनांसि' ( ५;६ ) इति द्वाभ्यां सांमनस्यकर्मणि ग्राममध्ये संपातितोदकुम्भनिनयनम्, त्रिवर्षवत्सिकाया गोः पिशितानां प्राशनम्, संपातितान्नप्राशनम्, संपातितसुरायाः पायनम्, तथाविधप्रपोदकपायनं च कुर्यात्। तथा च सूत्रम्—'सं वो मनांसि [५], 'संज्ञानं नः' (अ ७,५४,१ ) इति सांमनस्यानि। उदकुलिजं संपातवन्तं ग्रामं परिहृत्य मध्ये निनयति। एवं सुराकुलिजम्। त्रिहायण्या वत्सतर्याः [६]शुक्तानि पिशितान्याशयति। भक्तं सुरां प्रपां संपातवत् करोति' ( कौसू १२,४-९ ) इति।

आ यातु मित्र ऋतुभिः कल्पमानः[७] संवेशयन् पृथिवीमुस्त्रियाभिः।
[८]अथास्मभ्यं वरुणो वायुरग्निर्बृहद् राष्ट्रं संवेश्यं दधातु ॥ १ ॥

आ। यातु। मित्रः। ऋतुऽभिः। कल्पमानः। सम्ऽवेशयन्। पृथिवीम्। उस्त्रियाभिः।
अथ। अस्मभ्यम्। वरुणः। वायुः। अग्निः। बृहत्। राष्ट्रम्। सम्ऽवेश्यम्। दधातु ॥१॥

मित्रः। मीतेर्मरणात् त्रायते इति मित्रः एतन्नामको देवः। 'मित्रः प्रमीतेस्त्रायते' इति हि निरुक्तम् ( १०,२१ )। यद्वा सर्वेषां मित्रवद् उपकारकः। 'मित्रं देवाः' इति प्रक्रम्य आम्नातम् 'सर्वस्य वा अहं मित्रम् अस्मि' ( तै ६,४,८,१ ) इति। स मित्रः आ यातु अस्मद्रक्षणार्थम् आगच्छतु। कीदृशः। ऋतुभिः वसन्ताद्यैः कल्पमानः। ऋतुसांतत्येन दीर्घम् आयुः कर्तुं समर्थो भवन्नित्यर्थः। कृपू सामर्थ्ये। लटः शानच्। शपि 'कृपो रो लः' ( पा ८,२,१८ ) इति लत्वम्। "अदुपदेशाल्लसार्वधातुक°" ( पा ६,१,१८६ ) इति अनुदात्तत्वे शपः पित्वाद् अनुदात्तत्वे च धातुस्वरेण आद्युदात्तत्वम्। किं कुर्वन्।

१. °जनन च्वा Bl.　२. आयुष्यशान्तिस्व° Bol.　३. निनयत्यव S', Kd.　४. मम Bl.　५. तवेति Bl.　६. शुक्ल्यानि S', Kd., शुल्कानि शंपा.　७. °मानः Bh, Km.　८. तदस्मभ्यं तै ३,१८,१.

उस्रियाभिः गोभिः। किरणैरित्यर्थः। पृथिवीम् विस्तीर्णां भूमिं संवेशयन् व्याप्नुवन्। अथ मित्रागमनानन्तरं वरुणः वायुः अग्निश्च अस्मभ्यं बृहत् महत् राष्ट्रम् राज्यं संवेश्यम् संवेशार्हम् अवस्थानयोग्यं दधातु विदधातु प्रकरोतु। प्रत्येकापेक्षया एकवचनम्। संपूर्वाद् विशेः अर्हार्थे यत्प्रत्ययः।

धाता रातिः सवितेदं जुषन्तामिन्द्रस्त्वष्टा प्रति हर्यन्तु[1] मे वचः।
हुवे देवीमदितिं शूरपुत्रां सजातानां मध्यमेष्ठा यथासानि[2] ॥ २ ॥

धाता। रातिः। सविता। इदम्। जुषन्ताम्। इन्द्रः। त्वष्टा। प्रति। हर्यन्तु। मे। वचः।
हुवे। देवीम्। अदितिम्। शूरऽपुत्राम्। सऽजातानाम्। मध्यमेऽस्थाः। यथा। असानि ॥२॥

धाता सर्वस्य विधाता एतन्नामा देवः रातिः दानशीलोऽर्यमा। 'यः खलु वै ददाति सोऽर्यमा' ( तै २,३,४,१ ) इति श्रुतेः। रा दाने इत्यस्मात् कर्तरि क्विप्। सविता सर्वस्य प्रेरको देवश्च इदम् मदीयं हविः जुषन्ताम् सेवन्ताम्। जुषी प्रीतिसेवनयोः। एते धात्रादयः इन्द्रस्त्वष्टा च मे मदीयं वक्ष्यमाणं वचः वाक्यं स्तुतिलक्षणं वा प्रति हर्यन्तु आभिमुख्येन कामयन्ताम्। सादरं शृण्वन्तु इत्यर्थः। हर्य गतिकान्त्योः। शूरपुत्राम् शूरा विक्रान्ताः शौर्योपेताः पुत्रा मित्रवरुणादयो यस्याः सा तथोक्ता तां देवीम् दानादिगुणयुक्ताम् अदितिम् अदीनां देवमातरं हुवे आह्वयामि। ह्वेञो 'बहुलं छन्दसि' ( पा ६,१,३४ ) इति संप्रसारणम्। किमर्थम्। सजातानाम् समानं जातानां बन्धूनां मध्यमेष्ठाः मध्यमेव मध्यमम्। मध्ये वर्तमानो यथा असानि भवानि। समृद्धकामः सन् स्वसमानैः सेव्यो यथा भवानि तथा कुर्वन्तु इत्यर्थः। मध्यमपूर्वात् तिष्ठतेर्विच्। सुषामादित्वात् ( पा ८,३,९८ ) षत्वम्। 'तत्पुरुषे कृति बहुलम्' ( पा ६,३,१४ ) इति सप्तम्या अलुक्। असानि। असेर्लोटि 'आडुत्तमस्य पिच्च' ( पा ३,४,९२ ) इत्याडागमः।

हुवे सोमं सवितारं नमोभिर्विश्वानादित्याँ[3] अहमुत्तरत्वे।
अयमग्निर्दीदायद्[4] [5]दीर्घमेव सजातैरिद्धोऽप्रतिब्रुवद्भिः[6] ॥ ३ ॥

हुवे। सोमम्। सवितारम्। नमःऽभिः। विश्वान्। आदित्यान्। अहम्। उत्तरऽत्वे।
अयम्। अग्निः। दीदयत्। दीर्घम्। एव। सऽजातैः। इद्धः। अप्रतिब्रुवत्ऽभिः ॥ ३ ॥

सोमं सवितारं विश्वान् सर्वान् आदित्यान् अदितेः पुत्रान् अन्यांश्च नमोभिः नमस्कारोपलक्षितैः स्तावकैर्मन्त्रैः अहं प्रयोक्ता उत्तरत्वे यजमानस्य श्रैष्ठ्ये। निमित्तसप्तम्येषा।

१. गृह्णन्तु पै १,१८,२. २ °सानि Bh. ३. °श्वान् देवाँ पै १,१८,३. ४. दीदयत् S, Wh.. ५. अहंनम् ? एव पै. ६. °रिद्धो अप्रति° S, Wh.

श्रैष्ठ्यार्थं हुवे आह्वयामि । तथा अयम् आहुत्याधारभूतः अग्निर्दीदयत् दीप्यताम् । दीदेतिश्छान्दसो दीप्तिकर्मा । अस्मात् लेटि अडागमः । अप्रतिब्रुवद्भिः अप्रतिकूलवादिभिः अनुकूलं वदद्भिः सजातैः समानजन्मभिः पुरुषैः दीर्घमेव चिरकालमेव इद्धः समिद्धः तैरभिवर्धितः । यथाहम् असानि इति वाक्यशेषः । तथा दीप्यताम् इति संबन्धः । इद्ध इति । ञिइन्धी दीप्तौ । अस्माद् निष्ठायाम् इद्प्रतिषेधः । 'अनिदिताम्°' (पा ६,४,२४) इति नलोपः ।

इहेदसाथ न [1]परो गमाथेर्यो गोपाः पुष्टपतिर्व आजत् ।
अस्मै [2]कामायोप कामिनीर्विश्वे वो देवा [3]उपसंयन्तु ॥ ४ ॥

इह । इत् । असाथ । न । परः । गमाथ । इर्यः । गोपाः । पुष्टऽपतिः । वः । आ । अजत् ।
अस्मै । कामाय । उप । कामिनीः । विश्वे । वः । देवाः । उपऽसंयन्तु ॥ ४ ॥

हे कामिन्यः यूयम् इहेत् । इत् इत्यवधारणे । इहेव कन्यासमीपदेश एव असाथ भवत वर्तध्वम् । अस्तेर्लेटि आडागमः । [4]पुरः पुरस्ताद् न गमाथ । अनेतृकाः सत्यो न गच्छत । पुर इति । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा ५,३,३९) इति असिप्रत्ययः तत्संनियोगेन पूर्वशब्दस्य पुरादेशश्च । गमाथ । गमेर्लेटि [5]आडागमः । छान्दसः शपो लुक् । [6]ईर्यः मार्गप्रेरको गोपाः गोपायिता पालयिता पुष्टपतिः । पुष्टं पोषः तस्य पतिः पोषयिता । पूषा देव इत्यर्थः । 'पूषाऽपोषयत्' (तैब्रा १,६,२,२) इति हि श्रुतिः । ईदृशो देवो वः युष्मान् आजत् प्रेरयतु । अज गतिक्षेपणयोः । [7]ईर्य इति । ईर गतौ । अस्माद् ण्यन्ताद् 'अचो यत्' (पा ३,१,९७) इति व्यत्ययेन कर्तरि यत् । गोपाः । गुपू रक्षणे । 'गुपूधूपविच्छि°' (पा ३,१,२८) इति आयप्रत्ययः । तदन्तात् क्विप् । अतो लोपे 'वेरपृक्तलोपाद् वलिलोपो बलीयान्' (पावा ६,१,६७) इति यलोपः । तथा कामाय कामयमानाय । कामयतेः पचाद्यच् । अस्मै वराय । यद्वा कामः कामना । भावे घञ् । अस्मै इति षष्ठ्यर्थे चतुर्थी । अस्य वरस्य कामाय उप तत्समीपे कामिनीः कामः काम्यमानं फलम् तद् आसु विद्यत इति कामिन्यः स्त्रियो गावः । मत्वर्थीय इनिः । यद्वा कामयमानाः । ग्रहादित्वाद् (पा ३,१,१३४) णिनिः । ईदृशीः वः युष्मान् विश्वे देवा उपसंयन्तु उपगमयन्तु । इण् गतौ । अस्मात् लोटि 'इणो यण्' (पा ६,४,८१) इति यण् ।

सं वो मनांसि सं व्रता समाकूतीर्नमामसि[8] ।
अमी ये विव्रता[9] [10]स्थन तान् वः सं [10]नमयामसि ॥ ५ ॥

१. पुरो पै१,१८,४[मूको.], सा. २. ! वः कामा उप पै. ३. उपसंयामिह पै. ४. वैतु. मंपा. इ. ५. अडा° S', Kd. ६. इर्यः पपा. S', Kd. [७. °कूतीरनरसत मै २,२,६. ८. °ता: Wh. ९. स्थ मै. १०. नयामसि P³,M,E².

सम् । वः । मनांसि । सम् । व्रता । सम् । आऽकूतीः । नमामसि ।
अमी इति । ये । विऽव्रताः । स्थन[1] । तान् । वः । सम् । नमयामसि ॥ ५ ॥

हे विमनस्का जनाः वः युष्माकं मनांसि परस्परविरुद्धानि सं नमामसि। सम् इति एकीभावे। एकविषयप्रह्वाणि अविसंवादीनि कुर्मः। तथा व्रता व्रतानि। कर्मनामैतत्। वचनादानादिकर्माणि सं नमयामः। एवम् आकूतीः संकल्पान् सं नमयामः। नमेर्ण्यन्तात् लटि शपः 'छन्दस्युभयथा' (पा ३,४,११७) इत्यार्धधातुकत्वात् णिलोपः। 'इदन्तो मसि' (पा ७,१,४६)। ये अमी यूयं पूर्वं विव्रताः विरुद्धकर्माणः, [2]स्तन भवथ। अस्तेर्लोटि तशब्दस्य 'तप्तनप्तनथनाश्च' (पा ७,१,४५) इति तनादेशः। 'श्नसोरल्लोपः' (पा ६,४,१११) इत्यकारलोपः। तान् विमनस्कान् वः युष्मान् सं नमयामसि संनमयामः। नमेर्ण्यन्तात् लटि 'ज्वलह्वलह्मलनमामनुपसर्गाद् वा' इति मित्त्वविकल्पस्य अनुपसर्गविषयत्वात् सोपसर्गस्य तु अमन्तत्वेन प्राप्तं मित्त्वं नित्यम् इति 'मितां ह्रस्वः' (पा ६,४,९२) इति उपधाह्रस्वत्वम्।

अहं [3]गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत ।
मम वशेषु हृदयानि वः [4]कृणोमि मम यातमनुवर्त्मान [5]एत ॥ ६ ॥

अहम् । गृभ्णामि । मनसा । मनांसि । मम । चित्तम् । अनु । चित्तेभिः । आ । इत ।
मम । वशेषु । हृदयानि । वः । [4]कृणोमि । मम । यातम् । अनुऽवर्त्मानः । आ । इत ॥ ६ ॥

हे विमनस्काः युष्मदीयानि विप्रतिपन्नानि मनांसि मनसा मदीयेन अहं [3]गृह्णामि स्वाधीनीकरोमि। तथा यूयमपि मम चित्तम् [2]अनुचित्तेभिः अनुसारिभिर्युष्मदीयैश्चित्तैः एत आगच्छत। मम वशेषु वशे इच्छामात्रे। व्यत्ययेन बहुवचनम्। यद्वा वशेषु वशीकृतेषु स्वाधीनेष्वर्थेषु। वश कान्तौ। इत्यस्माद् 'वशिरण्योरुपसंख्यानम्' (पावा ३,३,५८) इति भावे कर्मणि वा अप्। वः युष्मदीयानि हृदयानि [4]कृणोतु भवन्तः कुर्वन्तु। प्रत्येकविवक्षया एकवचनम्। एवं मम यातम् गमनं यूयमपि अनुवर्त्मानः अनुसृतमार्गाः सन्तः [5]ऐत आगच्छत।

इति तृतीयकाण्डे द्वितीयेऽनुवाके तृतीयं सूक्तम्।

'कर्शफस्य' इति सूक्तेन विघ्नशमनकर्मणि [6]स्पर्धारूपविघ्नविनाशार्थम् अरलुमणिबन्धनम्,[6] सर्पशृङ्गिदंष्ट्र्यादिविघ्नशमनार्थं संपातयुक्तवेणुदण्डधारणम्, [7]संग्रामे शत्रुकृतमायादिरूपविघ्ननिवारणार्थं[7] संपातयुक्तायुधधारणम्, सर्वारम्भविघ्नशमनार्थं फलीकर-

१. स्थनः P[2] २. वैतु. मंपा. द्र. ३. गृह्णामि K,P,V; गृभ्णामि > गृह्णामि B[h].
४. कृणोतु K. ५. °नरेत B[h],D,S[m],R,P[3],M,W,H,I. ६. °नाशार्थमरकर्मणि° S', Kd.
७. संग्रामशत्रु° S',Kd.

गैर्धूपनं च कुर्यात्। सूचितं हि—" 'कर्शफस्य' इति 'पिशङ्गसूत्रम् अरलुदण्डं' यद् आयुधं फलीकरणैर्धूपयति" ( कौसू ४३,१;२ ) इति।

'कर्शफस्य विशफस्य' 'द्यौः पिता' पृथिवी माता।
यथाभिचक्र देवास्तथाप कृणुता पुनः ॥ १ ॥

कर्शफस्य। विऽशफस्य। द्यौः। पिता। पृथिवी। माता।
यथा। अभिऽचक्र। देवाः। तथा। अप। कृणुत। पुनः ॥ १ ॥

कर्शफस्य करशफस्य कृशशफस्य वा श्वापदस्य व्याघ्रादेः विशफस्य विगतशफस्य स्पर्धमानपुरुषकालसर्पादेः विस्पष्टशफस्य वा क्रूरगोमहिषादेः तस्य उभयविधस्य बहुविधविघ्नकारिणः द्यौः द्युलोकः पिता वृष्ट्यादिद्वारा उत्पादकः। पृथिवी माता स्वावयवावष्टम्भेन आधारत्वेन च मातृवज्जनयित्री। अनेन विघ्नहेतूनाम् एतेषां दृढमूलत्वात् तन्निवारणम् अल्पप्रयाससाध्यं न भवतीति सूचितम्। अथवा पितृमातृभूतद्यावापृथिवीसंकीर्तनेन विघ्नोत्पादनाभावाय तेषां स्तुतिः कृता। एवं विघ्नकारिणां स्तुतिः श्रुत्यन्तरेपि दृश्यते—'द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा' ( ऋ १,१९१,६ ) इति, 'नमो अस्तु सर्पेभ्यो ये के च पृथिवीम् अनु' ( तै ४,२,८,३ ) इति च। तेषां विघ्नहेतूनाम् अपनोदनाय तत्प्रेरका देवाः प्रार्थ्यन्ते—यथेत्यादिना। हे देवाः यूयं यथा येन प्रकारेण अभिचक्र उक्तान् विघ्नहेतून् पूर्वम् अस्मदभिमुखान् कृतवन्तः स्थ। करोतेः परोक्षे लिटि मध्यमबहुवचने रूपम्। 'यावद्यथाभ्याम्' ( पा ८,१,३६ ) इति निघातप्रतिषेधः। तथा तेनैव प्रकारेण पुनः अप कृणुत अस्मत्तः अपगतान् कुरुत। निवर्तयतेत्यर्थः। कृवि हिंसाकरणयोश्च। 'धिन्विकृण्व्योर च' ( पा ३,१,८० ) इति उप्रत्ययः।

'अश्रेष्माणो अधारयन् तथा तन्मनुना कृतम्।
'कृणोमि वध्रि विष्कन्धं मुष्काबर्हो गवामिव ॥ २ ॥

'अश्रेष्माणः। अधारयन्। तथा। तत्। मनुना। कृतम्।
कृणोमि। वध्रि। विऽस्कन्धम्। 'मुष्कऽआबर्हः। गवाम्ऽइव ॥ २ ॥

[8]अश्रेष्माणः अश्लिष्टाः विघ्नैरभिमतकार्यसंप्राप्तिशून्या जनाः। श्लिष आलिङ्गने इत्यस्मात् श्लिष श्लेषणे इत्यस्मात् चौरादिकाद् वा औणादिको मनिन्। यद्वा श्लेष्मोपलक्षितत्रिदोषदूषितशरीररहिताः दिव्यदेहा देवाः अधारयन्। विघ्नशमनाय

---

१. °सूत्रमरल° S', Kd. २. कर्षभस्य त्रिषभस्य पै ३,७,२. ३. द्यौष्पिता S,K,K^m,V, RW. पै. ४. अश्लेष्माणो O,K,K^m,V, पै ३,७,३. ५. क्षिणोमि पै. ६. अश्लेष्माणः K. ७. मुष्काऽआ° P. ८. वैवु. मंपा. द्र.

अरलुवृक्षविकारमणिं दण्डादिकं च धृतवन्तः। तथा तद्वदेव तद् मण्यादिधारणं मनुना मनुष्यस्रष्टेः कर्त्रा स्वायंभुवेन कृतम् अनुष्ठितम्। एवम् अहमपि मण्यादिधारणेन विष्कन्धम् कार्यप्रवृत्तिप्रतिबन्धकं विघ्नजातं वध्रि। शुष्कचर्ममयी रज्जुर्वध्री 'वध्री वरत्रा स्यात्' ( अको २,१०,३१ ) इत्यभिधानात्। तद्युक्तम् उन्मूलनपाशयुक्तं कृणोमि। पाशेनाकृष्य उन्मूलयामीत्यर्थः। वध्रीशब्दाद् व्रीह्यादेराकृतिगणत्वाद् मत्वर्थीय इनिः। यद्वा वध्रः पण्डः।

'निसर्गपण्डो वध्रश्च पक्षपण्डस्तथैव च।'

इत्यादिस्मरणात्। अत्र वध्रशब्दो 'निर्वीर्यत्वरूपधर्मपरः[1]। सोस्यास्तीति वध्रि[2] निर्वीर्यं कार्याक्षमं करोमि। यद्वा वध्रि[3] वध्यं विनष्टं करोमि। 'अदिशदिभूशुभिभ्यः क्रिन्' (पाउ ४,६५) इति बाहुलकाद् वधेर्हिंसार्थादपि भवति। तत्र दृष्टान्तः — मुष्कावर्हो गवामिव गवाम् पुंगवानां मुष्कावर्हः। मुष्कम् आवृहति उन्मूलयतीति मुष्कावर्हः। कर्मण्यण्। यद्वा आवर्हणम् आवर्हः। भावे घञ्। मुष्कस्यावर्हः मुष्कावर्हः। स यथा तान् निर्वीर्यान् प्रजननाशक्तान् करोति तद्वत्।

पि॒शङ्गे॑ सू॒त्रे [4]खृग॑लं॒ [5]तदा ब॑ध्नन्ति[5] वे॒धस॑: ।
[6]श्र॒व॒स्युं[6] शु॒ष्मं का॑ब॒वं वध्रिं॑ कृण्वन्तु [7]ब॒न्धुर॑: ॥ ३ ॥

पि॒शङ्गे॑ । सू॒त्रे । खृग॑लम् । तत् । आ । ब॒ध्नन्ति॑ । वे॒धस॑: ।
[8]श्र॒व॒स्युम् । शु॒ष्मम् । का॒ब॒वम् । वध्रि॑म् । कृ॒ण्वन्तु॑ । ब॒न्धुर॑: ॥ ३ ॥

पिशङ्गे पिशङ्गवर्णे सूत्रे। प्रोतम् इति शेषः। खृगलम् तनुत्राणम् 'खृगलेव विस्रसः पातम् अस्मान्' ( ऋ २,३९,४ ) इत्यत्र मन्त्रे खृगलं तनुत्राणम् इति (तु. वें.) भरतस्वामिना व्याख्यातम्। कवचवत् परकृतविघ्नापनोदनेन रक्षकं तत् तम् उक्तगुणम् अरलुमणिं वेधसः विधातारः साधकाः आ बध्नन्ति शरीरे धारयन्ति। बन्धुरः। बन्धेरौणादिक उरच्प्रत्ययः। अस्माभिरपि बद्धः स मणिः [9]श्रवस्यम्। श्रव इत्यन्ननाम। बालरूपम् अन्नम् अर्हतीति श्रवस्यः। 'छन्दसि च' ( पा ५,१,६७ ) इति यत्प्रत्ययः। तं शुष्मम् शोषकम्। शुष शोषणे। 'अविसिविसिशुषिभ्यः कित्' ( पाउ १,१४४ ) इति मन्प्रत्ययः। काबवम्। कबुः कर्बुरवर्णः क्रूरः प्राणी। तत्संबन्धी विघ्नः काबवः। कबृ वर्णे इत्यस्माद् औणादिक उप्रत्ययः। तस्येदम् इत्यर्थे अण्। ईदृशं विघ्नजातं वध्रिम् निर्वीर्यं वध्यं वा कृण्वन्तु करोतु। व्यत्ययेन बहुवचनम्। यद्वा बन्धुरः। जसः स्थाने 'सुपां सुलुक्' ( पा ७,१,३९ ) इति सुः। बन्धुराः अस्माभिर्धार्यमाणाः मणिदण्डादयः श्रवस्यादिगुणकलक्षणं विघ्नं वध्रि कृण्वन्तु।

१. निर्वीर्यत्वं रूपं धर्म° S', Kd. २. वध्र S', Kd. ३. वाध्रिं S', Kd.
४. शृगलं K,V. ५. यदा बध्नन्तु पै १,७,४. ६. श्रवस्यं V,P,K; श्रवस्युं पै., श्रवस्यं पै [मूको.] ७. वैप १,२२६२ r द्र. ८. श्रवस्यम् P. ९. वैतु. मंपा. द्र.

येनां ¹श्रवस्यवश्चरंथ देवा ईवासुरमाययां ।
शुनां कुपिरिव दूषणो बन्धुरा² काबुवस्यं च ॥ ४ ॥

येन । श्रवस्यवः । चरंथ । देवाःऽईव । असुरऽमाययां ।
शुनांम् । कपिःऽईव । दूषणः । बन्धुरा । काबवस्यं । च ॥ ४ ॥

हे जनाः ³श्रवस्यवः । श्रवः अन्नं यशो वा । तत् शत्रुजयेन आत्मन इच्छन्तः । 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः । तादृशा यूयं येन परकृतमायारूपविघ्नेन मोहिताः सन्तः चरथ संग्रामे वर्तध्वे । तत्र दृष्टान्तः — असुरमायया असुरसंबन्धिन्या मायया मोहिता देवा इव । तथाविधानां भवतां संबन्धिनो मायारूपविघ्नस्य काबवस्य प्रागुक्तलक्षणस्य विघ्नविशेषस्य च बन्धुरा संबद्धा⁴ धृता खड्गादिरूपा हेतिः दूषयित्री भवतु । किमिव । शुनां कपिः इव यथा दूषणः । उपमानापेक्षया पुंलिङ्गता । शुनाम् इति । 'श्वयुवमघोनामतद्धिते' ( पा ६,४,१३३ ) इति संप्रसारणम् । 'न गोश्वन्त्साववर्ण°' ( पा ६,१,१८२ ) इति विभक्त्युदात्तत्वप्रतिषेधः । दूषणः । दुष वैकृत्ये इत्यस्मात् ⁵[ ण्यन्तात् ] 'कृत्यल्युटो बहुलम्' ( पा ३,३,११३ ) इति कर्तरि ल्युट् । 'दोषो णौ' ( पा ६,४,९० ) इति ऊत्वम् ।

दुष्टयै हि त्वां ⁶भुत्स्यामि दूषयिष्यामि काबवम् ।
उदाशवो रथां इव शुपथेभिः ⁸सरिष्यथ ॥ ५ ॥

दुष्टयै । हि । त्वा । ⁷भत्स्यामि । दूषयिष्यामि । काबवम् ।
उत् । आशवः । रथाःऽइव । शपथेभिः । ⁸सरिष्यथ ॥ ५ ॥

हे मणे त्वा त्वां हि यस्मात् दुष्टयै परकृतविघ्नदूषणाय भत्स्यामि बध्नामि । बन्धेर्लृटि 'एकाच उपदेशेऽनुदात्तात्' ( पा ७,२,१० ) इति इट्प्रतिषेधः । नलोपश्छान्दसः । यद्वा विघ्नगृहीतः संबोध्यः । हे विघ्नगृहीत सर्वारम्भविघ्ननिवारणाय त्वां भत्स्यामि दीपयामि । फलीकरणैर्धूपयामीत्यर्थः । भस भर्त्सनदीप्त्योः । छान्दस इडभावः । 'सः स्यार्धधातुके' ( पा ७,४,४९ ) इति तत्वम् । तस्मात् काबवम् उक्तलक्षणं विघ्नविशेषं दूषयिष्यामि नाशयिष्यामि । 'एकशतं विष्कन्धानि' (६) इति वक्ष्यति । तेषु प्रधानत्वात् काबवस्य पुनःपुनरुपादानम् । ततश्च ³उदाशवः । आशुरश्वः । गमनोन्मुखैर्वेगवद्भिः अश्वैर्युक्ता रथा इव हे जना यूयं शपथेभिः शपथैः परकृतैर्विघ्ननिमित्तैराक्रोशैः । वियुक्ताः सन्त इति शेषः । व्यापारेषु अनिरुद्धगतयः ³चरिष्यथ यथेष्टं संचरत । शपथभिरिति । 'बहुलं छन्दसि' ( पा ७,१,१० ) इति भिस ऐसभावः ।

१. °श्रव° पै ३,७,५. २. वैप १,२२६२ u द्र. ३. वैतु. मंपा. द्र. ४. संबन्धा S', Kd.
५. भुत्स्यामि K,B,B^h,K^m,R,P,P^2,J,V, पै ३,७,६; वैप १, २३११ a द्र. ६. °मिद्दयिष्यथ K,V.
७. भत्स्यामि P,P^2,J. ८. चरिष्यथ K.

एकशतं विष्कन्धानि विष्ठिता पृथिवीमनु ।
तेषां त्वामग्र [1]उज्जहरुर्मणिं विष्कन्धदूषणम् ॥ ६ ॥

एकऽशतम् । विऽस्कन्धानि । विऽस्थिता । पृथिवीम् । अनु ।
तेषाम् । त्वाम् । अग्रे । उत् । [2]जहरुः । मणिम् । विस्कन्धऽदूषणम् ॥ ६ ॥

एकशतम् एकं च शतं च एकशतम् । 'संख्या' (पा ६,२,३५) इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वम् । एकशब्दोपि कन्प्रत्ययान्तत्वेन आद्युदात्तः । एकोत्तरशतसंख्यानि विष्कन्धानि विघ्नाः पृथिवीम् अनु पृथिव्यां विष्ठिता विष्ठितानि विविधम् अवस्थितानि । विपूर्वात् तिष्ठतेः कर्तरि निष्ठा । 'द्यतिस्यतिमास्थामित्ति किति' (पा ७,४,४०) इति इत्वम् । 'उपसर्गात् सुनोति' (पा ८,३,६५) इत्यादिना षत्वम् । शेर्लोपः । 'अनुर्लक्षणे' (पा १,४,८४) इत्यनोः कर्मप्रवचनीयत्वात् 'कर्मप्रवचनीययुक्ते द्वितीया' (पा २,३,८) इति पृथिवीम् इति द्वितीया । तेषां विघ्नानां निवृत्तये हे मणे त्वाम् अग्रे पूर्वम् [3]उज्जह्रुः देवा उद्धृतवन्तः । अतः विष्कन्धदूषणं मणिम् इमम् [4]अरलुवृक्षविकारं [5]मणिम् । अहमपि[5] धारयामीति वाक्यशेषः ।

इति तृतीये काण्डे द्वितीयेऽनुवाके चतुर्थं सूक्तम् ।

'प्रथमा ह व्युवास' इति सूक्तेन सर्वेण पुष्ट्यर्थे अष्टकाकर्मणि आज्यमांसस्थालीपाकान् प्रत्येकं त्रिस्त्रिर्जुहोति । नवकृत्वः सूक्तावृत्तिः । माघकृष्णाष्टमी अष्टकेत्युच्यते । यथाहुः 'या माघ्याः पौर्णमास्या उपरिष्टाद्[6] व्यष्टका तस्याम् अष्टमी ज्येष्ठया संपद्यते ताम् एकाष्टकेत्याचक्षते' (आपगृ २१,११) । इति [7]तस्यां तत् कर्म कार्यम् । [8]तत्र [9]धानाकरम्भशष्कुलीपुरोडाशोदौदनक्षीरौदनतिलौदनान्[9] अधिश्रयणपर्यग्निकरणादिभिः संस्कृत्य आज्येन संमिश्र्य विंशतिसंख्याकान् पिण्डान् कृत्वा पशोर्दक्षिणं बाहुं निर्लोमसचर्मखुरं प्रक्षाल्य निधाय अनेन सूक्तेन दर्व्या प्रत्यृचं हुत्वा अन्ते सदर्वीम् एकविंशीम् आहुतिं जुहुयात् । अयम् अत्र क्रमः — 'प्रथमा ह व्युवास' (अ ३,१०,१-५) इत्याद्याः पञ्च । 'आयमगन्संवत्सरः' (८;९) इति द्वे । [10]'इडया जुह्वतो वयम्' (११;१२) इति द्वे । इति नवभिर्नव पिण्डान् हुत्वा 'ऋतुभ्यष्ट्वा' (१०) इत्यस्याम् ऋचि ऋतुभ्यष्ट्वा यजे स्वाहा, आर्तवेभ्यस्त्वा यजे स्वाहा [11]इत्येवं सानुषङ्गैरष्टधा विभक्तैर्मन्त्रैः अष्टौ पिण्डान् हुत्वा 'इन्द्रपुत्रे सोमपुत्रे' (१३) इत्यन्तिमया अष्टादशीं जुहुयात् 'अहोरात्राभ्यां त्वा यजे स्वाहा' इति सौत्र-

१. उज्जहुर्मं° S. २. जहुरुः P². ३. वैतु. मंपा. द्र. ४. अरलवृक्ष° S', Kd. ५. मणिमपि S', Kd. ६. उपरिष्टद्व्यष्टका आपगृ २१,१०. ७. तस्य S', Kd. ८. ततः S', Kd. ९. °डाशादोदन° °तिलोदनान् S', Kd. १०. इडाया S', Kd. ११. इत्येव° S', Kd.

मन्त्रेण एकोनविंशीं हुत्वा 'इडायास्पदम्' (६) इत्येका 'आ मा पुष्टे च' (७) इत्येकावसाना द्वितीया। एताभ्याम् ऋग्भ्यां पशोर्दक्षिणं बाहुं विंशीं जुहुयात्। तदलाभे आज्यं जुहुयात्। 'पूर्णा 'दर्वि' (७) इति 'अवसानद्वयेन सदर्वीं पिण्डीम् एकविंशीं जुहोति (तु. कौसू. १३८,१—१२)। ततः धानाकरम्भादीनि हविरुच्छिष्टानि आज्यमिश्राणि कृत्वा 'प्रथमा ह व्युवास' इति सर्वेण सूक्तेन तिस्र आहुतीर्जुहोति। इति पुष्टयर्थे अष्टकाकर्मण्ययं क्रमः। तद् उक्तं संहिताविधौ — "'प्रथमा ह व्युवास सा' [2]इत्यष्टक्याया वा सर्वेण सूक्तेन त्रिस [3]आहुतीर्जुहोति। समवत्तानां स्थालीपाकस्य। [4]सहहुतान् आज्यमिश्रान् हुत्वा पश्चाद् अग्नेर्वाग्यतः संविशति। महाभूतानां कीर्तयन् संजिहीते" (कौसू. १९,२८—३१) इति।

नित्येऽष्टकाकर्मणि आद्यन्तयोरुक्तं सूक्तहोमं विहाय ऋग्भिरुक्तप्रकारेण एकविंशतिम् आहुतीर्जुहुयात्। तद् उक्तं कौशिकेन — 'अष्टकायाम् अष्टकाहोमान् जुहुयात्। तस्या हवींषि धानाः करम्भः श कुल्यः पुरोडाश [5]उदौदनः [6]क्षीरौदनस्तिलौदनो[6] यथोपपादिपशुः। सर्वेषां हविषां समुद्धृत्य। दर्व्या जुहुयान् 'प्रथमा ह व्युवास सा' इति पञ्चभिः" (कौसू. १३८,१—४) इत्यादि।

अस्य दर्विहोमत्वात् तन्त्रविकल्पे प्राप्ते नित्यमेव तन्त्रम् इति [7]इषुफालिमाठरयोर्मतम् तथा च कौशिकः — 'न दर्विहोमे न हस्तहोमे न पूर्णहोमे तन्त्रं क्रियेतेत्येके[8]। अष्टकायां क्रियेत इति [7]इषुफाल्मिाठरौ'( कौसू. १३८,१५;१६) इति।

सोमयागे सोमक्रयणीपदहोमानुमन्त्रणे 'इडायास्पदम्' इत्येषा विनियुक्ता। तद् उक्तं वैतानसूत्रे। 'सोमक्रयणीं प्रपाद्यमानाम्' इति प्रक्रम्य "[9]पदाभिहोमम् 'इडायास्पदम्'" (वैताश्रौ १३,५;६) इति।

चातुर्मास्येषु साकमेधे पूर्णदर्विहोमे 'पूर्णा दर्वि' (७) इत्येषा। तद् उक्तं वैताने — "कार्तिक्यां साकमेधाः' इति प्रक्रम्य 'श्वो भूते [10]पूर्णदर्व्यं† पूर्णा दर्वे' (वैताश्रौ ९,१—४) इति[10]।

राज्ञो रात्रौ आरात्रिकविधाने 'यां देवाः प्रतिनन्दन्ति' (अ ३,१०,२) इत्येषा रात्रिदेवतावाहने विनियुक्ता। 'संवत्सरस्य प्रतिमाम्' (३) इत्येषा च पिष्टमय्या रात्रिप्रतिकृतेरुपवेशने विनियुक्ता। तद् उक्तं परिशिष्टे — 'अथातः पिष्टरात्र्याः कल्पं व्याख्यास्यामः' इति प्रक्रम्य "'यां देवाः प्रतिनन्दन्ति' इति रात्रिम् आवाहयेत्। 'संवत्सरस्य प्रतिमाम्' इति पिष्टमयीं प्रतिकृतिं कृत्वोदङ्मुखीम् उपवेशयेत्" (अप ६,१,१—५) इति। तत्रैव रात्र्युपस्थाने 'आ मा पुष्टे च [11]पोषे च' इत्याद्या[11] विनियुक्ताः। तद् उक्तं तत्रैव। 'आ मा पुष्टे च पोषे चेत्येताभिरुपस्थाय' (अप ६,१,८) इति।

---

१. वैतु. मंपा. द्र. २. °ष्टकायां S', Kd. ३. त्रिर्जुहोति Bl. ४. सहाहुतान् S,K. ५. उदोदनः S', Kd. ६. क्षीरोदनस्तिलोद° S', Kd. ७. सुपाठिमा° S', Kd. ८. °त्येकाष्ट° S', Kd. ९. °दा °मिहोम° S', Kd. १०. पूर्णदर्व्या पूर्णा दर्वीति S', Kd. †पूर्णदर्वं RG. ११. पोषेत्येता S', Kd.

प्रथमा ह 'व्यु॑वास॒ सा धे॒नुर॑भवद् य॒मे ।
सा नः॒ पय॑स्वती 'दुहा॒मुत्त॑रामुत्तरां॒ समा॑म् ॥ १ ॥

प्र॒थ॒मा । ह॒ । वि । उ॒वा॒स॒ । सा । धे॒नुः । अ॒भ॒व॒त् । य॒मे ।
सा । नः॒ । पय॑स्वती । दु॒हा॒म् । उत्त॑राम्ऽउत्तराम् । समा॑म् ॥ १ ॥

प्रथमा ह सृष्ट्यादौ उत्पन्ना खल्वेषा एकाष्टकासंबन्धिनी आद्या उषाः व्युवास तमोव्युदसनं कृतवती। विपूर्वो वसिर्वर्जने वर्तते। सृष्टेः प्राक् अहोरात्रविभागशून्यं कालं तद्युक्तम् अकरोद् इत्यर्थः। तथा च श्रुत्यन्तरे — 'न वा इदं दिवा न नक्तम् आसीद् अव्यावृत्तम्। ते देवा एता व्युष्टीरपश्यन्। ता उपादधत। ततो वा इदं व्यौच्छत्' (तै ५,३,४,७) इति। यद्वा हशब्दः श्रुत्यन्तरप्रसिद्धौ। तथा हि — 'इयमेव सा या प्रथमा व्यौच्छत्' इति प्रक्रम्य 'प्रजाम् एका रक्षत्यूर्जम् एका' (तै ४,३,११,१) इत्यादिना प्रजारक्षणादिव्यापारपञ्चकविधानेन 'ऋतस्य गर्भः प्रथमा व्यूषुषी' (तै ४,३,११,५) इति मन्त्रोक्तव्यापारपञ्चकभेदेन वा 'पञ्च व्युष्टीरनु पञ्च दोहाः' (तै ४,३,११,४) इति पञ्चसंख्यानिर्दिष्टे नन्दादितिथ्यपेक्षया वा पञ्चोषसः प्रतिपादिताः। एतमेव भेदम् अपेक्ष्य 'आस्वितरासु चरति प्रविष्टा' (४) इत्यग्रे समाम्नास्यते। तासां मध्ये एकाष्टकासंबन्धिन्युषाः प्रथमा सर्वत्रानुगमनात् प्रधानभूता सा व्युवासेति। सा तादृगुषोयुक्ता एकाष्टका यमे पितृणाम् अधिपतौ विषये धेनुः प्रीणयित्री अभवत्। अत्र एकाष्टकातिथेः पित्र्यकर्मणि अक्षयफलसाधनत्वेन धेनुत्वव्यपदेशः। अत एव अन्यत्राम्नायते — 'एकाष्टकां पश्यत दोहमानाम् अन्नं मांसवद् घृतवत् स्वधावत्' (हिगृ २,१५,९) इति। सा एकाष्टका धेनुः नः अस्माकं पयस्वती पयउपलक्षितभोग्यवस्तुयुक्ता सती उत्तरामुत्तरां समाम्। अत्यन्तसंयोगे द्वितीया। उपर्युपरिभाविषु सर्वेषु वत्सरेषु दुहाम् अभिमतफलं दुग्धाम्। उत्तरामुत्तराम् इति। 'नित्यवीप्सयोः' (पा ८,१,४) इति द्विर्वचनम्। 'अनुदात्तं च' (पा ८,१,३) इति आम्रेडितानुदात्तत्वम्। दुहाम् इति। दुह प्रपूरणे। स्वरितेत्त्वाद् आत्मनेपदम्। लोटि 'लोपस्त आत्मनेपदेषु' (पा ७,१,४१) इति तलोपः।

यां 'दे॒वाः प्र॑ति॒नन्द॑न्ति' रात्रिं 'धे॒नुमु॒पाय॒तीम्' ।
सं॒व॒त्स॒रस्य॒ या पत्नी॒ सा नो॑ अस्तु सुम॒ङ्गली॑' ॥ २ ॥

याम् । दे॒वाः । प्र॒ति॒ऽनन्द॑न्ति । रात्रि॑म् । धे॒नुम् । उ॒प॒ऽआ॒य॒तीम् ।
स॒म्ऽव॒त्स॒रस्य॑ । या । पत्नी॑ । सा । नः॒ । अ॒स्तु॒ । सु॒ऽम॒ङ्गली ॥ २ ॥

१. व्यौच्छत् तै ४,३,११,५ पागृ ३,३,५. २. दुहा उं मै २,१३,१० मंत्रा २,२,१ पै १,१०४,१; धुक्षोत्त° तै. पागृ. ३. जना: पागृ ३,२,२ हिगृ २,१७,२ आपमं २,२०,२७ मागृ २,८,४. ४. °निदन्ति P ५. धेनुमिवायतीम् प.गृ. हिगृ. आपमं. ६. सुमङ्गला पै १,१०४,२.

याम् एकाष्टकासंबन्धिनीं रात्रिम्। 'रात्रेश्चाजसौ' (पा ४,१,३१) इति ङीषभावश्छान्दसः। धेनुम् उक्तप्रकारेण धेनुरूपाम् उपायतीम् समीपम् आगच्छन्तीं दृष्ट्वा देवाः हविर्भुजः प्रतिनन्दन्ति प्रशंसन्ति। उपायतीम् इति। उपाङ्पूर्वाद् एतेर्लटः शत्रादेशः। 'इणो यण्' (पा ६,४,८१) इति यण्। 'उगितश्च' (पा ४,१,६) इति ङीप्। 'शतुरनुमो नद्यजादी (पा ६,१,१७३) इति नद्या उदात्तत्वम्। या एकाष्टका संवत्सरस्य तदात्मकस्य 'कालस्य पत्नी[1] जाया। तथा च श्रुत्यन्तरम् — 'एषा वै संवत्सरस्य पत्नी यद् एकाष्टका। एतस्यां वा एष एतां रात्रिं वसति' (तै ७,४,८,१) इति। सा एकाष्टका नः अस्मान् उद्दिश्य सुमङ्गली शोभनमङ्गलयुक्ता अस्तु भवतु। शोभनं मङ्गलं यस्या इति बहुव्रीहौ 'नञ्सुभ्याम्' (पा ६,२,१७२) इत्युत्तरपदान्तोदात्तत्वम्। '°सुमङ्गलभेषजाच्च' (पा ४,१,३०) इति विहितस्य ङीपः उदात्तनिवृत्तिस्वरेण उदात्तत्वम्।

संवत्सरस्य प्रतिमां[2] यां[3] त्वा[4] रात्र्युपास्महे[5][6]।
[7]सा न[8] आयुष्मतीं प्रजां रायस्पोषेण सं सृज ॥ ३ ॥

सम्ऽवत्सरस्य। प्रतिऽमाम्। याम्। त्वा। रात्रि। उपऽआस्महे।
सा। नः। आयुष्मतीम्। प्रऽजाम्। रायः। पोषेण। सम्। सृज ॥ ३ ॥

हे रात्रि संवत्सरस्य प्रतिमाम् प्रतिकृतिरूपाम्। प्रतिनिधित्वेन निर्मीयत इति प्रतिमा। 'आतश्चोपसर्गे' (पा ३,३,१०६) इत्यङ्। यां त्वा त्वाम् उपास्महे सेवामहे। आस उपवेशने। अदादित्वात् शपो लुक्। सा त्वम् नः अस्माकं प्रजाम् पुत्रपौत्रादिरूपाम् आयुष्मतीं चिरकालजीवनवतीं कुर्वती सती रायः धनस्य गवादिलक्षणस्य पोषेण पुष्ट्या सं सृज संयोजय। 'षष्ठ्याः पतिपुत्र°' (पा ८,३,५३) इति रायो विसर्जनीयस्य सत्वम्।

इयमेव सा या प्रथमा [8]व्यौच्छद्[9]आस्वितरासु चरति प्रविष्टा।
महान्तो अस्यां महिमानो अन्तर्वधूर्जिगाय[10] [11]नवगज्जनित्री ॥ ४ ॥

इयम्। एव। सा। या। प्रथमा। विऽऔच्छत्। आसु। इतरासु। चरति। प्रऽविष्टा।
महान्तः। अस्याम्। महिमानः। अन्तः। वधूः। जिगाय। नवऽगत्। जनित्री ॥ ४ ॥

इयमेव अद्यतनी एकाष्टकालक्षणा सा प्रथमम् उत्पन्ना उषाः। अनेन तादात्म्यप्रतिपादनेन अस्या अतिशयितमहत्त्वम् उक्तं भवति। तच्छब्दार्थम् आह। या उषाः प्रथमा प्रागुक्तप्रकारेण सृष्ट्यादौ उत्पन्ना सती व्यौच्छत् तमोनिरसनं कृतवती। उछी विवासे। सेयम् एकाष्टका उषाः आसु परिदृश्यमानासु इतरासु अन्यासु उषःसु

१. °कस्य या प° S', Kd.　　२. प्रतिमा पागृ ३,२,२.　　३. ये पै १,१०४,३; या पागृ.
४. ताम् पागृ.　　५. रात्रिम् पै., °त्रीम् पागृ.　　६. उपासते तै ५,७,२,१ पै.; यजामहे मंग्रा २,२,१८.
७ तेषाम् पै.　　८. व्युच्छत् शांगृ ३,१२,३.　　९. साऽस्मिन्नन्तः मै २,१३,१० पै १,१०४,४; सास्वन्तः
काठ ३९,१०; सेयम् अस्वन्तः मंग्रा २,२,१५; अन्तरस्याम् तै ७,३,११,१ शांगृ.　　१०. अजान तै.
११. ... मिमाय मै. पै [मूको.], काठ.　　१२. नवगद्वधू शांगृ., प्रथमा मंग्रा.

प्रविष्टा अनुगता सती चरति वर्तते उदेति। श्रूयते हि— 'एका सती बहुधोषो व्युच्छसि' (तै ४,३,११,५) इति। प्रपूर्वाद् विशेः कर्तरि निष्ठा। व्यत्ययेन अव्ययपूर्वपद-प्रकृतिस्वरत्वम्। यद्वा प्रविष्टा सूर्येणानुप्रविष्टा। कर्मणि क्तः। 'गतिरनन्तरः' (पा ६,२,४९) इति गतेः प्रकृतिस्वरत्वम्। अस्याम् उक्तलक्षणायाम् उषसि अन्तः मध्ये महान्तः अपरिमिताः महिमानः माहात्म्यविशेषाः। वर्तन्त इति शेषः। यद्वा महिमानः महत्त्वोपेताः महान्तः मुख्याः सूर्यसोमाग्नयः अस्याम् अन्तर्वर्तन्ते। सूर्यादय एतद्-धीनाः प्रकाशन्त इत्यर्थः। 'अय एनां महिमानः सचन्ते' (तै ४,३,११,१) इति श्रुतेः। वधूः सूर्यस्य जायोषाः। 'सूर्यपत्नी वि चरतः [1]प्रजानती' (तै ४,३,११,१) इति श्रुत्य-न्तरात्। नवगत्। नवम् अभिनवं प्रतिदिवसम् उद्यन्तं सूर्यं तदविनाभावेन गच्छ-तीति, नवम् अभिनवम् उत्पद्यमानं प्राणिजातं गच्छति व्याप्नोतीति वा नवगत्। यद्वा प्रतिदिनम् उत्पद्यमानमपि नवम् अभिनवम् उत्कृष्टम् एकविधं रूपं गच्छतीति नवगत्। तथा च मन्त्रवर्णः— 'पुनःपुनर्जायमाना पुराणी समानं वर्णम् अभि शुम्भमाना' (ऋ १,९२,१०) इति। अथवा नवधा विभक्तान् अहर्भागान् प्रातरादीन् गच्छतीति नवगत्। ते च भागाः प्रातःसंगवमध्याह्नापराह्णसायाह्नाख्याः पञ्च तदन्तरालकालाश्च चत्वारः। श्रूयते हि तैत्तिरीयके प्रातरादीन् प्रस्तुत्य 'समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि। चत्वार्यश्लीलानि। तानि नव' (तैब्रा १,५,३,४) इति। स्मर्यते च—

'प्रातरातः संगवश्च रुग्णो मध्याह्नसंततौ।
अपराह्णं खनिः सायं नवधा भिद्यते त्वहः॥' इति।

नवपूर्वाद् गमेः क्विप्। 'गमः क्वौ' (पा ६,४,४०) इत्यनुनासिकलोपः। 'ह्रस्वस्य पिति कृति तुक्' (पा ६,१,७१) इति तुक्। कृदुत्तरपदप्रकृतिस्वरत्वम्। एवंभूतोषाः जनित्री जनानां प्रकाशप्रदानेन साधु जनयित्री सती जिगाय जयति सर्वोत्कर्षेण वर्तते। जयतेर्लिटि 'सन्लिटोर्जेः' (पा ७,३,५२) इत्यभ्यासाद् उत्तरस्य कुत्वम्। जनित्रीति। जनेर्ण्यन्तात् साधुकारिणि तृन्। 'बहुलम् अन्यत्रापि' (पाउ २,९५) इति णिलोपः।

**[2]वानस्पत्या ग्रावाणो [3]घोषमक्रत [4]हविष्कृण्वन्तः परिवत्सरीणम्[5]।**
**एकाष्टके [6]सुप्रजसः [7]सुवीरा वयं स्याम पतयो रयीणाम्॥ ५॥**

वानस्पत्याः। ग्रावाणः। घोषम्। अक्रत। हविः। कृण्वन्तः। परिवत्सरीणम्।
एकऽअष्टके। सुऽप्रजसः। सुऽवीराः। वयम्। स्याम। पतयः। रयीणाम्॥ ५॥

हे एकाष्टके त्वदर्थं वानस्पत्याः वनस्पतिविकाराः उलूखलमुसलादयः। '°पत्युत्तरपदाण्ण्यः' (पा ४,१,८५) इति ण्यः। ग्रावाणः दृषदुपलादयः परिवत्सरीणम् संवत्सरेण निर्वृत्तम्। 'संपरिपूर्वात् ख च' (पा ५,१,९२) इति निर्वृत्तार्थे खप्रत्ययः। ईदृशं हविः धानाकरम्भचरुपुरोडाशादिकं कृण्वन्तः अवहननपेषणादिद्वारा उत्पादयन्तः घोषम्

१. प्रजावती S', Kd. २. औलूखलाः मंब्रा २,२,१३; उलूखलाः हिगृ २,१४,४. ३. °संप्रवदन्ति मंब्रा. ४. हविः कृ° B[h], S[m], हिगृ. ५. °रीणाम् हिगृ. मंब्रा. ६. सुप्रजासः P[3],M,W,Op; सुप्रजाः हिगृ. ७. वीरवन्तः हिगृ.

प्रीतिकरं शब्दम् अक्रत अकृषत। कृञो लुङि आत्मनेपदे 'मन्त्रे घस०' (पा २,४,८०) इति च्लेर्लुक्। हे एकाष्टके एका चासावष्टका एकाष्टका। 'दिक्संख्ये संज्ञायाम्' (पा २,१,५०) इति समासः। 'अष्टका पितृदेवत्ये' (पावा ७,३,४५) इति इत्वाभावः। त्वदनुग्रहाद् वयं सुप्रजसः शोभनपुत्रपौत्रादियुक्ताः। 'नित्यमसिच् प्रजामेधयोः' (पा ५,४,१२२) इत्यसिच् समासान्तः। सुवीराः। विविधम् ईरयन्ति शत्रून् इति वीरा भृत्याः। 'वीरो वीरयत्यमित्रान्' इति निरुक्तम् (१,७)। वीर विक्रान्तौ। इत्यस्माद् वा पचाद्यच्। बहुव्रीहौ 'वीरवीर्यौ च' (पा ६,२,१२०) इत्युत्तरपदाद्युदात्तत्वम्। सुभृत्याः सन्तो रयीणाम् धनानां पतयः स्वामिनः स्याम भवेम। 'नामन्यतरस्याम्' (पा ६,१,१७७) इति नाम उदात्तत्वम्।

[1]इडा॑यास्प॒दं[2] घृ॒तव॑त् [3]स॒री॒सृ॒पं जात॑वेदः॒ प्रति॑ [4]ह॒व्या गृ॑भाय[5]।
ये ग्रा॒म्याः प॒शवो॑ वि॒श्वरू॑पा॒स्तेषां॑ स॒प्ता॒नां [6]मयि॑ [7]रन्ति॑रस्तु ॥ ६ ॥

इडा॑याः। प॒दम्। घृ॒तऽव॑त्। स॒री॒सृ॒पम्। जात॑ऽवेदः। प्रति॑। ह॒व्या। गृ॒भा॒य॒।
ये। ग्रा॒म्याः। प॒शवः॑। वि॒श्वऽरू॑पाः। तेषा॑म्। स॒प्ता॒नाम्। मयि॑। रन्ति॑ः। अ॒स्तु॒ ॥ ६ ॥

[8]इलायाः। गोनामैतत्। 'इला धेनुः सहवत्सा न आगात्' (आपश्रौ ४,१०,७) इत्यादिश्रुतेः। 'इडाया वा' (पा ८,३,५४) इति विसर्जनीयस्य सत्वम्। तस्याः पदम् पादः घृतवत् घृतोपेतम्। 'सा यत्रयत्र न्यक्रामत् ततो घृतम् अपीड्यत' (तै २,६,७,१) इति श्रुतेः। सरीसृपम् अत्यर्थं सर्पत्। सृपेर्यङ्लुगन्तात् पचाद्यच्। 'न धातुलोप आर्धधातुके' (पा १,१,४) इति लघूपधगुणप्रतिषेधः। इडापदात्मना भावितं पशोर्दक्षिणं पादम् हव्या हव्यानि धानाकरम्भादीनि हवींषि च। शेर्लोपः। हे जातवेदः जातानां वेदितरग्ने प्रति गृभाय प्रतिगृहाण। 'हलः श्नः शानज्झौ', 'छन्दसि शायजपि' (पा ३,१,८३;८४) इति श्नः शायजादेशः। 'हृग्रहोर्भः०' (पावा ८,२,३२) इति भः। गृहीतहविषस्तव प्रसादाद् ग्राम्याः ग्रामे भवा गोश्वाजाविपुरुषगर्दभोष्ट्राख्या विश्वरूपाः नानाकारा ये पशवः सन्ति तेषाम् उक्तानां सप्तानां पशूनां रन्तिः प्रीतिः मयि च अस्तु। ततः समृद्धिर्भवतु इत्यर्थः। रमेः क्तिनि अनुनासिकलोपाभावश्छान्दसः।

आ [9]मा॑ पु॒ष्टे च॒ [10]पोषे॑ च॒ [11]रात्रि॑ दे॒वानां॑ सु॒म॒तौ स्या॑म।
पू॒र्णा [12]द॑र्वे॒ परा॑ पत॒ सुपू॑र्णा॒ पुन॒रा प॑त।
सर्वा॑न् [13]य॒ज्ञान्त्सं॑भु॒ञ्ज॒तीष॒मूर्जं॑ न॒ आ भ॑र ॥ ७ ॥

---

१. इडायै सृप्तम् हिगृ २,१७,२. २. चराचरम् अश्रौ २,२,१७ आपश्रौ ६,५,७ हिगृ. ३. हविरिदं जुषस्व अश्रौ. आपश्रौ. हिगृ. ४. इह तैब्रा ३,११,१२,३१ आपश्रौ. हिगृ. ५. पुष्टिर° आश्रौ. ६. वैतु मंपा. ह. ७. मे RW. ८. पुष्टि वै १,१०१,३. ९. पोष्ये पै. १०. राम्या पै. ११. दर्वे> दर्वि Bh; दर्वि K पचे यनि. च, V, मा ३,४९ तै १,८,४,१ आश्रौ २,१८,१३. १२. यज्ञान्सं K,Km,V.

आ । मा । पुष्टे । च । पोषे । च । रात्रि । देवानाम् । सुऽमतौ । स्याम । पूर्णा । [1]दर्वे । परा । पत । सुऽपूर्णा । पुनः । आ । पत । सर्वान् । यज्ञान् । सम्ऽभुञ्जती । इषम् । ऊर्जम् । नः । आ । भर ॥

हे रात्रि मा मां पुष्टे समृद्धे धने पोषे पुत्रपौत्रादिसमृद्धौ । परस्परसमुच्चयार्थौ चकारौ । आ इति उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । आ स्थापय । त्वत्प्रसादाद् वयं च देवानाम् इन्द्रादीनां सुमतौ कल्याण्यां बुद्धौ स्याम भवेम । हे [2]दर्वि होमसाधनभूते त्वं पूर्णा हविर्भिः पूरिता सती परा पत परागच्छ । यष्टव्यान् देवान् प्रति गच्छ । ततः सुपूर्णा अभिमतफलैः परिपूर्णा सती पुनरा पत अस्मान् आगच्छ । पतॢ गतौ । पूर्णेति । पॄ पालनपूरणयोः इत्यस्मात् ण्यन्तात् 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' ( पा ७,२,२७ ) इति इडभावो णिलुक् च निपात्यते । 'उदोष्ठ्यपूर्वस्य' ( पा ७,१,१०२ ) इत्युत्वम् । 'रदाभ्याम्०' ( पा ८,२,४२ ) इति नत्वम् । सुपूर्णेति । 'गतिरनन्तरः' ( पा ६,२,४९ ) इति गतेः प्रकृतिस्वरत्वम् । सर्वान् यज्ञान् यष्टव्यान् । 'यजयाच' ( पा ३,३,९० ) इत्यादिना कर्मणि नङ्प्रत्ययः । संभुञ्जती हविषा सम्यक् पालयन्ती प्रीणयन्ती । भुजेः पालनार्थाद् आत्मनेपदाभावे शतृप्रत्ययः । 'शतुरनुमः०' ( पा ६,१,१७३ ) इति ङीप उदात्तत्वम् । ईदृशी सती देवेभ्यः सकाशाद् इषम् अन्नम् ऊर्जम् बलं च नः अस्मभ्यम् आ भर आहर । पूर्णा [2]दर्वीति [3]पृथग्ग्रहणात् 'ग्रहणम् आ ग्रहणाद्' ( कौसू ८,२१ ) इति न्यायात् विनियोगविषये 'आ मा पुष्टे च' इत्येकावसाना ऋक् । पञ्चपटलिकायां ( ३,१२ ) तु त्र्यवसाना एकैव ऋग् इत्युक्तम् ।

आयमगन्त्संवत्सरः पतिरेकाष्टके तव ।
सा न आयुष्मतीं प्रजां रायस्पोषेण सं सृज ॥ ८ ॥

आ । अयम् । अगन् । सम्ऽवत्सरः । पतिः । एकऽअष्टके । तव ।
सा । नः । आयुष्मतीम् । प्रऽजाम् । रायः । पोषेण । सम् । सृज ॥ ८ ॥

हे एकाष्टके तव पतिः अयं संवत्सरः आगन् आगतः । संवत्सरस्य पतित्वं प्राग् उक्तम् । सा त्वं पत्या सहिता नः अस्माकं प्रजाम् पुत्रपौत्रादिलक्षणाम् आयुष्मतीं कुर्वती रायः धनस्य पोषेण सं सृज संयोजय ।

ऋतून् यज ऋतुपतीनार्तवानुत हायनान् ।
समाः संवत्सरान् मासान् भूतस्य पतये यजे ॥ ९ ॥

ऋतून् । यजे । ऋतुऽपतीन् । आर्तवान् । उत । हायनान् ।
समाः । सम्ऽवत्सरान् । मासान् । भूतस्य । पतये । यजे ॥ ९ ॥

१. दर्वि K. २. वैतु. मंत्रा. इ. ३. पृथग् नास्ति S', Kd.

ऋतून् वसन्तादीन् यजे हविषा प्रीणयामि। ऋतुपतीन् तेषाम् ऋतूनाम् अधिष्ठातॄन् अग्न्यादीन् देवांश्च। यजे इति सर्वत्र संबन्धः। आर्तवान् ऋत्ववयवान् अन्यान् अनुक्तान् कलाकाष्ठादीन् कालविशेषान्। 'ऋतोरण्' (५,१,१०५) इति अण्प्रत्ययः। उत अपि च हायनान् समाः संवत्सरान्। इत्येते शब्दा यद्यपि समानार्थास्तथापि अत्र हायनशब्देन संवत्सरसंबन्धिनः अहोरात्रा लक्ष्यन्ते। जहति जिहते वा भावान् इति हायनाः। 'हश्च व्रीहिकाल्योः' (पा ३,१,१४८) इति ण्युट्। समाशब्देन समप्रविभक्ताश्चतुर्विंशतिसंख्याका अर्धमासाः। तान् संवत्सरान् द्वादशमासात्मकान् मासान् चैत्राद्यान् द्वादशसंख्याकान् यजे इति संबन्धः। भूतस्य सद्भावं प्राप्तस्य चराचरात्मकस्य जगतः पतये यः पतिरन्तर्यामी अनवच्छिन्नकालात्मकः तस्मै। 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थी। तं भूतपतिं च यजे हविषा प्रीणयामि। यद्वा। भूतस्य पतय इति तादर्थ्ये चतुर्थी। भूतपतिप्रीणनाय ऋत्वादीन् [1]यज इति संबन्धः।

[2]ऋतुभ्यष्ट्वार्तवेभ्यो माद्भ्यः [3]संवत्सरेभ्यः।
धात्रे विधात्रे समृधे भूतस्य पतये यजे ॥ १० ॥

ऋतुऽभ्यः। त्वा। आर्तवेभ्यः। मात्ऽभ्यः। सम्ऽवत्सरेभ्यः।
धात्रे। विऽधात्रे। सम्ऽऋधे। भूतस्य। पतये। यजे ॥ ९ ॥

हे एकाष्टके त्वा त्वाम् ऋतुभ्यः वसन्तादिभ्यः तत्प्रीत्यर्थम् यजे इत्यनुषङ्गः। एवम् आर्तवेभ्यः ऋतुसंबन्धिभ्यः अहोरात्रादिभ्यः। त्वा यजे इति सर्वमन्त्रेषु अनुषङ्गः। माद्भ्यः मासेभ्यः। 'पद्दन्नोमास्' (पा ६,१,६३) इत्यादिना मासशब्दस्य मास् इत्यादेशः। 'स्ववस्स्वतवस्मासुषसां[4] च त इष्यते छन्दसि' (पावा ७,४,४८) इति सकारस्य तत्वम्। संवसन्त्यस्मिन्निति संवत्सरः। संपूर्वाद् वसेरौणादिकः सरप्रत्ययः। 'सः स्यार्धधातुके' (पा ७,४,४९) इति तत्वम्। तेभ्यः धात्रे धाता धारयिता एतन्नामको देवः तस्मै विधात्रे सर्वस्य निर्मात्रे देवाय समृधे समर्धयित्रे एतन्नाम्ने देवाय। ऋधु वृद्धौ। संपूर्वाद् अस्मात् क्विप्। भूतस्य पतये उक्तलक्षणाय देवाय। 'षष्ठीयुक्तश्छन्दसि वा' (पा १,४,९) इति पतिशब्दस्य [5]घिसंज्ञायां 'घेर्ङिति' (पा ७,३,१११) इति गुणः। यजे हविषा प्रीणयामि।

इडया जुह्वतो [6]वयं देवान् घृतवता यजे।
गृहानलुभ्यतो वयं सं विशेमोप गोमतः ॥ ११ ॥

१. यजत S' Kd. २. °भ्यस्त्वा° RW., यजुर्भ्यस्त्विग्म्य आर्त° पै १,१०५,४. ३. संवत्सराय च पै. ४. मासोषसां S', Kd. ५. घि° नास्ति S', Kd. ६. हविर् पै १,१०५,३.

इडया । जुह्वतः । वयम् । देवान् । घृतऽवता । यजे ।
गृहान् । अलुभ्यतः । वयम् । सम् । विशेम । उप । गोऽमतः ॥ ११ ॥

इडया । गोनामैतत् । [1]तदुपलक्षितेन मांसादिरूपेण हविषा घृतवता उपस्तरणाभिघारणार्थघृतयुक्तेन जुह्वतः होमं कुर्वन्तः अग्नौ हविः प्रक्षिपन्तः । 'तृतीया च होश्छन्दसि' (पा २,३,३) इति कर्मणि तृतीया । तथाविधा वयं देवान् यजे । व्यत्ययेन एकवचनम् । यजामहे प्रीणयामः । जुह्वत इति । जुहोतेर्लटः शत्रादेशे 'नाभ्यस्ताच्छतुः' (पा ७,१,७८) इति नुम्प्रतिषेधः । 'अभ्यस्तानामादिः' (पा ६,१,१८९) इत्याद्युदात्तत्वम् । तेषां देवानाम् अनुग्रहाद् वयम् अलुभ्यतः गार्ध्यम् अकुर्वाणाः संपूर्णाः [2]सन्तः । लुभ गार्ध्ये । दिवादित्वात् श्यन् । 'अनित्यमागमशासनम्' इति नुमभावः । यद्वा गृहविशेषणम् । अलुभ्यतः गार्ध्यरहितान् । काम्यमानसकलवस्तुसमेतान् इत्यर्थः । गोमतः । भूम्नि मतुप् । बहुभिर्गोभिर्युक्तान् गृहान् उप । क्रियाध्याहारः । उपेत्य सं विशेम सुखेन निवसेम ।

एकाष्टका [3]तपसा तप्यमाना[3] जजान गर्भं महिमानमिन्द्रम् ।
तेन देवा [4]व्यसहन्त [5]शत्रून् हन्ता [6]दस्यूनामभवच्छचीपतिः[7] ॥ १२ ॥

[8]एकऽअष्टका । तपसा । तप्यमाना । जजान । गर्भम् । महिमानम् । इन्द्रम् ।
तेन । देवाः । वि । असहन्त । शत्रून् । हन्ता । दस्यूनाम् । अभवत् । शचीऽपतिः ॥१२॥

एकाष्टका माघकृष्णाष्टमीत्युक्तम् । सा देवतात्वेन स्तूयते । तपसा तप्यमाना व्यत्ययेन कर्मणि तृतीया । 'तपस्तपःकर्मकस्यैव' ( पा ३,१,८८ ) इति कर्मवद्भावाद् यगात्मनेपदे । '°अदुपदेशाल्लसार्वधातुक°' ( पा ६,१,१८६ ) इति अनुदात्तत्वेन यक उदात्तत्वे प्राप्ते व्यत्ययेन [6]धातुस्वरः । यद्वा तप ऐश्वर्ये दिवादिः आत्मनेपदी । श्यनो नित्त्वाद् आद्युदात्तत्वम् । सर्वस्य ईशाना एकाष्टका तपसा संतापकरेण पुत्रार्थेन कर्मणा गर्भम् गर्भभूतं महिमानम् महत्त्वोपेतम् इन्द्रं जजान जनयामास । यद्वा गर्भं गरणीयं स्तुत्यं वन्दनीयम् । [10]गॄ शब्दे । 'अर्तिगृभ्यां भन्' ( पाउ ३,१५२ ) इति भन् प्रत्ययः । गर्भस्थवद् अदृश्यं वा । गॄ निगरणे । अस्माद् वा भन् । एवंभूतम् इन्द्रम् ईशितारम् आदित्यं जजान जनयामास प्राकाशयत् । तेन उक्तलक्षणेन इन्द्रेण देवाः शत्रून् शातयितॄन् असुरान् व्यसहन्त विशेषेण अभ्यभवन् । स च इन्द्रः शचीपतिः शच्या देव्याः पतिः । यद्वा शचीति कर्मनाम । शचीनां कर्मणां पतिः स्वामी दस्यूनाम् उपक्षपयितॄणां हन्ता अभवत् घातको भवतु । शचीपतिरिति । वनस्पत्यादित्वाद् (पा ६,२,१४०) उभयपदप्रकृतिस्वरत्वम् ।

---

१. तदुपलक्षि° S', Kd. २. संतस्तान् S', Kd. ३. तपसा तप्यमाना तै ४,३,११,३. ४. व्यसहन्त Bh,K,A,Sm,V, असहन्त मंप्रा. २,३,२१. ५. दस्यन् तै. काठ ३९,१० पागृ. ३,३,५. ६. असुराणाम् पै १,१०६,४ तै. काठ. पागृ. ७. शचीभि· P3,M, तै. काठ. पागृ. ८. एका° P. ९. उ. तै.; वैतु. मंपा. द्र. १०. गृ S', Kd.

**इन्द्र॑पुत्रे॒ सोम॑पुत्रे दुहि॒तासि॑ प्र॒जाप॑तेः ।**
**कामा॑न॒स्माकं॑ पूरय॒ प्रति॑ गृह्णाहि नो ह॒विः ॥ १३ ॥**

इन्द्र॑ऽपुत्रे । सोम॑ऽपुत्रे । दु॒हि॒ता । अ॒सि॒ । प्र॒जाऽप॑तेः ।
कामा॑न् । अ॒स्माक॑म् । पू॒र॒य॒ । प्रति॑ । गृ॒ह्णा॒हि॒ । नः॒ । ह॒विः ॥ १३ ॥

हे इन्द्रपुत्रे उक्तरीत्या इन्द्रः पुत्रो यस्यास्तादृशि हे सोमपुत्रे सोमः पुत्रो यस्यास्तथाविधे । 'यां देवाः प्रतिनन्दन्ति रात्रिम्' ( अ ३,१०,२ ) इति रात्र्येकाष्टकयोरभेदव्यवहाराद् रात्रौ चन्द्रस्य प्रकाशस्य उपलब्धेश्च पुत्रत्वोपचारः । यद्वा गवामयनाख्ये संवत्सरसत्रे एकाष्टकायां सोमस्य क्रयणात् पुत्रत्वोपचारः । श्रूयते हि गवामयनदीक्षां प्रस्तुत्य —'तेषाम् एकाष्टकायां क्रयः संपद्यते' ( तै ७,४,८,२ ) इति । ईदृशि हे एकाष्टके त्वं प्रजापतेः प्रजानां देवानां मनुष्यादीनां स्रष्टुः दुहितासि पुत्री भवसि । तथाविधा त्वम् अस्माकं कामान् काम्यमानान् प्रजापश्वादीन् अर्थान् पूरय समृद्धान् कुरु । तदर्थं नः अस्मदीयं हविः प्रति गृह्णाहि प्रतिगृहाण स्वीकुरु । ग्रहेर्लोटि सिपो हिरादेशः । 'हलः श्नः शानज्झौ' ( पा ३,१,८३ ) इति शानजादेशो व्यत्ययेन न प्रवर्तते । 'वा छन्दसि' ( पा ३,४,८८ ) इति हेः पित्त्वेन ङित्त्वस्य निवर्तनात् 'ई हल्यघोः' ( पा ६,४,११३ ) इति ईत्वमपि न भवति ।

इति द्वितीयेऽनुवाके पञ्चमं सूक्तम् ।

द्वितीयोऽनुवाकः समाप्तः ।

तृतीयेऽनुवाके पञ्च सूक्तानि । तत्र 'मुञ्चामि त्वा' इति प्रथमसूक्तेन बालग्रहरोगे निरन्तरस्त्रीसंगतिजनितयक्ष्मणि च पूतिगन्धमत्स्यसहितम् ओदनम् अभिमन्त्र्य भोजनकाले व्याधितम् आशयेत् ।

तथा अनेन सूक्तेन अरण्यतिलैधज्वालितोदपात्रेण उषःकाले अरण्ये गृहे वा व्याधितम् अवसिञ्चेत् मार्जयेद् आचामयेच्च[1] ।

तथा अरण्यशणारण्यगोमयचित्यादिशान्तौषधिभिः प्रत्येकं प्रज्वालितेनोदकेन उषःकाले व्याधितस्य अवसेकमार्जनाचमनानि कुर्यात् ।

तथा सर्वव्याधिनिवृत्तये च अनेन सूक्तेन व्याधितम् उपस्पृश्य अभिमन्त्रयेत् ।

सूत्रितं हि—" 'मुञ्चामि त्वा' इति ग्राम्ये पूतिशफरीभिरोदनम् । अरण्ये[2] तिलशणगोमयशान्ताज्वालेनावनक्षत्रेऽवसिञ्चति" (कौसू २७,३२;३३) इति । शान्ता ओषधयश्चित्तिः प्रायश्चित्तिरित्येवमाद्याः सूत्रकृतोक्ताः ( कौसू ८,१५;१६ ) ।

अस्य सूक्तस्य अंहोलिङ्गगणे पाठात् तस्य गणस्य 'ओषधिवनस्पतीनाम् अनुस्कान्त्य—

१. °चमयेत् S', Kd.   २. अरण्ये > अरण्य° S', अरण्य° Kd.

प्रावेपिद्धानि भैषज्यानाम्। अंहोलिङ्गाभिः' ( कौसू ३२,२६;२७ ) इत्यादिना यत्रयत्र सूत्रकृता विनियोग उक्तस्तत्र सर्वत्र अस्य विनियोगो द्रष्टव्यः।

तथा क्रतुमध्ये व्याधितस्य यजमानस्य भैषज्येऽपि एतत् सूक्तम् । तथा च वैताने — "अथ भैषज्याय यजमानम् 'अक्षीभ्यां ते' ( अ २,३३ ), 'मुञ्चामि त्वा', 'उत देवाः' ( अ ४,१३ )" [ वैताश्रौ ३८,१ ] इति।

मुञ्चामि॑ त्वा ह॒विषा॒ जीव॑नाय॒ कम॑ज्ञातय॒क्ष्मादु॒त रा॑जय॒क्ष्मात् ।
ग्राहि॑र्ज॒ग्राह॒ [1]यद्ये॒तदे॑नं॒ [2] तस्या॑ इन्द्राग्नी॒ प्र मु॑मुक्तमेनम् ॥ १ ॥

मु॒ञ्चामि॑ । त्वा॒ । ह॒विषा॑ । जीव॑नाय । कम् । अ॒ज्ञा॒त॒ऽय॒क्ष्मात् । उ॒त । रा॒ज॒ऽय॒क्ष्मात् ।
ग्राहि॑ः । ज॒ग्राह॑ । यदि॑ । ए॒तत् । ए॒न॒म् । तस्याः॑ । इ॒न्द्रा॒ग्नी॒ इति॑ । प्र । मु॒मु॒क्त॒म् । ए॒न॒म् ॥ १ ॥

हे [4]व्याधिग्रस्त त्वा त्वां हविषा अन्नेन अज्ञातयक्ष्मात् । अयम् एतत्संज्ञक इति अप्रज्ञातः शरीरगतो रोगः अज्ञातयक्ष्मः। यद्वा राजयक्ष्मव्यतिरिक्तः सर्वोपि रोगः अज्ञातयक्ष्मशब्दवाच्यः। तादृशाद् रोगाद् मुञ्चामि विश्लेषयामि। यक्ष पूजायाम् इत्यस्मात् 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' ( पाउ १,१४० ) इति मन्प्रत्ययान्तो यक्ष्मशब्दः। उत अपि च राजयक्ष्मात् यक्ष्माणां रोगाणां राजा क्षयरोगो राजयक्ष्मः राजदन्तादित्वाद् उपसर्जनस्य परनिपातः। यद्वा राजा सोमः तं प्रथमं यो यक्ष्मो गृहीतवान् स राजयक्ष्मः। 'राजानं यक्ष्म आरद् इति तद् राजयक्ष्मस्य जन्म' ( तै २,५,६,५) इति श्रुतेः। तस्मादपि त्वा मुञ्चामि । किमर्थम् । जीवनाय जीवनार्थम् । इह लोके चिरकालावस्थानार्थम् इत्यर्थः। [5]कम् इति पूरणः। तथा ग्राहिः ग्रहणशीला पिशाची यदि एतद् इदानीम् एनम् बालकं जग्राह गृहीतवती तस्याः सकाशात् हे इन्द्राग्नी युवाम् एनं प्र मुमुक्तम् प्रमोचयतम्। मुचेश्छान्दसो विकरणस्य श्लुः।

यदि॑ क्षि॒तायु॒र्यदि॑ वा॒ परे॑तो॒ यदि॑ मृ॒त्योर॑न्ति॒कं नी॑त ए॒व ।
तमा ह॑रामि॒ [6]निर्ऋ॑तेरु॒पस्था॑दस्पार्शमेनं॒ [7] श॒तशा॑रदाय ॥ २ ॥

यदि॑ । क्षि॒त॒ऽआ॒युः । यदि॑ । वा॒ । परा॑ऽइतः । यदि॑ । मृ॒त्योः । अ॒न्ति॒कम् । निऽइ॑तः । ए॒व ।
तम् । आ । ह॒रा॒मि॒ । निः॒ऽऋ॑तेः । उ॒पऽस्था॑त् । अस्पा॑र्शम् । ए॒न॒म् । श॒त॒ऽशा॑रदाय ॥ २ ॥

यदि अयं व्याधिग्रस्तः क्षितायुः रोगेण क्षपितायुर्भवेत् । क्षि क्षये इत्यस्मात् कर्मणि निष्ठा। 'निष्ठायामण्यदर्थे' ( पा ६,४,६० ) इति पर्युदस्तत्वाद् दीर्घाभावः।

१. ग्राह्या गृहीतो पै १,६२,१. २. यद्येष यतस् पै., यदि॑ वै॒तदे॑नम् ऋ १०,१६१,१. ३. ततः पै. ० ४. व्याधितग्रस्त S', Kd. ५ किम् S', Kd. ६. निर्ऋते उप D.
७. °दस्पार्षमे° K,S, RW., पै १,६२,२ ऋ १०,१६१,२ सा.

यदि वा परेतः अस्माल्लोकात् परागतो भवेत्। यदि च मृत्योः वैवस्वतस्य अन्तिकं नीतः नितरां प्राप्त एव भवति। उपायान्तरेण अशक्यानेयत्वम् एवकारेण द्योत्यते। परेतो नीत इत्युभयत्र एतेः कर्मणि निष्ठा। 'गतिरनन्तरः' (पा ६,२,४९) इति गतेः प्रकृतिस्वरत्वम्। नीत इति। 'स्वरितो वाऽनुदात्ते पदादौ' (पा ८,२,६) इत्येकादेशः स्वर्यते। एवंभूतमपि तम् पुरुषं निर्ऋतेः मृत्योः उपस्थात् उपस्थानात् समीपात् आ हरामि इमं लोकम् आनयामि। आहृत्य च एनं शतशारदाय शतसंवत्सरजीवनार्थम् [1]अस्पार्षम् प्रबलं करोमि। स्पृ प्रीतिबलनयोः। छान्दसो लुङ्। पादादित्वात् 'तिङ्ङतिङः' (पा ८,१,२८) इति निघाताभावः।

सहस्राक्षेण [2]शतवीर्येण शतायुषा हविषाहार्षमेनम्।
[3]इन्द्रो [4]यथैनं [5]शरदो [6]नयात्यति विश्वस्य दुरितस्य पारम्॥ ३॥

सहस्रऽअक्षेण। शतऽवीर्येण। शतऽआयुषा। हविषा। आ। अहार्षम्। एनम्। इन्द्रः। यथा। एनम्। शरदः। नयाति। अति। विश्वस्य। दुःऽइतस्य। पारम्॥ ३॥

सहस्राक्षेण। सहस्रम् इति बहुनाम। सहस्रम् अक्षीणि चक्षूंषि दर्शनशक्तयो यस्य हविषः फलत्वेन विद्यन्ते तत् सहस्राक्षम्। 'बहुव्रीहौ सक्थ्यक्ष्णोः०' (पा ५,४,११३) इति षच् समासान्तः। तेन शतवीर्येण। शतशब्दः अपरिमितवाची। शतसंख्याकानि श्रोत्रादीन्द्रियसंबन्धीनि वीर्याणि श्रवणादिशक्तयः फलत्वेन यस्य सन्ति तादृशेन शतायुषा शतसंवत्सरपरिमितम् आयुर्जीवनं फलभूतं यस्य तादृशेन हविषा अन्नादिना एनम् व्याधिगृहीतं मृत्योः सकाशाद् आहार्षम् आनैषम्। यथा इन्द्रः एनं पुरुषं शरदः शतसंख्याकान् संवत्सरान्। अत्यन्तसंयोगे द्वितीया। तावत्कालपर्यन्तं विश्वस्य कृत्स्नस्य दुरितस्य आयुर्भङ्गनिमित्तस्य पापस्य पारम् अवसानम् अति नयाति अतिनयेत् अतिक्रामयेत्। तथा तम् इन्द्रं हविषा प्रीणयामि इति शेषः। नयातीति। नयतेर्लेटि आडागमः।

शतं जीव शरदो वर्धमानः शतं [7]हेमन्ताञ्छतमु वसन्तान्।
शतं [8]त इन्द्रो अग्निः सविता बृहस्पतिः शतायुषा [9]हविषाहार्षमेनम्॥ ४॥

शतम्। जीव। शरदः। वर्धमानः। शतम्। हेमन्तान्। शतम्। ऊं इति। वसन्तान्। शतम्। ते। इन्द्रः। अग्निः। सविता। बृहस्पतिः। शतऽआयुषा। हविषा। आ। अहार्षम्। एनम्॥ ४॥

१. वैतु. मंपा. द्र. २. शतशारदेन ऋ १०,१६१,३. ३. शतं ऋ. ४. यथेमं ऋ. ५. जरसे पै १,६२,३. ६. नयातीन्द्रो ऋ. ७. हेमन्तान् D,R,K[m]. ८. इन्द्राग्नी पै १,६२,४ ऋ १०,१६१,४. ९. हविषेमं पुनर्दुः ऋ.

हे रोगात् विमुक्त त्वं वर्धमानः अहरहरभिवृद्धिं प्राप्नुवन् शतं शरदः शतसंख्याकान् शरदृतून् जीव प्राणान् धारय। तथा शतं हेमन्तान् हेमन्तर्तून्। उशब्दः समुच्चये। शतं वसन्तान् च वर्धमानः। जीव इत्युभयत्र अनुषङ्गः। सर्वत्र अत्यन्तसंयोगे द्वितीया। यद्यपि शतं शरद इत्यनेनैव शतसंवत्सरपरिमितम् आयुर्लब्धम् तथापि हेमन्तवसन्तयोः पृथगुपादानं शीतोष्णवर्षत्वेन संवत्सरस्य त्रैविध्यप्रदर्शनार्थम्। अनेन आजीवनं तत्तदृतुप्रयुक्तशीतोष्णादिकृतदुःखजातं[1] मा भूद् इत्युक्तं भवति। अत एव वर्धमान इति विशेषितम्। तथा इन्द्रः अग्निः सविता सर्वस्य प्रेरकः बृहस्पतिः च ते तव शतम् शतसंवत्सरपरिमितम्। आयुः कुर्वन्तु इति शेषः। शतायुषेत्यादि पूर्ववत्।

प्र विंशतं प्राणापानावनड्वाहाविव व्रजम्।
[2]व्य१॒न्ये यन्तु मृत्यवो [3]यानाहुरितरान्छतम्[4] ॥ ५ ॥

प्र। विशतम्। प्राणापानौ। अनड्वाहौऽइव। व्रजम्।
वि। अन्ये। यन्तु। मृत्यवः। यान्। आहुः। इतरान्। शतम् ॥ ४ ॥

हे प्राणापानौ शरीरधारकौ युवां प्र विशतम्। यक्ष्मगृहीतस्य शरीरम् इति शेषः। मन्त्रसामर्थ्येन निर्गतयोरपि पुनःप्रवेशाभिधानेन अनिर्गतयोस्तयोः कैमुतिकन्यायेन स्थैर्यं प्रार्थितं भवति। तत्र दृष्टान्तः — अनड्वाहौ अनसः शकटस्य वोढारौ बलीवर्दौ व्रजम् स्वनिवासस्थानं गोष्ठम् इव। 'अनसि वहेः क्विबनसो डश्च' (पाउद ९,१०७) इति क्विप्। 'चतुरनडुहोरामुदात्तः' (पा ७,१,९८) इत्यागमस्य आम उदात्तत्वम्। व्रजम् इति। व्रज गतौ इत्यस्माद् 'गोचरसंचरवहव्रज' (पा ३,३,११९) इत्यादिना 'हलश्च' (पा ३,३, १२१) इति प्राप्तस्य घञोऽपवादत्वेन घप्रत्ययान्तो व्रजशब्दो निपातितः। 'अजिव्रज्योश्च' (पा ७,३,६०) इति कुत्वाभावः। अन्ये राजयक्ष्मव्यतिरिक्ता मृत्यवः मृतिहेतवो रोगादयः वि यन्तु विमुखा गच्छन्तु। तानेवाह — यान् इतरान् अन्यान् मृत्यून् शतम् शतसंख्याकान् आहुः कथयन्ति अभिज्ञाः। शतम् इति अपरिमितनाम। तथैव प्राग् आम्नातम् — 'मेमम् अन्ये मृत्यवो हिंसिषुः शतं ये' (अ २,२८,१) इति। शाखान्तरेपि — 'ये ते सहस्रम् अयुतं पाशा मृत्यो मर्त्याय हन्तवे' (तैब्रा ३,१०,८,२) इति। व्यन्य इति। संहितायाम् 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा ८,४) इति अन्यशब्दस्य अकारः स्वर्यते।

इहैव स्तं प्राणापानौ माप गातमितो [5]युवम्।
शरीरमस्याङ्गानि जरसे वहतं पुनः ॥ ६ ॥

१. °कृतसुखदुःखजातं S', Kd. २. व्यं१न्ये B,B[b]. ३. °हुरित° A,B. ४. °रांछतम् R. ५. युवम् पक्षे यनि. च V,K.

इह । एव । स्तम् । प्राणापानौ । मा । अप । गातम् । इतः । युवम् ।
शरीरम् । अस्य । अङ्गानि । जरसे । वहतम् । पुनः ॥ ६ ॥

हे प्राणापानौ युवाम् इहैव अस्मिन्नेव शरीरे स्तम् भवतम् । अस्तेर्लोटि थसस्तम् । 'श्नसोरल्लोपः' (पा ६,४,१११) इत्यकारलोपः । इतः अस्माच्छरीरात् जवं शीघ्रम् अकाले माप गातम् मापगच्छतम् । एतेर्माङि लुङि 'इणो गा लुङि' (पा २,४,४५) इति गादेशः । पुनः शब्दः त्वर्थे । किं तु अस्य व्याधितस्य शरीरम् अङ्गानि हस्तपादादीनि च जरसे जरार्थम् । जरापर्यन्तम् इत्यर्थः । वहतम् धारयतम् । जरस इति । 'जराया जरसन्यतरस्याम्' (पा ७,२,१०१) इति जरसादेशः ।

[1]जरायै त्वा परि [2]ददामि [3]जरायै [4]नि धुवामि त्वा[5] ।
जरा त्वा भद्रा [6]नेष्ट [7]व्य१न्ये यन्तु मृत्यवो [8]यानाहुरितरान्[9] शतम्[9] ॥ ७ ॥

जरायै । त्वा । परि । ददामि । जरायै । नि । धुवामि । त्वा । जरा । त्वा । भद्रा । नेष्ट ।
वि । अन्ये । यन्तु । मृत्यवः । यान् । आहुः । इतरान् । शतम् ॥ ७ ॥

हे व्याधिविनिर्मुक्त त्वा त्वां जरायै परि ददामि । रक्षणार्थं दानं परिदानम् । जरा अवसानपर्यन्तं त्वां यथा रक्षति तथा ददामीत्यर्थः । जीर्यन्ति अङ्गानि अस्याम् अवस्थायाम् इति जरा । जॄष् वयोहानौ । 'षिद्भिदादिभ्योऽङ्' (पा ३,३,१०४) इति अङ्प्रत्ययः । तथा त्वा त्वां जरायै नि धुवामि जरापर्यन्तं नितरां प्रेरयामि । तावत्पर्यन्तं रोगादिभ्यः पालयामि इत्यर्थः । धू विधूनने । तुदादित्वात् शः । तस्य ङित्त्वाद् गुणाभावः । सा जरा त्वा त्वां भद्रा भन्दनीयानि कल्याणानि । शेर्लोपः । नेष्ट नयतु प्रापयतु । छान्दसो लुङ् । 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा ६,४,७५) इत्यडभावः । व्यन्ये इत्यादि व्याख्यातम् ।

अभि त्वा जरिमाहित गामुक्षणमिव रज्ज्वा ।
यस्त्वा मृत्युरभ्यधत्त जायमानं सुपाशया ।
तं ते सत्यस्य [10]हस्ताभ्यामुदमुञ्चद्[10] बृहस्पतिः ॥ ८ ॥

अभि । त्वा । जरिमा । अहित । गाम् । उक्षणम्ऽइव । रज्ज्वा ।
यः । त्वा । मृत्युः । अभिऽअधत्त । जायमानम् । सुऽपाशया ।
तम् । ते । सत्यस्य । हस्ताभ्याम् । उत् । [10]अमुञ्चत् । बृहस्पतिः ॥ ८ ॥

१. वैतु. मंपा. द्र. २. जरसे पै १,६१,५. ३. दध्मो पै. ४. निरूहामसि पै. ५. नेषद् पै. ६. व्य॑न्ये B, Bh. ७. °हुरित° D. ८. °रां छ° R. ९. °भ्यामिदं मुञ्चतु पै १,६१,१. १०. अमुञ्चत् P².

हे व्याधिविनिर्मुक्त जरिमा जरा त्वा त्वाम् अभ्यहित बद्धं करोतु । अभिपूर्वो दधातिर्बन्धने वर्तते । 'अश्वाभिधानीम् आ दत्ते' ( तै ५,१,२,१ ) इतिवत् । दधातेर्लुङ् । 'स्थाघ्वोरिच्च' ( पा १,२,१७ ) इति इत्त्वकित्त्वे । किमिव । उक्षणम् उक्षाणम् । 'वा षपूर्वस्य निगमे' (पा ६,४,९) इति दीर्घाभावः । सेचनसमर्थं गां रज्ज्वेव । यो मृत्युः त्वा त्वां जायमानम् उत्पद्यमानमेव अकाले सुपाशया शोभनः पाशो यस्याः सा । पाशशब्दो ग्रन्थिविशेषोपेतवलयाकाररज्ज्वग्रे प्रसिद्धः । यद् आह आपस्तम्बः — 'मौञ्जेन दाम्नान्यतरतः पाशेन' ( आपश्रौ २,५,४ ) इति । तथाविधया रज्ज्वा अभ्यधत्त अबध्नात् ते तव संबन्धिनं तम् मृत्युपाशं सत्यस्य अविनाशिनो ब्रह्मणो हस्ताभ्यां बृहस्पतिः उदमुञ्चत् उन्मोचयतु ।

इति तृतीयकाण्डे तृतीयेऽनुवाके प्रथमं सूक्तम् ।

'इहैव ध्रुवाम्' इति प्रथमं सूक्तं वास्तोष्पत्यगणे पठितम् । सूत्रितं हि — "'इहैव ध्रुवाम्' ( अ ३,१२ ), 'एह यातु' (अ ६,७३), 'यमो मृत्युः' (अ ६,९३), 'सत्यं बृहत्' ( अ १२,१ ) इत्यनुवाको वास्तोष्पतीयानि" ( कौसू ८,२३ ) इति । तेन गणेन नवशालावास्तुसंस्कारार्थं शालाभूमिं हलेन कर्षेत् ।

तथा यत्रयत्र चतुर्गणी महाशान्तिः शान्त्युदकादौ प्रयुज्यते तत्र सर्वत्र अस्य विनियोगः ।

तस्यामेव नवशालायां गर्तेषु उच्छ्रीयमाणस्थूणा अनेन सूक्तेन अभिमन्त्रयेत् ।

तथा तत्रैव कर्मणि 'इहैव ध्रुवाम्' (१;२) इति द्वाभ्याम् ऋग्भ्यां शालाभूमिं दृढां घट्टयेत् ।

'ऋतेन स्थूणाम' ( ६ ) इत्यनया ऋचा उच्छ्रितासु स्थूणासु घृताक्तं वंशम् आरोपयेत् ।

नवगृहप्रवेशकाले 'पूर्णं नारि' (८) इति ऋचा उदकुम्भसहितां पत्नीं गृहं प्रथमं प्रवेशयेत् ।

तद् उक्तं संहिताविधौ — "[1]वास्तोष्पतीयैः [2]कुलिजकृष्टे दक्षिणतोऽग्नेः[2] संभारम् आहरन्ति । वास्तोष्पत्यादीनि महाशान्तिम् [3]आवपते' इति[3] प्रक्रम्य" 'इहैव ध्रुवाम्' इति [4]मीयमानाम् [4]उच्छ्रीयमाणाम् अनुमन्त्रयते[4] अभ्यज्य 'ऋतेन' इति मन्त्रोक्तम् । 'पूर्णं नारि' इत्युदकुम्भम् अग्निम् आदाय प्रपद्यन्ते । ध्रुवाभ्यां (१;२) दृंहयति" ( कौसू ४३,४–११ ) इति ।

इहैव ध्रुवां नि मिनोमि शालां क्षेमे [5]तिष्ठाति घृतमुक्षमाणा ।
तां त्वा शाले सर्ववीराः सुवीरा अरिष्टवीरा [6]उप सं चरेम ॥ १ ॥

१. वास्तोष्पत्यैः S', Kd. २. °कृष्टीदक्षि° S', Kd. ३. आवपतेति S', Kd. ४. तु. S', Kd., Bl.; वैतु. शंपा. नीच°. ५. °माणानु° S', Kd. ६. तिष्ठतु पागृ ३,४,४; तिष्ठ शांगृ ३,३,१; तिष्ठति हिगृ १,२७,२; तिष्ठासि पै ३,२०,१. ७. अभि पै., अनु हिगृ.

इह । एव । ध्रुवाम् । नि । मिनोमि । शालाम् । क्षेमे । तिष्ठाति । घृतम् । उक्षमाणा ।
ताम् । त्वा । शाले । सर्वऽवीराः । सुऽवीराः । अरिष्टऽवीराः । उप । सम् । चरेम ॥ १ ॥

**इहैव अस्मिन्नेव प्रदेशे गृहे** शालां ध्रुवाम् **स्थिरां** नि मिनोमि **प्रक्षिपामि । स्थूणानिखननादिना करोमीत्यर्थः । डुमिञ् प्रक्षेपणे । सा निर्मिता शाला** घृतम् **एतदुपलक्षितम् अभिमतफलम्** उक्षमाणा **सिञ्चन्ती** क्षेमे **क्षेमेण । तृतीयार्थे सप्तमी । अग्न्यादिबाधराहित्येन** तिष्ठाति **तिष्ठतु । लेटि आडागमः । हे** शाले ताम् **तादृशीं** त्वा **त्वां** सर्ववीराः **अनेकपुत्राद्युपेताः** सुवीराः **शोभनगुणपुत्राद्युपेताः** अरिष्टवीराः **न रिष्टा अरिष्टा रोगादिरहिताः तादृशपुत्रादिसमेताः । अत्र [1]बाहुल्यशोभनगुणत्वहिंसाराहित्यलक्षणगुणविशेषसंबन्धाय[1] वीरशब्दस्य त्रिरावृत्तिः । एवंभूताः सन्तो वयम्** उप सं चरेम **व्यवहरेम । सर्ववीरा इति ।** 'बहुव्रीहौ प्रकृत्या॰' **(पा ६,२,१) इति पूर्वपदप्रकृतिस्वरत्वम् ।** 'प्रत्ययलक्षणेनाप्ययं स्वर इष्यते' **(पाका ६,१,१९१) इति वचनात् [2]सर्वशब्दः** 'सर्वस्य सुपि' **(पा ६,१,१९१) इत्याद्युदात्तः । सुवीरा इति ।** 'वीरवीर्यौ च' **(पा ६,२,१२०) इत्युत्तरपदाद्युदात्तत्वम् । अरिष्टवीरा इति ।** 'बहुव्रीहौ प्रकृत्या॰' **(पा ६,२,१) इति पूर्वपदप्रकृतिस्वरत्वे अरिष्टशब्दः** 'अव्यये नञ्कुनिपातानाम्' **(पावा ६,२,२) इति अव्ययपूर्वपदप्रकृतिस्वरेण आद्युदात्तः ।**

इहैव [3]ध्रुवा प्रति तिष्ठ [4]शालेऽश्वावती गोमती [5]सूनृतावती ।
ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय ॥ २ ॥

इह । एव । ध्रुवा । प्रति । तिष्ठ । शाले । अश्वऽवती । गोऽमती । सूनृताऽवती ।
ऊर्जस्वती । घृतऽवती । पयस्वती । उत् । श्रयस्व । महते । सौभगाय ॥ २ ॥

**हे** शाले इहैव **अस्मिन् देशे** ध्रुवा **स्थिरा सती** प्रति तिष्ठ **वर्तस्व । कथंभूता ।** अश्वावती **बहुभिरश्वैरुपेता ।** 'मादुपधाया॰' **(पा ८,२,९) इति मतुपो वत्वम् ।** 'मन्त्रे सोमाश्वेन्द्रिय' **(पा ६,३,१३१) इत्यादिना अश्वशब्दस्य दीर्घः ।** गोमती **बहुभिर्गोभिर्युक्ता** सूनृतावती **बहुभिः प्रियसत्यवाग्भिर्बालादीनां वाणीभिर्युक्ता** ऊर्जस्वती **प्रभूतान्नवती । ऊर्जस्वतीति । ऊर्ज बलप्राणनयोः इत्यस्माद् असुन् । तदन्ताद् मतुप् ।** 'तसौ मत्वर्थे' **(पा १,४,१९) इति भत्वेन पदत्वाभावाद् रुत्वाद्यभावः ।** घृतवती **बहुघृतयुक्ता** पयस्वती **बहुक्षीरा । सर्वत्र** 'भूमनिन्दाप्रशंसासु॰' **(पावा ५,२,९४) इति भूम्नि मतुप् । एवं बहुगुणा त्वम् अस्माकं** महते **प्रभूताय** सौभगाय **सुभगत्वाय** उच्छ्रयस्व **उन्नता भव । उत्कृष्टा भवेत्यर्थः ।** 'सुभग मन्त्रे' **(पाग ५,१,१२९) इति उद्गात्रादिषु पाठाद् अञ् ।** 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' **(पावा १,४,९) इति उत्तरपदवृद्ध्यभावः ।**

१. बाहुल्यशो॰ ॰णत्वं ॰संबंधीय S', Kd. २. सर्वशब्दः S', Kd. ३. स्थूणे शांगृ ३,३,१.
४. शाले अश्वा पै ३,२०,२; ध्रुवाऽश्वा॰ शांगृ. ५. सीलमावती शांगृ.

धरुण्यसि शाले बृहच्छन्दाः [1]पूतिधान्या ।
आ त्वा वत्सो गमेदा कुमार आ धेनवः [2]सायमास्पन्दमानाः ॥ ३ ॥

धरुणी । असि । शाले । बृहत्ऽछन्दाः । पूतिऽधान्या ।
आ । त्वा । वत्सः । गमेत् । आ । कुमारः । आ । धेनवः । सायम् । आऽस्पन्दमानाः ॥ ३ ॥

हे शाले त्वं धरुणी भोगजातस्य धारयित्री असि भवसि 'धारेर्णिलुक् च' ( पाउद ५,६० ) इति उननप्रत्ययः । ततो ङीप् । यद्वा [3]धरुणा धारकाः स्तम्भाः । प्रशस्तैः स्तम्भैरुपेता । 'छन्दसीवनिपौ' ( पावा ५,२,१०९ ) इति मत्वर्थीय ईकारः । छान्दसः सोर्लुक् तथा बृहच्छन्दाः [4]प्रभूताच्छादना महद्भिश्छन्दोभिर्वेदैरुपेता वा पूतिधान्या पूतिगन्धोपेतजीर्णधान्ययुक्ता । बहुविधभोगदानादिनापि अक्षयधान्ययुक्ता इत्यर्थः । एवंभूतां त्वा त्वां वत्सः । जातावेकवचनम् । आ गमेत् आगच्छतु । 'लिङ्याशिष्यङ्' ( पा ३,१,८६ ) । एवं कुमारः पुत्रादिः आ गमेत् । अस्यां शालायां गावः स्त्रियश्च वत्सपुत्रादिसमेता भवन्तु इत्यर्थः । तथा धेनवः दोग्ध्र्यो गावः सायम् सायंकाले [5]आस्यन्दमानाः [6]प्रस्नुतं पय आस्रवन्त्यः आ गच्छन्तु त्वाम् इति ।

इमां शालां सविता [7]वायुरिन्द्रो बृहस्पतिर्नि[7] मिनोतु प्रजानन् ।
[8]उक्षन्तूद्ना[8] मरुतो घृतेन [9]भगो नो राजा नि कृषिं तनोतु ॥ ४ ॥

[10]इमाम् । शालाम् । सविता । वायुः । इन्द्रः । बृहस्पतिः । नि । मिनोतु । प्रऽजानन् ।
[11]उक्षन्तु । [12]उद्ना । मरुतः । घृतेन । भगः । नः । राजा । नि । कृषिम् । तनोतु ॥ ४ ॥

सविता सर्वस्य प्रेरको देवः प्रजानन् वायुः इन्द्रः बृहस्पतिः च प्रजानन् । प्रत्येकविवक्षया एकवचनम् । शालानिर्माणप्रकारं प्रकर्षेण जानन् इमां शालां नि मिनोतु स्तम्भादिस्थापनेन करोतु । डुमिञ् प्रक्षेपणे । मरुतश्च घृतेन क्षरणशीलेन उद्ना उदकेन उक्षन्तु शालाभूमिं सिञ्चन्तु । 'पद्दन्नोमास्' ( पा ६,१,६३ ) इत्यादिना उदकशब्दस्य उदन्नादेशः । असंज्ञायाम् अल्लोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । ततो नः अस्माकं राजा राजमानो भगः एतत्संज्ञो देवः कृषिम् शालाभूमेः कर्षणं नि तनोतु नितरां करोतु । कृष विलेखने । 'इगुपधात् कित्' ( पाउ ४,१२० ) इति भावे इप्रत्ययः ।

१. सूतधान्या पै ३,२०,३. २. °स्यन्द° K,Km,V, RW, पै. सा. ३. धरुण्या S′, Kd. ४. प्र° नास्ति S′, Kd. ५. वैतु. मपा द्र. ६. प्रस्नुतं S′, प्रस्तुतं Kd. ७. वायुरग्निस्त्वष्टा होता नि पै ३,२०.४. ८. उच्छं° A, B, Bp, Bh, D, R. Km, Sm, P. P², J; °तुन्ता (=°ब्ना?) B; °ब्ना A, D, Km, R, Sm, P,J,V,Bp²,O,Op.; °ब्ना E², H, K², Kp,Bh,P², RW; °तूना I; °त्वा P³,M; °तुत्वा W. ९. सोमो पै. १०. इमाम् >इमम् J, इमम्>इमाम् P, इमम् P². ११. उक्षंतु P, P²,J. १२. उन्ना P², उद्ना P,J.

मानस्य पत्नि शरणा स्योना देवी देवेभिर्निर्मितास्यग्रे ।
तृणं वसाना सुमना असस्त्वमथास्मभ्यं सहवीरं रयिं दाः ॥ ५ ॥

मानस्य । पत्नि । शरणा । स्योना । देवी । देवेभिः । निऽमिता । असि । अग्रे ।
तृणम् । वसाना । सुऽमनाः । असः । त्वम् । अथ । अस्मभ्यम् । सहऽवीरम् । रयिम् । दाः ॥५॥

हे मानस्य पत्नि । मान पूजायाम् । कर्मणि घञ् । माननीयस्य वास्तुपतेः पत्नि जायाभूते शाले । यद्वा [1]मीयमानं धान्यादिकं मानम् तस्य पत्नि पालयित्रि शाले त्वं शरणा रक्षित्री स्योना सुखकरी ईदृशी देवी द्योतमाना [2]अग्रे सृष्ट्यादौ देवेभिः देवैः [3]निर्मितासि प्राण्युपभोगाय सृष्टा भवसि । सा त्वं तृणं वसाना आच्छादयन्ती । वस आच्छादने इत्यस्मात् लटः शानच् । सुमनाः शोभनमनस्का असः भव । अस्तेर्लेटि अडागमः । अथ अनन्तरम् अस्मभ्यं त्वयि निवसद्भ्यः सहवीरम् वीरैः पुत्रादिभिः सहितम् । 'वोपसर्जनस्य' ( पा ६,३,८२ ) इति विकल्पनात् सहस्य सत्वाभावः । तादृशं रयिम् धनं दाः धेहि । ददातेश्छान्दसो लुङ् ।

ऋतेन [4]स्थूणामधि रोह वंशोग्रो [5]विराजन्नप [6]वृङ्क्ष्व शत्रून् ।
मा ते रिषन्नुपसत्तारो गृहाणां शाले शतं जीवेम शरदः सर्ववीराः ॥६॥

ऋतेन । स्थूणाम् । अधि । रोह । वंश । उग्रः । विऽराजन् । अप । वृङ्क्ष्व । शत्रून् ।
मा । ते । रिषन् । उपऽसत्तारः । गृहाणाम् । शाले । शतम् । जीवेम । शरदः । सर्वऽवीराः ॥

हे वंश त्वम् ऋतेन अबाध्येन रूपेण सह स्थूणाम् शालामध्यस्तम्भम् अधि रोह अधि तिष्ठ । ततः उग्रः उद्गूर्णबलो विराजन् विशेषेण दीप्यमानः सन् शत्रून् अस्मद्द्वेष्यान् अप वृङ्क्ष्व अपवर्जय । वृजी वर्जने । रुधादिः । हे शाले ते तव संबन्धिनां गृहाणाम् उपसत्तारः उपसदनकर्तारः । निवसन्त इत्यर्थः । [3]मारिषन् आर्ता हिंसिता मा भूवन् । त्वयि निवसन्तो वयं सर्ववीराः अभिलषितसर्वपुत्रपौत्रादिसमेताः शतं शरदः जीवेम ।

[7]एमां कुमारस्तरुण आ वत्सो [8]जगता [9]सह ।
[7]एमां [10]परिस्रुतः कुम्भ [11] आ दध्नः [12]कलशैरगुः ॥ ७ ॥

आ । इमाम् । कुमारः । तरुणः । आ । वत्सः । जगता । सह ।
आ । इमाम् । [13]परिऽस्रुतः । कुम्भः । आ । दध्नः । [14]कलशैः । अगुः ॥ ७ ॥

---

१. नियमानं S', Kd. २. त्वमग्रे Kd., त्वमग्रे > अग्रे S'. ३. वैतु. मंपा. द्र. ४. स्थूणा अधि पै २०,२२,३. ५. विराजोऽप पै. ६. वक्ष्व B. ७. आ त्वा पै ३,२०,६; आगृ २,८,१६; पागृ ३,४,४; एनम् शांगृ ३,२,९. ८. जगदैः पागृ., वैप ४,२१३२ e द्र.; जायताम् आगृ.; भुवनस् शांगृ. ९. परि शांगृ. १०. °श्रुतः A,P², J,K,Km,Bp²,H,O'Op,Kp; °स्रुतः S.; परिश्रितः पै. आगृ.; परिश्रुतः पै. [मूको.]; हिरण्मयः हिगृ १,२७,४. ११. कुम्भ्या शांगृ. १२. कलशैरगुः > कलशैरगुः Bh; कलशैरगुः A,B,Bp, D,R,P,P²,J,Bp²,E²,I,H,K²; कलशश्च यः पै., °शैरयन् आगृ., °शैरयन्निव हिगृ., °शैर्यमन् शांगृ. १३. स्रुतः K,P³,J. १४. कलशैः P,J.

इमां शालां तरुणः युवा कुमारः पुत्र आ गच्छतु । तथा जगता गमनशीलेन गवादिना सह । गमेः क्विपि 'द्युतिगमिजुहोतीनां द्वे च' (पावा ३,२,१७८) इति द्विर्वचनम् । वत्सः । जातावेकवचनम् । आ गच्छतु । तथा इमां [1]परिस्रुतः परिस्रवणशीलस्य मधुनः [2]कुम्भाः आगुः आगच्छन्तु । दध्नः [3]कलशीः दधिपूर्णा घट्यः आगुः । एतेष्वछान्दसो लुङ् ।

पूर्णं नारि प्र भर कुम्भमेतं घृतस्य धारामृमृतेन संभृताम् ।
[3]इमां [4]पातॄनमृतेना [5]समङ्ग्धीष्टापूर्तमभि रक्षात्येनाम् ॥ ८ ॥

पूर्णम् । नारि । प्र । भर । कुम्भम् । एतम् । घृतस्य । धाराम् । अमृतेन । सम्ऽभृताम् ।
इमाम् । पातॄन् । अमृतेन । सम् । अङ्ग्धि । इष्टापूर्तम् । अभि । रक्षाति । एनाम् ॥ ८ ॥

हे नारि पूर्णम् उदकेन पूरितम् एतं कुम्भं प्र भर प्रहर शालां नय । कथंभूतम् । अमृतेन सुधामयोदकेन संभृताम् संपादितां घृतस्य क्षरणशीलस्य मधुघृतादेः धाराम् । कुर्वन्तम् इति शेषः । इमां [4]पात्रीम् कलशीम् अमृतेन सुधारूपेण उदकेन [5]समिन्धि [6]सम्यगिद्धां संदीप्तां कुरु । ञिइन्धी दीप्तौ । लोटि व्यत्ययेन परस्मैपदम् । 'हुझल्भ्यो हेर्धिः' (पा ६,४,१०१) इति हेर्धित्वे 'श्नान्नलोपः' (पा ६,४,२३) इति नलोपः । एनाम् प्रविश्यमानां शालाम् इष्टापूर्तम् तत्र क्रियमाणं श्रौतं स्मार्तं च कर्म अभि रक्षाति अभितः चोराग्न्यादिभयाद् रक्षतु ।

इमा आपः प्र भराम्ययक्ष्मा यक्ष्मनाशनीः ।
गृहानुप प्र सीदाम्यमृतेन सहाग्निना ॥ ९ ॥

इमाः । आपः । प्र । भरामि । अयक्ष्माः । यक्ष्मऽनाशनीः ।
गृहान् । उप । प्र । सीदामि । अमृतेन । सह । अग्निना ॥ ९ ॥

इमाः कलशस्थाः आपः । शसः स्थाने जस् । प्र भरामि प्रहरामि प्रकर्षेण शालां नयामि । कीदृशीः । अयक्ष्माः यक्ष्मरहिताः । यक्ष्मनाशनीः [7]तत्सेवकानां यक्ष्मनाशिनीः[8] । अहमपि गृहान् उप प्र सीदामि । कीदृशः सन् । अमृतेन अविनाशिना अग्निना सह सहितः सन् ।

इति तृतीयेऽनुवाके द्वितीयं सूक्तम् ।

'यददः संप्रयतीः' इति सूक्तं स्वाभिमतप्रदेशे नदीप्रवाहकरणे विनियुक्तम् । तत्रायं क्रमः—येन मार्गेण प्रवाहं निनीषति तं देशं प्रथमं खात्वा तत्र अनेन सूक्तेन उदकं प्रसिञ्चन् व्रजेत् । तथा अनेन सूक्तेन काशशैवालपटेरकवेतसशाखाः

१. परिसृतः S′, Kd. २. वैतु. भपा. द्र. ३. इमान् RW. ४. पात्रीमग्° K,V.
५. °अङ्ग्धि P,P², J. ६. °शंपा., समत्समिधां Kd, मत्समिद्धां S′. ७. त्वत्सेव° S′, Kd.
८. °नाशिन्यः S′, Kd.

प्रत्येकम् अभिमन्त्र्य तत्र [1]खाते निखनेत् । 'इदं व आपः' (७) इत्यस्या ऋचः प्रथमेन पादेन हिरण्यं खाते निदध्यात् । 'अयं वत्सः' इति द्वितीयपादेन [2]इषीकाञ्जिमण्डूकं नीललोहितवर्णाभ्यां सूत्राभ्यां बद्ध्वा अभिमन्त्र्य खाते निदध्यात् । अस्य मण्डूकस्योपरि 'इहेत्थम्' इति तृतीयपादेन अवकाम् अभिमन्त्र्य प्रक्षिपेत् । 'यत्रेदम्' इति चतुर्थपादेन मण्डूकस्योपरि उदकं निनयेत् ।

तथा ग्रामनगरादिकस्य नवोदकप्रवाहाद् भये संजाते नदीप्रवाहकरणे च कृष्णव्रीहिमयचरुं कृष्णाया गोः क्षीरम् आज्यं च [3]वैतसेन स्रुवेण वरुणाय त्रिर्जुहुयात् । तथा [3]वैतसचमसे [3]वैतसीभ्याम् [4]उपमन्थनीभ्यां दधिसक्तुमन्थम् उपमथ्य अनेन बलिहरणं कुर्यात् । ततोऽनेन सूक्तेन वेतसशाखाम् अभिमन्त्र्य तया पाणिना वा मन्त्रितोदकेन नदीप्रवाहं सिञ्चन् व्रजेत् ।

दूरगताया नद्याः पुनर्निवृत्तौ एतत् सूक्तं जपित्वा नदीप्रवेशमार्गे शयीत ।

एवम् उक्तानि प्रसेचनकर्म हिरण्यकर्म [5]मण्डूककर्म पाणिकर्म इत्येतानि समुच्चयेन कार्याणीति भाष्यकारस्य दारिलस्य मतम् । विकल्पेनेत्यपरेषाम् ।

अत्र कौशिकः — " 'यददः संप्रयतीः' इति [6]येनेच्छेन्नदी प्रतिपद्येतेति प्रसिञ्चन् व्रजति । काश[7]दिविधुवकवेतसान् निमिनोति । 'इदं व आपः' इति हिरण्यम् अधिदधाति । 'अयं वत्सः' इति [2]इषीकाञ्जिमण्डूकं नीललोहिताभ्यां [8]सूत्राभ्यां सकक्षं बद्ध्वा । 'इहेत्थम्' इत्यवकया प्रच्छादयति । 'यत्रेदम्' इति निनयति । मारुतं क्षीरौदनं [9]मारुतं शृतं मारुतैः परिस्तीर्य मारुतेन स्रुवेण मारुतेनाज्येन वरुणाय त्रिर्जुहोति । उक्तम् उपमन्थनम् । दधिमन्थं बलिं हृत्वा संप्रोक्षणीभ्यां ( अ ७,४१,१;२ ) प्रसिञ्चन् व्रजति । पाणिना वेत्रेण वा [10]प्रत्याहृत्योपरि निपद्यते" ( कौसू ४०,१-१० ) इति ।

तथा अनेनैव सूक्तेन मरुद्भ्यो मान्त्रवर्णिकीभ्यो वा देवताभ्य आज्यहोमं काशदिविधुवकवेतसाख्यान् ओषधिविशेषान् एकस्मिन् पात्रे प्रक्षिप्य संपात्य अभिमन्त्र्य अप्सु मध्येऽधोमुखं निनयनम्, तेषामेव काशादीनां संपातिताभिमन्त्रितानाम् अप्सु विप्लावनम्, श्वशिरसो मेषशिरसश्च अभिमन्त्रितस्य अप्सु प्रक्षेपणम्, मानुषकेशजरदुपानहां वंशाग्रे प्रबन्धनम्, तुषसहितम् आमपात्रम् अभिमन्त्रितोदकेन प्रोक्ष्य त्रिपादे शिक्ये निधाय उदकमध्ये निधानं चेत्येतान्यभिवर्षणकर्माणि वृष्टिकामः कुर्यात् ।

तथा अर्थोत्थापनविघ्नशमनकर्मणि अनेनैव सूक्तेन आज्यहोमं संपातिताभिमन्त्रितघटोदकेन आप्लावनम् अवसेकं च कुर्यात् ।

सूत्रितं हि — 'अर्थम् उत्थास्यन्नुपदधीत' इति प्रक्रम्य 'अम्बयो यन्ति' ( अ १,४ ) 'शंभुमयोभू' ( अ १,५;६ ) 'हिरण्यवर्णाः' ( अ १,३३ ) 'यददः' ( अ ३,१३ ) इत्यादिना 'अभिवर्षणावसेचनानाम्' ( कौसू ४१,८-१४ ) इत्यन्तेन ।

१. खातं S', Kd. २. इषीकायां मंडूकं S', Kd. ३. वेत° S', Kd. ४. अप° Kd. ५. °कर्म नास्ति S', Kd. ६. येनेच्छन्नदीप्रपद्येतेति S', Kd. ७. °दिविधुक° S', Kd. ८. नास्ति Bl. ९. मारुतशृतं Bl. १०. प्रत्याहत्यो Bl.

यद॒दः सं॑प्रय॒तीरहा॒वन॑दता ह॒ते ।
तस्मा॒दा 'न॒द्यो॒३॒॑ नाम॑ स्थ॒ ता वो॒ नामा॑नि सिन्धवः ॥ १ ॥

यत् । अ॒दः । स॒म्ऽप्र॒य॒तीः । अहौ॑ । अन॑दत । ह॒ते ।
तस्मा॑त् । आ । 'न॒द्य॑ः । नाम॑ । स्थ॒ । 'ता । व॒ः । नामा॑नि । सि॒न्ध॒व॒ः ॥ १ ॥

अदः अमुष्मिन् । 'सुपां सुलुक्°' (पा ७,१,३९) इति सप्तम्या लुक् । अहौ आहन्तव्ये मेघे हते ताडिते हे आपः यूयं यत् यस्मात् संप्रयतीः संभूय इतस्ततश्च प्रयान्त्यः अनदत शब्दं कृतवत्यः स्थ। नद अव्यक्ते शब्दे । अस्मात् लङि मध्यमबहुवचने रूपम् । 'निपातैर्यद्यदिहन्त°' (पा ८,१,३०) इति निघातप्रतिषेधः । 'अन्येषामपि दृश्यते' (पा ६,३,१३७) इति सांहितिको दीर्घः । संप्रयतीरिति । संप्रपूर्वाद् एतेः शतरि इणो यणि 'वा च्छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घत्वम् । 'शतुरनुमः' (पा ६, १,१७३) इति नद्या उदात्तत्वम् । तस्मात् कारणाद् यूयम् आ आभिमुख्येन अव्यवधानेनैव नद्यो नाम स्थ भवथ । अनेन नदनान्नद्य इति निर्वचनं कृतं भवति। पचादिषु नदट् इति पाठात् 'टिड्ढाणञ्' (पा ४,१,१५) इत्यादिना ङीप् । 'यस्येति च' (पा ६,४,१४८) इत्यकारलोपे उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । 'उदात्तस्वरितयोः°' '(पा ८,२,४) इति विभक्तिः स्वर्यते । हे सिन्धवः स्यन्दनशीला आपः वः युष्माकं नामानि आपः उदकम् इत्यादीनि । अन्यान्यपि सर्वाणि ता तानि तादृशानि। अन्वर्थानीत्यर्थः । ता इति । 'शेश्छन्दसि°' (पा ६,१,७०) इति शेर्लोपः ।

यत्॑ प्रेषि॑ता॒' 'वरु॑णे॒नाच्छीभं॑ स॒मव॑ल्गत ।
तदा॑प्नो॒दिन्द्रो॑ वो य॒तीस्तस्मा॒दापो॒' अनु॑ ष्ठन॒ ॥ २ ॥

यत् । प्रऽइ॑षिताः । वरु॑णेन । आत् । शीभ॑म् । स॒म्ऽअव॑ल्गत ।
तत् । आ॒प्नो॒त् । इन्द्र॑ः । व॒ः । य॒तीः । तस्मा॑त् । आप॑ः । अनु॑ । स्थ॒न ॥ २ ॥

आप इति नाम व्युत्पादयति — यत् यदा वरुणेन राज्ञा आदित्येन वा प्रेषिताः प्रेरिता यूयम् आत् अनन्तरं शीभम् क्षिप्रनामैतत् शीघ्रं समवल्गत संभूय नृत्यन्त्य इव वेष्टितवत्यः । वल्गतिर्गत्यर्थो भौवादिकः । यद्योगेन निघातप्रतिषेधे 'तिङि चोदात्तवति' (पा ८,१,७१) इति गतेरनुदात्तत्वम् । तत् तदानीं यतीः गच्छन्तीः वः युष्मान् इन्द्रः आप्नोत् तस्मात् कारणात् अनु अनन्तरं ततःप्रभृति आपः 'स्तन अप्शब्दवाच्या भवत। यद्वा आप इति नाम अनु 'ष्ठन अनुभवत । आप्नोतेः कर्मणि क्विपि 'आप्नोतेर्ह्रस्वश्च' (पाउ २,५८) इति ह्रस्वत्वे 'अप्तृन्तृच्स्वसृनप्तृनेष्टृ°' (पा ६,४,११) इत्यादिना सर्वनामस्थाने

१. नद्यो३ D.S. २. नद्यः P². ३. ताः P,P²,J,K. ४. संप्रच्युता मै २,१३,१. ५..°णेन यच्छीभं मै., °णेत्ता ताः शी° तै ५,६,१,३. ६. तु. Op. तै. मै. ; वैतु. शंपा. °स्मादापो ७. स्थन तै. ८. वैतु. मंपा. इ.

दीर्घः। स्तनेति। अस्तेर्लोण्मध्यमबहुवचनस्य तनादेशः। 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (पा ८,३,८७) इति षत्वस्याप्रसङ्गात् सुषामादित्वेन (पा ८,३,९८) षत्वं वेदितव्यम्।

अपकामं स्यन्दमाना अवीवरत वो हि कम्।
इन्द्रो वः शक्तिभिर्देवीस्तस्माद् [1]वार्नाम वो [2]हितम्॥ ३॥

अपऽकामम्। स्यन्दमानाः। अवीवरत। वः। [3]हि। कम्[4]।
इन्द्रः। वः। शक्तिऽभिः। देवीः। तस्मात्। [5]वाः। नाम। वः। हितम्॥ ३॥

वार् इति नाम प्रदर्शयति—अपकामम् विनैव कामेन स्यन्दमानाः सदा स्यन्दनं कुर्वाणाः वः युष्मान् इन्द्रः वः युष्माकं शक्तिभिः हेतुभिः अवीवरत वृतवान् युष्मान् स्वात्मसात् कर्तुम् [6]ऐच्छत्। वर ईप्सायाम्। चुरादिरदन्तः। व्यत्ययेन सम्वद्भावः। वृणोतेर्वा स्वार्थिको णिच्। [7]हिकम् इति हिशब्दार्थे। 'हिकम् नुकम् xxx इति नवोत्तराणि पदानि' (निघ ३,१२) इति यास्केन परिपठितत्वात्। हे देवीः देव्यो देवनशीलाः तस्मात् कारणाद् वः युष्माकं वार् इति नाम [8]हिकम् प्रसिद्धम्। वृणोतेर्ण्यन्तात् कर्मणि क्विप्।

एको [5]वो देवोप्यतिष्ठत्[6] स्यन्दमाना [7]यथावशम्।
उदानिषुर्महीरिति तस्मादुदकमुच्यते॥ ४॥

एकः। वः। देवः। अपि। अतिष्ठत्। स्यन्दमानाः। यथाऽवशम्।
उत्। [9]आनिषुः। महीः। इति। तस्मात्। उदकम्। उच्यते॥ ४॥

उदकशब्दं निर्वक्ति — एकः असहायो देवः इन्द्रो यथावशम् यथाकामं स्यन्दमानाः इतस्ततश्च स्यन्दनशीला वः युष्मान् अप्यतिष्ठत् अभ्यतिष्ठत्। अपिशब्दः अभ्यर्थे। तेन इन्द्रबहुमानेन आपो वयं महीः महत्यो जाता इति उदानिषुः उच्छ्वसितवत्यः। अन प्राणने। लुङि रूपम्। तस्मात् कारणाद् उदकम् इति अपां नाम उच्यते निरुच्यते उद्ननात् उदकम् इति। उत्पूर्वाद् अनितेरौणादिकः कप्रत्ययो नकारलोपश्च।

आपो [10]भद्रा घृतमिदाप [11]आसन्नग्नीषोमौ बिभ्रत्याप[12] इत् ताः।
तीव्रो रसो मधुपृचामरंगम आ मा प्राणेन सह वर्चसा [13]गमेत्॥ ५॥

आपः। भद्राः। घृतम्। इत्। आपः। आसन्। अग्नीषोमौ। बिभ्रति। आपः। इत्। ताः।
तीव्रः। रसः। मधुऽपृचाम्। अरम्ऽगमः। आ। मा। प्राणेन। सह। वर्चसा। गमेत्॥५॥

---

१. वार्णाम तै ५,६,१.३. २. हिकम् S,K,V. ३. हिकम् तै. पपा. ४. वः K. ५. ऐच्छन् S', Kd. ६. वैतु. मंपा. द्र. ७. न हैव उपातिष्ठत् पै ३,४,४. ८. उपेत्य पै. ९. आनिषुः P[2].
१०. देवीर् पै ३,४,५ मै २,१३,१. ११. आहुरग्नी° पै., आयुरग्नी° तै. १२. स्थापा मै.
१३. गन् तै., मै [पपा. अगन्], पै.

आपः भद्राः भन्दनीयाः । ता "[इत्] एव घृतम् आज्यम् आसन् । तृणादिनिष्पादनेन घृतात्मिका भवन्ति । यद्वा घृतमित् अग्नौ हुतम् आज्यमेव आप आसन् ।

'अग्नौ प्रास्ताहुतिः सम्यग् आदित्यम् उपतिष्ठते । आदित्याज्जायते वृष्टिः°' ( मस्मृ ३,७६ ) इति स्मरणात् । किं च ता "[इत्] एव आपः अग्नीषोमौ बिभ्रति धारयन्ति । अन्नादिहविर्निष्पत्त्या अग्निम् रश्मिवृद्ध्या सोमम् । 'ईदग्नेः°' ( पा ६,३,२७ ) इति ईत्वम् । 'अग्नेः स्तुत्स्तोमसोमाः' ( पा ८,३,८२ ) इति षत्वम् । 'देवताद्वन्द्वे च' ( पा ६,२,१४१ ) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । तादृशीनाम् अपां मधुपृचाम् मधुना रसेन संपृक्तानां तीव्रः उद्भूतो रसः अरंगमः पर्याप्तगमनः न कदाचिदपि क्षीणः प्राणेन चक्षुरादिना वर्चसा बलेन च सह मा माम् 'आगन् आगच्छतु । तदधीनत्वात् प्राणादिस्थितेः । गमेश्छान्दसे लुङि 'मन्त्रे घस°' ( पा २,४,८० ) इति च्लेर्लुक् । 'मो नो धातोः' ( पा ८,२,६४ ) इति नत्वम् ।

आदित् पश्याम्युत वा शृणोम्या मा [2]घोषो [3]गच्छति [4]वाङ् मासाम्[4] ।
[5]मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा [6]अतृपं यदा वः ॥ ६ ॥

आत् । इत् । पश्यामि । उत । वा । शृणोमि । आ । मा । घोषः । गच्छति । वाक् । मा । आसाम् ।
मन्ये । भेजानः । अमृतस्य । तर्हि । हिरण्यऽवर्णाः । अतृपम् । यदा । वः ॥ ६ ॥

रसः प्राणेन सह आगच्छतु इत्युक्तम् । तद् इदानीं समर्थयते — आदित् अनन्तरमेव अहं पश्यामि । उत वा अपि च शृणोमि । घोषः शब्दः उच्चार्यमाणश्च मा माम् आ गच्छति । तथा वाक् वागिन्द्रियम् । कर्मेन्द्रियोपलक्षणम् एतत् । तच्च आसाम् अपां युष्माकं रसागमनेन मा माम् । आ गच्छतीत्यनुषङ्गः । 'वाग्मेति । संहितायां 'यरोऽनुनासिकेऽनुनासिको वा' ( पा ८,४,४५ ) इति विकल्पेन अनुनासिकादेशाभावः[1] । किं बहुना । तर्हि तदानीम् अमृतस्य भेजानः अमृतमेव भजन् अहं मन्ये तर्कयामि । पूर्ववत् कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । भेजान इति । भजेश्छान्दसे लिटि 'तॄफलभजत्रपश्च' ( पा ६,४,१२२ ) इत्येत्वाभ्यासलोपौ । कदा एवं वितर्क्यत इति चेत् । उच्यते — यदा हे हिरण्यवर्णाः हितरमणीयवर्णयुक्ता आपः वः युष्माकं [7]युष्मत्सेवनेन अतृपम् सुहितोऽभवम् । तृप तृम्प तृप्तौ । तौदादिकः । लङि उत्तमैकवचने रूपम् । सुहितार्थयोगेऽत्र षष्ठी ।

इदं व आपो हृदयमयं वत्स ऋतावरीः ।
इहेत्थमेत शक्वरीर्यत्रेदं वेशयामि वः ॥ ७ ॥

१. वैतु. मंपा. द्र. २. गोषो' B. ३. गच्छद् पै ३,४,६. ४. वाङ् मे आसाम् ते ५,६,१,४; वान्वासाम् मै २,१३,१ [पपा. वाङ् । नु । आसाम् ]; वाङ्यासाम् पै. ५. मेने पै. ६. अस्वदं पै. ७.' युष्मत्···नेन S', Kd.

इदम् । वः । आपः । हृदयम् । अयम् । वत्सः । ऋतऽवरीः ।
इह । इत्थम् । आ । इत । शक्वरीः । यत्र । इदम् । वेशयामि । वः ॥ ७ ॥

हे आपः वः युष्माकम् इदम् हिरण्यं खाते प्रक्षिप्यमाणं हृदयं [1]हृदयस्थानीयम् । अपां रेतोरूपत्वात् हिरण्यस्य हृदयरूपता । श्रूयते हि — 'आपो वरुणस्य पत्नय आसन् । ता [2]अग्निरभ्यध्यायत् । ताः समभवन् । तस्य रेतः परापतत् । तद्धिरण्यम् अभवत्' ( तैब्रा १,१,३,८) इति । यद्वा हृदयम् अन्तःकरणम् । यथा लोके हृदयं विहाय क्षणमपि शरीरं नावतिष्ठते किं तु सहैव वर्तते तथा यूयमपि हृदयरूपं हिरण्यं प्रति एत । आगच्छतेत्यर्थः । तथा हे ऋतावरीः ऋतवर्यः । ऋतं सत्यं यज्ञो वा यासां तास्तथोक्ताः । ऋतशब्दात् 'छन्दसीवनिपौ°' ( पावा ५,२,१०९ ) इति मत्वर्थीयो वनिप् । 'वनो र च' ( पा ४,१,७ ) इति ङीब्रेफौ । 'अन्येषामपि दृश्यते' ( पा ६,३,१३७ ) इति ऋतशब्दस्य सांहितिको दीर्घः । 'वा च्छन्दसि' ( पा ६,१,१०६ ) इति जसः पूर्वसवर्णदीर्घत्वम् । सत्योपेताः हे आपः अयम् खाते प्रक्षिप्यमाणो मण्डूकः वत्सः युष्माकं वत्सस्थानीयः । यथा लोके गावो [3]वत्सम् अनुधावन्ति[3] एवं यूयमपि वत्सस्तुतमण्डूकम् अनुधावतेति भावः । हे शक्वरीः शक्वर्यः शक्ताः अभिमतफलप्रदानसमर्था आपः । शक्लृ शक्तौ इत्यस्माद् 'अन्येभ्योपि दृश्यन्ते' ( पा ३,२,७५ ) इति वनिप् । पूर्ववद् ङीब्रेफपूर्वसवर्णदीर्घाः । इह अस्मिन् खातदेशे इत्थम् अनेन प्रकारेण । यथात्र मण्डूकस्योपरि प्रक्षिप्यमाणा अवका रूढमूला भवन्ति तथा एत आगच्छत स्थिरप्रवाहा भवत । यत्र यस्मिन् खातदेशे इदम् इदानीं वः युष्मान् वेशयामि प्रवेशयामि निनयामि । यद्वा इदम् इति उदकनाम । वः युष्माकम् अंशभूतम् इदम् उदकं यत्र अवकाछन्ने मण्डूके वेशयामि । इहेति पूर्वत्र संबन्धः ।

इति तृतीयेऽनुवाके तृतीयं सूक्तम् ।

'सं वो गोष्ठेन' इति सूक्तेन गोपुष्टिकामः अभिनवं [4][पयो गृष्टेः श्लेष्ममिश्रितं कृत्वा संपात्य अभिमन्त्र्य अश्नाति ।

तथा अनेन सूक्तेन गाम् अभिमन्त्र्य ददाति गोपुष्टिकाम एव ।

एवम् अनेन सूक्तेन उदपात्रम् अभिमन्त्र्य गोवाटे निनयति ।

अपि च करीषं सव्येन हस्तेन आक्रम्य दक्षिणेन अर्धं विक्षिपति गोवाटे गोपुष्टिकामः ।

तथैव अनेन सूक्तेन सारूपवत्से ओदने शकृत्पिण्डान् गुग्गुलुलवणे च एकीकृत्य पश्चाद् अग्नेर्निखनति त्रिरात्रं यावत् । चतुर्थेऽहनि प्रातः संपात्य अभिमन्त्र्य अश्नाति । अविकृतश्चेत् स ओदनः । विकृते तु सति अनशनम् । अनशितेऽपि च फलं संपन्नम् इति मन्तव्यम् ।

---

१. °स्थानंयम् S', Kd. २. °भ्यध्यायत् S', Kd. ३ यथामनु S', Kd. ४. (तु. कौसू. सा. के.) S', Kd. कोष्ठस्थः पाठः °शांपा. नास्ति.

उक्तं हि कौशिकेन—" 'सं वो गोष्ठेन', 'प्रजावतीः' (अ ७,७९), 'प्रजापतिः' (अ ९,१२) इति गोष्ठकर्माणि। गृष्टेः पीयूषं श्लेष्मभिश्रम् अश्नाति। गां ददाति। उदपात्रं निनयति। समुह्य सव्येनाधिष्ठायार्धं दक्षिणेन विक्षिपति। सारूपवत्से शकृत्पिण्डान् गुग्गुलुलवणे प्रतिनीय पश्चाद् अग्नेर्निखनति] । तिसृणां प्रातरश्नाति" ( कौसू १९,१४-२० ) इति।

सं वो॑ गो॒ष्ठेन॑ सु॒षदा॑ सं र॒य्या सं [१]सुभू॑त्या ।
अह॑र्जातस्य॒ यन्नाम॒ तेना॑ वः॒ सं सृ॑जामसि ॥ १ ॥

सम् । वः॒ । गो॒ऽस्थेन॑ । सु॒ऽसदा॑ । सम् । र॒य्या । सम् । सुऽभू॑त्या ।
अहः॑ऽजातस्य । यत् । नाम॑ । तेन॑ । वः॒ । सम् । सृ॒जा॒म॒सि॒ ॥ १ ॥

हे गावः वः युष्मान् सुषदा। सुखेन सीदन्ति निवसन्ति गावोऽत्रेति सुषत्। सदेरधिकरणे क्विप्। सुखनिवासेन गोष्ठेन गोशालया। सम्। सृजामसि इति व्यवहित-क्रियापदेन सर्वत्र संबन्धः। संसृजामः। तथा रय्या आहारादिरूपेण धनेन सं सृजामः। [२]सुभूत्या समृद्ध्या च सं सृजामः। तथा अहर्जातस्य। अहन्यहनि जायत इत्यहर्जातः प्राणिविशेषः। तस्य यन्नाम अहर्जात इति तेन नाम्ना वः युष्मान् सं सृजामसि संसृजामः। एतन्नामयोगेन गवां पुत्रपौत्रादिरूपेण अहरहरुत्पत्तिरुक्ता।

सं वः॑ [३]सृ॒जत्व॑र्य॒मा सं [४]पू॒षा सं बृह॒स्पतिः॑ ।
समिन्द्रो॒ यो ध॑नंज॒यो [५]मयि॑ [६]पुष्यत॒ यद् वसु॑ ॥ २ ॥

सम् । वः॒ । सृ॒जतु॑ । अ॒र्य॒मा । सम् । पू॒षा । सम् । बृह॒स्पतिः॑ ।
सम् । इन्द्रः॑ । यः । ध॒न॒म्ऽज॒यः । मयि॑ । पु॒ष्य॒त॒ । यत् । वसु॑ ॥ २ ॥

हे गावः अर्यमा एतन्नामको देवः वः युष्मान् सं सृजतु उत्पादयतु। पूषा पोषकः समृद्धिकरो देवः सं सृजतु। बृहस्पतिर्देवः सं सृजतु। य इन्द्रः धनंजयः। धनानि शत्रुसंबन्धीनि जयति अपहरतीति धनंजयः। 'संज्ञायां भृतॄवृजिधारिसहि°' (पा ३,२,४६) इत्यादिना खच्। 'अरुर्द्विषदजन्तस्य मुम्' (पा ६,३,६७) इति पूर्वपदस्य मुम् आगमः। चित्स्वरेण अन्तोदात्तः। स इन्द्रः सं सृजतु। एवम् अर्यमादिभिरुत्पाद्य संवर्धिताः हे गावः यूयं यद् वसु क्षीरघृतादिकं धनम् अस्ति तद् मयि साधके पुष्यत पोषयत। पुष पुष्टौ। दैवादिकः। 'युष्मदस्मदोर्ङसि' 'ङयि च' (पा ६,१,२११,२१२) इति [?] अस्मद [७]आद्युदात्तत्वम्।

सं॒जग्मा॑ना [८]अबि॑भ्युषीर॒स्मिन् गो॒ष्ठे [९]क॑री॒षिणीः॑ ।
बिभ्र॑तीः सो॒म्यं [१०]मध्व॑नमी॒वा उ॒पेत॑न[१०] ॥ ३ ॥

---

१. संभूत्या S., सुपुष्ट्या पै २,१३,४. २. भूत्या S', Kd. ३. सृजात्व° पै २,१३,१. ४. पोषा मै ४,२,१०. ५. इह पै. ६. पुष्यति पै. ७. उदात्तत्वम् S', Kd. ८. अविहृताः मै ४,२,१० पै २,१३,५. ९. पुरीषिणीः मै. १०. इविः स्वावेशा म एतन °., स्ववेशा मा आगत मै.

सम्ऽजग्मानाः । अबिभ्युषीः । अस्मिन् । गोऽस्थे । करीषिणीः ।
बिभ्रतीः । सोम्यम् । मधु । अनमीवाः । उपऽएतन ॥ ३ ॥

अस्मिन् मदीये गोष्ठे संजग्मानाः पुत्रपौत्रादिभिः संगच्छमानाः । संपूर्वाद् गमेर-कर्मकात् छान्दसो लिट् । 'समो गम्यृच्छिभ्याम्' ( पा १,३,२९ ) इत्यात्मनेपदविधानात् कानच् । अबिभ्युषीः चोरव्याघ्रादिभ्यः अबिभ्यत्यः । ञिभी भये इत्यस्मात् छान्दसे लिटि क्वसुः । [1]उगित्त्वाद् ङीप् । 'वसोः संप्रसारणम्' ( पा ६,४,१३१ ) । छान्दसो जसः पूर्वसवर्णदीर्घः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तथा करीषिणीः । करीषं शकृत् । भूम्नि मत्वर्थीय इनिः । चिरकालजीवनेन प्रभूतकरीषयुक्ता इत्यर्थः । अनमीवाः अमीवो रोगस्तद्रहिताः । सोम्यम् सोममयम् । 'सोमः खलु वै सांनाय्यम्' ( तैब्रा ३,२,३,११ ) इति श्रुतेः । सोमार्हं वा । 'सोममर्हति यः', 'मये च' ( पा ४,४,१३७;१३८ ) इति सोमशब्दाद् यप्रत्ययः । तथाविधं मधु मधुरसं क्षीरं बिभ्रतीः धारयन्त्यः । पीनोध्न्यः सत्यः उपेतन उपेत उपगच्छत । 'तप्तनप्तनथनाश्च' ( पा ७,१,४५ ) इति तस्य तनादेशः ।

इहैव [2]गाव एतनेहो शकेव पुष्यत ।
[3]इहैवोत प्र जायध्वं मयि संज्ञानमस्तु वः ॥ ४ ॥

इह । एव । [4]गावः । आ । इतन । इहो इति । शकाऽइव । पुष्यत ।
इह । एव । उत । प्र । जायध्वम् । मयि । सम्ऽज्ञानम् । अस्तु । वः ॥ ४ ॥

हे गावः यूयम् [5]इहैव मदीये गोष्ठ एव एतन आगच्छत । इहो इह उ । उशब्दः अवधारणे । इहैव शकेव शका मक्षिका सा यथा [6]क्षणेनैव समृद्धा असंख्याता भवति तथा यूयं पुष्यत भूयस्यो भवत । उत अपि च इहैव गोष्ठे प्र जायध्वम् पुत्रपौत्रादिरूपेण प्रजाता भवत । 'ज्ञाजनोर्जा' ( पा ७,३,७९ ) इति जादेशः । मयि साधके वः युष्माकं समृद्धानां संज्ञानम् संप्रीतिः अस्तु । मां विहाय न गच्छतेति भावः ।

शिवो वो गोष्ठो [7]भवतु शारिशाकेव पुष्यत ।
[8]इहैवोत प्र जायध्वं मया वः सं सृजामसि ॥ ५ ॥

शिवः । वः । गोऽस्थः । भवतु । शारिशाकाऽइव । पुष्यत ।
इह । एव । उत । प्र । जायध्वम् । मया । वः । सम् । सृजामसि ॥ ५ ॥

हे गावः वः युष्माकं गोष्ठः वासस्थानं शिवः सुखकरो भवतु । यूयं शारिशाकेव । क्षणेन सहस्रशोऽभिवर्धमानाः [9]प्राणिविशेषाः शारिशाकाः । तद्वत् पुष्यत समृद्धा भवत । इहैवोतेति निगदसिद्धोर्थः ।

---

१. उगित्वा° S', Kd. २. गाव A. ३. इहो अत्र पै २,१३,२. ४. गावः P,P², J. ५. इह S', Kd. ६. क्षणे° S', Kd. ७. भवतु शारि° P³,M,E²,I. ८. इहैवोत B,D. ९. °विशेषः S', Kd.

मया गावो 'गोपतिना 'सचध्वमयं' वो गोष्ठ इह 'पोषयिष्णुः ।
रायस्पोषेण बहुला भवन्तीर्जीवा जीवन्तीरुप वः सदेम ॥ ६ ॥

मया । 'गावः । गोऽपतिना । सचध्वम् । अयम् । वः । गोऽस्थः । इह । पोषयिष्णुः ।
रायः । पोषेण । बहुलाः । भवन्तीः । जीवाः । जीवन्तीः । उप । वः । सदेम ॥ ६ ॥

हे गावः यूयं गोपतिना 'गोस्वामिना मया सचध्वम् समवेता भवत । षच समवाये । औवादिकः । गोपतिना । गवां पतिः गोपतिः । 'पत्यावैश्वर्ये' ( पा ६,२,१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । इह मदीये गृहे अयं गोष्ठः वः युष्मान् पोषयिष्णुः पोषकः । पोषयतेः 'णेश्छन्दसि' ( पा ३,२,१३७ ) इति इष्णुच्प्रत्ययः । 'न लोकाव्यय°' ( पा २,३,६९ ) इति षष्ठीनिषेधाद् व इति द्वितीया । रायः धनस्य पोषेण । 'षष्ठ्याः पतिपुत्र°' ( पा ८,३,५३ ) इति विसर्जनीयस्य सत्वम् । धनसमृद्धया बहुलाः असंख्याता भवन्तीः जीवन्तीः चिरकालजीवनोपेता वः युष्मान् जीवाः चिरजीविनो वयम् उप सदेम उपगच्छेम । सदेराशीर्लिङि 'लिङ्याशिष्यङ्' ( पा ३,१,८६ ) इति अङ्प्रत्ययः ।

इति तृतीयेऽनुवाके चतुर्थं सूक्तम् ।

'इन्द्रम् अहं वणिजम्' इति वाणिज्यलाभार्थं विनियुज्यते । विक्रयार्थं पण्यानि विपणिं नयन् वणिक् कर्म वाणिज्यलाभार्थं कुर्यात् । तद् यथा — 'इन्द्रम् अहम्' इति सूक्तेन वस्त्रं वस्त्रं वा पूगीफलं वा अश्वान् वा हस्तिनो वा रत्नादि वा संपात्य अभिमन्त्र्य तत उत्थापयति । सूत्रितं हि — " 'इन्द्रम् अहम्' इति पण्यं संपातवद् उत्थापयति" ( कौसू ५०,१२ ) इति ।

तथा अनेनैव सूक्तेन पण्यकामः इन्द्रं यजते उपतिष्ठते वा । सूत्रितम् । " 'इन्द्रम् अहम्' इति पण्यकामः" ( कौसू ५९,६ ) इति ।

तथा क्रव्याच्छमने कर्मणि 'विश्वाहा ते' ( ८ ) इति ऋचा पूर्णाहुतिं जुहोति । सूत्रितं च — " 'विश्वाहा ते' इति पूर्णाहुतिं जुहोति" ( कौसू ७०,१४ ) इति ।

इन्द्रमहं' वणिजं 'चोदयामि स न 'ऐतु पुरएता नो अस्तु' ।
'नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम् ॥ १ ॥

इन्द्रम् । अहम् । वणिजम् । चोदयामि । सः । नः । आ । एतु । पुरःऽएता । नः । अस्तु ।
नुदन् । अरातिम् । परिऽपन्थिनम् । मृगम् । सः । ईशानः । धनऽदाः । अस्तु । मह्यम् ॥ १ ॥

---

१. गोपत्यास् पै २,१३,३ [मूको.]. २. सचध्वं मयि पै. ३. पोषयाति पै. ४. गावः P°, गावः>गावः P. ५. गोस्वामिना छिः S', Kd. ६. बर्ब पै१९,४५,१. ७. हवामहे पै. ८. अंहा·पुर एतु प्रजानन् पै. ९. मह्य पै.

अहम् व्यवहर्ता इन्द्रम् परमैश्वर्योपेतं देवं वणिजम् [5]वाणिज्यकर्तारं चोदयामि प्रेरयामि प्रवर्तयामि। णुद प्रेरणे। सः वणिक्त्वेन प्रेरित इन्द्रो नः अस्मान् एतु आगच्छतु। आगत्य च नः अस्माकं पुरएता पुरतो गन्ता अस्तु भवतु। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा ५,३,३९) इति पूर्वशब्दाद् असिप्रत्ययः तत्संनियोगेन पुरादेशश्च। तृजन्तेन[1] समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। किं कुर्वन्। अरातिम् वाणिज्यविघातकं शत्रुं परिपन्थिनम् पर्यवस्थातारं मार्गनिरोधकं चोरम्। 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (पा ५,२,८९) इति इनिप्रत्ययान्तो निपातितः। मृगम् व्याघ्रादिकं च नुदन् हिंसन् ईशानः ईश्वरो नियन्ता स इन्द्रः मह्यम् वणिजे धनदाः वाणिज्यलाभरूपधनप्रदाता अस्तु भवतु। ईशान इति। ईश ऐश्वर्ये। अदादित्वात् शपो लुक्। अनुदात्तेत्त्वात् 'लसार्वधातुक°' (पा ६,१,१८३) इति अनुदात्तत्वे धातुस्वरः। धनदाः। ददातेः 'आतो मनिन्°' (पा ३,२,७४) इति विच्प्रत्ययः।

ये[2] पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति।
ते मा जुषन्तां पयसा घृतेन यथा क्रीत्वा धनमाहराणि॥ २॥

ये। पन्थानः। बहवः। देवऽयानाः। अन्तरा। द्यावापृथिवी इति। सम्ऽचरन्ति।
ते। मा। जुषन्ताम्। पयसा। घृतेन। यथा। क्रीत्वा। धनम्। आऽहराणि॥ २॥

[3]ते प्रसिद्धा देवयानाः देवा यान्ति येष्विति देवयानाः। अधिकरणे ल्युट्। [4]देवानुकूल्ययुक्ता इत्यर्थः। यद्वा दीव्यन्ति व्यवहरन्तीति देवा वणिजः। ते यत्र यान्ति ते देवयानाः। प्रहता इत्यर्थः। ईदृशा बहवः बहुदेशसंबन्धिनो ये पन्थानः मार्गाः द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये संचरन्ति वर्तन्ते। द्यौश्च पृथिवी च द्यावापृथिव्यौ। 'दिवो द्यावा' 'दिवसश्च पृथिव्याम्' (पा ६,३,२९;३०) इति द्यावादेशः। 'वा च्छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। 'नोत्तरपदेऽनुदात्तादौ°' (पा ६,२,१४२) इति प्रतिषेधस्य 'अपृथिवीरुद्रपूषमन्थिषु' इति पर्युदस्तत्वाद् 'देवताद्वन्द्वे च' (पा ६,२,१४१) इत्युभयपदप्रकृतिस्वरत्वम्। 'अन्तरान्तरेण युक्ते' (पा २,३,४) इति द्वितीया। ते मार्गाः पयसा घृतेन च मा मां जुषन्ताम् सेवन्ताम्। मार्गश्रमनिवर्तकक्षीरघृतोपलक्षितान्नपानोपेता भवन्तु इत्यर्थः। यथा येन प्रकारेण अहं क्रीत्वा पण्यं विक्रीय धनम् लाभसहितं मूल्यधनम् आहराणि स्वगृहं प्रापयाणि। तथा जुषन्ताम् इति संबन्धः। हरतेः प्रार्थनायां लोट्।

इध्मेनाग्न इच्छमानो घृतेन [5]जुहोमि हव्यं तरसे बलाय।
यावदीशे ब्रह्मणा वन्दमान इमां धियं शतसेयाय देवीम्॥ ३॥

---

१. शत्रन्तेन शंपा.　२. ये ते पन्थानः S.　३. तु. टि १; वैतु. भंपा. द्र.　४. देवा° S', Kd.
५. तु RW. ऋ ३,१८,३; वैतु. शंपा. जुहोमि.

इध्मेर्न । अग्ने । इच्छमानः । घृतेर्न । जुहोमि । हव्यम् । तरसे । बलाय ।
यावत् । ईशे । ब्रह्मणा । वन्दमानः । इमाम् । धियम् । शतऽसेयाय । देवीम् ॥ ३ ॥

हे अग्ने इच्छमानः वाणिज्यलाभं कामयमानः । इषु इच्छायाम् । व्यत्ययेन शानच् । 'इषुगमियमां छः' ( पा ७,३,७७) इति छादेशः । "°अदुपदेशाल्लसार्वधातुक°" ( पा ६,१, १८६ ) इति अनुदात्तत्वे [1]शप्प्रत्ययस्वरः । सोहम् इध्मेन इन्धनसाधनेन समित्समूहेन घृतेन आज्येन च सह हव्यम् हविः जुहोमि । किमर्थम् । तरसे वेगाय शीघ्रगमनाय बलाय शरीरसामर्थ्याय च । ब्रह्मणा मन्त्रेण स्तोत्ररूपेण वन्दमानः त्वां स्तुवन् देवीम् द्योतमानां व्यवहारकुशलाम् इमाम् मदीयां धियम् बुद्धिं शतसेयाय । [2]शतम् इति अपरिमितनाम । असंख्यातधनलाभाय यावद् अहम् ईशे शक्नोमि लब्धुम् । तावज्जुहोमीति संबन्धः । यद्वा यावद् अहम् ईशे ईश्वरो धनाढ्यो भवामि तावत् स्तोत्रेण स्तुवन् द्योतमानाम् इमां धियम् । धीरिति कर्मनाम । इदम् वाणिज्यलाभनिमित्तं होमलक्षणं कर्म । करोमीति शेषः । ईश इति । ईश ऐश्वर्ये । लटि उत्तमैकवचने अनुदात्तेत्वात् "°लसार्वधातुक°" ( ६,१,१८६ ) इति अनुदात्तत्वे धातुस्वरः । 'यावद्यथाभ्याम्' (पा ८,१,३६) इति निघातप्रतिषेधः । शतसेयायेति । षणु दाने । व्यत्ययेन यत्प्रत्यये 'ये विभाषा' ( पा ६,४,४३) इत्यात्वे 'ईद्यति' (पा ६,४,६५) इति ईत्वे गुणः । 'यतोऽनावः' ( पा ६,१,२१३ ) इत्याद्युदात्तत्वे धातुस्वरः । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा धातूनाम् अनेकार्थत्वात् षो अन्तकर्मणि इत्यस्मादेव यत्प्रत्ययः ।

इमामग्ने शरणिं मीमृषो [3]नो यमध्वानमगाम [4]दूरम् ।
शुनं नो अस्तु प्रपणो विक्रयश्च प्रतिपणः फलिनं मा कृणोतु ।
इदं हव्यं संविदानौ जुषेथां शुनं नो अस्तु चरितमुत्थितं च ॥ ४ ॥

इमाम् । अग्ने । शरणिम् । मीमृषः । नः । यम् । अध्वानम् । अगाम । दूरम् ।
शुनम् । नः । अस्तु । प्रऽपणः । विऽक्रयः । च । प्रतिऽपणः । फलिनम् । मा । कृणोतु ।
इदम् । हव्यम् । समऽविदानौ । जुषेथाम् । शुनम् । नः । अस्तु । चरितम् । उत्थितम् । च ॥

हे अग्ने नः अस्माकम् इमां शरणिम् प्रवासनिबन्धनां व्रतलोपलक्षणां हिंसां मीमृषः क्षमस्व । मृष तितिक्षायाम् । स्वार्थिको णिच् । छान्दसो लुङ् । यम् अध्वानम् मार्गं [4]दूरम् अगाम गतवन्तः स्मः[5] । तदध्वगमनजनिताम् इमां शरणिम् इति पूर्वत्रान्वयः । इण् गतौ । लुङि 'इणो गा लुङि' ( पा २,४,४५ ) इति गादेशः । यद्वा यम् अध्वानं दूरम् अगाम इमां शरणिम् । वर्णव्यत्ययः । इमम् अध्वानम् नः अस्मान्

१. शप्प्रत्ययः S', Kd. २. शतसहस्रम् S', Kd. ३. न इममध्वा° ऋ १,३१,१६ पै १,५१,४. ४. दूरात् ऋ. ५. °मागवतवंतरम S', Kd.

मीमृषः मर्षय [1]तितिक्ष। तज्जनितदुःखनिवर्तने समर्थं कुर्वित्यर्थः। प्रपणः। व्यवहर्तुं पण्यद्रव्यस्य परिमाणकल्पनम्। विक्रयः तस्यैव सलाभमूल्यस्वीकारेण परेषां प्रदानम्। तद् उभयमपि नः अस्माकं शुनम् सुखं यथा भवति तथा अस्तु भवतु। प्रपण इति। पण व्यवहारे इत्यस्मात् 'नित्यं पणः परिमाणे' (पा ३,३,६६) इति अप्प्रत्ययः। विक्रय इति। क्रीणातेः 'एरच्' (पा ३,३,५६) इति अच्प्रत्ययः। तथा प्रतिपणः। प्रत्यानेतुं परद्रव्यस्य परिमाणकल्पनं प्रतिपण इत्युच्यते। सोपि मा माम्। फलिनम् प्रभूतलाभोपेतं कृणोतु करोतु।

[2]इन्द्राग्न्योः प्रकृतत्वात् तावेवात्र प्रयुक्तौ प्रार्थ्येते — हे इन्द्राग्नी युवां संविदानौ संजानानौ ऐकमत्यं गतौ। संपूर्वाद् वेत्तेरकर्मकात् 'समो गमादिषु विदिप्रच्छि' (पावा १,३,२९) इत्यात्मनेपदम्। अदादित्वात् शपो लुक्। इदम् मया हूयमानं हव्यम् हविः जुषेथां सेवेथाम्। युवयोः प्रसादात् नः अस्माकं चरितम् आचरितं विक्रयादिकम् उत्थितम् तस्माद् व्यवहाराद् उत्पन्नं लाभयुक्तं धनं च शुनम् सुखम् अस्तु।

येन॒ धने॑न प्रप॒णं चरा॑मि॒ धने॑न देवा॒ धन॑मि॒च्छमा॑नः।
तन्मे॒ भूयो॑ भवतु॒ मा कनी॒योऽग्ने॑ सात॒घ्नो दे॒वान् ह॒विषा॒ नि षे॑ध ॥ ५ ॥

येन॑। धने॑न। प्र॒ऽप॒णम्। चरा॑मि। धने॑न। दे॒वाः। धन॑म्। इ॒च्छमा॑नः। तत्। मे॒। भूयः॑। भ॒व॒तु॒। मा। कनी॑यः। अग्ने॑। सा॒त॒ऽघ्नः। दे॒वान्। ह॒विषा॑। नि। से॒ध॒ ॥५॥

हे देवाः धनेन मूल्यधनेन धनम् [3]वृद्धियुक्तं धनम् इच्छमानः कामयमानोहं येन धनेन प्रपणम् व्यवहर्तुं [4]परिमाणकल्पनं[4] चरामि करोमि। तदपि शुनम् अस्तु इति पूर्वेण सबन्धः। हे अग्ने सातघ्नः सातं लाभः। षणु दाने इत्यस्माद् भावे निष्ठा। 'जनसनखनां सञ्झलोः' (पा ६,४,४२) इति आत्वम्। सातं लाभं घ्नन्तीति सातघ्नः। 'बहुलं छन्दसि' (पा ३,२,८८) इति हन्तेः क्विप्। शसि [5]'अल्लोपोऽनः' (पा ६,४,१३४) इत्युपधालोपः। 'हो हन्तेः॰' (पा ७,३,५४) इति घत्वम्। लाभप्रतिबन्धकान् देवान् हविषा हूयमानेन नि षेध परितोष्य निवारय। षिधु गत्याम्। भौवादिकः। 'उपसर्गात् सुनोति' (पा ८,३,६५) इत्यादिना षत्वम्। हे देवाः युष्मत्प्रसादात् तन्मे मदीयं धनं भूयः बहुतरं भवतु। कनीयः अल्पतरं मा भवतु। भूय इति। बहुशब्दाद् ईयसुनि 'बहोर्लोपो भू च बहोः' (पा ६,४,१५८) इति ईयस आदेर्लोपः बहोर्भूभावश्च। कनीय इति। 'युवाल्पयोः कनन्यतरस्याम्' (पा ५,३,६४) इति अल्पशब्दस्य कन् आदेशः।

---

१. तितक्षय S', Kd. २. चतुर्थ्या ऋचः अन्तिमेन पादेन पञ्चम्याः पूर्वार्द्धं संयोज्य पञ्चमी, पञ्चम्या उत्तरार्धेन षष्ठ्याः पूर्वार्धञ्च संयोज्य षष्ठी, षष्ठ्या उत्तरार्धः सप्तमी, एवं सप्तमी अष्टमी, अष्टमी च नवमी इतीव भाष्यं विभाजुकः शंपा. (तु. केचन मूको.). ३. विधियुक्तं Kd, विद्धियुक्तं S'. ४. परिमाणं कल्पने S', Kd. ५. 'गमहन॰' (पा ६,४,९८) शंपा.

[1]येन धनेन[1] [2]प्रपणं चरामि [3]धनेन देवा धनमिच्छमानः ।
तस्मिन् म इन्द्रो [4]रुचिमा दधातु [5]प्रजापतिः सविता सोमो अग्निः ॥ ६ ॥

येन । धनेन । प्रऽपणम् । चरामि । धनेन । देवाः । धनम् । इच्छमानः ।
तस्मिन् । मे । इन्द्रः । रुचिम् । आ । दधातु । प्रजाऽपतिः । सविता । सोमः । अग्निः ॥६॥

येन धनेन इत्यादि पूर्ववत् । येनेति यत् प्रकृतं धनं तस्मिन् मे मदीये धने रुचिम् सर्वजनप्रीतिं धनप्रदानेन आदानेच्छाम् इन्द्र आ दधातु स्थापयतु । तथा प्रजापत्यादयश्च रुचिं कुर्वन्तु ।

उप त्वा नमसा वयं होतर्वैश्वानर स्तुमः ।
[6]स नः प्रजास्वात्मसु गोषु प्राणेषु जागृहि ॥ ७ ॥

उप । त्वा । नमसा । वयम् । होतः । [7]वैश्वानर । स्तुमः[7] ।
सः । नः । प्रऽजासु । आत्मऽसु । गोषु । प्राणेषु । जागृहि ॥ ७ ॥

हे होतः देवानाम् आह्वातः वैश्वानर विश्वनरहित अग्ने त्वा त्वां वयं नमसा हविर्लक्षणेन अन्नेन सह उप स्तुमः उपेत्य स्तोत्रं कुर्मः । स स्तुतस्त्वं नः अस्माकं प्रजासु पुत्रपौत्रादिलक्षणासु आत्मसु अस्मासु गोषु अस्मदीयेषु पशुषु प्राणेषु च जागृहि बुध्यस्व । प्रजादिषु दुःखलेशोपि यथा न प्राप्नोति तथा रक्षन् अवहितो वर्तस्वेत्यर्थः ।

[8]विश्वाहा ते सदमिद्भरेमाश्वायेव[8] तिष्ठते जातवेदः[9] ।
रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम ॥ ८ ॥

विश्वाहा । ते । सदम् । इत् । भरेम । अश्वायऽइव । तिष्ठते । जातऽवेदः ।
रायः । पोषेण । सम् । इषा । मदन्तः । मा । ते । अग्ने । प्रतिऽवेशाः । रिषाम ॥८॥

हे जातवेदः जातानां वेदितरग्ने तिष्ठते स्वगृहे नित्यं वर्तमानाय ते तुभ्यं विश्वाहा सर्वाण्यहानि । अत्यन्तसंयोगे द्वितीया । सदमित् सदैव भरेम हरेम । हविरिति शेषः । तत्र दृष्टान्तः — अश्वायेव स्वगृहे वर्तमानाय अश्वाय कालेकाले यथा घासः प्रदीयते तद्वत् । हे अग्ने ते तव प्रतिवेशाः परिचरणादिना प्रत्यासन्ना वयं रायः धनस्य पोषेण समृद्ध्या इषा इष्यमाणेन अन्नेन च सं मदन्तः संमाद्यन्तो हृष्यन्तः । व्यत्ययेन शप् । मा रिषाम विनष्टा मा भूम । रुष रिष हिंसायाम् । पुषादित्वात् च्लेरङादेशः ।

इति तृतीयकाण्डे तृतीयेऽनुवाके पञ्चमं सूक्तम् ।
समाप्तश्च तृतीयोऽनुवाकः ।

---

१. यत्पणेन पै १९,४९,३. २. प्रतिपणं पै. ३. स्वेन पै. ४. रुचमा हिरा १,१५,१. ५. बृहस्पतिः पै. ६. सं P³,M,W. ७. °भरः । तुमः Bp, Kp,D². ८. अहरहरप्रयावं भरन्तोऽश्वा° मा ११,७५. ९. घासमस्मै मा.

चतुर्थेऽनुवाके पञ्च सूक्तानि । तत्र 'प्रातरग्निम्' इति प्रथमं सूक्तम् । तेन मेधाकामः [1]सुप्त्वोत्थाय मुखप्रक्षालनं हस्तेन कुर्यात् । तद् उक्तं कौशिकेन — 'पूर्वस्य मेधाजननानि' इति प्रक्रम्य "'प्रातरग्निम्', 'गिरावरगराटेषु' (अ ६,६९), 'दिवस्पृथिव्याः' (अ ९,१) इति संहाय मुखं विमार्ष्टि" (कौसू १०,१-२४) इति ।

तथा अनेन सूक्तेन दधिमधुनी संपात्य अभिमन्त्र्य वर्चस्कामं ब्राह्मणम् आशयेत् । क्षत्रियं तु दधिमधुमिश्रम् अन्नम् आशयेत् । वैश्यादिकं तु केवलभक्तम् आशयेत् । तथा च कौशिकः — "'ममाग्ने वर्चः' (अ ५,३) इति वर्चस्यानि" इति प्रक्रम्य "'प्रातरग्निम्', 'गिरावरगराटेषु' (अ ६,६९), 'दिवस्पृथिव्याः' (अ ९,१) इति दधिमध्वाशयति । कीलालमिश्रं क्षत्रियं कीलालम् इतरान्" (कौसू १२,१०-१६) इति ।

तथा वर्चस्यकर्मणि स्नातकसिंहव्याघ्रादीनां सप्तानाम् अन्यतमस्य नाभिलोमर्माणि लाक्षाहिरण्येन वेष्टयित्वा अनेन सूक्तेन संपात्य अभिमन्त्र्य बध्नीयात् ।

तथा वर्चस्कामानां क्षत्रियादीनां [2]स्नातकादिसप्तमर्माणि प्रच्छिद्य स्थालीपाके प्रक्षिप्य अनेन सूक्तेन संपात्य अभिमन्त्र्य स्थालीपाकेन सह प्राशनम् संपातिताभिमन्त्रितजलेनाप्लावनम् अवसेचनं च वर्चस्कामस्य कार्यम् ।

सूत्रितं हि — 'स्नातकसिंहव्याघ्रबस्तकृष्णवृषभराज्ञां नाभिलोमानि' इति प्रक्रम्य "'प्रातरग्निम्', 'गिरावरगराटेषु' (अ ६,६९), 'दिवस्पृथिव्याः' (अ ९,१) इति सप्तमर्माणि स्थालीपाके पृक्तान्यश्नाति । अकुशलं यो ब्राह्मणो लोहितम् अश्नीयाद् इति गार्ग्यः । उक्तो लोममणिः । सर्वैराप्लावयति । अवसिञ्चति" (कौसू १३,४-१०) इति ।

प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं [3]हवामहे ॥ १ ॥

प्रातः । अग्निम् । प्रातः । इन्द्रम् । हवामहे । प्रातः । मित्रावरुणा । प्रातः । अश्विना ।
प्रातः । भगम् । पूषणम् । ब्रह्मणः । पतिम् । प्रातः । सोमम् । उत । रुद्रम् । हवामहे ॥ १ ॥

अग्न्यादयः प्रसिद्धा देवाः । तान् प्रातः प्रातःकाले वर्चसे फलाय मेधाजननफलाय च हवामहे । क्रियाफलस्य कर्तृगामित्वात् 'स्वरितञितः०' (पा १,३,७२) इत्यात्मनेपदम् । 'बहुलं छन्दसि' (पा ६,१,३४) इति ह्वः संप्रसारणम् । मित्रावरुणा । मित्रश्च वरुणश्च मित्रावरुणौ । 'देवताद्वन्द्वे च' (पा ६,३,२६) इति पूर्वपदस्य आनङादेशः । 'सुपां सुलुक्०' (पा ७,१,३९) इति पूर्वसवर्णदीर्घः 'देवताद्वन्द्वे च' (पा ६,२,१४१) इत्युभयपदप्रकृतिस्वरत्वम् । पूषणम् । 'इन्हन्पूषार्यम्णां शौ' (पा ६,४,१२) इति नियमात् 'सर्वनामस्थाने चासंबुद्धौ' (पा ६,४,८) इति अपि प्राप्तस्य दीर्घस्य निवृत्तिः । ब्रह्मणस्पतिम् ।

---

१. सुप्त्वोत्थाय S', Kd. २. स्नातकानिसप्त° S', Kd. ३. हुवेम ऋ ७,४१,१ पै ४,३१,१ मा ३४,३४ आपमं १,१४,१ तैब्रा २,८,९,७.

"षष्ठ्याः पतिपुत्र" (पा ८,३,५३) इति विसर्जनीयस्य सत्वम्। उतशब्दः अप्यर्थे।

प्रातर्जितं भर्गमुग्रं [1]हवामहे वयं पुत्रमदितेर्यो विधर्ता।
आध्रश्चिद् यं मन्यमानस्तुरश्चिद् राजा चिद् यं भगं भक्षीत्याह॥ २॥

प्रातःऽजितम्। भगम्। उग्रम्। हुवामहे। वयम्। पुत्रम्। अदितेः। यः। विऽधर्ता।
आध्रः। चित्। यम्। मन्यमानः। तुरः। चित्। राजा। चित्। यम्। भगम्। [2]भक्षि। इति। आह॥

प्रातर्जितम्। प्रातःकाले जयति स्वाभिमतं साधयतीति प्रातर्जित्। 'सत्सूद्विष' (पा ३,२,६१) इत्यादिना क्विप्। उग्रम् उद्गूर्णबलम् अनभिभवनीयम्। अदितेः। अदितिरदीना देवमाता। तस्याः पुत्रं भगं वयं [3]वर्चःप्रभृतिफलकामा हवामहे आह्वयामः। स एव विशेष्यते य आदित्यो भगः विधर्ता सर्वस्य विधारयिता वृष्ट्यादिप्रदानेन पोषकः आध्रः आधारयितव्यो दरिद्रः। चिच्छब्दः अप्यर्थे। दरिद्रोपि तुरश्चित् त्वरमाणः समृद्धोपि मन्यमानः स्वाभिमतफलसाधनं जानानः यं भगं देवं भक्षि [4]भजेय इत्याह ब्रूते। राजा चित् राजापि यं भगं देवं भजेयेत्याह। सर्व एव यस्य भक्ततां आशासत इत्यर्थः। तं भगम् इति पूर्वत्रान्वयः। तुरः। तुर त्वरणे इत्यस्माद् इगुपधलक्षणः कः। भक्षीति। भजेश्छान्दसो लिङर्थे लुङ्। उत्तमैकवचने 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा ६,४,७५) इत्यडभावः। यच्छब्दस्य आहेत्यनेन संबन्धात् भक्षीत्यस्य निघातः। यद्वा उक्तः सर्वोऽपि जनः यं भगं देवं मन्यमानः स्तुवन्। मन्यतिः स्तुतिकर्मा। भगम्। धननामैतत्। भगं भजनीयं धनं भक्षि भज विभज प्रयच्छ मह्यम् इति यं देवम् आह इति प्रार्थयते। तम् आह्वयाम इति संबन्धः। भक्षि। लोटि भजेश्छान्दसः शपो लुक् ह्यादेशाभावश्च।

भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा[5] ददन्नः।
भग प्र [6]णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम॥ ३॥

भग। प्रऽनेतः। भग। सत्यऽराधः। भग। इमाम्। धियम्। उत्। अव। ददत्। नः।
भग। प्र। नः। जनय। गोभिः। अश्वैः। भग। प्र। नृऽभिः। नृऽवन्तः। स्याम॥ ३॥

हे भग प्रणेतः प्रकर्षेण सर्वस्य जगतो नेतः। विशेषणान्तरसंबन्धाय पुनःपुनर्भगेत्यामन्त्रणम्। हे सत्यराधः सत्यम् अनश्वरं राधो धनं यस्य स [7]तथोक्तः। 'राध इति धननाम। राध्नुवन्त्यनेन' इति यास्कः (नि ४,४)। 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा ८,१,७२) इति भगेत्यामन्त्रितस्य अविद्यमानवत्त्वात् 'आमन्त्रितस्य च'

१. हुवेम ऋ७,४१,२ मा३४,३५ पै४,३१,२ आपमं१,१४,२ तैब्रा२,८,९,७. २. भक्षि V,I,P²; भक्षि Cp. ३. वर्चःप्रभृ° S', Kd. ४. भक्षयेत्याह S', Kd. ५. °दवु तैब्रा२,८,९,८. ६. नो मा३४,३६. ७. यथोक्तः S', Kd.

(पा ६,१,१९८) इति प्रणेतरित्यस्य षाष्ठिकम् आद्युदात्तत्वम् । न च 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (पा ८,१,७३) इत्यविद्यमानवत्त्वनिषेधः । भगेत्यस्य विशेषवचनत्वात् । प्रणयनात् प्रणेतेति प्रणेतृत्वस्य साधारणत्वेन तद्वाचिनः सामान्यवचनत्वम् तद्वैशिष्ट्येन भगेत्यस्य विशेषवचनत्वम् । यद्वा प्रणेतरित्यस्य विधेयविशेषणत्वेन प्रणेतॄन् अस्मान् कुरु इति पृथग्वाक्यत्वेन पर्यवसानात् 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः (पावा ८,१,१८) इति वचनात् भग सत्यराध इत्यादेर्वाक्यान्तरत्वेन पूर्वपदापेक्षया निघाताप्रसङ्गः । हे भग इमाम् अस्मदीयां धियम् स्तुतिम् उदव उदक्ष सफलां कुरु । 'द्व्यचोऽतस्तिङः' (पा ६,३,१३५) इति सांहितिको दीर्घः । किं कुर्वन् । नः अस्मभ्यं ददत् प्रयच्छन् मेधाजननादिफलम् । ददातेः शतरि 'नाभ्यस्ताच्छतुः' (पा ७,१,७८) इति नुम्प्रतिषेधः । 'अभ्यस्तानामादिः' (पा ६,१,१८९) इत्याद्युदात्तत्वम् । हे भग नः अस्मान् गोभिरश्वैश्च प्र जनय [2]प्रभूतान् कुरु । हे भग नृभिः पुत्रपौत्रादिभिर्भृत्यादिभिश्च वयं नृवन्तः तद्युक्ताः प्र स्याम प्रभवेम । नृभिर्नृवन्त इति 'गवाम् असि गोपतिः' (ऋ ७,९८,६) इतिवत् वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वं च विवक्ष्यते । नृभिरिति । 'नृ चान्यतरस्याम्' (पा ६,१,१८४) इति हलादिविभक्तिर्नोदात्ता । नृवन्त इति । छान्दसं मतुपो वत्वम् । 'ह्रस्वनुड्भ्याम्' (पा ६,१,१७६) इति मतुप उदात्तत्वम् ।

उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाम् ।
[3]उतोदितौ मघवन्त्सूर्यस्य[4] वयं देवानां सुमतौ स्याम ॥ ४ ॥

उत । इदानीम् । भगऽवन्तः । स्याम । उत । प्रऽपित्वे । उत । मध्ये । अह्नाम् ।
उत । उतऽइतौ । मघऽवन् । सूर्यस्य । वयम् । देवानाम् । सुऽमतौ । स्याम ॥ ४ ॥

उत अपि च इदानीम् अस्मिन् कर्मानुष्ठानसमये वयं भगवन्तः भगेन देवेन युक्ताः तत्स्वामिकाः भगेन धनेन सौभाग्येन वा युक्ताः स्याम भवेम । उत अपि च प्रपित्वे सायाह्ने अह्नां मध्ये मध्याह्नेपि उत अपि च उदितौ उदयकाले हे मघवन् । मघम् इति धननाम । वयं सूर्यस्य तथा देवानाम् अग्न्यादीनां सुमतौ शोभनायाम् अनुग्रहात्मिकायां बुद्धौ स्याम भवेम । देवा अपि अस्मान् अनुगृह्णीयुरित्यर्थः ।

भग एव भगवाँ अस्तु [5]देवस्तेना वयं भगवन्तः स्याम ।
तं त्वा भग सर्व इज्जोहवीमि[6] स नो भग पुरएता भवेह ॥ ५ ॥

१. °मानत्वनि° S', Kd. २. प्रभूतान् S', Kd. ३. उतोदिता ऋ७,४१,४ मा३४,३७ तैब्रा२,८,९,८ आपमं१,१४,४. ४. सूर्ये पै४,३१,४. ५. देवास्तेन ऋ७,४१,५ मा३४,३८ तैब्रा२,८,९,८. ६. जोहवीति ऋ. मा.

भर्गः । एव । भर्गऽवान् । अस्तु । देवः । तेन । वयम् । भर्गऽवन्तः । स्याम ।
तम् । त्वा । भग । सर्वः । इत् । जोहवीमि । सः । नः । भग । पुरःऽएता । भव । इह ॥५॥

भग एव देवो भगवान् धनवान् अस्तु । तेन तदीयेन धनेन वयं भगवन्तः धनवन्तः स्याम भवेम । हे भग तम् तादृशं त्वा त्वां सर्व इत् सर्व एव जनः जोहवीमि जोहवीति पुनःपुनराह्वयति । 'तिङां तिङो भवन्ति' ( पावा ७,१,३९ ) इति तिपः स्थाने मिप् । हे भग स त्वम् इह अस्मिन् व्यापारे नः अस्माकं पुरएता पुरतो गन्ता भव ।

समध्वरायोषसो [1]नमन्त दधिक्रावेव शुचये पदाय ।
अर्वाचीनं वसुविदं भगं [2]मे रथमिवाश्वा वाजिन आ वहन्तु ॥ ६ ॥

सम् । अध्वराय । उषसः । नमन्त । दधिक्रावाऽइव । शुचये । पदाय ।
अर्वाचीनम् । वसुऽविदम् । भगम् । मे । रथम्ऽइव । अश्वाः । वाजिनः । आ । वहन्तु ॥६॥

उषसः उषोदेवताः अध्वराय यज्ञार्थं सं नमन्त । लोडर्थे लङ् । संनमन्ताम् । संगच्छन्ताम् इत्यर्थः । दधिक्रावेव । अश्वनामैतत् । दधिः धारयिता सन् क्रामतीति दधिक्रावा अश्वः । 'दधत् क्रामतीति वा दधत् क्रन्दतीति वा' इत्यादि निरुक्तम् ( २,२७ ) । दधातेः 'आदृगमहनजनः' ( पा ३,२,१७१ ) इत्यादिना किप्रत्ययो लिड्वद्भावश्च । तस्मिन्नुपपदे 'अन्येभ्योपि दृश्यन्ते' ( पा ३,२,७५ ) इति क्रमेः क्वनिप् । 'विड्वनोरनुनासिकस्यात्' ( पा ६,४,४१ ) इति आत्वम् । स यथा शुचये पदाय शुद्धाय गमनाय संनद्धो भवति एवं संनता उषोदेवताः वसुविदम् धनानां लम्भकं भगं देवं मे मम अर्वाचीनम् अभिमुखम् आ वहन्तु आगमयन्तु । तत्र दृष्टान्तः — वाजिनः वेगवन्तः अश्वाः रथमिव ।

अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।
घृतं दुहाना विश्वतः [3]प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

अश्वऽवतीः । गोऽमतीः । नः । उषसः । वीरऽवतीः । सदम् । उच्छन्तु । भद्राः ।
घृतम् । दुहानाः । विश्वतः । प्रऽपीताः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

उषासः उषोदेवताः अश्वावतीः बहुभिरश्वैरुपेताः । 'मन्त्रे सोमाश्वेन्द्रिय०' ( पा ६,३,१३१ ) इति मतौ परतो दीर्घः । गोमतीः गोमत्यो वीरवतीः वीरवत्यः पुत्रादिभिरुपेताः । 'वा छन्दसि' ( पा ६,१,१०६ ) इति सर्वत्र पूर्वसवर्णदीर्घः । भद्राः शिवकर्यश्च सत्यः नः अस्मभ्यं सदम् सदा सर्वदा उच्छन्तु व्युष्टा भवन्तु । घृतम् उदकं

१. नमन्तु पै ४,३१,६. २. नो पै. ऋ ७,४१,६ मा३४,३७ तैब्रा२,८,९,९
३. प्रपीना तैब्रा., प्रवीणा पै ४,३१,७.

दुहानाः विश्वतः सर्वैर्गुणैः प्रपीताः आप्यायिता यूयम् उषसः स्वस्तिभिः अविनाशैः सदा सर्वदा नः अस्मान् पात रक्षत ।

इति चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

'सीरा युञ्जन्ति' इति द्वितीयसूक्तेन कृषिनिष्पत्तिकर्मणि क्षेत्रं गत्वा युगलाङ्गलं बध्नाति । अनेनैव सूक्तेन दक्षिणम् अनड्वाहं युगे युनक्ति । ततः कर्ता अनेन सूक्तेन प्राचीनं कृषन् सूक्तसमाप्त्यनन्तरं हालिकाय हलं प्रयच्छेत् । तेन तिसृषु सीतासु कृष्टासु उत्तरसीतान्ते अग्निम् उपसमाधाय अनेन सूक्तेन पुरोडाशेन इन्द्रम् स्थालीपाकेन अश्विनौ च यजन् उत्तरस्यां सीतायां संपातान् आनयेत् ।

तथा वृषलाभकर्मणि सारूपवत्से ओदने शकृत्पिण्डगुग्गुलुलवणानि प्रक्षिप्य अनेन सूक्तेन संपात्य अभिमन्त्र्य अश्नाति ।

'सीते वन्दामहे' इत्यृचा हालिकेन कृष्यमाणास्तिस्रः सीताः कर्ता प्रत्येकम् अनुमन्त्रयते । अत्र " 'सीरा युञ्जन्ति' इति युगलाङ्गलं प्रतनोति दक्षिणम् उष्टारं प्रथमं युनक्ति" इत्यादि 'अनडुत्सापदम्' ( कौसू २०,१-२६ ) इत्यन्तं कौशिकसूत्रं द्रष्टव्यम् ।

तथा अद्भुतशान्तौ सीतामध्ये लाङ्गलसंसर्गे पुच्छसंसर्गे वा एतत् सूक्तं शान्त्युदके[1] अनुयोजनीयम्[1] । 'अथ [2]यत्रैतल्लाङ्गले संसृजतः' इत्यादि[2] कौशिकसूत्रम् 'शुनासीराण्यनुयोजयेत्' ( १०६,१-८ ) इत्यन्तम् ।

यज्ञवास्तुसंस्कारकर्मणि 'इन्द्रः सीतां नि गृह्णातु' (४) इति नवाग्निस्थापनदेशे उल्लेखनं कार्यम्[3] । तत्प्रकारश्च कौशिकेन दर्शितः— 'यथावितानं यज्ञवास्त्वध्यवस्यंत्' इति प्रक्रम्य " 'देवस्य त्वा सवितुः' (अ १९,५१,२) इति [4]विमानकाष्ठं गृह्णाति[4] । यत्राग्निं निधास्यन् भवति तत्र लक्षणं करोति । 'इन्द्रः सीतां निगृह्णातु' इति दक्षिणत आरभ्योत्तरत आलिखति" (कौसू १३७, १-१९ ) इत्यादिना ।

अग्निचयनकर्मणि अग्निक्षेत्रकर्षणाय युज्यमानं सीरं 'सीरा युञ्जन्ति' इति ब्रह्मा अनुमन्त्रयते । 'लाङ्गलं पवीरवत्' (३) इति कर्षणावस्थस्य लाङ्गलस्यानुमन्त्रणम् । 'कृते योनौ' (२) इति तस्मिन् कृष्टक्षेत्रे ओषधीरावपन्तम् अध्वर्युम् अनुमन्त्रयेत । तथा च वैतानं सूत्रम्— " 'सीरा युञ्जन्ति' इति सीरं युज्यमानम्" (वैताश्रौ २८,३०) इत्यादि ।

सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु [5]सुम्नयौ ॥ १ ॥

सीरा । युञ्जन्ति । कवयः । युगा । वि । तन्वते । पृथक् । धीराः । देवेषु । सुम्नऽयौ ॥ १ ॥

१. °केनयोज° S', Kd. २. यत्रैतंलांगलं संसृजेत्यादि S', Kd. ३. °खनका° S', Kd. ४. °केऽनमादाय Bl. ५. सुम्नया ऋ १०,१०१,४ मा१२,६७ तै४,२,५,५ मै२,७,१२ काठ१६,१२ क २५,३; सुम्नयुः K.

अन्वयः । मेधाविनामैतत् । मेधाविनो जनाः सीरा सीराणि लाङ्गलानि । "शेश्छन्दसि" ( पा ६,१,७० ) इति शेर्लोपः । युञ्जन्ति कर्षणार्थं योजयन्ति । धीराः धीमन्तस्ते युगा युगानि च पृथक् वि तन्वते बलीवर्दानां स्कन्धेषु प्रसारयन्ति । किमर्थम् । देवेषु देवविषये सुम्नयौ सुखकरयज्ञेच्छौ सति । यजमाने इत्यर्थः । 'यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वानाः' ( माश ७,२,२,४ ) इति वाजसनेयकम् । 'छन्दसि परेच्छायाम्' ( पावा ३,१,८ ) इति सुम्न-शब्दात् क्यच् । 'न च्छन्दस्यपुत्रस्य' ( पा ७,४,३५ ) इति ईत्वदीर्घयोर्निषेधः । 'क्याच्छन्दसि' ( पा ३,२,१७० ) इति उप्रत्ययः । यद्वा देवविषये सुम्नं सुखकरं हविर्लक्षणम् अन्नं याताः प्रापयत इति सुम्नयौ बलीवर्दौ । तौ च युञ्जन्तीति संबन्धः । यातेः 'आतो मनिन्' ( पा ३,२,७४ ) इति विच् ।

युनक्त सीरा वि युगा [1]तनोत [2]कृते [3]योनौ वपतेह बीजम् ।
[4]विराजः [5]श्नुष्टिः सभरा [6]असन्नो नेदीय [7]इत् सृण्यः [8]पक्वमा यवन् ॥२॥

युनक्त । सीरा । वि । युगा । तनोत । कृते । योनौ । वपत । इह । बीजम् । विऽराजः ।
[9]श्नुष्टिः । सऽभराः । [10]असत् । नः । नेदीयः । इत् । सृण्यः । पक्वम् । आ । यवन् ॥२॥

हे कृषीवलाः सीरा युनक्त सीराणि लाङ्गलानि युगैः सह योजयत । तथा युगा वि तनोत युगानि बलीवर्दानां स्कन्धेषु प्रसारयत । अपि च योनौ अङ्कुरोत्पत्ति योग्ये इह अस्मिन् [11]कृते कृष्टक्षेत्रे[11] बीजम् व्रीहियवादिकं वपत । विराजः अन्नस्य व्रीहियवादिरूपस्य । 'अन्नं वै विराट्' ( तैब्रा ३,८,१०,४ ) इति श्रुतेः । श्नुष्टिः आशुप्रापकः स्तम्बः सभराः फलभारसहितः नः अस्माकम् असत् भवतु । अस्तेर्लेटि अडागमः । सफलं व्रीह्यादिकं नेदीय इत् अन्तिकतमम् अल्पेनैव कालेन पक्वम् परिणतफलोपेतं सत् सृण्यः । द्वितीयार्थे षष्ठी । सृणिम् अङ्कुशं [12]लवनसाधनं दात्रादिकम् आ [13]यवम् आयौतु प्राप्नोतु । यौतेश्छान्दसे लङि 'तिङां तिङो भवन्ति' ( पावा ७,१,३९ ) इति तिपो मिप् । 'यदा वा अन्नं पच्यतेथ तत्सृण्योपचरन्ति' ( माश ७,२,२,५ ) इति वाजसनेयकम् ।

१. तनुध्वम् ऋ १०,१०१,३ मा १२,६८. २. कृतो काठ१६,१२. ३. योनिः काठ., क्षेत्रे पै २,२२,१. ४. गिरा च ऋ, मा. काठ. तै ४,२,५,६ मै २,७,१२. ५. श्नुष्टीः Bh; श्लुष्टिः K; श्रुष्टिः Sm,R,B; श्रुष्टिः ऋ. मा. मै. तै. काठ. RW.; स्नुष्टिः J,E2,I,H,Op. ६. असन्नो ऋ. मा. मै. तै. काठ. RW. ७. इच्छृण्यः P2,M,W,Sm,K,Bh,B,D; इच्छ्रिण्यः A ; इत्सृण्या तै. ८. °मायुवन् पै., °मेयात् ऋ. मा. क., °मायत् तै. मै. काठ. ९. स्नुष्टिः P2 १०. असन् P2. ११. कष्टक्षेत्रे S', Kd. १२. लवन° S', Kd. १३. वैतु. मंपा. द्र.

लाङ्गलं [1]पवीरवत् [2]सुशीमं [3]सोमसत्सरु ।
[4]उदिद् वपतु[4] गामविं प्रस्थावद् [5]रथवाहनं [6]पीबरीं च [7]प्रफर्व्यम् ॥३॥

लाङ्गलम् । पवीरऽवत् । सुऽशीमम् । सोमसत्ऽसरु ।
उत् । इत् । वपतु । गाम् । अविम् । प्रस्थाऽवत् । रथऽवाहनम् । पीबरीम् । च । प्रऽफर्व्यम् ॥३॥

पवीरवत् पवीरं पविर्वज्रम् । स्वार्थिको रप्रत्ययः । यद् वज्रमिव निशितधारं लाङ्गलाग्रे प्रोतं सदयोमयं शल्यं भूमिं विपाटयति तत्सहितम् । पविशब्दात् 'कृदिकारादक्तिनः' (पाग ४,१,४५) इति ङीष् । सुशीमम् कर्षकस्य सुखकरं सोमसत्सरु व्रीह्यादिसंपादनद्वारा सोमयागनिष्पादकः [8]त्सरुः भूमौ प्रच्छन्नगमनम् कर्षकहस्तग्राह्योऽवयवविशेषो वा यस्य तत् तथोक्तम् । त्सर छद्मगतौ इत्यस्मात् 'भृमृशीतॄचरित्सरि' (पाउ १,७) इत्यादिना उप्रत्ययः । एवंगुणविशिष्टं लाङ्गलम् उदिद् वपतु । इद् इत्यवधारणे । उद्धरतु । संपादयतु इत्यर्थः । किं तद् इत्याह — गाम् अविं च प्रस्थावत् प्रस्थानयुक्तं गमनसमर्थम् । प्रपूर्वात् तिष्ठतेः 'आतश्चोपसर्गे' (पा ३,३,१०६) इति भावे अङ् । रथवाहनम् रथवाहनसमर्थम् अश्वबलीवर्दादिकं [8]पीवरीम् स्थूलां सर्वकामसमर्थां प्रफर्व्यम् । प्रथमवयाः कन्या प्रफर्वी ताम् । 'वा छन्दसि' (पा ६,१,१०६) इति अमिपूर्वत्वस्य विकल्पनाद् यण् । कर्षणेन धान्यादिसमृद्धौ सत्याम् पश्वादिसमृद्धिर्भवतीति भावः ।

इन्द्रः सीतां नि गृह्णातु तां [9]पूषाभि रक्षतु[9] ।
सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥ ४ ॥

इन्द्रः । सीताम् । नि । गृह्णातु । ताम् । पूषा । अभि । रक्षतु ।
सा । नः । पयस्वती । दुहाम् । उत्तराम्ऽउत्तराम् । समाम् ॥ ४ ॥

इन्द्रो देवः सीताम् लाङ्गलपद्धतिं नि गृह्णातु नीचीनं गृह्णातु । तां पूषा पोषको देवः अभि रक्षतु सर्वतः पालयतु । सा सीता नः अस्मभ्यं पयस्वती । पय इत्युपलक्षितम् अभिमतफलम् । तद्युक्ता सती उत्तरामुत्तरां समाम् उत्तरोत्तरं संवत्सरम् । अत्यन्तसंयोगे द्वितीया । सर्वेष्वपि कालेषु इत्यर्थः । दुहाम् दुग्धाम् । अभिमतफलम् इति शेषः । यद्वा पयस्वती उदकवती सती दुहाम् व्रीहियवादिसस्यानि दुग्धाम्

१. पवीरवत् मा १२,७१; पवीरवं तै ४,२,५,६ मै २,७,१२ काठ १६,१२. २. सुशेवं तै. मै. मा. काठ. पै १९,५१,१२. ३. सोमपित्सरु मा. मै. काठ. वाध २,३४; सोमपित्सलम् पै., सुमतित्सरु तै. ४. तदुद्वपति मा., उदित्कृषति तै., तदित्कृषतु पै., उदिद्वपति काठ. ५. रथवाहणम् मा. ६. पीबरीं मा. तै. मै. पै. काठ. सा. ७. प्रफर्वीं पै. ८. वैतु. मंपा. द्र. ९. पूषा अभि र° B,B[h]; पूषा महयं रक्षतु पै २,२२,५; पूषानु यच्छतु ऋ ४,५७,७.

उत्तरोत्तरं संवत्सरम् इति द्विकर्मकः। 'अकथितं च' (पा १,४,५१) इति कर्मसंज्ञा। दुहाम् इति। 'लोपस्त आत्मनेपदेषु' (पा ७,१,४१) इति तलोपः।

शुनं सुफाला[1] वि तुदन्तु[2] भूमिं शुनं [3]कीनाशा †अनु यन्तु वाहान्[3]।
शुनासीरा [4]हविषा †तोशमाना[4] [5]सुपिप्पला [6]ओषधीः [7]कर्तमस्मै ॥ ५ ॥

शुनम्। सुऽफालाः। वि। तुदन्तु। भूमिम्। शुनम्। कीनाशाः। अनु। यन्तु। वाहान्।
शुनासीरा। हविषा। तोशमाना। [8]सुऽपिप्पलाः। ओषधीः। कर्तम्। अस्मै ॥ ५ ॥

सुफालाः शोभनानि लाङ्गलमुखानि अस्माकं शुनम् सुखं यथा भवति तथा भूमिं वि तुदन्तु विकृषन्तु। कीनाशाः कर्षकाः शुनं यथा भवति तथा वाहान् बलीवर्दान् अनु यन्तु अनुगच्छन्तु। वाहान्त इति वाहाः। कर्मणि घञ्। 'कर्षात्वतो घञोन्त उदात्तः' (पा ६,१,१५९) इति अन्तोदात्तत्वम्। शुनासीरा हे शुनासीरौ वाय्वादित्यौ। 'शुनो वायुः सीर आदित्यः' इति हि यास्कः (नि ९,४०)। यद्वा शुनः सुखकरो देवः। सीरो लाङ्गलाभिमानी देवः। तौ युवां हविषा अस्मदीयेन [9]तोषमाणा तोषमाणौ तुष्यन्तौ अस्मै यजमानाय ओषधीः व्रीहियवाद्याः सुपिप्पलाः शोभनफलोपेताः कर्तम् कुरुतम्।

शुनं वाहाः शुनं [10]नरः शुनं कृषतु लाङ्गलम्।
शुनं वरत्रा बध्यन्तां [11]शुनमष्ट्रामुदिङ्गय ॥ ६ ॥

शुनम्। वाहाः। शुनम्। नरः। शुनम्। कृषतु। लाङ्गलम्।
शुनम्। वरत्राः। बध्यन्ताम्। शुनम्। अष्ट्राम्। उत्। इङ्गय ॥ ६ ॥

वाहाः बलीवर्दाः शुनम् सुखं [12]कृषन्तु। नरः कर्षकाः शुनम् सुखं कृषन्तु। लाङ्गलम् हलं शुनं यथा भवति तथा कृषतु। कृष विलेखने। तौदादिकः। वरत्राः रज्जवः शुनम् सुखं बध्यन्ताम्। अष्ट्राम् प्रतोदं शुनम् सुखार्थम् उदिङ्गय प्रेरय। अत्र शुनासीरयोर्मध्ये शुनः संबोध्यः।

शुनासीरेह स्म मे जुषेथाम्।
यद् दिवि चक्रथुः पयस्तेनेमामुप सिञ्चतम् ॥ ७ ॥

१. सु फाला मा १२,६९; नः फाला ऋ. ४,५७,८ तै ४,२,५,६; फालो पै २,२२,३ वैप१ पृ २२५८ t द्र. २. कृषन्तु ऋ. मा., भिन्दन्नेतु पै. ३. कीनाशानु Sm., कीनाशो अभ्येतु वाहैः मै २,७,१२; °शा अभि यन्तु वाहैः ऋ. मा. काठ १६,१२; °शो अभ्येतु वाहान् पै., †अभि तु P³,M; अभि तै. ४. हव्यजुष्टिं जुषाणा काठ., †तोशमाणा K,सा.; यो यजातै पै. ५. सुपिप्पला B,Bp,Bh,Km,P,V. ६. ओषधयः पै. ७. कर्तनास्मै मा., कर्तनास्मै मै, सन्तु तस्मै पै. ८. सुऽपिप्पलाः P. ९. वैतु. मंपा. द्र. १०. नाराः तैआ ६,६,२. ११. शुनमुष्ट्रा° P³,M,W,E². १२. कुर्वन्तु शंपा.

शुनासीरा । इह । स्म । मे । जुषेथाम् ।
यत् । दिवि । चक्रथुः । पयः । तेन । इमाम् । उप । सिञ्चतम् ॥ ७ ॥

'शुनासीरा शुनासीरौ देवौ इह स्म इह खलु अस्मिन् क्षेत्रे मे मदीयं हविः 'जुषेताम् सेवेताम् । यत् तौ देवौ दिवि आकाशे पयः उदकं 'चक्रतुः कृतवन्तौ तेन वृष्टिजलेन इमाम् कृष्यमाणां भूमिम् उप 'सिञ्चताम् आर्द्रीकुरुताम् ।

**सीते 'वन्दामहे त्वार्वाची सुभगे भव ।**
**यथा नः 'सुमना असो' यथा नः "सुफला भुवः" ॥ ८ ॥**

सीते । वन्दामहे । त्वा । अर्वाची । सुऽभगे । भव ।
यथा । नः । सुऽमनाः । असः । यथा । नः । सुऽफला । भुवः ॥८ ॥

हे सीते त्वा त्वां वन्दामहे नमस्कुर्मः । हे सुभगे सुभाग्ये सीताभिमानिदेवते त्वम् अर्वाची अस्मदभिमुखी भव । यथा येन प्रकारेण नः अस्माकं सुमनाः शोभनमनस्का असः स्याः । यथा येन प्रकारेण नः अस्माकं सुफला शोभनफलोपेता भुवः भवेः । तथा अर्वाची भवेति संबन्धः । अस्तेर्भवतेश्च लेटि अडागमः । शब्लुकि 'भूसुवोस्तिङि' ( पा ७,३,८८ ) इति गुणप्रतिषेधे उवङ् ।

**घृतेन सीता मधुना 'समक्ता विश्वैर्देवैरनुमता मरुद्भिः ।**
**"सा नः" सीते पयसाभ्याववृत्स्वोर्जस्वती' 'घृतवत् पिन्वमाना ॥ ९ ॥**

घृतेन । सीता । मधुना । समऽअक्ता । विश्वैः । देवैः । अनुऽमता । मरुत्ऽभिः ।
सा । नः । सीते । पयसा । अभिऽआववृत्स्व । ऊर्जस्वती । घृतऽवत् । पिन्वमाना ॥ ९ ॥

घृतेन उदकेन मधुना मधुररसेन समक्ता सम्यग् अक्ता सिक्ता । 'गतिरनन्तरः' ( पा ६,२,४९ ) इति गतेः प्रकृतिस्वरत्वम् । सा सीता विश्वैर्देवैः मरुद्भिः च अनुमता अङ्गीकृता । हे सीते सा त्वं पयसा उदकेन नः अस्मान् अभ्याववृत्स्व अभिमुखम् आवर्तस्व । 'बहुलं छन्दसि' ( पा २,४,७६ ) इति वृतेः शपः श्लुः । कथंभूता । ऊर्जस्वती बलोपेता घृतवत् घृतयुक्तम् अन्नं पिन्वमाना सिञ्चन्ती । पिवि सेचने । व्यत्ययेन आत्मनेपदम् । "अदुपदेशाल्लसार्वधातुक°" ( पा ६,१,१८६ ) इति अनुदात्तत्वे धातुस्वरः ।

इति चतुर्थेऽनुवाके द्वितीयं सूक्तम् ॥

१. वैदु. मंपा. द्र. २. वदामहे B,Bh. ३. सुभगासंसि ऋ ४,५७,६ तैआ. ६,६,२. ४. सुफलासंसि ऋ. तैआ. ५. सुऽफलाः P,P,²J,K. ६. समज्यता मा १२,७० मै २,७,१३. ७. अस्मान् मा. मै. तै. ४,२,५,६. ८. ऊर्जाभागं मै. ९. मधुमद् मै, पयसा मा. तै.

'इमां खनामि' इति तृतीयसूक्तेन सपत्नीजयकर्मणि बाणापर्णीपत्रचूर्णं लोहितवर्णाजाया दध्युदकेन संमिश्र्य अभिमन्त्र्य सपत्नीशयने परिकिरेत् । 'अभि तेधाम्'(६) इति पादेन तत्पत्राण्यभिमन्त्र्य शयनस्याधस्तात् प्रक्षिपेत् । 'उप तेधाम्' इति पादेन तत्पत्राण्यभिमन्त्र्य शयनस्योपरि प्रक्षिपेत् । तद् उक्तं कौशिकेन—" 'इमां खनामि' इति बाणापर्णीं लोहिताजाया द्रप्सेन संनीय शयनम् अनु परिकिरति" ( कौसू ३६,१९-२१) इत्यादि ।

विवादजयकर्मणि 'अहम् अस्मि सहमाना' (५;६) इत्यादिसूक्तशेषं जपन् ऐशान्या दिशः सभास्थलं व्रजेत् । " 'अहम् अस्मि' (५) इत्यपराजितात् परिषदम् आव्रजति" (कौसू ३८,३०) इत्यादि कौशिकसूत्रम् ।

इमां खनाम्योषधिं[1] वीरुधां[2] बलवत्तमाम् ।
[3]यया सपत्नीं बाधते [4]यया संविन्दते[4] पतिम् ॥ १ ॥

इमाम् । खनामि । ओषधिम् । वीरुधाम् । बलवत्ऽतमाम् ।
यया । सऽपत्नीम् । बाधते । यया । सम्ऽविन्दते । पतिम् ॥ १ ॥

इमाम् पाठाख्याम् [5]ओषधीं वीरुधाम् । विरोहन्तीति वीरुधः लतारूपा ओषधयः । तासां मध्ये बलवत्तमाम् स्वकार्यकरणे अतिशयेन बलवतीं खनामि खननेन संपादयामि । यया ओषध्या सपत्नीम् । समानः एकः पतिर्यस्याः सा सपत्नी । 'नित्यं सपत्न्यादिषु' ( पा ४,१,३५ ) इति ङीप् नकारान्तादेशश्च । तादृशीं बाधते हिनस्ति । 'यद्वृत्तान्नित्यम्' ( पा ८,१,६६ ) इति निघातप्रतिषेधः । यया च ओषध्या पतिम् भर्तारं संविन्दते सम्यक् [6]असाधारण्येन लभते ताम् इमाम् [5]ओषधीम् इति संबन्धः ।

[7]उत्तानपर्णे सुभगे[7] [8]देवजूते [9]सहस्वति ।
सपत्नीं मे परा [10]णुद पतिं मे केवलं [11]कृधि ॥ २ ॥

उत्तानऽपर्णे । सुऽभगे । देवऽजूते । सहस्वति ।
सऽपत्नीम् । मे । परा । नुद । पतिम् । मे । केवलम् । कृधि ॥ २ ॥

हे उत्तानपर्णे उत्तानानि ऊर्ध्वमुखानि पर्णानि पत्राणि यस्यास्तादृशि हे सुभगे सौभाग्यहेतुभूते हे देवजूते देवेन स्रष्ट्रा प्रेरिते । यद्वा देवेन इन्द्रादिना प्राप्ते । 'पाटाम् इन्द्रो व्याश्नाद् असुरेभ्यस्तरीतवे' ( अ २,२७,४ ) इति हि निगमः । हे सहस्वति अभिभवन-

१. °षधीं S, सा. २. वीरुधं ऋ १०,१४५,१ आपमं १,१५,१. ३. अथा पै ७,१२,१०. ४. कृणुते केवलं पै. ५. वैतु. मंपा. द्र. ६. अ° नास्ति S', Kd. ७. °पर्णा सुभगां पै ७, १२,८. ८. सहमाने आपमं १,१५,२; सहमानां पै. ९. सहस्वतीम् पै. १०. धम ऋ १०,१४५ २ आपमं.; नुद D,K. ११. कुरु ऋ.

वति ईदृशे हे पाठे मे मम सपत्नीं परा नुद पराङ्मुखीं प्रेरय । पत्युः सकाशाद् दूरं गमयेत्यर्थः । ततश्च मे मम पतिं केवलम् असाधारणं कृधि कुरु । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा ६,४,१०२) इति हेर्धिरादेशः ।

'नहि ते' नाम 'जग्राह नो अस्मिन् रमसे' पतौ[1] ।
परामेव परावतं सपत्नीं गमयामसि ॥ ३ ॥

नहि । ते । नाम । जग्राह । नो इति । अस्मिन् । रमसे । पतौ ।
पराम् । एव । पराऽवतम् । सऽपत्नीम् । गमयामसि ॥ ३ ॥

हे सपत्नि ते तव नाम नामधेयमपि अहं नहि जग्राह न गृह्णामि । जग्राहेति । ग्रहेः उत्तमे णलि रूपम् । अस्मिन् संनिहिते मदीये पतौ पत्यौ नो रमसे नैव रमस्व । पताविति । 'षष्ठीयुक्तश्छन्दसि वा' (पा १,४,९) इति षष्ठीयोगाभावेपि छान्दसी घिसंज्ञा । अपि च तां सपत्नीं परां परावतमेव । परावत् इति दूरनाम । अतिशयितदूरदेशमेव गमयामसि गमयामः प्रापयामः ।

उत्तराहमुत्तर उत्तरेदुत्तराभ्यः ।
[5]अधः सपत्नी या ममाधरा साधराभ्यः ॥ ४ ॥

उत्ऽतरा । अहम् । उत्ऽतरे । उत्ऽतरा । इत् । उत्ऽतराभ्यः ।
अधः । सऽपत्नी । या । मम । अधरा । सा । अधराभ्यः ॥ ४ ॥

हे उत्तरे उत्कृष्टतरे पाठे त्वत्प्रसादाद् अहम् उत्तरा उत्कृष्टतरा भूयासम् । अपि च उत्तराभ्यः लोके या उत्कृष्टतराः सन्ति ताभ्योऽप्यहम् उत्तरा इत् । इच्छब्दः अवधारणे । उत्कृष्टतरैव भवेयम् । [6]अध अनन्तरं मम या सपत्नी विद्यते सा अधराभ्यः निकृष्टाभ्योपि अधरा निकृष्टतरा भवतु ।

अहमस्मि सहमानाथो त्वमसि सासहिः ।
उभे सहस्वती [7]भूत्वा सपत्नीं मे सहावहै ॥ ५ ॥

अहम् । अस्मि । सहमाना । अथो इति । त्वम् । असि । ससहिः ।
उभे इति । सहस्वती इति । भूत्वा । सऽपत्नीम् । मे । सहावहै ॥ ५ ॥

हे पाठाख्ये ओषधि अहं त्वत्प्रसादात् सहमाना अस्मि सपत्न्या अभिभवित्री

१. नह्यस्या ऋ १०,१४५,४. २. गृभ्णामि ऋ. ३. रमते ऋ. ४. जनें ऋ.
५. अध B,B[b], सा.; अथा ऋ १०,१४५,३. ६. वैद्य. मंपा. द्र. ७. भूत्वी ऋ.

भवामि। अथो अपि च त्वम् अपि सासहिरसि शत्रूणाम् अभिभवित्री भवसि। ततश्च आवाम् उभे अपि सहस्वती अभिभवनवत्यौ भूत्वा मे मम सपत्नीं सहावहै अभिभवाव। 'अहमस्मि' इत्यादिसूक्तशेषस्य विवादजयकर्मणि विनियोगस्य दर्शितत्वात् तदनुसारेण सपत्नीशब्दस्य विपरिणामेन सपत्नपरतयापि योज्यम्।

अभि तेंधां सहंमानामुपं 'तेधां सहींयसीम्[1]।
मामनु प्र ते मनों वत्सं गौरिंव धावतु पथा वारिंव धावतु ॥ ६ ॥

अभि। ते। अधाम्। सहंमानाम्। उपं। ते। अधाम्। सहींयसीम्।
माम्। अनुं। प्र। ते। मनंः। वत्सम्। गौःऽइंव। धावतु। पथा। वाःऽइंव। धावतु ॥६॥

सहमानाम् अभिभवनशीलाम् इमां पाठाख्याम् ओषधिं हे सपत्नि ते तव शयनस्थानम् अभि अधाम् अभितः सर्वतः शयनस्य अधःप्रदेशे धारयामि। तथा सहीयसीम् सोढृतमाम् अतिशयेनाभिभवित्रीम् इमाम् ओषधिं ते शयनस्थानम् उप अधाम् शयनस्योपरिदेशे धारयामि। हे सपत्नि ते त्वदीयम् ओषधिप्रभावेन वशीकृतं मनः मामनु प्र धावतु अनुसृत्य प्रवर्तताम्। तत्र वत्सं गौरिवेत्यादि दृष्टान्तद्वयम्। यथा गौः प्रस्नुतस्तनी स्वकीयं वत्सम् इतस्ततो धावन्तं स्नेहवशाद् अनुधावति यथा च वाः वारि उदकं पथा निम्नेन मार्गेण स्वभावतोनुधावति तथा। सपत्नी सर्वथा मदधीनचित्ता भवतु इत्यर्थः।

इति चतुर्थेऽनुवाके तृतीयं सूक्तम्।

'संशितं मे' इति चतुर्थसूक्तेन परसेनोद्वेजनकर्मणि आज्यं हुत्वा सितपदीम् अजाम् अविं वा संपात्य अभिमन्त्र्य शत्रुसेनां प्रति विसर्जयेत्।

तथा संग्रामजयार्थम् अनेन सूक्तेन आज्यहोमम् सक्तुहोमम् धनुरिध्माधानम् इषुसमिदाधानम् राज्ञे अभिमन्त्रितधनुःप्रदानं च कुर्यात्। " 'संशितं मे' इति [2]सितपदीं सपातवतीम् अवसृजति" इत्यादि 'प्रदानान्तानि' (कौसू १४,२२-२४) इत्यन्तं कौशिकसूत्रम्।

तथा अग्निचयने उन्नीयमानम् उख्यम् अग्निं 'संशितं मे' इति ब्रह्मा अनुमन्त्रयेत उक्तं वैताने — " 'संशितं मे' इत्युख्यम् उन्नीयमानम्" (वैताश्रौ २८,१५) इति।

महाव्रते आजिधावने 'अवसृष्टा परा पत' (८) इत्यनया अवसृष्टबाणानुमन्त्रणम्। तथा च वैतानसूत्रे — " 'अवसृष्टा परा पत' इति चतुर्थीम् इषुम् अवसृष्टाम्" (वैताश्रौ ३४,१७) इति।

संशितं म इदं ब्रह्म संशितं [3]वीर्यं१ [4]बलम्।
संशितं क्षत्रमजरमस्तु [5]जिष्णुर्येषामस्मि पुरोहितः ॥ १ ॥

---

१. त्वांधां सहींयसा ऋ १०,१४५,६. २. शितिपदीं Bl. ३. वीर्यं३ B,B[b], D,K,K[m]. ४. मम पै ३,१९,१. ५. जिष्णु ये° पै., जिष्णु यस्याहमस्मि मा ११,८१ तै ४,१,१०,३ मै २,७,७ काठ १६,७.

सम्ऽशितम्। मे। इदम्। ब्रह्म। सम्ऽशितम्। वीर्यम्। बलम्।
सम्ऽशितम्। क्षत्रम्। अजरम्। अस्तु। जिष्णुः। येषाम्। अस्मि। पुरःऽहितः॥ १॥

मे मदीयम् इदं ब्रह्म ब्राह्मणत्वं संशितम् जातिभ्रंशकरदोषपरिहारेण सम्यक् तीक्ष्णीकृतं भवतु। तीक्ष्णीकृते हि ब्राह्मणत्वे स्वेन क्रियमाणं शान्तिकपौष्टिकादि कर्म समृद्धफलं भवतीति आदौ तत्प्रार्थना। यद्वा ब्रह्मशब्दो वेदवाची। प्रयुज्यमानमन्त्रात्मकम् इदं ब्रह्म तीक्ष्णीकृतम्। अमोघफलं भवतु इत्यर्थः। शो तनूकरणे इत्यस्मात् कर्मणि निष्ठा। 'शाच्छोरन्यतरस्याम्' (पा ७,४,४१) इति इत्वम्। 'गतिरनन्तरः' (पा ६,२,४९) इति गतेः प्रकृतिस्वरत्वम्। तथा [1]मदीयं वीर्यम् मन्त्रप्रभावजनितं सामर्थ्यं शारीरं बलं च संशितम् सम्यक् तीक्ष्णीकृतम् अस्तु। तथा मदीयं क्षत्रम् क्षत्रियजातिः संशितम् मन्त्रप्रभावेन तीक्ष्णीकृतं सत् अजरम् जरारहितम्। अत्र शरीरावयवानां सेनावयवहस्त्यश्वादीनां च [2]क्षयो जराशब्देन विवक्षितः। तद्रहितं [3]जिष्णु जयशीलम् अस्तु। अजरम् इति। न विद्यते जरा यस्येति नञो बहुव्रीहौ 'नञो जरमरमित्रमृताः' (पा ६,२,११६) इति उत्तरपदाद्युदात्तत्वम्। जि जये इत्यस्मात् 'ग्लाजिस्थश्च क्स्नुः' (पा ३,२,१३९) इति क्स्नुप्रत्ययान्तो जिष्णुशब्दः। कस्माद् एवम् अन्यगतं फलं प्रार्थ्यत इति तत्राह— येषाम् इति। पूजार्थं बहुवचनम्। यस्य क्षत्रियस्य अहं पुरोहितः ऐहिकामुष्मिकसकलश्रेयोविषये पुरस्ताद् निहितः अस्मि भवामि। यस्माद् एवं पौरोहित्ये वृतोस्मि अतो मदीयस्य राज्ञो जयार्थम् एवं प्रार्थ्यत इत्यर्थः। दधातेः कर्मणि निष्ठा। 'पूर्वाधरावराणाम्०' (पा ५,३,३९) इति असिप्रत्ययान्तः पुरःशब्दः। तस्य च 'पुरोऽव्ययम्' (पा १,४,६७) इति गतित्वाद् 'गतिरनन्तरः' (पा ६,२,४९) इति पूर्वपदप्रकृतिस्वरत्वम्।

समहमेषां राष्ट्रं [4]स्यामि समोजो [5]वीर्यं१ बलम्।
वृश्चामि शत्रूणां बाहूननेन हविषाहम्॥ २॥

सम्। अहम्। एषाम्। राष्ट्रम्। स्यामि। सम्। ओजः। वीर्यम्। बलम्।
वृश्चामि। शत्रूणाम्। बाहून्। अनेन। हविषा। अहम्॥ २॥

पूर्वत्र येषाम् इति यच्छब्दनिर्दिष्टोर्थः एषाम् इति इदमा परामृश्यते। येषां राज्ञां देशे अहं निवसामि एषां राष्ट्रम् जनपदं सं [3]स्यामि सम्यक् तीक्ष्णीकरोमि। धनकनकसमृद्धं करोमीत्यर्थः। शो छेदने। 'ओतः श्यनि' (पा ७,३,७१) इति ओका-

१. ममदीयं S',Kd. २. चोत्र S',Kd. ३. वैतु. मंपा. द्र. ४. श्यामि' पै ३,१९,२ सा.; पश्यामि पै.[मूको.]. ५. वीर्यं३ D,S^m,B^h,K.

रलोपः। ओजः। बलनामैतत्। 'उब्जेर्बले बलोपश्च' (पाउ ४,१९२) इति असुन्प्रत्यय-स्मरणात्। येन बलेन क्षेत्रज्ञस्य शरीरे अवस्थितिर्भवति तद् ओजःशब्दवाच्यम्। उक्तं हि आचार्यैः—

'क्षेत्रज्ञस्य तद् ओजस्तु केवलाश्रय इष्यते।
यथा स्नेहः प्रदीपस्य यथाभ्रम् अशनित्विषः।' इति।

तादृशं शरीरदार्ढ्यनिमित्तम् ओजः तज्जनितं वीर्यम् पराभिभवसामर्थ्यम् अन्यदपि हस्त्यश्वादिलक्षणं बलं च सं श्यामीति संबन्धः। मन्त्रसामर्थ्येन दृढीकरोमीत्यर्थः। तथा अहं मदीयस्य राज्ञः शत्रूणां बाहून् अनेन हूयमानेन आज्यसक्तवादिरूपेण हविषा वृश्चामि छिनद्मि। आयुधग्रहणासमर्थान् भ्रष्टवीर्यान् करोमीत्यर्थः। ओव्रश्चू छेदने। तुदादित्वात् शः। तस्य ङित्त्वात् 'ग्रहिज्या' (पा ६,१,१६) इत्यादिना संप्रसारणम्। विकरणस्वरेण मध्योदात्तः। पादादित्वाद् अनिघातः।

नीचैः पद्यन्तामधरे भवन्तु ये नः सूरिं मघवानं पृतन्यान्।
क्षिणामि ब्रह्मणामित्रानुन्नयामि स्वानहम् ॥ ३ ॥

नीचैः। पद्यन्ताम्। अधरे। भवन्तु। ये। नः। सूरिम्। मघऽवानम्। पृतन्यान्।
क्षिणामि। ब्रह्मणा। अमित्रान्। उत्। नयामि। स्वान्। अहम् ॥ ३ ॥

मदीयाः शत्रवः नीचैः पद्यन्ताम् अवाङ्मुखाः पतन्तु। ततश्च अधरे निकृष्टाः पादाक्रान्ता भवन्तु। कीदृशास्ते शत्रव इति उच्यते। नः अस्मदीयं सूरिम् कार्याकार्य-विभागज्ञं मघवानम्। मघम् इति धननाम। प्रभूतधनयुक्तं राजानं जेतुं ये शत्रवः पृतन्यान् पृतन्यन्ति पृतनां सेनाम् आत्मन इच्छन्ति। ते नीचैः पद्यन्ताम् इति संबन्धः। पृतनाशब्दात् 'सुप आत्मनः क्यच्' (पा ३,१,८)। 'कव्यध्वरपृतनस्यर्चि लोपः' (पा ७,४,३९) इति क्यचि परतोऽन्त्यलोपः। तदन्तात् लेटि आडागमः। उक्तप्रयोजनसिद्धये ब्रह्मणा परिवृढेन अमोघवीर्येण मन्त्रेण अमित्रान् शत्रून् अहं क्षिणोमि हिनस्मि। रि क्षि हिंसायाम्। स्वादित्वात् श्नुः। न केवलं शत्रूणां हिंसनम् अपि तु स्वान् स्वकीयान् राज्ञः उन्नयामि। उत्कृष्टं जयं प्रापयामीत्यर्थः।

तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत।
इन्द्रस्य वज्रात् तीक्ष्णीयांसो येषामस्मि पुरोहितः ॥ ४ ॥

१. वैतु. मंपा. द्र. २. अथ: ३,१९,४. ३. इन्द्रं पै. ४. °न्त्यम् K,S; पक्षे °न्यान् °K, V. ५. क्षिणोमि मा ११,८२ तै ४,१,१०,३ मै २,७,७ काठ १६,७. ६. स्वाँअहम् मा. मै, काठ. ७. °युक्तराजानः जेतुं ये शत्रवः पृतन्यं S'. Kd. ८. अडागमः S', Kd.

तीक्ष्णीयांसः । परशोः । अग्नेः । तीक्ष्णऽतराः । उत ।
इन्द्रस्य । वज्रात् । तीक्ष्णीयांसः । येषाम् । अस्मि । पुरःऽहितः ॥ ४ ॥

येषां राज्ञाम् अहं पुरोहितः अस्मि ते राजानः परशोः वृक्षच्छेदनसमर्थात् निशितधारात् तीक्ष्णीयांसः अतिशयेन तीक्ष्णाः शत्रुबलच्छेदनसमर्था भवन्तु । तथा अग्नेः विश्वदहनसमर्थादपि । तीक्ष्णतराः अतिशयेन तीक्ष्णाः । क्षणमात्रेण कृत्स्नं शत्रुबलं दग्धुं समर्था भवन्तु इत्यर्थः । उतशब्दः अप्यर्थे । स च भिन्नक्रमो योजितः । तथा इन्द्रस्य वज्रात् । स खलु वृत्रासुरविहनने शिलोच्चयपक्षच्छेदनादौ च अकुण्ठितशक्तित्वेन प्रसिद्धः । ततोपि तीक्ष्णीयांसः अतिशयेन तीक्ष्णा निशिताः । अप्रतिहतगतयो भवन्तु इत्यर्थः ।

एषामहमायुधा सं [1]स्याम्येषां राष्ट्रं [2]सुवीरं [3]वर्धयामि ।
एषां क्षत्रमजरमस्तु जिष्ण्वे३षां चित्तं विश्वेऽवन्तु देवाः ॥ ५ ॥

एषाम् । अहम् । आयुधा । सम् । स्यामि । एषाम् । राष्ट्रम् । [4]सुऽवीरम् । वर्धयामि ।
एषाम् । क्षत्रम् । अजरम् । अस्तु । जिष्णु । एषाम् । चित्तम् । विश्वे । अवन्तु । देवाः ॥५॥

अहम् एषाम् अस्मदीयानां राज्ञाम् आयुधा आयुधानि बाणखड्गकुन्तादीनि सं [5]स्यामि सम्यक् तीक्ष्णीकरोमि । एषां राष्ट्रम् राज्यं सुवीरम् शोभनवीरोपेतं वर्धयामि समृद्धं करोमि । सुवीरम् इति । 'वीरवीर्यौ च' ( पा ६,२,१२० ) इति उत्तरपदाद्युदात्तत्वम् । अपि च एषां राज्ञां क्षत्रं [6]'क्षतात् त्रायकं' बलं क्षत्रियत्वं वा अजरम् जरारहितं जिष्णु जयशीलं चास्तु । तथा एषां चित्तम् युद्धोन्मुखं मनः विश्वे सर्वे देवाः अवन्तु रक्षन्तु ।

उद्धर्षन्तां मघवन् वाजिनान्युद् वीराणां जयतामेतु घोषः ।
पृथग् घोषा [7]उलुलयः केतुमन्त उदीरताम् ।[8]
देवा इन्द्रज्येष्ठा मरुतो यन्तु सेनया ॥ ६ ॥

उत् । हर्षन्ताम् । मघऽवन् । वाजिनानि । उत् । वीराणाम् । जयताम् । एतु । घोषः । पृथक् ।
घोषाः । उलुलयः । केतुऽमन्तः । उत् । ईरताम् । देवाः । इन्द्रऽज्येष्ठाः । मरुतः । यन्तु । सेनया ॥

हे मघवन् धनवन्निन्द्र त्वत्प्रसादाद् वाजिनानि बलानि हस्त्यश्वरथादीनि युद्धविषये उद्धर्षन्ताम् उत्कृष्टहर्षयुक्तानि भवन्तु । तथा जयताम् जयं प्राप्नुवताम् अस्मदीयानां वीराणाम् शूराणां जयप्रयुक्तो घोषः सिंहनादाख्यः उदेतु उद्गच्छतु ।

---

१. स्याम्ये° पै ३,१९,५ सा. २. तु. K, V, शौ ७,८४,१ प्रभृ.; वैतु. A,B,Bʰ,D,K, R,Sᵐ,J सुवी° ३. वर्धयस्व पै. ४. तु. K,V; वैतु. P सुऽवीरं > सुऽवीरं, P² °वीं° इत्यतः स्वरितचिह्नं लोपुकः स्वरान्तरञ्चानिर्देशुकः. ५. वैतु. मंपा. द्र. ६. क्षतात्त्रायतकं S', Kd. ७. उलूलयः R,P²,M,W,O,Op,Kp,P,P². ८. अत्र मन्त्रं समाप्य शिष्टौ पादौ सप्तम्यर्चा योजयन्ति I,O,Op.

परश्रोत्राण्यभिभूय वर्तताम् इत्यर्थः। एतदेव विव्रियते—पृथग् इति। [1]उल्लुल्य इति। अनुकरणशब्दोयम्। उल्लुलु इत्येवमात्मकाः केतुमन्तः प्रज्ञानवन्तः सर्वैः प्रज्ञायमाना जयप्रयुक्ता घोषाः पृथक् इतस्ततः उत् ईरताम् उद्गच्छन्तु। ईर गतौ। लोटि अदादित्वात् शपो लुक्। [2]इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठः श्रेष्ठः स्वामी येषां तथाविधा मरुतो देवा युद्धेषु अस्माकं साहायकम् आचरितुं सेनया स्वस्वसेनया सार्धं यन्तु प्राप्नुवन्तु।[2]

[3]प्रेता जयता नर [4]उग्रा वः सन्तु बाहवः।
तीक्ष्णेषवोबलधन्वनो हतोग्रायुधा अबलानुग्रबाहवः॥ ७॥

प्र। इत। जयत। नरः। उग्राः। वः। सन्तु। बाहवः।
तीक्ष्णऽइषवः। अबलऽधन्वनः। हत। उग्रऽआयुधाः। अबलान्। उग्रऽबाहवः॥ ७॥

हे नरः नेतारः अस्मदीया भटाः प्रेत प्रक्रम्य युद्धभूमिं गच्छत। ततो देवैरनुगृहीताः शत्रून् जयत। वः युष्माकं [5]तीक्ष्णेषवः निशितबाणाद्यायुधोपेता बाहवः उग्राः उद्गूर्णबलाः शत्रुप्रहरणसमर्थाः सन्तु भवन्तु। ततो यूयम् उग्रायुधाः [6]निशितनिस्त्रिंशबाणाद्यायुधोपेताः अत एव उग्रबाहवः उद्गूर्णहस्ताः सन्तः अबलधन्वनः बलरहितधनुराद्यायुधोपेतान् अत एव अबलान् बलशून्यान् हत हिंस्त। पञ्चत्वं प्रापयतेत्यर्थः। हन्तेर्लोण्मध्यमबहुवचने अदादित्वात् शपो लुक्। 'अनुदात्तोपदेश' (पा ६,४,३७) इत्यादिना अनुनासिकलोपः।

[7]अवसृष्टा परा पत [8]शरव्ये [9]ब्रह्मसंशिते।
[10]जयामित्रान् प्र [11]पद्यस्व जह्येषां [12]वरंवरं [13]मामीषां [13]मोचि कश्चन[13]॥८॥

अवऽसृष्टा। परा। पत। शरव्ये। ब्रह्मऽसंशिते। जय। अमित्रान्। प्र। पद्यस्व।
जहि। एषाम्। वरम्ऽवरम्। मा। अमीषाम्। मोचि। कः। चन॥ ८॥

हे ब्रह्मसंशिते ब्रह्मणा मन्त्रेण तीक्ष्णीकृते शरव्ये हिंसाकुशले इषो त्वम् अवसृष्टा अस्माभिर्धनुषो विनिर्मुक्ता परा पत परागच्छ शत्रुसेनाभिमुखं गच्छ। गत्वा च तान् अमित्रान् शत्रून् जय। तत्प्रकारम् आह—प्र पद्यस्वेत्यादिना। प्रथमं शत्रून् प्रविश। एषां मध्ये वरंवरम् श्रेष्ठं [14]हस्त्यश्वपदातिलक्षणं बलं जहि मारय। 'हन्तेर्जः'

१. वैतु. मंपा. द्र. २. सप्तम्यामृचि अन्वेति शंपा. (तु. पृ ३५५ टि ८) ३. प्रयाता पै १,५६,१; उप्रेत तै ४,६,४,४. ४. स्थिरा तै. ५. तीक्ष्णेशवः S′, Kd. ६. निहितनि° S′, Kd. ७. °सृष्टः तैब्रा ३,७,६,२३ आपश्रौ ३,१४,३. ८. शरव्ये३ B^h,D,S^m; शरो तैब्रा. आपश्रौ. ९. °शिता तै., °शितः तैब्रा. आपश्रौ. १०. गच्छामि° ऋ ६,७५,१६ मा १७,४५ कौ २,१२१२ तै. तैब्रा. ११. विश तै. तैब्रा. आपश्रौ. १२. मैषां तै. तैब्रा. आपश्रौ. १३. कन्चनोच्छिषः ऋ. मा. कौ. तै. पै १,५६,४ तैब्रा. आपश्रौ. १४. °पदातिलक्ष° S′, Kd.

( पा ६,४,३६ ) इति जादेशः। तस्य 'असिद्धवदत्राभात्' ( पा ६,४,२२ ) इति असिद्धत्वात् हेर्लुगभावः। अमीषाम् दूरे दृश्यमानानां शत्रूणां मध्ये कश्चन कोपि वीरो मा मोचि मुक्तो मा भूत्। सर्वोपि त्वया हन्तव्य इत्यर्थः। मोचीति। मुच्लृ मोक्षणे इत्यस्मात् कर्मणि माङि लुङि रूपम्। अमीषामिति। 'एत ईद्बहुवचने' ( पा ८,२,८१ ) इति ईत्वमत्वे।

इति तृतीयकाण्डे चतुर्थेऽनुवाके चतुर्थं सूक्तम्।

'अयं ते योनिः' इति सूक्तेन निर्ऋतिकर्मणि शर्करामिश्रान् व्रीहीन् जुहुयात्। " 'अयं ते योनिः' इति जीर्णकोष्ठाद् व्रीहीन् शर्करामिश्रान्" ( कौसू १८,१३ ) इत्यादि कौशिकसूत्रम्।

तथा अर्थोत्थापनविघ्नशमनकर्मणि अनेन सूक्तेन आज्यसमिदादिभिस्त्रयोदशभिर्द्रव्यैर्जुहुयात्। तस्मिन्नेव कर्मणि अस्य सूक्तस्य जपं कुर्यात्। तथा च कौशिकः—" 'अयं ते योनिः', 'आ नो भर' ( अ ५,७ ), 'धीती वा' ( अ ७,१ ) इत्यर्थम् उत्थास्यन्नुपदधीत। जपति" ( कौसू ४१,८;९ ) इति।

'अयं ते योनिः' इत्यनया अरण्योरात्मनि वा अग्नेः समारोपणं कुर्यात्। सूत्रितं हि —" 'अयं ते योनिः' इत्यरण्योरग्निं समारोपयति। आत्मनि वा" ( कौसू ४०,११;१२ ) इति।

सवयज्ञेषु 'सोमं राजानम्' ( ४ ) इत्यनया भृग्वङ्गिरोविदश्चतुर आर्षेयान् आह्वयेत्।

अग्निचयने अनयैव गार्हपत्येष्टकाम् उपधीयमानाम् अनुमन्त्रयेत्। तथा च वैतानम्— " 'अयं ते योनिः' इति गार्हपत्येष्टकां निधीयमानाम्[१]" (वैताश्रौ २८,१५) इति।

अग्निचयने औदुम्बरसमिदाधानानन्तरम् 'अग्ने अच्छा वदेह नः' (२-४) इति तिस्रः 'अर्यमणं बृहस्पतिम्' (७,८) इति द्वे जपेत्। 'वाजस्य नु प्रसवे' (८) इत्यनया वाजप्रसवीयहोमानुमन्त्रणम्। तथा च वैतानं सूत्रम्— " 'उद् एनम् उत्तरं नय' (अ ६,५) इति समिध आधीयमानाः" इति प्रक्रम्य " 'चत्वारि शृङ्गा' (ऋ ४, ५८,३), 'अभ्यर्चत' (अ ७,८७) इति जपति। 'अग्ने अच्छ' इति तिस्रः ( अ २-४ ), 'अर्यमणं बृहस्पतिम्' (अ ७;८ ) इति द्वे, 'वाजस्य नु प्रसवे' ( ८ ) इति वाजप्रसवीयहोमान्" ( वैताश्रौ २९,१५-२० ) इति।

अ॒यं ते॒ योनि॑र्ऋ॒त्विय॒ो यतो॑ जा॒तो अरो॑चथाः।
तं जा॒नन्न॑ग्न॒ आ रो॑हाधा॒[२] नो वर्धया र॒यिम्[३] ॥ १ ॥

अ॒यम्। ते॒। योनिः॑। ऋ॒त्वियः॑। यतः॑। जा॒तः। अरो॑चथाः॥
तम्। जा॒नन्। अ॒ग्ने॒। आ। रो॒ह॒। अध॑। नः॒। व॒र्धय॒। र॒यिम् ॥ १ ॥

१. °ष्टका निधीयमानाः RG. २. रो॒हाथा॑ V, S, पै ३,३४,१ मा ३,१४ तै १,५,५,२, तैब्रा १,२,१,१६ जैब्रा १,६१; सी॒दाथा॑ ऋ ३,२९,१०; रोह ततो मै १,५,१ काठ ६,९. ३. गिरः ऋ.

हे अग्ने ते तव अयम् अरणिर्यजमानो वा ऋत्वियः ऋतौ गर्भग्रहणकाले भवो योनिः उत्पत्तिकारणम्। ऋतुशब्दाद् भवार्थे (?) 'छन्दसि घस्' (पा ५,१,१०६)। 'सिति च' (पा १,४,१६) इति पदसंज्ञया भसंज्ञाया बाधनात् ओर्गुणाभावे यण्। यतः यस्मात् योनेः जातः उत्पन्नः सन् अरोचथाः दीप्यसे। छान्दसो लङ्। तम् तादृशं योनिं जानन् ममेदम् उत्पत्तौ कारणम् इत्यवगच्छन् आ रोह प्रविश। मा परित्याक्षीः। 'अथ अनन्तरम् नः अस्माकं रयिम् धनं वर्धय समृद्धं कुरु। 'निपातस्य च' (पा ६,३,१३६) इति 'अथ-शब्दस्य सांहितिको दीर्घः। 'अन्येषामपि दृश्यते' (पा ६,३,१३७) इति वर्धयेत्यस्य दीर्घः।

अग्ने अच्छा वदेह नः 'प्रत्यङ् नः सुमना भव।
प्र 'णो "यच्छ 'विशां पते धनदा असि नस्त्वम् ॥ २ ॥

अग्ने। अच्छ। वद। इह। नः। प्रत्यङ्। नः। सुऽमनाः। भव।
प्र। नः। यच्छ। विशाम्। पते। धनऽदाः। असि। नः। त्वम् ॥ २ ॥

हे अग्ने इह अस्मिन् फले प्राप्तव्ये नः अस्मान् अच्छ वद। 'निपातस्य च' (पा ६,३,१३६) इति सांहितिको दीर्घः। आभिमुख्येन प्रियं ब्रूहि। तथा प्रत्यङ् अस्मान् प्रत्यञ्चन् अस्मदभिमुखं गच्छन् नः अस्माकं सुमनाः शोभनमनस्को भव। हे विशां पते सर्वासां प्रजानां वैश्वानरात्मना पालक। 'सुबामन्त्रिते पराङ्गवत् स्वरे' (पा २,१,२) इति षष्ठ्यन्तस्य आमन्त्रितानुप्रवेशाद् 'आमन्त्रितस्य च' (पा ८,१,१९) इति षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकम् अनुदात्तत्वम्। हे तादृश अग्ने नः अस्मभ्यं प्र यच्छ। धनदा इति विशेष्यमाणत्वाद् अर्थाद् अत्र धनानीति संबध्यते। अस्मदपेक्षितानि धनानि प्रदेहि इत्यर्थः। यतः त्वं नः अस्माकं धनदा असि धनानां दाता भवसि। धनानि दातुं समर्थस्त्वमेवासीत्यर्थः।

प्र'णो यच्छत्वर्यमा प्र "भगः प्र बृहस्पतिः।
प्र 'देवीः प्रोत सूनृता 'रयिं देवी "दधातु मे[10] ॥ ३ ॥

प्र। नः। यच्छतु। अर्यमा। प्र। भगः। प्र। बृहस्पतिः।
प्र। देवीः। प्र। उत। सूनृता। रयिम्। देवी। दधातु। मे ॥ ३ ॥

१. वैतु. मंपा. द्र. २. प्रति मा ९,२८ तै १,७,१०,२. ३. नो ऋ १०,१४१,१ मै १,११,४ काठ १४,२ मा. ४. रास्व काठ. ५. विशस्पते ऋ. मै. काठ., भुवस्पते तै., सहस्रजित् मा. ६. नो ऋ १०,१४१,२ मा ९,२९, मै. काठ. क २९,२. ७. पूषा मा. काठ. ८. देवाः ऋ. मै. तै. क. ९. रायो ऋ., प्र वाग् मा. मै. तै. काठ. क. १०. ददातु नः ऋ. तै. मा. मै. काठ. क.

नः अस्मभ्यम् अर्यमा देवः प्र यच्छतु यद् दातव्यं धनं तत् सर्वं ददातु। दाण् दाने। शपि 'पाघ्रा' (पा ७,३,७८) इत्यादिना यच्छादेशः। भगश्च बृहस्पतिश्च इमावपि देवौ अस्मभ्यं धनं प्र यच्छताम्। बृहतां देवानां पतिः बृहस्पतिः। 'तद्बृहतोः करपत्योः' इति पारस्करादिषु (पा ६,१,१५७) पाठात् सुट्तलोपौ। 'उभे वनस्पत्यादिषु' (पा ६,२,१४०) इति उभयपदप्रकृतिस्वरत्वम्। देवीः देव्यः इन्द्राणीप्रभृतयः धनम् अस्मभ्यं प्र यच्छन्तु। जसि 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। उत अपि च सूनृता प्रियवागात्मिका देवी सरस्वती रयिम् धनं मे मह्यं प्र दधातु प्रयच्छतु। शोभना चासौ ऋता चेति सूनृता पृषोदरादित्वाद् रूपसिद्धिः।

सोमं [1]राजानमवसेऽग्निं[1] [2]गीर्भिर्हवामहे[2]।
[3]आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ ४ ॥

सोमम्। राजानम्। अवसे। अग्निम्। गीःऽभिः। हवामहे।
आदित्यम्। विष्णुम्। सूर्यम्। ब्रह्माणम्। च। बृहस्पतिम् ॥ ४ ॥

राजानम् राजमानम्। यद्वा ईश्वरम्। 'सोमोऽस्माकं ब्राह्मणानां राजा' (तै १,८,१०,२) इति श्रुतेः। तादृशं सोमम् अग्निं च अवसे अभिमतफलप्रदानेन रक्षणाय गीर्भिः स्तुतिरूपाभिर्वाग्भिः हवामहे आह्वयामः। तथा आदित्यम् अदितेः पुत्रम्। 'मित्रश्च वरुणश्च' (तैआ १,१३,३) इत्यादिश्रुत्यन्तरप्रसिद्धं देवं विष्णुम् त्रैविक्रमं रूपम् आस्थाय सर्वव्यापिनं देवं सूर्यम् सर्वस्य प्रेरकं मण्डलान्तरवर्तिहिरण्मयपुरुषरूपं देवं ब्रह्माणम् एषां देवानां स्रष्टारं प्रजापतिं बृहस्पतिम् एषां हितकरणे अवस्थितम् एतत्संज्ञं च। तान् एतान् [4]आदित्यादीन् देवान् उक्तप्रयोजनसिद्धये हवामहे इति संबन्धः।

त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय।
त्वं नो [5]देव दातवे[5] [6]रयिं दानाय [7]चोदय ॥ ५ ॥

त्वम्। नः। अग्ने। अग्निऽभिः। ब्रह्म। यज्ञम्। च। वर्धय।
त्वम्। नः। देव। दातवे। रयिम्। दानाय। चोदय ॥ ५ ॥

हे अग्ने त्वम् अग्निभिः त्वद्विभूतिरूपैरन्यैरग्निभिः सार्धं नः अस्माकं ब्रह्म मन्त्रमयं स्तोत्रं तत्साध्यं यज्ञं च वर्धय फलसमृद्धं कुरु। हे देव त्वं [8]दातवे चरुपुरोडाशादिहवींषि दत्तवते नः यजमानाय रयिम् धनं दानाय दानार्थं [7]चोदय प्रेरय।

१. °नं वरुणमग्निम् तै १,७,१०,३ मै १,११,४ काठ १४,२ कौ १,९१. २. अन्वारभामहे कौ. तै. मै. काठ. मा ९,२६. ३. आदित्यान् ऋ १०,१४१,३ तै. मै. मा. ४. इत्यादीन् S', Kd. ५. देवतातये ऋ १०,१४१,६ कौ २,८५५ पै ३,३४,८. ६. राधो ऋ. कौ, ७. नोदय S. सा. ८. वैतु. मंपा. द.

इन्द्रवायू [1]उभाविह सुहवेह हवामहे ।
यथा नः सर्व इज्जनः [2]संगत्यां सुमना असद् दानकामश्च नो भुवत् ॥६॥

इन्द्रवायू इति । उभौ । इह । सुऽहवा । इह । हवामहे । यथा । नः । सर्वः । इत् । जनः ।
सम्ऽगत्याम् । सुऽमनाः । असत् । दानऽकामः । च । नः । भुवत् ॥ ६ ॥

इन्द्रश्च वायुश्च इन्द्रवायू । 'देवताद्वन्द्वे च' (पा ६,३,२६) इति प्राप्तस्य आनङः 'उभयत्र वायोः प्रतिषेधो वक्तव्यः' (पावा ६,३,२६) इति प्रतिषेधः । 'देवताद्वन्द्वे च' (पा ६,२,१४१) इति उभयपदप्रकृतिस्वरत्वस्य 'नोत्तरपदेऽनुदात्तादौ' (पा ६,२,१४२) इति प्रतिषेधः । 'समासस्य' (पा ६,१,२२३) इति अन्तोदात्तत्वम् । एतत्संज्ञौ उभौ देवौ इह अस्मिन् कर्मणि हवामहे आह्वयामः । एतयोरेवाह्वाने किं निमित्तम् इति तद् आह— सुहवा इति । इह अस्मिन् फलविषये देवेषु मध्ये एतौ [3]देवौ सुहवा सुहवौ सुह्वानौ सुखेन ह्वातुं शक्यौ । ह्वयतेः 'बहुलं छन्दसि' (पा ६,१,३४) इति अनैमित्तिके संप्रसारणे कृते सुपूर्वाद् अस्मात् 'ईषद्दुःसुषु॰' (पा ३,३,१२६) इति खल् । 'लिति' (पा ६,१,१९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम् । 'सुपां सुलुक्॰' (पा ७,१,३९) इति पूर्वसवर्णदीर्घः । यस्माद् एवं सुह्वानौ तस्माद् आह्वयाम इत्यर्थः । यथा नः अस्माकं सर्व इत् सर्व एव जनः संगत्याम् संगमने प्राप्तौ सुमना असत् शोभनमनस्को भवेत् । न केवलं सौमनस्यमेव प्रार्थ्यते अपि तु सर्वो जनः नः अस्मभ्यं दानकामश्च दानाभिलाषयुक्तश्च यथा [4]भुवत् भवेत् । तथा आह्वयाम इति संबन्धः । अस्तेर्भवतेश्च लेटि अडागमः । 'भूसुवोस्तिङि' (पा ७,३,८८) इति गुणाभावः ।

अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय ।
[5]वातं विष्णुं सरस्वतीं सवितारं च वाजिनम् ॥ ७ ॥

अर्यमणम् । बृहस्पतिम् । इन्द्रम् । दानाय । चोदय ।
वातम् । विष्णुम् । सरस्वतीम् । सवितारम् । च । वाजिनम् ॥७॥

हे स्तोतः अर्यमादीन् देवान् अस्मभ्यम् दानाय अभिमतफलदानाय चोदय स्तुत्या प्रेरय । यथा ते तुष्टाः अस्मभ्यं धनं प्रयच्छन्ति तथा स्तुतिवाक्यैस्तोषयेत्यर्थः । तत्र [6]वाचम् इति सरस्वतीविशेषणम् वाग्रूपा या सरस्वतीति । एतच्च नदीरूपायास्तस्या निवृत्त्यर्थम् । वाजिनम् इति सवितृविशेषणम् । वाजः अन्नं वेगो वा तद्वन्तं सवितारम् इति ।

१. बृहस्पतिं ऋ १०,१४१,४; सुसंदृशा मा ३३,८६ मै १,११,४ काठ १४,२. २. अनमीवः ॰संगमे मा. सङ्गमे मै. काठ. ३. देवौ अतः S', Kd. ४. भवत् S', Kd. ५. त्वष्टारं मा ९,२७ तै १,७,१०,२ मै. काठ. सा. ६. वैदु. मंपा. इ.

**वाजस्य 'नु प्रसवे 'सं बभूविमेमा' च विश्वा 'भुवनान्यन्तः ।**
**उतादित्सन्तं 'दापयतु प्रजानन् 'रयिं च नः' 'सर्ववीरं नि "यच्छ ॥ ८ ॥**

वाजस्य । नु । प्रऽसवे । सम् । बभूविम । इमा । च । विश्वा । भुवनानि । अन्तः ।
उत । अदित्सन्तम् । दापयतु । प्रऽजानन् । रयिम् । च । नः । सर्वऽवीरम् । नि । यच्छ ॥८॥

वाजस्य अन्नस्य प्रसवे उत्पत्तौ तद्धेतुभूते कर्मणि वा नु क्षिप्रं वयं सं बभूविम संप्राप्ता अभूम । यद्वा वृष्ट्यादिद्वारेण अन्नस्योत्पादको देवो वाजस्य प्रसवः । 'जवसवौ छन्दसि वक्तव्यौ' ( पावा ३,३,५६ ) इति अजन्तः सवशब्दः । 'थाथ' ( पा ६,२,१४४ ) इत्यादिना उत्तरपदान्तोदात्तत्वम् । तस्य संप्राप्तव्यताम् उपपादयति इमा चेति । इमा इमानि परिदृश्यमानानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि अन्तः वाजप्रसवस्य मध्ये वर्तन्ते । 'अन्नाद् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते' ( तैआ ८,२ ) इत्यादिश्रुतेः । स च वाजप्रसवः उक्तलक्षणः प्रजानन् सर्वप्राणिहृदयगतम् अभिप्रायविशेषं जानन् उत अदित्सन्तम् दातुम् अनिच्छन्तमपि पुरुषं दापयतु बुद्धिप्रेरणेन अस्मभ्यं दाने प्रवर्तयतु । अदित्सन्तम् इति । 'सनि मीमाघुरभलभ' ( पा ७,४,५४ ) इत्यादिना इसादेशः । 'सः स्यार्धधातुके' ( पा ७,४,४९ ) इति तत्वम् । 'अत्र लोपोऽभ्यासस्य' ( पा ७,४,५८ ) इति अभ्यासलोपः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तथा नः अस्माकं रयिम् विद्यमानं धनं च सर्ववीरम् । वीर्याज्जायन्ते इति वीराः पुत्रादयः । सर्वैर्वीरपुरुषैरुपेतं नि यच्छात् नियच्छतु नियमयतु सुचिरं स्थापयतु । यमेर्लेटि आडागमः । 'इषुगमियमां छः' ( पा ७,३,७७ ) इति छत्वम् ।

**दुहां मे पञ्च प्रदिशो दुहामुर्वीर्यथाबलम् ।**
**प्रापेयं सर्वा आकूतीर्मनसा हृदयेन च ॥ ९ ॥**

दुहाम् । मे । पञ्च । प्रऽदिशः । दुहाम् । उर्वीः । यथाऽबलम् ।
प्र । 'आपेयम् । सर्वाः । आऽकूतीः । मनसा । हृदयेन । च ॥ ९ ॥

पञ्च पञ्चसंख्याकाः प्रदिशः प्राच्याद्याश्चतस्रः मध्यं चेति महादिशः मे मह्यं दुहाम् अभिमतफलं दुहताम् । 'बहुलं छन्दसि' ( पा ७,१,८ ) इति दुहेः परस्य झादेशस्य अतो रुडागमः । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) इति तशब्दस्य लोपः । तथा उर्वीः उर्व्यः षट्संख्याकाः मन्त्रान्तरे प्रसिद्धाः । 'षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च' ( आश्व १,२ ) इति । ता द्युपृथिव्याद्याः षड् उर्व्यः यथाबलम्

---

१. इदं तै ३,७,१०,१ मै १,११,४ काठ १४,२ पै ३,३४,९. २. आबभूवेमा मा ९,२५ तै. मै. काठ., संबभूव य इमा पै. ३. °नानि सर्वतः मा. तै. मै. काठ. ४. दापयति मा ९,२४ काठ. ५. स नो रयिं मा., सोमो रयिं काठ., रयिं धेहि पै. ६. सर्ववीरां तै ३,७,१०,२. ७. यच्छतु मा. तै. मै., यच्छताम् पै., यंसत् काठ. ८. वैतु. मंपा. द्र. ९. अपेयम् P,P²,J.

यथाशक्ति अस्मदपेक्षितं धनं दुहाम् दुहतां प्रयच्छन्तु। दिशाम् उर्वीणां च स्त्रीत्वात् धेनुत्वारोपेण दुहेः प्रयोगः। ततश्च अहं सर्वा आकूतीः संकल्पान् प्रापेयम् प्राप्नवानि। आपॢ व्याप्तौ इत्यस्मात् आशिषि लिङि 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ्-प्रत्ययः। केन साधनेनेति उच्यते — मनसा संकल्पविकल्पहेतुभूतया अन्तःकरण-वृत्त्या हृदयेन हृदयोपलक्षितान्तःकरणेन च। यद्यत् फलजातं संकल्पयामि तत् सर्वं फलं मनोव्यापारमात्रेण प्राप्नुयाम् इत्याशासे इत्यर्थः।

गोसनिं वाचमुदेयं वर्चसा माभ्युदिहि।
आ रुन्धां सर्वतो वायुस्त्वष्टा पोषं दधातु मे॥ १०॥

गोऽसनिम्। वाचम्। उत्ऽएयम्। वर्चसा। मा। अभिऽउदिहि।
आ। रुन्धाम्। सर्वतः। वायुः। त्वष्टा। पोषम्। दधातु। मे॥ १०॥

[गोसनिं]। गां सनोति प्रयच्छतीति गोसनिः। 'छन्दसि वनसनरक्षिमथाम्' (पा ३,२,२७) इति इन्प्रत्ययः। गवोपलक्षितसर्वधनप्रदां वाचम् अहम् उदेयम् उद्यासम् उच्यासम्। वद व्यक्तायां वाचि। 'लिङ्याशिष्यङ्' (पा ३,१,८६) इति अङ्प्रत्ययः। हे वाग्देवते त्वं वर्चसा तेजसा मा माम् अभ्युदिहि अभ्युद्गच्छ। अभिमतफलं दातुं मां प्राप्नुहीत्यर्थः। 'सैषानस्तमिता देवता यद् वायुः' (माश १४,४,३,३३) इति श्रुत्यन्तरप्र-सिद्धः सूत्रात्मा वायुः सर्वतः सर्वाभ्यो दिग्भ्यः आ रुन्धाम् प्राणात्मना आवृणोतु। त्वष्टा देवः मे मम पोषम् शरीरादेः पुष्टिं दधातु धारयतु। प्रयच्छतु इत्यर्थः।

इति तृतीयकाण्डे चतुर्थेऽनुवाके पञ्चमं सूक्तम्।
समाप्तश्चतुर्थोऽनुवाकः।

पञ्चमेऽनुवाके पञ्च सूक्तानि। तत्र 'ये अग्नयः' इति प्रथमं सूक्तम्। तत्र आद्याभिः सप्तभिः क्रव्यादोपहतगृहगोष्ठक्षेत्रादिशान्त्यर्थं मणिधारणहोमादिकर्माणि कुर्यात्। तानि च — संपातितपालाशवृक्षमणिबन्धनम्, आज्यहोमः, पालाशसमिदाधानम्, पालाशेन उदञ्चनेन उदकहोमः, पालाश्याम् उदपात्र्यां यवान् प्रक्षिप्य उदकसहितयवहोमः।

तथा अनेन दशर्चेन सर्वेण सूक्तेन क्रव्याच्छमने सक्तूदकं काम्पीलसमिद्द्वयेन मथित्वा तं मन्थं पालाश्या दर्व्या प्रत्यृचं जुहुयात्।

तथा वशाशमनकर्मणि अनेन सूक्तेन वशाम् अभिमन्त्र्य ब्राह्मणाय दद्यात्।

तथा च कौशिकः — "'ये अग्नयः' इति क्रव्यादोपहते पालाशं बध्नाति। जुहोति। आदधाति।

१. मा भ्य रु ण्यं हि पै ३,३४,११. २. सर्वा P², M, W, O, Kp. ३. पोषाय भ्रियताम् पै. ४. क्रव्यादनुपहत इति Bl.

उदब्रजेन उदपात्र्यां यवान् अङ्गिरानीयोल्लोपम्[1]। 'ये अग्नयः' इति पालाश्या दर्व्या मन्थम् उपमथ्य काम्पीलीभ्याम् उपमन्थनीभ्याम्। शमनं च।" (कौसू० ४३,१६–२१) इति।

तथा वपां वा हवींषि वा काकोलूकश्वमानुषादयो गृहीत्वा गच्छेयुः तत्प्रायश्चित्तार्थम् अनेन दशर्चेन सूक्तेन आज्यं जुहुयात्। तथा च सूत्रम्—"अथ यत्रैतद् वपां वा हवींषि वा वयांसि द्विपदचतुष्पदं वाभिमृश्यैवगच्छेयुः 'ये अग्नयः', 'नमो देववधेभ्यः'" (६,१३) [कौसू० १२३,१] इत्यादि।

तथा बृहद्गणेपि आद्याः सप्तर्चः परिगणिताः। ततस्तस्य गणस्य यत्रयत्र विनियोगस्तत्र सर्वत्र आसां विनियोगो द्रष्टव्यः।

तथा सोमस्कन्दने 'ये अग्नयः' इति सप्तभिर्ब्रह्मा[४] जुहुयात्। उक्तं वैताने—'यत्र विजानाति ब्रह्मन् सोमोऽस्कन्' इति प्रक्रम्य "'ये अग्नयो अप्स्वन्तः' इति सप्तभिरभिजुहोति" (वैताश्रौ १६,१५;१६) इति।

आवसथ्याधाने क्रव्याच्छमनानन्तरं गृहम् आगत्य 'ये अग्नयः' इति सप्तभिराज्यं जुहुयात्। सूत्रितं हि—'अन्तर्धिः' (अ १२,२,४४), 'प्रत्यञ्चम् अर्कम्' (अ १२,२,५५), 'ये अग्नयः', 'नमो देववधेभ्यः' (अ ६,१३,) [कौसू० ७२,१३] इति।

तत्रैव क्रव्यादाग्नेः शमने 'हिरण्यपाणिम्' इत्यादिभिरन्त्याभिस्तिसृभिः क्रव्यादग्नौ सक्तुमन्थं जुहुयात्। सूत्रितं हि—'व्याकरोमि' (अ १२,२,३२) इति गार्हपत्यक्रव्यादौ[५]समीक्षते' इति प्रक्रम्य "'अन्येभ्यस्त्वा' (अ १२,२,१६) 'हिरण्यपाणिम्' (८–१०) इति शमयति" (कौसू० ७०,१०–७१,८) इति।

चातुर्मास्ये साकमेधपर्वणि आतिथ्येष्ट्यनन्तरं 'दिवं पृथिवीम्' (७) इत्यनया अग्न्युपस्थानं कार्यम्। उक्तं वैताने—"'उदस्य केतवः' (अ १३,२) इत्यादित्यम्[६]उपतिष्ठन्ते। दक्षिणाग्नो 'दिवं पृथिवीम्' [७]इत्यग्नीन्" (वैताश्रौ ९,१६;१७) इति।

[८]ये [९]अग्नयो अप्स्व१न्तर्ये[९] वृत्रे ये पुरुषे ये [१०]अश्मसु।
य [११]आविवेशोषधीर्यो वनस्पतींस्तेभ्यो[११] अग्निभ्यो हुतमस्त्वेतत्॥ १॥

ये। अग्नयः। अप्ऽसु। अन्तः। ये। वृत्रे। ये। पुरुषे। ये। अश्मऽसु।
यः। आऽविवेश। ओषधीः। यः। वनस्पतीन्। तेभ्यः। अग्निऽभ्यः। हुतम्। अस्तु। एतत्॥ १॥

---

१. °ल्लोभं S', Kd. २. °लूकाश्व° S', Kd. ३. °मृश्याभिग° S', Kd. ४. °ह्माणि S', Kd. ५. °क्षित S', Kd. ६. °तिष्ठते S'. Kd. ७. °त्यग्निम् S', Kd. ८. यो मै २,१३,१३ काठ ४०,३ पै ३,१२,१. ९. अग्निर् मै. काठ. पै. १०. अश्मनि मै. काठ. पै. ११. °विवेशौषधी° A,B,K,Km,V, मै. पै.; °वेश भुवनानि विश्वा ते° काठ.

अप्सु उदकेषु० अन्तः मध्ये ये अग्नयः वाडवाद्याः सन्ति ये वा अग्नयो वृत्रे आवरणस्वभावे मेघे वैद्युतादिरूपेण विद्यन्ते। 'तत् को वृत्रः मेघ इति नैरुक्ताः' (नि २,१६) इति यास्कवचनाद् वृत्रशब्दो मेघवाची। यद्वा वृत्रे वृत्रासुरशरीरे अन्तरवस्थिता ये अग्नयः सन्ति तथा पुरुषे मानुषशरीरे [1]अशितपीतपरिणाम-हेतुत्वेन ये अग्नयो वैश्वानरात्मना वर्तन्ते ये वा अग्नयः अश्मसु सूर्यकान्तादिशिलासु अन्तर्वर्तन्ते तथा यः अग्निः ओषधीः व्रीहियवादिरूपाः फलपरिपाकार्थम् आविवेश यश्च वनस्पतीन् वृक्षान् आविवेश तेभ्यः सर्वजगदनुग्राहकेभ्यः अग्निभ्यः एतत् प्रदीयमानं हविः हुतम् अस्तु दत्तं भवतु। एक एवाग्निः स्वविभूतिरूपैरन्यैरग्निभिः कृत्स्नं जगद् अनुप्रविश्य पोषयतीति तस्य बहुत्वेन स्तुतिः। अत एव अग्नीनां प्रधानभूताग्नि-शाखात्वं दाशतय्याम् आम्नातम्। 'वया इद् अग्ने अग्नयस्ते अन्ये' (ऋ १,५९,१) इति।

यः सोमे॑ अ॒न्तर्यो गोष्व॒न्तर्य [2]आवि॑ष्टो [3]वयः॑सु॒ यो मृ॒गेषु॑ ।
य आ॑वि॒वेश॑ द्वि॒पदो॒ यश्चतु॑ष्पद॒स्तेभ्यो॑ अ॒ग्निभ्यो॑ हु॒तम॑स्त्वे॒तत् ॥ २ ॥

यः। सोमे॑। अ॒न्तः। यः। गोषु॑। अ॒न्तः। यः। आऽवि॑ष्टः। वयः॑ऽसु। यः। [4]मृ॒गेषु॑।
यः। आ॒ऽवि॒वेश॑। द्वि॒ऽपदः॑। यः। चतुः॑ऽपदः। तेभ्यः॑। अ॒ग्निऽभ्यः॑। हु॒तम्। अ॒स्तु॒। ए॒तत् ॥ २ ॥

सोमे लतारूपे अमृतमयरसपरिपाकाय यः अग्निः अन्तराविष्टः प्रविष्टः यश्च गोषु। उपलक्षणम् एतत्। गोमहिषादिषु ग्राम्यपशुषु योग्निः अन्तः प्रविष्टः पक्वं पयः करोति। गोष्विति। 'सावेकाच०' (पा ६,१,१६८) इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्०' (पा ६,१,१८२) इति प्रतिषेधः। तथा वयःसु पक्षिषु यः अग्निः अनुप्रविष्टः तथा यो मृगेषु हरिणादिषु अनुप्रविष्टः। किं बहुना। योग्निः द्विपदः पादद्वयोपेतान् मनुष्यादीन् योग्निः चतुष्पदः पादचतुष्टयोपेतान् अन्यानपि प्राणिनः जाठरात्मना आविवेश। उक्तं हि भगवता—

'अहं वैश्वानरो भूत्वा प्राणिनां देहम् आश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥' (भगी १५,१४) इति।

द्विपद इति। द्वौ पादावस्येति विगृह्य समासे 'संख्यासुपूर्वस्य' (पा ५,४,१४०) इति पादशब्दान्त्यलोपः समासान्तः। ततः शसि 'पादः पत्' (पा ६,४,१३०) इति पद्भावः। 'द्वित्रिभ्यां पादन्मूर्धसु बहुव्रीहौ' (पा ६,२,१९७) इति उत्तरपदान्तोदात्तत्वम्। एवं चतुष्पद इत्यत्रापि एवमेव रूपसिद्धिः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। तेभ्य इत्यादि पूर्ववत्।

१. °पीतेपरि° S', Kd. २. आवि॒ष्टो B, S^m.; आविवेश मै २,१३,१३ काठ ४०,३. ३. वयांसि मै. काठ., वयसि पै ३,१२,२. ४. मृ॒गेषु J.

'य इन्द्रेण सरथं ¹याति देवो' वैश्वानर उत 'विश्वदाव्यः ।
यं जोहवीमि पृतनासु सासहिं तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ ३ ॥

यः । इन्द्रेण । सऽरथम् । याति । देवः । वैश्वानरः । उत । विश्वऽदाव्यः ।
यम् । जोहवीमि । पृतनासु । ससहिम् । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥ ३ ॥

यो देवः दानादिगुणयुक्तोऽग्निः इन्द्रेण सरथम् समानरथम् एकं रथम् आरुह्य याति गच्छति । अनयोः समानरथत्वं च '³य इन्द्राग्नी चित्रतमो रथो वाम्' ( ऋ १,१०८,१) इति मन्त्रान्तरे स्पष्टम् अवगतम् । यश्चाग्निः वैश्वानरः विश्वनरहितः उत अपि च विश्वदाव्यः विश्वदावसंबन्धी विश्वस्य दाहको दावाग्निः तथा पृतनासु संग्रामेषु सासहिम् अत्यर्थम् अभिभवितारं यम् आथर्वणप्रसिद्धं सांग्रामिकम् अग्निं जोहवीमि जयार्थं चोदितैर्हविर्भिः पुनःपुनर्जुहोमि यद्वा ⁴युद्धसाहाय्यार्थं पुनःपुनराह्वयामि । 'ह्वः संप्रसारणम्', 'अभ्यस्तस्य च' ( पा ६,१,३२;३३ ) इति ह्वयतेः संप्रसारणम् । 'गुणो यङ्लुकोः' ( पा ७,४,८२ ) इति अभ्यासस्य गुणः । 'अनुदात्ते च' ( पा ६,१,१९० ) इति अभ्यस्ताद्युदात्तत्वम् । 'जेतारम् अग्निं पृतनासु सासहिम्' ( तै ४,१,१०,२ ) इति मन्त्रान्तरम् । तेभ्य इत्यादि गतम् ।

⁵यो देवो विश्वाद्⁵ यमु काममाहुर्यं दातारं ⁶प्रतिगृह्णन्तमाहुः ।
यो धीरः शक्रः परिभूरदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ ४ ॥

यः । देवः । विश्वऽअत् । यम् । ऊं इति । कामम् । ⁷आहुः । यम् । दातारम् । प्रतिऽगृह्णन्तम् । आहुः ।
यः । धीरः । शक्रः । परिऽभूः । अदाभ्यः । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥४॥

यो देवः दानादिगुणयुक्तः अग्निः विश्वात् विश्वं सर्वम् अत्ति भक्षयतीति विश्वात् । 'अदोऽनन्ने' ( पा ३,२,६८ ) इति विट्प्रत्ययः । यम् उ उशब्दः अवधारणे । यमेवाग्निं कामम् कामयितारं काम्यमानफलात्मकं वा आहुः कथयन्ति तथा यम् अग्निं दातारम् इष्टफलस्य प्रदातारं प्रतिगृह्णन्तम् प्रतिग्रहीतारं च आहुः कथयन्ति यश्चाग्निः धीरः धीमान् शक्रः सर्वकार्येषु शक्तः । शक्लृ शक्तौ इत्यस्मात् 'स्फायितञ्चि' ( पाउ २,१३ ) इत्यादिना रक् । परिभूः शत्रूणां परिभविता अदाभ्यः केनचिदपि अहिंस्यः । तेभ्य इत्यादि गतम् ।

यं त्वा होतारं मनसाभि संविदुस्त्रयोदश भौवनाः पञ्च मानवाः ।
वर्चोधसे यशसे सूनृतावते तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ ५ ॥

---

१. येनेन्द्रस्य रथः संबभूवुर्यो मै २,१३,१३; येनेन्द्रस्य रथं संबभूवुः काठ. ४०,३. ¹संबभूव पै ३,१२,३. २. वैश्वदेव्यः आपश्रौ १६,३५,१. ३. यदिंद्रा° S', Kd. ४. °सहायार्थं S', Kd., ५. विश्वा[illegible] मै., हुताद‌मग्निं काठ. ६. प्रतिग्रहीतारमाहुः मै. काठ. ७. आहुः P.

यम् । त्वा । होतारम् । मनसा । अभि । सम्ऽविदुः । त्रयःऽदश । भौवनाः । पञ्च । मानवाः ।
वर्चःऽधसे । यशसे । सूनृताऽवते । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥ ५ ॥

हे अग्ने यं त्वा त्वां होतारम् देवानाम् आह्वातारं मनसा बुद्ध्या अभि संविदुः आभिमुख्येन संविदन्ति सम्यग् जानन्ति। 'विदो लटो वा' (पा ३,४,८३) इति झेरुसादेशः। के पुनस्ते इत्याह — त्रयोदश। त्रयश्च दश च त्रयोदश। 'त्रेस्त्रयः' (पा ६,३,४८) इति त्रिशब्दस्य पूर्वपदस्य त्रयस् आदेशः। 'संख्या' (पा ६,२,३५) इति पूर्वपदप्रकृतिस्वरत्वम्। त्रयोदशसंख्याका भौवनाः। भवन्ति सत्तां लभन्ते अस्मिन् भूतजातानीति भुवनः संवत्सरः। भवतेरौणादिकः क्युन्प्रत्ययः। तत्संबन्धिनश्चैत्राद्या मासा भौवनाः। ते हि संसर्पांहस्पत्याख्येन अधिमासेन सह त्रयोदश भवन्ति। 'अस्ति त्रयोदशो मास इत्याहुः' (तै ६,५,३,४) इति हि ब्राह्मणम् (?)। तथा मानवाः मनुना सृष्ट्यादौ कल्पिता वसन्ताद्याः पञ्च ऋतवः। हेमन्तशिशिरयोः समासाभिप्रायम् एतत्। 'पञ्चर्तवः संवत्सरस्येति च ब्राह्मणम्' इति यास्कः (नि ४,२७)। यद्वा 'विश्वकर्मन् भौवन मां दिदासिथ' (ऐब्रा ८,२१)। 'विश्वकर्मा भौवनः स्वात्मनि सर्वाणि भूतानि जुहवांचकार' (नि १०,२६) इत्यादिश्रुत्यन्तरप्रसिद्धा भुवनाख्यस्य महर्षेः पुत्रा विश्वकर्मप्रभृतयस्त्रयोदशसंख्याकाः। पञ्च मानवाः निषादपञ्चमाश्चत्वारो वर्णाः। गन्धर्वाप्सरसो देवा असुरा रक्षांसि इत्येके। एवमात्मकाः सर्वे त्वाम् अभि संविदुरिति संबन्धः। तस्मै वर्चोधसे। वर्चस्तेजः दधाति धारयति प्रयच्छतीति वा वर्चोधाः। दधातेरसुन्प्रत्ययः। यशसे यशस्विने। यद्वा व्याप्नुवते। अशू व्याप्तौ इत्यस्मात् 'अशेर्युट् च' (पाउ ४,१९०) इति असुन् युडागमश्च। सूनृतावते। प्रियसत्यात्मिका वाक् सूनृता। तद्वते एवंभूताय तुभ्यं तेभ्यः प्रागुक्तेभ्यस्त्वद्विभूतिरूपेभ्यः अग्निभ्यश्च। गतम् अन्यत्।

उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे।
वैश्वानरज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ ६ ॥

उक्षऽअन्नाय । वशाऽअन्नाय । सोमऽपृष्ठाय । वेधसे ।
वैश्वानरऽज्येष्ठेभ्यः । तेभ्यः । अग्निऽभ्यः । हुतम् । अस्तु । एतत् ॥ ६ ॥

उक्षान्नाय। उक्षाणः सेचनसमर्था वृषभाः। ते हविरात्मना अन्नं यस्य स तथोक्तः। तस्मै। वशान्नाय। वशा वन्ध्या गावः। ता अन्नं यस्य तस्मै। सोमपृष्ठाय हूयमानः सोमः पृष्ठे उपरिभागे यस्य स सोमपृष्ठः। तस्मै। वेधसे आहुतिद्वारेण सर्वस्य जगतो विधात्रे। विध विधाने इत्यस्माद् असुन्। स्मर्यते हि—

'अग्नौ प्रास्ताहुतिः सम्यग् आदित्यम् उपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥' (मस्मृ ३,७६) इति।

तेभ्यो वैश्वानरज्येष्ठेभ्यः। एक उक्षान्नः। अपरो वशान्नः। अन्यः सोमपृष्ठः। ते सर्वे वैश्वानरज्येष्ठाः। विश्वनरहितो जाठररूपेणावस्थितोऽग्निर्ज्येष्ठः अग्रजो येषाम्। स खलु जीवदवस्थायामपि उक्षादिशरीरम् अनुप्रविश्य भुङ्क्ते। संज्ञपनोत्तरकालम् अन्येषाम् अग्नीनां भोग इति ज्यायस्त्वकनीयस्त्वभावः। तेभ्यः इत्यादि गतम्।

दिवं पृथिवीमन्वन्तरिक्षं ये [1]विद्युतमनुसंचरन्ति[2]।
ये [3]दिक्ष्व१न्तर्ये वाते अन्तस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ ७॥

दिवम्। पृथिवीम्। अनु। अन्तरिक्षम्। ये। विऽद्युतम्। अनुऽसंचरन्ति।
ये। दिक्षु। अन्तः। ये। वाते। अन्तः। तेभ्यः। अग्निऽभ्यः। हुतम्। अस्तु। एतत् ॥ ७॥

दिवम् द्युलोकं पृथिवीम् भूलोकम् अन्तरिक्षम् अन्तरा क्षान्तं द्यावापृथिव्योर्मध्यवर्तिनं लोकं च अनुप्रविश्य ये अग्नयः संचरन्ति। ये च विद्युतम् मेघस्थितां तडितं विद्योतमानं ज्योतिश्चक्रं वा [4]अनुप्रविश्य संचरन्ति। ये चाग्नयः लोकत्रयव्यापिकासु दिक्षु अन्तः मध्ये वर्तन्ते। ये च वाते वायौ सर्वजगदाधारभूते सूत्रात्मनि अन्तः संचरन्ति। तेभ्यः इत्यादि गतम्।

हिरण्यपाणिं सवितारमिन्द्रं बृहस्पतिं वरुणं मित्रमग्निम्।
विश्वान् देवानाङ्गिरसो हवामह इमं क्रव्यादं शमयन्त्वग्निम् ॥ ८ ॥

हिरण्यऽपाणिम्। सवितारम्। इन्द्रम्। बृहस्पतिम्। वरुणम्। मित्रम्। अग्निम्।
विश्वान्। देवान्। अङ्गिरसः। हवामहे। इमम्। क्रव्यऽअदम्। शमयन्तु। अग्निम् ॥ ८ ॥

हिरण्यपाणिम्। स्तोतृभ्यो दातुं हिरण्यं पाणौ यस्य स तथोक्तः हितरमणीयपाणिः हिरण्यपाणिः हिरण्मयहस्तो वा। कुतश्चित् कारणात् छिन्नहस्तस्य सवितुः हिरण्मयो हस्तः प्रतिनिहित इत्याख्यायिका। अत एवान्यत्र आम्नातम्—'हिरण्यहस्तो असुरः सुनीथः' ( ऋ १,३५,१० ) इति। ईदृशं सवितारम् सर्वस्य प्रेरकं देवम् इन्द्रादींश्च विश्वान् सर्वान् देवान् अङ्गिरसः एतत्संज्ञकान् महर्षीन् हवामहे आह्वयामः। यद्वा अङ्गिरसः [5]आङ्गिरसगोत्रजा वयम् इति योज्यम्। ते च आहूताः सवित्रादयः इमं क्रव्यादम्। क्रव्यं मांसम् अत्तीति क्रव्यात् दुष्टोऽग्निः। 'क्रव्ये च' ( पा ३,२,६९ ) इति अदेर्विट्प्रत्ययः। ईदृशम् अग्निं शमयन्तु शान्तं कुर्वन्तु।

१. वीद्युत॰ P³,M,W. २. ॰चरंति P³,M,W,I. ३. दिक्ष्वं१त॰B,Bp,R.
४. वैद्रु. मंपा. द्र. ५. अंगिरस॰ S', Kd.

शान्तो अग्निः 'क्रव्याच्छान्तः' पुरुषरेषणः ।
अथो यो 'विश्वदाव्य१स्तं क्रव्यादमशीशमम् ॥ ९ ॥

शान्तः । अग्निः । क्रव्यऽअत् । शान्तः । पुरुषऽरेषणः ।
अथो इति । यः । विश्वऽदाव्यः । तम् । क्रव्यऽअदम् । अशीशमम् ॥ ९ ॥

यः क्रव्यात् उक्तविधः अग्निः स सवित्रादीनाम् अनुग्रहात् शान्तः सुखकरो भवतु । यः पुरुषरेषणः पुरुषस्य हिंसकोऽग्निः सोपि शान्तः सुखकरो भवतु । अथो अपि च योऽग्निः विश्वदाव्यः सर्वस्य दाहको दावाग्निः तं क्रव्यादम् मांसभक्षकम् अग्निम् अशीशमम् शान्तम् अकार्षम् । शमेर्ण्यन्तात् लुङि चङि रूपम् ।

ये पर्वताः सोमपृष्ठा आप उत्तानशीवरीः ।
वातः पर्जन्य आदग्निस्ते क्रव्यादमशीशमन्' ॥ १० ॥

ये । पर्वताः । सोमऽपृष्ठाः । आपः । उत्तानऽशीवरीः ।
वातः । पर्जन्यः । आत् । अग्निः । ते । क्रव्यऽअदम् । 'अशीशमन् ॥ १० ॥

सोमपृष्ठाः सोमः पृष्ठे उपरिभागे येषां तादृशा ये पर्वताः मुञ्जवत्प्रभृतयो गिरयः सन्ति उत्तानशीवरीः उत्तानशयनस्वभावा या आपः सन्ति । 'अन्येभ्योऽपि दृश्यन्ते' (पा ३, २,७५) इति शीङः क्वनिप् । 'वनो र च' (पा ४,१,७) इति ङीब्रेफौ । जसि 'वा च्छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः । वातादयः प्रसिद्धाः । आत् इति आनन्तर्यवाची । ते सर्वे अनुक्रान्ताः पर्वतादयः क्रव्यादम् मांसभक्षकम् उपद्रवकारिणम् अग्निम् अशीशमन् शान्तम् अकुर्वत । इतः परं नास्माकं भयशङ्का विद्यत इत्यर्थः ।

इति तृतीये काण्डे पञ्चमेऽनुवाके प्रथमं सूक्तम् ।

'हस्तिवर्चसम्' इति द्वितीयसूक्तेन तेजस्कामो हस्तिदन्तं 'स्पृष्ट्वा उपतिष्ठते । तथा हस्तिदन्तमणिम् अनेन संपात्य अभिमन्त्र्य बध्नीयात् ।

तद् उक्तं कौशिकेन — " 'ममाग्ने वर्चः' (अ ५,३) इति वर्चस्यानि" इति प्रक्रम्य ' " हस्तिवर्चसम्' इति 'हस्तिनम् । हास्तिदन्तं बध्नाति" (कौसू १२,१०-१३,१) इति ।

तथा अनेन सूक्तेन पुरोहितो हस्तिनम् अभिमन्त्र्य राज्ञे प्रातःप्रातः प्रयच्छेत् । तद् उक्तं परिशिष्टे — 'अथ पुरोहितकर्माणि' इति प्रक्रम्य " 'वातरंहाः' (अ ६,९२),

१. क्रव्यादथो पै ३,१२,९. २. विश्वदाव्य१स्तं B,Bʰ,R,Sᵐ. ३. °शीशमं A,B,Bʰ,D,R,Sᵐ, Wh. ४. °शीशमम् P,P², J. ५. दृष्ट्वा. के. ६. हस्तिनो S', Kd.

अनुऽव्रतः । पितुः । पुत्रः । [1]माता । भवतु । सम्ऽमनाः ।
जाया । पत्ये । मधुऽमतीम् । वाचम् । वदतु । शन्तिऽवाम्[2] ॥ २ ॥

पुत्रः तनयः पितुरनुव्रतः । व्रतम् इति कर्मनाम । अनुकूलकर्मा भवतु । यत् पिता कामयते तत्कर्मकारी भवतु । [3]माता च संमनाः पुत्रादिभिः समानमनस्का भवतु । पत्ये भर्त्रे जाया भार्या मधुमतीम् माधुर्यवतीं शन्तिवाम् सुखयुक्तां वाचं वदतु ब्रवीतु । समानमनस्का भवतु इत्यर्थः । पत्ये । 'पतिः समास एव' (पा १,४,८) इति घिसंज्ञाया नियमात् केवलस्य अभावात् तत्कार्याभावे यण् । शन्तिवाम् इति । 'कंशंभ्याम्०' (पा ५,२,१३८) इति शम्शब्दात् तिप्रत्ययः । ततो मत्वर्थीयो वः ।

मा भ्राता भ्रातरं [4]द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः [5]सव्रता भूत्वा वाचं [6]वदत भद्रया ॥ ३ ॥

मा । भ्राता । भ्रातरम् । द्विक्षत् । मा । स्वसारम् । उत । स्वसा ।
सम्यञ्चः । [7]सऽव्रताः । भूत्वा । वाचम् । वदत । भद्रया ॥ ३ ॥

भ्राता सोदरः भ्रातरं मा [3]द्विष्यात् दायभागादिनिमित्तेन भ्रातृविषयम् अप्रियं मा कुर्यात् । उत अपि च स्वसारम् भगिनीं स्वसा मा [3]द्विष्यात् । 'ऋन्नेभ्यः०' (पा ४,१,५) इति प्राप्तस्य ङीपः 'न षट्स्वस्रादिभ्यः' (पा ४,१,१०) इति प्रतिषेधः । ते सर्वे भ्रात्रादयः सम्यञ्चः समञ्चनाः समानगतयः सव्रताः समानकर्माणो भूत्वा भद्रया कल्याण्या वाचा वागिन्द्रियेण वाचं [3]वदतु वदन्तु । व्यत्ययेन एकवचनम् । सम्यञ्च इति । संपूर्वाद् अञ्चतेः 'ऋत्विग्' (पा ३,२,५९) इत्यादिना क्विन् । 'समः समि' (पा ६,३,९३) इति सम्यादेशः ।

येन देवा न वियन्ति नो च विद्विषते मिथः ।
तत् कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः ॥ ४ ॥

येन । देवाः । न । विऽयन्ति । नो इति । च । विऽद्विषते । मिथः ।
तत् । कृण्मः । ब्रह्म । वः । गृहे । सम्ऽज्ञानम् । पुरुषेभ्यः ॥ ४ ॥

येन ब्रह्मणा देवा इन्द्रादयः न वियन्ति विमतिं न प्राप्नुवन्ति । नो च नैव च मिथः परस्परं विद्विषते विद्वेषं कुर्वते । द्विष अप्रीतौ । अदादित्वात् शपो लुक् । तत् संज्ञानम् समानज्ञाननिमित्तम् ऐकमत्यापादकं ब्रह्म मन्त्रात्मकं सांमनस्यं वः

१. माता K,V,S, सा. २. °वान् P,P[2],J,Cp,V. ३. वैतु. भैपा. द्र.
४. द्विक्षु K, S; द्विक्षु°, द्विक्षु° V; धुक्ष>क्षुक्ष पै ५,१९,३ [मूको.]. ५. सुव्रता पै [मूको.].
६. वदत. पै. सा. ७. सऽव्रता D D[2] I

युष्माकं गृहे ¹पुरुषेभ्यः। तादर्थ्ये चतुर्थी। तदर्थं कृण्मः कुर्मः। कृवि हिंसाकरणयोश्च। 'धिन्विकृण्व्योर च' (पा ३,१,८०) इति उप्रत्ययः। 'लोपश्चास्यान्यतरस्यां म्वोः' (पा ६,४,१०७) इति उकारलोपः।

ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट ²संराधयन्तः सधुराश्चरन्तः।
³अन्यो अन्यस्मै वल्गु वदन्त ⁴एत सध्रीचीनान् वः संमनसस्कृणोमि ॥५॥

ज्यायस्वन्तः। चित्तिनः। मा। वि। यौष्ट। सम्ऽराधयन्तः। ⁵सऽधुराः। चरन्तः।
अन्यः। अन्यस्मै। वल्गु। वदन्तः। आ। इत। सध्रीचीनान्। वः। सम्ऽमनसः। कृणोमि ॥५॥

ज्यायस्वन्तः ज्यायस्त्वगुणोपेताः। ज्येष्ठकनिष्ठभावेन परस्परम् अनुसरन्त इत्यर्थः। चित्तिनः समानचित्तयुक्ताः संराधयन्तः समानसंसिद्धिकाः। समानकार्या इत्यर्थः। सधुराः समानकार्योद्वहनाः। 'ऋक्पूरब्धूःपथाम्°' (पा ५,४,७४) इति अकारः समासान्तः। इत्थं चरन्तः वर्तमाना यूयं मा वि यौष्ट मा पृथग् भूत। वियुक्ता मा भवतेत्यर्थः। यु मिश्रणामिश्रणयोरित्यस्मात् माङि लुङि मध्यमबहुवचने रूपम्। इडभावश्छान्दसः। ⁶अन्योन्यस्मै परस्परं वल्गु शोभनं प्रियवाक्यं वदन्तः भाषमाणा यूयम् ⁶ऐत आगच्छत। अहमपि हे जनाः वः युष्मान् सध्रीचीनान् सहाञ्चतः कार्येषु सह प्रवृत्तान् संमनसः समानमनस्कान् कृणोमि करोमि। सध्रीचीनान् इति। सह अञ्चन्तीति विगृह्य अञ्चतेः 'ऋत्विग्' (पा ३,२,५९) इत्यादिना किन्। 'सहस्य सध्रिः' (पा ६,३,९५) इति सध्र्यादेशः। 'विभाषाञ्चेरदिक्स्त्रियाम्' (पा ५,४,८) इति स्वार्थिकः खः। ततो भसंज्ञायाम् 'अचः' (पा ६,४,१३८) इति अकारलोपे 'चौ' (पा ६,३,१३८) इति दीर्घत्वम्।

समानी⁷ प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः⁸ ॥६॥

समानी। प्रऽपा। सह। वः। अन्नऽभागः। समाने। योक्त्रे। सह। वः। युनज्मि।
सम्यञ्चः। अग्निम्। सपर्यत। अराः। नाभिम्ऽइव। अभितः ॥६॥

हे सांमनस्यकामाः वः युष्माकं समानी एका प्रपा पानीयशाला भवतु। अन्नभागश्च सह एव भवतु। परस्परानुरागवशेन एकत्रावस्थितम् अन्नपानादिकं युष्माभिरुपभुज्यताम् इत्यर्थः। तदर्थम् अहं वः युष्मान् समाने योक्त्रे एकस्मिन् बन्धने ⁹स्नेहपाशे सह युनज्मि

१. पुरुषेभ्यः कृण्मः S', Kd. २. संराधयन्तः सा.² ३. अन्योन्य° पै ५, १९,५ सा. ४. ऐत P³,E², सा.; यात समग्रा? स्थ पै. ५. सुऽ° P. ६. वैतु. मंपा. द्र. ७. समानीं P³,M. ८. °मिवाभूताः पै ५,१९,६. ९. स्नेहपाशेन Kd, स्नेहपाशेन > स्नेहपाशे S'.

सह बध्नामि। अपि च सम्यञ्चः संगताः एकफलार्थिनो भूत्वा समानज्ञानाः सन्तः अग्निं सपर्यत पूजयत। सपर पूजायाम्। कण्ड्वादित्वाद् यक्। कथमिव स्थिता इति तत्राह—अरा नाभिमिव अभितः। रथचक्रस्य मध्यच्छिद्रं नाभिः। तस्या अभितो वर्तमाना अराः चक्रावयवाः कीलका नियतस्थानाः परिवेष्ट्य वर्तन्ते। [1]एवम् एकम् अग्निम् अभितो वर्तमानाः परिचरतेत्यर्थः। 'अभितःपरितःसमया°' (पावा २,३,२) इति स्मरणात् तद्योगाद् नाभिम् इति द्वितीया।

सध्रीचीनान् वः [2]संमनसस्कृणोम्येकश्नुष्टीन्त्संवननेन [4]सर्वान्।
देवा [5]इवामृतं रक्षमाणाः सायंप्रातः [6]सौमनसो वो अस्तु ॥ ७ ॥

सध्रीचीनान्। वः। सम्ऽमनसः। कृणोमि। एकऽश्नुष्टीन्[7]। सम्ऽवननेन। सर्वान्।
देवाःऽइव। अमृतम्। रक्षमाणाः। सायम्ऽप्रातः। सौमनसः। वः। अस्तु ॥ ७ ॥

सध्रीचीनान् सह प्रवर्तमानान् एककार्यकरणे सहोद्युक्तान् संमनसः समानमनस्कान् वः युष्मान् कृणोमि करोमि। तथा युष्माकम् [8]एकश्नुष्टिम् [9]एकविधं व्यापनम् एकविधस्यान्नस्य भुक्तिं वा करोमि। संवननेन वशीकरणेन अनेन सांमनस्यकर्मणा युष्मान् सर्वान्। वशीकरोमीत्यर्थः। अमृतम् द्युलोकस्थम् अजरामरत्वप्रापकं पीयूषं रक्षमाणाः [10]ऐकमत्येन पालयन्तः देवा इव इन्द्रादयो यथा सौमनस्ययुक्ता भवन्ति एवं वः युष्माकं सायंप्रातः एतदुपलक्षिते सर्वस्मिन् काले सौमनसः सौमनस्यं शोभनमनस्कत्वम् अस्तु भवतु।

इति पञ्चमं सूक्तम्।

'वि देवा जरसा' इति सूक्तेन उपनयनानन्तरम् आयुष्कामस्य माणवकस्य शरीरम् आचार्यः अभिमन्त्रयेत। तथा च कौशिकसूत्रम्— 'वि देवा जरसा' (अ ३,३१), 'उत देवाः' (अ ४,१३) इत्यादि "[11]'विषासहिम्' (अ १७,१) इत्यभिमन्त्रयते। ब्राह्मणोक्तम्" (कौसू ५८,३;४) इत्यन्तम्।

तथा पितृमेधे दहनानन्तरम् उदकसमीपे एतत् सूक्तं ब्रह्मा जपेत्।

तथा आग्रहायणीकर्मणि 'उदायुषा' (१०,११) इति द्वाभ्याम् उत्तिष्ठेत्। सूत्रितं हि— 'आग्रहायण्यां पश्चाद् अग्नेर्दर्भेषु' इति प्रक्रम्य [12]'उदायुषेत्यभ्युपोत्तिष्ठति' (कौसू २४,२४–३१) इति।

तथा सोमक्रयणानन्तरम् 'उदायुषा' (१०) इति ब्रह्मा उत्तिष्ठेत्। तथा च वैतानम्— "क्रीते कुरीरं निर्मुष्णाति। 'उदायुषा' इत्युपोत्तिष्ठति" (वैताश्री १३,९;१०) इति।

१. एकम् S', Kd. २. समन° पै ५,१९,८. ३. °श्रुष्टी° Sm, Wh.; °१ K, श्नुष्टिं B. सा. ४. सहृदः पै. ५. इवेदमृतं पै. ६. सुसमितिर् पै. ७. °श्रुष्टी° P². ८. वैतु. मंपा. द्र. ९. एकविधानं S', Kd. १०. एक° S', Kd. ११. इत्यनुम° S', Kd. १२. °षेत्युपोत्ति° Bl.

वि देवा जरसावृतन् वि त्वमग्ने अरात्या ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ १ ॥

वि । देवाः । जरसा । अवृतन् । वि । त्वम् । अग्ने । अरात्या ।
वि । अहम् । सर्वेण । पाप्मना । वि । यक्ष्मेण । सम् । आयुषा ॥ १ ॥

हे [1]देवा देवौ अश्विनौ इमम् उपनीतं जरसा जरया वयोहान्या [2]व्यवृतम् वियोजयतम् । वृङ् वयोहानौ इत्यस्मात् 'षिद्भिदादिभ्योऽङ्' (पा ३,३,१०४) इति अङ् । 'जराया जरसन्यतरस्याम्' (पा ७,२,१०१) इति जरसादेशः । हे अग्ने त्वम् अपि अरात्या अदानेन [2]अमित्रेण वा वि योजय । अहं च सर्वेण पाप्मना रोगादिदुःखजनकेन पापेन इमं वि योजयामि । यक्ष्मेण च वि योजयामि । आयुषा चिरकालजीवनेन सं योजयामि ।

व्यार्त्या पवमानो वि शक्रः पापकृत्यया ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ २ ॥

वि । आर्त्या । पवमानः । वि । शक्रः । पापऽकृत्यया । वि । अहम् । ०० ॥ २ ॥

पवमानः सर्वत्र संचरन् वायुः आर्त्या रोगादिजनितपीडया वि योजयतु । शक्रः सर्वकार्येषु शक्त इन्द्रः पापकृत्यया । पापस्य कृत्या करणं पापकृत्या । 'कृञः श च' (पा ३,३,१००) इति भावे क्यप् । तया ब्रह्मचारिणं वि योजयतु । गतम् अन्यत् ।

वि ग्राम्याः पशव आरण्यैर्व्या३पस्तृष्णयासरन् ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ ३ ॥

वि । ग्राम्याः । पशवः । आरण्यैः । वि । [4]आपः । तृष्णया । असरन् । वि । ०० ॥ ३ ॥

ग्राम्याः ग्रामे भवा गोमहिषाद्याः पशवः आरण्यैः अरण्योत्पन्नैः श्वापदादिभिर्दुष्टमृगैः स्वभावतो विगता यथा भवन्ति । [5]यथा च आपः तृष्णया पिपासया व्यसरन् विगता भवन्ति । जलव्यतिरिक्तस्य हि प्राणिजातस्य पिपासा । एवम् अहं सर्वेण पाप्मना ब्रह्मचारिणं विगमयामीत्यर्थः । गतम् अन्यत् ।

[6]वी३मे द्यावापृथिवी इतो वि पन्थानो दिशंदिशम् ।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ ४ ॥

वि । इमे इति । द्यावापृथिवी इति । इतः । वि । पन्थानः । दिशम्ऽदिशम् । वि । ०० ॥ ४ ॥

१. वैतु. मंपा. द्र. २. अमित्रेणे S′, Kd. ३. तु. पपा. RW.; वैतु. शंपा. व्या(पु°. ४. आपुः P,P², J,K. ५. तथा S′, Kd. ६. वी३मे A,B,Bʰ,D,Kᵐ,Sᵐ,V.

इमे परिदृश्यमाने द्यावापृथिवी द्यावापृथिव्यौ वीतः[1] विगच्छतः स्वभावतो वियुक्ते एव भवतः। दिशंदिशम् एकस्मात् ग्रामाद् [2]प्रतिदिशं गच्छन्तः पन्थानः मार्गाः वि यन्ति स्वभावतो विगताः पृथगवस्थाना भवन्ति। [3]यथैवं तथा इमं माणवकं सर्वेण पाप्मना स्वभावतो वियुक्तं करोमि। गतम् अन्यत्।

त्वष्टा दुहित्रे [4]वहतुं [5]युनक्तीतीदं विश्वं भुवनं [6]वि याति।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ ५ ॥

त्वष्टा। दुहित्रे। वहतुम्। युनक्ति। इति। इदम्। विश्वम्। भुवनम्। वि। याति। वि। अहम्। ०० ॥

त्वष्टा देवो दुहित्रे विवाहकाले स्वदुहितृप्रीत्यर्थं वहतुम्। पुरुषैरुह्यते जामातृगृहं प्राप्यत इति वहतुः। दुहित्रा सह प्रीत्या प्रस्थापनीयं वस्त्रालंकारादि द्रव्यं वहतुशब्देन विवक्षितम्। 'मा हिंसिषुर्वहतुम् उह्यमानम्'[7] (अ १४,२,९) इत्यादिमन्त्रान्तरप्रसिद्धम्। तद् युनक्ति [8]प्रस्थापयति इति बुद्ध्या तस्य अवकाशं दातुम् इदं विश्वं भुवनम् पृथिव्यन्तरिक्षादिरूपं वि याति परस्परं विगतं भवति। एवम् अहम् इमं माणवकं पाप्मना वियोजयामीत्यर्थः। गतम् अन्यत्।

अग्निः प्राणान्त्सं दधाति चन्द्रः प्राणेन संहितः।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ ६ ॥

अग्निः। प्राणान्। सम्। दधाति। चन्द्रः। प्राणेन। सम्ऽहितः। वि। अहम्। ०० ॥ ६ ॥

अग्निः अशितपीतपरिणामहेतुः अन्तरवस्थितो जाठररूपः प्राणान् चक्षुरादीन्द्रियाणि अन्नरसप्रापणेन सं दधाति संहितान् संश्लिष्टान् स्वस्वकार्यसमर्थान् करोति। तथा चन्द्रः सोमः प्राणेन प्राणवायुना तदाधारभूतेन मनसा वा संहितः सन् अमृतमयेन रसेन कृत्स्नम् आत्मानं पोषयतीत्यर्थः। 'एतावद् वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नम् अग्निरन्नादः' (माश १४,४,२,१३) इत्यादिश्रुतेः अग्नीषोमात्मकत्वाद् विश्वस्य अत्र तयोरुपादानम्। गतम् अन्यत्।

प्राणेन विश्वतोवीर्यं देवाः सूर्यं समैरयन्।
व्य१हं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ ७ ॥

प्राणेन। विश्वतःऽवीर्यम्। देवाः। सूर्यम्। सम्। ऐरयन्। वि। अहम्। ०० ॥ ७ ॥

---

१. वैतु. W.I. < इदम्. २. प्रदिशं S', Kd. ३. तथैवं S', Kd. ४. वहुतं Bʰ,D,K. ५. कृणोतीतीदं ऋ १०,१७,१ अ १८,१,५३. ६. समेति ऋ. अ. ७. वहतुमोह्यमानाम् S', Kd. ८. प्रसारयति S', Kd.

'विश्वतः सर्वतो 'वीर्यम् वीर्यभूतं सूर्यम् सर्वस्य प्राणिजातस्य प्रेरकम् आदित्यं प्राणेन जगत्प्राणरूपेण देवाः समैरयन् सर्वत्र प्रावर्तयन्। 'योसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणान् आदायोदेति' (तैआ १,१४,१) इत्यादिश्रुतेः। अतस्तादृशं प्राणात्मकं सूर्यं माणवके आयुषोभिवृद्धये संस्थापयामीत्यर्थः। गतम् अन्यत्।

आयुष्मतामायुष्कृतां प्राणेन जीव मा मृथाः।
व्यऽहं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ ८ ॥

आयुष्मताम्। आयुःऽकृताम्। प्राणेन। जीव। मा। मृथाः। वि। अहम्। ०० ॥ ८ ॥

आयुष्मताम् प्रशस्तेन दीर्घेण आयुषा तद्वताम् आयुष्कृताम् तादृशस्य आयुषः कर्तॄणां देवानां संबन्धिना प्राणेन दृढतरेण चिरकालावस्थायिना प्राणवायुना हे माणवक जीव प्राणान् धारय चिरकालं वर्तस्व। मा मृथाः प्राणान् मा त्याक्षीः। 'म्रियतेर्लुङ्लिङोश्च' (पा १,३,६२) इति आत्मनेपदम्। 'ह्रस्वादङ्गात्' (पा ८,२,२७) इति सिज्लोपः। गतम् अन्यत्।

प्राणेन प्राणतां प्राणेहैव भव मा मृथाः।
व्यऽहं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ ९ ॥

प्राणेन। प्राणताम्। प्र। 'अन। इह। एव। भव। मा। मृथाः। वि। अहम्। ०० ॥ ९ ॥

प्राणताम् प्राणनव्यापारं कुर्वतां श्वसतां प्राणिनां सर्वेषां संबन्धिना प्राणेन प्राणवायुना हे माणवक प्राण प्राणनव्यापारं कुरु। ततश्च इहैव अस्मिन्नेव लोके भव वर्तस्व। मा मृथाः मा प्राणांस्त्याक्षीः। यद्वा हे प्राण इहैव माणवके भवेति योज्यम्। गतम् अन्यत्।

उदायुषा 'समायुषोदोषधीनां रसेन।
व्यऽहं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ १० ॥

उत्। आयुषा। सम्। आयुषा। उत्। ओषधीनाम्। रसेन। वि। अहम् ॥००॥१०॥

अस्थामेति उपरि वक्ष्यमाणा क्रिया अत्रापि उपसर्गेण संबध्यते। आयुषा जीवनेन चिरकालावस्थानेन वयम् उत् अस्थाम उत्थिता मृत्योरुत्तीर्णा भवाम। तथा तादृशेन आयुषा सम् अस्थाम अस्मिन् लोके सम्यक् स्थिता भवाम। ओषधीनाम् व्रीहियवादीनां रसेन आयुष्करेण सारेण उत् अस्थाम उत्थिताः प्रवृद्धा अभूम। स्पष्टम् अन्यत्।

१. वैतु. मंपा. द्र. २. अनं Bp, अन>अनं J,P. ३. स्वायुषो° मा ४,२८ का २,७,५ मै १,२,६ तै १,२,८,१ तैआ ४,४२,५ आश्री १,३,२३.

[1]आ प॒र्जन्य॑स्य [2]वृ॒ष्ट्योद॑स्था॒माऽमृ॑ता व॒यम्[3] ।
व्य१॒॑हं सर्वे॑ण पा॒प्मना॒ वि यक्ष्मे॑ण॒ समायु॑षा ॥ ११ ॥

आ । प॒र्जन्य॑स्य । वृ॒ष्ट्या । उत् । अ॒स्था॒म॒ । अ॒मृताः॑ । व॒यम् । वि । अ॒हम् । ०० ॥११॥

आ समन्तात् स्थितस्य पर्जन्यस्य वृष्टिकारिणो देवस्य संबन्धिन्या वृष्ट्या जगत्प्राणभूतेन वर्षजलेन वयम् अमृताः मरणरहिता अमृतत्वं प्राप्ताः सन्तः उत् अस्थाम उत्थिता भवाम । 'छन्दसि लुङ्लङ्लिटः' (३,४,६) इति तिष्ठतेर्लुङ् । 'गाति-स्था॰' (पा.२,४,७७) इति सिचो लुक् । अमृता इति । 'नञो जरमरमित्रमृताः' (पा ६,२,११६) इति उत्तरपदाद्युदात्तत्वम् । [4]व्यहम् इत्यादि व्याख्यातम् ।

इति तृतीये काण्डे षष्ठेऽनुवाके षष्ठं सूक्तम् ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

श्रीमद्राजाधिराजपरमेश्वरश्रीवीरहरिहरमहाराजसाम्राज्यधुरंधरेण
सायणार्येण विरचिते [5]अथर्ववेदार्थप्रकाशे
तृतीयकाण्डः समाप्तः ।



१. उत् तै १,२,८,१ मै १,२,६ तैआ ४,४२,३१ का २,७,५ आश्रौ १,३,२३. २. वृष्ट्मेणोद॰ तै. तैआ., धामभिरुद॰ का. आश्रौ., धाम्नोद॰ मै १,२,६; दृष्ट्योद॰ पाग्र ३,२,१४. ३. ॰मसृतो अनु तै. का. मै. तैआ. आश्रौ. ४. व्या॰ शंपा. ५. अथर्वणवेदप्रकाशे S', Kd.

अथ

# चतुर्थं काण्डम्

श्रीगणाधिपतये नमः। अविघ्नम् अस्तु।

यस्य निश्वसितं वेदा यो वेदेभ्योखिलं जगत्।
निर्ममे तम् अहं वन्दे विद्यातीर्थमहेश्वरम्॥ १॥

'चतुर्थे काण्डे'[1] अष्टानुवाकाः। तत्र प्रथमेनुवाके पञ्च सूक्तानि। तत्र 'ब्रह्म जज्ञानम्' इति आद्यं सूक्तं वेदकल्पाद्यध्ययनादौ विघ्नशमनार्थम् शास्त्रवादादौ प्रतिवादिजयार्थं च जपेत्। सूत्रितं हि—"'ब्रह्म जज्ञानम्' इत्यध्यायान् उपाकरिष्यन्नभिव्याहारयति। प्राशम् आख्यास्यन्। ब्रह्मोद्यं वदिष्यन्" (कौसू. ३८,२३-२५) इति।

तथा गोपुष्टिकर्मणि गवां रोगशमने च अनेन सूक्तेन[2] लवणम् अभिमन्त्र्य गाः पाययेत्।

तथा अनेनैव प्रपातटाकादिस्थम् उदकम् अभिमन्त्र्य गाः पाययेत्।

सूत्रितं हि—"'ब्रह्म जज्ञानम्' (अ ४,१), 'आ गावः' (अ ४,२१), 'एका च मे' (अ ५,१५) इति गा लवणं पाययत्युपतापिनीः प्रजननकामाः। प्रपाम् अवरुणद्धि" (कौसू. १९,१-३) इति।

'ब्रह्म जज्ञानम्' इति आद्या बृहद्गणे पठिता। तस्य बृहद्गणस्य यत्रयत्र विनियोगस्तत्रतत्र अस्या विनियोगो द्रष्टव्यः।

तथा विवाहे चतुर्थिकाकर्मणि 'ब्रह्म जज्ञानम्' इत्यनया वरः अङ्गुष्ठेन प्रजननदेशं तुदति। सूत्रितं हि—'ब्रह्म जज्ञानम्' इत्यङ्गुष्ठेन व्यचस्करोति' (कौसू. ७९,११) इति।

उपाकर्मणि च 'ब्रह्म जज्ञानम्' इत्येताम् उपाध्यायो जपेत्। सूत्रितं हि—"'अव्यसश्च' (अ १९,६८) इति जपित्वा सावित्रीं 'ब्रह्म जज्ञानम्' इत्येकाम्" (कौसू. १३९,१०) इति।

1. चतुर्थेनुवाके S', Kd.  2. लवन° S', Kd.

'ब्रह्म जज्ञानम्' इति द्वाभ्यां प्रवर्ग्ये कर्मणि निधीयमानं महावीरम् अनुमन्त्रयेत । सूत्रितं हि — " 'ब्रह्म जज्ञानम्' (१), 'इयं पित्र्या' (२) इति शत्रवद् अर्धर्चश 'आहावप्रतिगरवर्जम्'" ( वैताश्रौ १४,१ ) इति ।

तथा अग्निचयने हिरण्मयरुक्मम् उपधीयमानं 'ब्रह्म जज्ञानम्' इत्यनया अनुमन्त्रयेत । उक्तं वैताने — 'ब्रह्म जज्ञानम् इति रुक्मं निधीयमानम्' ( वैताश्रौ २८,१३ ) इति ।

तथा "[1]ब्राह्मीं ब्रह्मवर्चसकामस्य वज्रशयनाग्निज्वलने च' ( शाक १७,१ ) इति विहितायां ब्राह्मयां महाशान्तौ 'ब्रह्म जज्ञानम्' इति विनियुक्तम् । तद् उक्तं शान्तिकल्पे — 'ब्रह्म जज्ञानम्', 'ब्रह्म भ्राजत्' ([ वै १६,१५०,२ कौसू ९७,८] शाक १८,२) इति ।

तथा तुलापुरुषविधौ 'ब्रह्म जज्ञानम्' इति जुहुयात् । तद् उक्तं परिशिष्टे — 'अथातस्तुलापुरुषविधिं व्याख्यास्यामः' इति प्रक्रम्य "महाव्याहृतिं सावित्रीं शान्तिं 'ब्रह्म जज्ञानम्' इति हुत्वा" ( अप ११,१,१-५ ) इति ।

ब्रह्म॑ जज्ञा॒नं प्र॑थ॒मं पु॒रस्ता॒द्वि सी॑म॒तः सु॒रुचो॑ वे॒न आ॑वः ।
स बु॒ध्न्या॑ उप॒मा अ॑स्य वि॒ष्ठाः स॒तश्च॒ योनि॒मस॑तश्च॒ वि वः॑ ॥१॥

ब्रह्म॑ । ज॒ज्ञा॒नम् । प्र॒थ॒मम् । पु॒रस्ता॑त् । वि । सी॒म॒तः । सु॒ऽरुचः॑ । वे॒नः । आ॒वः॒ ।
सः । बु॒ध्न्याः॑ । उ॒प॒ऽमाः । अ॒स्य॒ । वि॒ऽस्थाः । स॒तः । च॒ । योनि॑म् । अस॑तः । च॒ । वि । व॒रिति॑ वः ॥

'सत्यं ज्ञानम् अनन्तं ब्रह्म' (तैआ ८,१,१) इति श्रुत्यन्तप्रसिद्धं सच्चित्सुखात्मकमपरिच्छिन्नं सर्वजगत्कारणं यत् परं ब्रह्म तत् पुरस्तात् पूर्वस्मिन् काले सृष्ट्यादौ प्रथमम् प्रथमकार्यं हिरण्यगर्भरूपं सूर्यात्मकं जज्ञानम् जातम् उत्पन्नम् । उक्तं हि —

'स वै शरीरी प्रथमः स वै पुरुष उच्यते इति ।

यद्वा उक्तलक्षणं सूर्यात्मकं परं ब्रह्म प्रत्यहं पुरस्तात् पूर्वस्यां दिशि प्रथमं जज्ञानं पूर्वम् आविर्भूतं सत् पश्चात् स्वतेजसा कृत्स्नं जगद् व्याप्नोतीत्यर्थः । अथवा प्रथमम् मुख्यं सर्वतेजसां प्रधानभूतम् । जनी प्रादुर्भावे इत्यस्मात् लिट् । 'लिटः कानज्वा' (पा ३,२,१०६) इति कानजादेशः । 'गमहन०' (पा ६,४,९८) इति उपधालोपे 'द्विर्वचनेऽचि' (पा १,१,५९) इति स्थानिवत्त्वाद् द्विर्वचनम् । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' 'अस्ताति च' (पा ५,३,३९;४०) इति पूर्वशब्दात् सप्तम्यर्थे अस्तातिप्रत्ययः तत्संनियोगेन पुर् आदेशश्च ।

१. आहव॰ S', Kd. २. ब्राह्मी S', Kd.

तत्र पूर्वस्यां दिशि प्रादुर्भूतं हैरण्यगर्भं सूर्यात्मकं परमं तेजो वेनः कान्तः मध्यमस्थानः प्रकाशप्रवर्षणादिहेतुर्देवः। 'वेनो वेनतेः कान्तिकर्मणः' इति निरुक्तम् (१०,३८)। तत्स्वरूपं 'वेनस्तत् पश्यत्' (अ २,१) इत्यत्र विस्तरेणोक्तम्। स च दीप्यमानः परब्रह्मात्मको वेनः सीमतः सीमभ्यः लोकमर्यादाभ्यो दिक्प्रान्तदेशेभ्यः आरभ्य सुरुचः शोभना दीप्तीः स्वकीयाः सुष्ठु रोचमानान् लोकान् वा व्यावः विवृणोति विशेषेण आवृणोति। 'प्रभामण्डलेन अन्धतमसं निराकृत्य सर्वं जगत् छादयतीत्यर्थः। सीमत इति। सीमन्शब्दात् 'अपादाने चाहीयरुहोः' (पा ५,४,४५) इति तसिप्रत्ययः। आवरिति। वृञ् वरणे इत्यस्मात् 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति वर्तमाने लुङ्। 'मन्त्रे घस' (पा २,४,८०) इत्यादिना च्लेर्लुक्। हल्ङ्यादिलोपे 'छन्दस्यपि दृश्यते' (पा ६,४,७३) इति आडागमः। न केवलं पार्थिवानेव लोकान् आवृणोति आन्तरिक्षानपीत्याह — स इति। स च सूर्यात्मको वेनः बुध्न्याः बुध्नम् अन्तरिक्षम् तत्र भवा बुध्न्याः। 'भवे छन्दसि' (पा ४,४,११०) इति यत्। अस्य कारणभूतस्य ब्रह्मणस्तेजसा उपमाः उपमीयमानाः परिच्छिद्यमाना विष्ठाः विविधम् अवस्थिताः। ईदृशान् आन्तरिक्षानपि लोकान् व्यावरिति संबन्धः। उपमा इति। 'आतश्चोपसर्गे' (पा ३,३,१०६) इति कर्मणि अङ्प्रत्ययः। विष्ठा इति। विपूर्वात् तिष्ठतेः 'आतश्चोपसर्गे' (पा ३,१,१३६) इति कर्तरि कः। यद्वा अस्य प्रपञ्चस्य विष्ठा विविधा अवस्थितीः वियदादिभूतभौतिकात्मिकाः व्यावृणोति। 'आतश्चोपसर्गे' (पा ३,३,१०६) इति भावे अङ्। 'उपसर्गात् सुनोति' (पा ८,३,६५) इत्यादिना षत्वम्। किं बहुना। सतश्च विद्यमानस्य अभिव्यक्तनामरूपप्रपञ्चस्य योनिम् कारणम् असतश्च अव्याकृतावस्थस्य अनभिव्यक्तनामरूपात्मकस्य प्रपञ्चस्य योनिम् कारणभूतां सत्वरजस्तमोगुणात्मिकां मूलप्रकृतिं वि वः विवृणोति व्याप्नोति। पूर्ववत् लुङ्। यद्वा सच्छब्देन चक्षुर्ग्राह्यं पृथिव्यप्तेजोलक्षणं भूतत्रयमुच्यते। असच्छब्देन च परोक्षं वाय्वाकाशलक्षणं भूतद्वयम् उच्यते। एतच्च प्रत्यक्षपरोक्षभेदेन द्वैविध्यम् अन्यत्र आम्नातम् — 'सच्च त्यच्चाभवत्' (तआ ८,६,१) इति। एतद् उक्तं भवति — उदीरितलक्षणं परं ब्रह्म स्वमायाशक्तिवशेन आदित्यापरपर्यायो वेनो भूत्वा स्वतेजसा भूतभौतिकात्मकं जगत् सकारणकं व्याप्नोतीति।

इयं [4]पित्र्या [5]राष्ट्र्येत्वग्रे प्रथमाय जनुषे [6]भुवनेष्ठाः।
तस्मा एतं सुरुचं [7]ह्वारमह्यं घर्मं [8]श्रीणन्तु [9]प्रथमाय धास्यवे ॥ २ ॥

१. °प्रवर्षमाणादि° S', Kd.　२. प्रभावम° S', Kd.　३. °रिक्ष्यान° S', Kd.　४. पित्रे पै ५,२,१ शांश्रौ ५,९,६ आश्रौ ४,६,३ ऐब्रा १,१९.　५. °ष्ट्रेत्यग्रे पै. शांश्रौ. आश्रौ. ऐब्रा.　६. भूमने° पै. शांश्रौ. आश्रौ.　७. ह्वारमह्यं Sm.　८. श्रीणन्ति शांश्रौ. आश्रौ., शृण्वन्तु पै. [मूको.]:　९. प्रथमस्य धासेः पै. शांश्रौ. आश्रौ.

इयम् । पित्र्या । राष्ट्री । एतु । [1]अग्रे । प्रथमाय । जनुषे । भुवनेऽस्थाः ।
तस्मै । एतम् । सुऽरुचम् । ह्वारम् । [2]अह्यम् । घर्मम् । श्रीणन्तु । प्रथमाय । धास्यवे ॥ २ ॥

पित्र्या । पिता कृत्स्नस्य जगत उत्पादयिता प्रजापतिः । तत आगता । 'पितुर्यच्च' ( पा ४,३,७९ ) इति यत्प्रत्ययः । भुवनेष्ठाः भुवने भूतजाते नादात्मना व्याप्य तिष्ठतीति भुवनेष्ठाः । उक्तं हि आचार्यैः शब्दब्रह्मप्रकरणे —

'स तु सर्वत्र संस्यूतो जाते भूताकरे पुनः ।
आविर्भवति देहेषु प्राणिनाम् अर्थविस्तृतः ॥' इति ।

इयम् परिदृश्यमाना शब्दब्रह्मात्मिका वाग्देवता । राष्ट्री । ईश्वरनामैतत् । राज्ञी सर्वजगद्व्यवहारस्य ईश्वरा नियन्त्री प्रथमाय प्रथमशब्दवाच्याय प्रागुक्ताय ब्रह्मणे जनुषे सूर्यात्मना जायमानाय । 'जनेरुसिः' ( पाउ २,११५ ) इति कर्तरि उसिप्रत्ययः । 'क्रियाग्रहणं कर्तव्यम्' ( पा १,४,३२ ) इति कर्मणः संप्रदानत्वात् चतुर्थी । जायमानं प्रथमं मुख्यम् आदित्यात्मकं ब्रह्म अग्रे पूर्वम् एतु । स्तुतिरूपेण व्याप्नोतु । यद्वा इयं भूमिः पित्र्या पितुः कश्यपाद् आगता राष्ट्री स्वाश्रितस्य जगतो नियन्त्री प्रथमाय स्वर्गादिभोगयोग्याय जनुषे जन्मने । तादर्थ्ये चतुर्थी । तदर्थम् अग्रे प्रथमम् एतु प्रवर्ग्याधिष्ठानतां प्राप्नोतु । यः प्रवर्ग्यात्मक आदित्यः भुवनेष्ठाः भुवनशब्दवाच्यं लोकत्रयं व्याप्य स्थितः । तस्मै तादृशाय प्रथमाय धास्यवे । धासिरित्यन्ननाम । हविर्लक्षणम् अन्नम् इच्छते देवाय सुरुचम् सुष्ठु रोचमानं ह्वारम् कुटिलं वर्तमानम् । ह्वृ कौटिल्ये इत्यस्मात् ण्यन्तात् पचाद्यच् । यद्वा [3]ह्वर्यते कौटिल्येन प्राप्यत इति ह्वारः । कर्मणि घञ् । 'कर्षात्वतः°' ( पा ६,१,१५९ ) इति अन्तोदात्तत्वम् । अह्यम् । अहि गतौ । गन्तव्यं सुकृतविशेषैः प्राप्यम् । यद्वा अहनि भवः अह्यः । 'भवे छन्दसि' ( पा ४,४,११० ) इति [4]यत् । 'नस्तद्धिते' ( पा ६,४,१४४ ) इति टिलोपः । 'अह्नष्टखोरेव' ( पा ६,४,१४५ ) इति नियमस्तु 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' ( पाम १,४,९ ) इति न प्रवर्तते । एवंगुणविशिष्टम् एतं घर्मम् प्रवर्ग्यं हविः श्रीणन्तु ऋत्विजः पयसा संस्कुर्वन्तु । यद्वा । श्रीञ् पाके । पचन्तु तपन्तु ।

प्र यो [5]जज्ञे विद्वानस्य [6]बन्धुर्विश्वा[7] देवानां जनिमा विवक्ति ।
ब्रह्म ब्रह्मण उज्जभार मध्यान् [8]नीचैरुच्चैः स्वधा अभि प्र तस्थौ ॥ ३ ॥

१. अग्नेः P,P². २. अह्नम् P²,J; अह्यम्>अह्नम् P. ३. ह्वयते कुटिलेन S',Kd.
४. वैतु मंपा. द्र.; वैग १,५९१ a अपि द्र. ५. यज्ञे B,D,R,S,P,P²,J,P³,M,W,E²,I,K²,Kp.
• जज्ञे>यज्ञे A,Bh. ६. बन्धु पै ५,२,३ तै २,३,१४,६. ७. विश्वानि देवो तै. ८. नीचादुच्चा स्वधया तै. पै., °रुच्चैस्वधा B,Bh, Sm; °रुच्चैस्वधाः O; °रुच्चैस्वधा Op.

प्र । यः । जज्ञे । विद्वान् । अस्य । बन्धुः । विश्वा । देवानाम् । जनिम । विवक्ति ।
ब्रह्म । ब्रह्मणः । उत् । जभार । मध्यात् । नीचैः । उच्चैः । स्वधाः । अभि । प्र । तस्थौ ॥ ३ ॥

अस्य प्रपञ्चस्य बन्धुः बन्धकः कारणभूतः यद्वा बन्धुवत् हितकारी विद्वान् निरावरणज्ञानेन सर्वं जगत् जानन् यो देवः प्र जज्ञे प्रथमम् उत्पन्नः। जनी प्रादुर्भावे इत्यस्मात् लिटि 'गमहन°' (पा ६,४,९८) इति उपधालोपः। यद्वा 'जानातेर्लिट्। प्र जज्ञे प्रजानीते। 'आतो लोप इटि च' (पा ६,४,६४) इति आल्लोपे कृते 'द्विर्वचनेऽचि' (पा १,१,५९) इति स्थानिवद्भावात् साच्कस्य द्विर्वचनम्। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघातप्रतिषेधः। [2]स प्रथमजो देवः देवानाम् अन्येषाम् इन्द्रादीनां विश्वा विश्वानि सर्वाणि जनिमा जन्मानि विवक्ति अन्येभ्यः कथयति। वच परिभाषणे। आदादिकः। छन्दसः शपः श्लुः। स च ब्रह्मणः कारणभूतात् परब्रह्मणः सकाशात् त्रयीरूपं ब्रह्म मध्यात् मध्यभागात् नीचैः अधोभागात् उच्चैः उपरिभागाच्च उत् जभार उज्जहार [3]उद्धृतवान्। 'हृग्रहोर्भः°' (पावा ८,२,३२) इति भत्वम्। एवं वेदस्य उद्धरणे सति स्वधाः। अन्ननामैतत्। चरुपुरोडाशहविर्लक्षणानि अन्नानि अभिलक्ष्य अग्न्यादिर्देवः प्र तस्थौ प्राप्तवान्। यद्वा वेदवाक्यविहितानि हवींषि ऋत्विग्भिर्दत्तानि देवान् अभिलक्ष्य प्र तस्थौ प्रतस्थिरे। वचनव्यत्ययः। 'समवप्रविभ्यः स्थः' (पा १,३,२२) इति आत्मनेपदाभावश्छान्दसः।

स हि दिवः स पृथिव्या [5]ऋतस्था मही [6]क्षेमं रोदसी [7]अस्कभायत् ।
महान् मही [8]अस्कभायद् वि जातो द्यां [9]सद्म पार्थिवं च रजः ॥ ४ ॥

सः । हि । दिवः । सः । पृथिव्याः । ऋतऽस्थाः । मही इति । क्षेमम् । रोदसी इति । अस्कभायत् ।
महान् । मही इति । [10]अस्कभायत् । वि । जातः । द्याम् । सद्म । पार्थिवम् । च । रजः ॥

स हि खलु सूर्यात्मकः प्रथमजो देवः दिवः द्युलोकस्य ऋतस्थाः कारणभूतम् यद् ऋतशब्दवाच्यं परं ब्रह्म तदात्मना स्थितः। तथा स एव पृथिव्याः संबन्धी ऋतस्थाः सत्यरूपेण स्थितः। अतो मही महत्यौ रोदसी रोदस्यौ द्यावापृथिव्यौ क्षेमम् अस्कभायत् अविनाशो यथा भवति तथा अस्कभ्नात् स्वस्थाने स्थापितवान्। स्कम्भुः सौत्रो धातुः गतिप्रतिबन्धे। 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' (पा ३,१,८२) इति श्नाप्रत्ययः। 'शायच् छन्दसि सर्वत्र' (पावा ३,१,८४) इति अहावपि श्नः शायजादेशः। एतदेव विवृणोति — महान् अधिकः द्यावापृथिव्यौ [7][वि] व्याप्य वर्तमानः मही महत्यौ द्यावापृथिव्यौ अस्कभायत् अस्कभ्नात्। तथा जातः तयोर्मध्ये सूर्यात्मना प्रादुर्भूतः

---

१. जानातेर्वा लिट् S′, Kd. २. स च S′, Kd. ३. उद्भृत° S′, Kd.
४. °पदश्छांदसः S′, Kd. ५. ऋचेऽज्ञा पै ५,२,६. ६. क्षामन् भ्राजसी पै. ७. वि ष्कभायति पै. ८. स्वरश्चिन्त्यः (तु J. तै.); अस्तभा° तै २,३,१४,६ आश्रौ ४,६,३ ऐब्रा १,१९. ९. हिता पै ५,२,४; पिता आश्रौ. १०. अस्कभायत् J.

सन् याम् द्युलोकात्मकं ,सद्म सदनं पार्थिवम् पृथिवीसंबन्धि च रजः लोकम् । 'लोका रजांस्युच्यन्ते' इति हि यास्कः ( नि ४,१९ ) । स्वतेजसा व्याप्नोद् इत्यर्थः । पार्थिवम् इति । 'पृथिव्या ञाञौ' ( पावा ४,१,८५ ) इति अञ्प्रत्ययः ।

स [1]बुध्न्यादाष्ट्र [2]जनुषोऽभ्यग्रं बृहस्पतिर्देवता [3]तस्य सम्राट् ।
अहर्यच्छुक्रं ज्योतिषो [4]जनिष्टाथ द्युमन्तो वि वसन्तु [5]विप्राः ॥ ५ ॥

सः । [6]बुध्न्यात् । आष्ट्र[6] । जनुषः । अभि । अग्रम् । बृहस्पतिः । देवता । तस्य । सम्ऽराट् ।
अहः । यत् । शुक्रम् । ज्योतिषः । [7]जनिष्ट । अथ[7] । द्युऽमन्तः । वि । वसन्तु । विप्राः ॥ ५ ॥

सः परब्रह्मात्मकः प्रथमजो देवः जनुषः जनिमतो लोकस्य बुध्न्यात् । बुध्नं मूलम् । तत्संबन्धिदेशात् रसातलादिलक्षणाद् आरभ्य तस्यैव लोकस्य अग्रम् उपरिभागम् अभि अभिलक्ष्य [8]आष्ट आश्नुत व्याप्नोत् । अशू व्याप्तौ इत्यस्मात् लुङि ऊदित्वाद् इडभावपक्षे 'झलो झलि' ( पा ८,२,२६ ) इति सिचो लोपः । अपि च देवता । 'देवात् तल्' ( पा ५,४,२७ ) इति स्वार्थिकस्तल्प्रत्ययः । देवो दानादिगुणयुक्तो बृहस्पतिः तस्य जनिमतो लोकस्य सम्राट् सम्यक् राजमानोऽधिपतिः । संपूर्वाद् राजतेः 'सत्सूद्विष' ( पा ३,२,६१ ) इत्यादिना क्विप् । 'मो राजि समः क्वौ' ( पा ८,३,२५ ) इति समो मकारस्य मकारवचनाद् अनुस्वाराभावः । यद्वा तस्य प्रथमजस्य देवस्य प्रसादात् सम्राट् सम्यक् राजमानः अतिशयितदीप्तियुक्तः । वर्तत इत्यर्थः । यत् यदा शुक्रम् दीप्यमानम् अहः ज्योतिषो जनिष्ट द्योतमानात् सूर्याद् उत्पन्नम् अभूत् । अथ अनन्तरं द्युमन्तः दीप्तिमन्तो विप्राः मेधाविन ऋत्विजः वि वसन्तु स्वस्वव्यापारेषु विविधं वर्तन्ताम् । यद्वा विवसतिः परिचरणकर्मा । वि वसन्तु हविर्भिर्देवान् परिचरन्तु ।

नूनं तदस्य काव्यो हिनोति महो देवस्य [9]पूर्व्यस्य [10]धाम ।
एष [11]जज्ञे बहुभिः साकमित्था पूर्वे अर्धे विषिते [12]ससन् नु ॥ ६ ॥

नूनम् । तत् । अस्य । काव्यः । हिनोति । महः । देवस्य । पूर्व्यस्य । धाम ।
एषः । जज्ञे । बहुऽभिः । साकम् । इत्था । पूर्वे । अर्धे । विऽसिते । ससन् । नु ॥ ६ ॥

काव्यः । कवय ऋत्विजः । तत्संबन्धी यज्ञः काव्यः । स च अस्य दृश्यमानस्य महः महतः [9]पूर्वस्य सर्वदेवेभ्यः प्रथमम् उत्पन्नस्य देवस्य तत् धाम तेजोरूपं

१. बुध्न्यादाष्ट्र इति शोधः B, बुध्नादाष्ट्र D,Km,Sm,R; बुध्ना॰ P³,M,W,I,K²,Kp, बुध्नाद्वाष्ट तै २,३,१४,६ आश्रौ ४,६,३. २. जनुषा तै. आश्रौ. पै ५,२,४. ३. यस्य तै. ४. जनिष्टाथा पै ५,२,६. ५. अरिप्राः पै. ६. बुध्न्यात् । आष्ट्र P, बुध्नात् । आष्ट्र । A²,P,J. ७. जनिष्ठः । अथ । P, जनिष्टः । अथ । P², जनिष्ठ । अथ । J. ८. वैद्र. संपा. द्र. ९. पूर्वस्य P³,K,V,S, पै ५,२,५ सा. १०. महो पै. ११. जहो Bp,K,V. १२. सुसंनु B,Bb,D,Km,Sm,O,Op, सा.

मण्डलात्मकं स्थानं नूनम् निश्चयं हिनोति प्रेरयति । उदयाद्रिं प्रापयतीत्यर्थः । हि गतौ वृद्धौ च इति धातुः । एष च सूर्यः बहुभिः सहस्रसंख्याकैः रश्मिभिः साकम् सार्धम् इत्था अनेन प्रकारेण पूर्वे पूर्वदिक्संबन्धिनि विषिते विशेषेण संबद्धे अर्के देशे [1]ससम् । अन्ननामैतत् । हविर्लक्षणम् अन्नम् उद्दिश्य नु क्षिप्रं जज्ञे जायते । उदेतीत्यर्थः । इत्थेति । 'था हेतौ च च्छन्दसि' ( पा ५,३,२६ ) इति इदमः थाप्रत्ययः ।

[2]योऽथर्वाणं पितरं [3]देवबन्धुं [4]बृहस्पतिं नमसाव च गच्छात् ।
[5]त्वं विश्वेषां जनिता यथासः कविर्देवो न दभायत् स्वधावान् [5] ॥ ७ ॥

यः । अथर्वाणम् । पितरम् । देवऽबन्धुम् । बृहस्पतिम् । नमसा । अव । च । गच्छात् ।
त्वम् । विश्वेषाम् । जनिता । यथा । असः । कविः । देवः । न । दभायत् । स्वधाऽवान् ॥ ७ ॥

यः देवः [4]बृहस्पतिः [6]अथर्वाणम् प्रजापतिम् । 'अथर्वा वै प्रजापतिः' ( गोब्रा १,१,४ ) इति श्रुतेः । पितरम् लोकस्योत्पादकं देवबन्धुम् देवानां बन्धुं कारणभूतम् । यद्वा अथर्वाणम् महर्षिं पितरम् अस्माकं पितृभूतं देवबन्धुम् देवा इन्द्रादयो [7]बन्धवो बान्धवा[7] यस्य तथाविधं नमसा अन्नेन तथा अव गच्छात् अवगच्छेत् जानीयात् यथा येन प्रकारेण त्वं विश्वेषाम् सर्वेषां [8]स्थावरजङ्गमात्मकानां भावानां जनिता जनयिता असः भवेः । जनितेति । 'जनिता मन्त्रे' (पा ६,४,५३) इति णिलोपो निपात्यते । अस इति । अस्तेर्लेटि अडागमः । कविः क्रान्तदर्शी स देवः बृहस्पतिः स्वधावान् अन्नवान् हविर्लक्षणेन अन्नेन युक्तः सन् न दभायत् न दभ्नोति न हिनस्ति । सर्वम् अनुगृह्णातीत्यर्थः । दम्भु दम्भे । व्यत्ययेन श्ना । पूर्ववत् शायजादेशः ।

इति चतुर्थे काण्डे प्रथमेऽनुवाके प्रथमं सूक्तम् ।

'य आत्मदाः' इति सूक्तं वशाशमनकर्मणि शान्त्युदके अनुयोजयेत् । सूत्रितं हि — " 'य आत्मदाः' इति वशाशमनम्" इति प्रक्रम्य 'शान्त्युदकं करोति । तत्रैतत् सूक्तम् अनुयोजयति' ( कौसू ४४,१–४ ) इति ।

तथा संज्ञप्ताया वशाया यदि गर्भो दृश्येत तं गर्भम् अञ्जलौ गृहीत्वा सूत्रोक्तप्रकारेण अनेन सूक्तेन जुहुयात् । सूत्रितं हि — "यद्यष्टापदी स्याद् गर्भम् अञ्जलौ सहिरण्यं सयवं वा 'य आत्मदाः' इति [9]खदायां त्र्यरत्नावग्नौ सकृज्जुहोति" ( कौसू ४५,१ ) इति ।

तथा वशाशमनकर्मणि चरुहोमे अवदानहोमे च एतत् सूक्तम् । " 'य आत्मदाः' इति वशाशमनम्" ( कौसू ४४,१ ) इति सामान्येन सूत्रितत्वात् ।

१. वैतु. मंपा. द्र. २. यथा वाथर्वा पै ५,२,७. ३. विश्वदेवं K,V, पै. ४. °स्पतिः K,V, दा. पै. ५, त्वं विश्वस्य जनुषो? धातास्यग्रे कविर्देवो अदभायुः स्वधावान् पै. ६. आथर्वणं S', Kd. ७. बंधवोबाबांधवा S', Kd. ८. °जंगमात्मनां S', Kd. ९. खट्वायां S', Kd.

चातुर्मास्ये वरुणप्रघासाख्यपर्वणि 'य आत्मदाः' इत्यनया कायम् एककपालं हविरनुमन्त्रयते। उक्तं वैताने — "वारुणं मारुतं कार्यं वरुणोऽग्नौ 'य आत्मदाः'" (वैताश्रौ ८,२२) इति।

अग्निचयने प्राजापत्यपशोरवदानानुमन्त्रणे 'य आत्मदाः' इति। उक्तं वैताने — " 'य आत्मदाः' इत्यवदानानाम्" (वैताश्रौ २८,५) इति।

तत्रैव हिरण्मयपुरुषोपधाने 'हिरण्यगर्भः' (७) इत्येषा। तद् उक्तं वैताने—" 'हिरण्यगर्भः' इति हिरण्यपुरुषम्" (वैताश्रौ २८,३४) इति।

यं [1]आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
[2]योऽ३स्येशे द्विपदो यश्चतुष्पदः[1] कस्मै देवाय हविषा विधेम ॥ १ ॥

यः । आत्मऽदाः । बलऽदाः । यस्य । विश्वे । उपऽआसते । प्रऽशिषम् । यस्य । देवाः ।
यः । [3]अस्य । ईशे । द्विऽपदः । यः । चतुःऽपदः । कस्मै । देवाय । हविषा । विधेम ॥ १ ॥

यः प्रजापतिः आत्मदाः सर्वेभ्यः प्राणिभ्यः आत्मानं ददातीति आत्मदाः । प्राणप्रद इत्यर्थः। बलदाः बलस्य प्रदाता । 'आतो मनिन्°' (पा ३,२,७४) इति उभयत्रापि विच्प्रत्ययः। विश्वे सर्वे प्राणिनः यस्य देवस्य प्रशिषम् प्रकृष्टं शासनम् आज्ञाम् उपासते भजन्ते। आस उपवेशने। अदादित्वात् शपो लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। 'यद्वृत्तान्नित्यम्' (पा ८,१,६६) इति निघाताभावः। 'तिङि चोदात्तवति' (पा ८,१,७१) इति गतेरनुदात्तत्वम्। प्रशिषम् इति। 'क्वौ च शासः°' (पावा ६,४,३४) इति क्विबन्तस्य शास उपधाया इत्वम् । 'शासिवसिघसीनां च' (पा ८,३,६०) इति षत्वम्। तथा यस्य देवस्य प्रशासनं देवा अपि उपासते । यो देवः द्विपदः पादद्वय[4]युक्तस्य अस्य प्राणिजातस्य मनुष्यादेः ईशे ईष्टे । 'लोपस्त आत्मनेपदेषु' (पा ७,१,४१) इति तलोपः। पूर्ववत् लसार्वधातुकानुदात्तत्वे धातुस्वरः । तथा चतुष्पदः पादचतुष्टयोपेतस्य गोमहिषादेः प्राणिनः य ईष्टे तस्मै कस्मै। इदम् ईदृग् इत्यनिरुक्तरूपत्वात् किंशब्दवाच्याय प्रजापतये देवाय। 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वात् चतुर्थी। ईदृशं देवं हविषा विधेम परिचरेम। विधतिः परिचरणकर्मा। द्विपद इति। द्वौ पादावस्येति विगृह्य समासे 'संख्यासुपूर्वस्य' (पा ५,४,१४०) इति पादशब्दान्त्यलोपः। ततो ङसि भसंज्ञायां 'पादः पत्' (पा ६,४,१३०) इति पद्भावः। 'द्वित्रिभ्यां पाद्दन्मूर्धसु°' (पा ६,२,१९७) इति उत्तरपदान्तोदात्तत्वम्। चतुष्पद इत्यस्यापि रूपसिद्धिरेवमेव। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् विशेषः।

१. ओजोदा पै ४,१,२ मै २,१३,२३. २. योऽ३स्येशे° A,B,D,K,K[m],S[m],V. यस्य छायाऽमृतं यस्य मृत्युः ऋ १०, १२१, २ मा २५,११ तै ४,१,८,४ मै. काठ ४०,° पै. ३. अस्य P,P[2]. ४. °युक्तकस्य S', Kd.

**यः प्राणतो निमिषतो महित्वैको राजा[1] जगतो बभूव ।**
**[2]यस्य च्छायामृतं यस्य मृत्युः[2] कस्मै देवाय हविषा विधेम ॥ २ ॥**

यः । प्राणतः । निऽमिषतः । महिऽत्वा । एकः । राजा । जगतः । बभूव ।
यस्य । छाया । अमृतम् । यस्य । मृत्युः । कस्मै । देवाय । हविषा । विधेम ॥ २ ॥

यः प्रजापतिः महित्वा । तृतीयाया आकारः । महित्वेन माहात्म्येन प्राणतः प्रश्वसतः श्वासोच्छ्वासव्यापारं कुर्वतः । श्वस प्राणने अन च इति धातुः । लटः शत्रादेशे अदादित्वात् शपो लुक् । निमिषतः निमेषणं अक्षिपक्ष्मपरिस्पन्दलक्षणं व्यापारं कुर्वतः । मिष स्पर्धायाम् । अत्रापि पूर्ववत् शतरि तुदादित्वात् शः । उभयत्र 'शतुरनुमः" ( पा ६,१,१७३ ) इति षष्ठ्या उदात्तत्वम् । एवंभूतस्य जगतः जङ्गमस्य प्राणिजातस्य एकः असाधारणो राजा अधिपतिः बभूव भवति । 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति सार्वकालिको लिट् । 'लिति' ( पा ६,१,१९३ ) इति प्रत्ययात् पूर्वस्य उदात्तत्वम् । यस्य देवस्य अमृतम् मरणाभावोपलक्षितं अमृतत्वं छाया इव स्वाधीनं वर्तते । मृत्युः मरणं सर्वजनसंबन्धि छायेव यस्य वशो वर्तते । अमृतम् इति । 'नञो जरमरमित्रमृताः' ( पा ६,२,११६ ) इति उत्तरपदाद्युदात्तत्वम् । कस्मै देवाय इत्यादि व्याख्यातम् ।

**यं क्रन्दसी [3]अवतश्चस्कभाने भियसाने रोदसी [4]अह्वयेथाम् ।**
**[5]यस्यासौ पन्था[5] रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ३ ॥**

यम् । क्रन्दसी इति । अवतः । चस्कभाने इति । भियसाने इति । रोदसी इति । अह्वयेथाम् ।
यस्य । असौ । पन्थाः । रजसः । विऽमानः । कस्मै । देवाय । हविषा । विधेम ॥ ३ ॥

क्रन्दसी क्रन्दन्ति क्रोशन्ति अनयोराश्रिता जना इति क्रन्दसी द्यावापृथिव्यौ । क्रदि क्लदि आह्वाने रोदने च इति धातुः । अधिकरणे असुन्प्रत्ययः । अवतः । अवनम् अवः । 'घञर्थे कविधानम्' ( पावा ३,३,५८ ) इति भावे [6]कः । अवनात् जगद्रक्षणाद्धेतोः चस्कभाने संस्तभ्यमाने । यथा अधो न पततस्तथा निराधारप्रदेशे देवेन धार्यमाणे इत्यर्थः । स्कम्भेश्छान्दसो लिट् । 'लिटः कानज्वा' ( पा ३,२,१०६ ) इति तस्य कानजादेशः । भियसाने अधःपतनाद् बिभ्यत्यौ । ञिभी भये इत्यस्माद् औणादिकः असानच्प्रत्ययः । रोदसी रोदस्यौ द्यावापृथिव्यौ । यस्माद् अनयोर्मध्ये वर्तमानः प्रजापतिः अरोदीत् तस्माद् रोदिति अनयोरिति व्युत्पत्त्या रोदसी इति द्यावापृथिव्योर्नाम संपन्नम् । तथा च तैत्तिरीयकम्—'सोऽरोदीत् प्रजापतिः' इति प्रक्रम्य 'यद् अरोदीत् तद् अनयो रोदस्त्वम्' (तैब्रा २,२,९,४ ) इति । ईदृश्यौ द्यावापृथिव्यौ आत्मरक्षणार्थं

१. °त्वैक इद्राजा ऋ १०,१२१,३ तै ४,१,८,४ मा २३,३; निमिषतश्च राजा पतिर्विश्वस्य मै २,१३,२३ काठ ४०,१; विभर्ता पतिर्विश्वस्य पै ४,१,३. २. य ईशे अस्य द्विपदश्चतुष्पदः ऋ. प्रभृ. ३. अवसा तस्तभाने ऋ १०,१२१,६. ४. °येताम् K,S, सा. ऋ १०,५४,१. ५. यो अन्तरिक्षे ऋ १०,१२१,५. ६. तथा सति न स्वरसिद्धिः, क्रियापदमिति W.

यं देवम् [1]आह्वयेताम्। यस्य देवस्य संबन्धी असौ द्युलोकस्थः पन्थाः मार्गो रजसः उदकस्य वृष्टिलक्षणस्य विमानः विशेषेण निर्माता तस्मै। कस्मा इत्यादि गतम्।

यस्य॒ द्यौरु॒र्वी पृ॑थि॒वी च॑ म॒ही यस्या॒द [2]उ॒र्व१॒॑न्तरि॑क्षम्।
यस्या॒सौ सूरो॒ वित॑तो महि॒त्वा कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ४ ॥

यस्य॑। द्यौः। उ॒र्वी। पृ॒थि॒वी। च॒। म॒ही। यस्य॑। अ॒दः। उ॒रु। अ॒न्तरि॑क्षम्।
यस्य॑। अ॒सौ। सूरः॑।। विऽत॑तः। म॒हि॒ऽत्वा। कस्मै॑। दे॒वाय॑। ह॒विषा॑। वि॒धे॒म ॥ ४ ॥

यस्य देवस्य महित्वा महित्वेन माहात्म्येन द्यौः उर्वी विस्तीर्णा जाता। उरुशब्दाद् 'वोतो गुणवचनात्' (पा ४,१,४४) इति ङीष्। पृथिवी च यस्य महिम्ना मही महती विस्तीर्णा जाता। [3]यस्य च माहात्म्येन अदः एतद् अन्तरिक्षम् उरु विस्तीर्णम् अभवत्। असौ द्युलोके प्रत्यक्षं दृश्यमानः सूरः सूर्यः यस्य ब्रह्मणो महिम्ना विततः विस्तीर्णो जातः तस्मै। कस्मा इत्यादि समानम्।

[4]यस्य॒ विश्वे॑[4] [5]हि॒मव॑न्तो महि॒त्वा [6]स॑मु॒द्रे यस्य॑ [7]र॒साम॒दा॑हुः[7]।
[8]इ॒माश्च॑[8] प्र॒दिशो॒ [9]यस्य॑ बा॒हू[9] कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ५ ॥

यस्य॑। विश्वे॑। हि॒मऽव॑न्तः। म॒हि॒ऽत्वा। स॒मु॒द्रे। यस्य॑। र॒साम्। इत्। आ॒हुः।
इ॒माः। च॒। प्र॒ऽदिशः॑। यस्य॑। बा॒हू इति॑। कस्मै॑। दे॒वाय॑। ह॒विषा॑। वि॒धे॒म ॥ ५ ॥

यस्य प्रजापतेर्देवस्य महित्वा महिम्ना विश्वे सर्वे हिमवन्तः हिमवत्पर्वतोपलक्षिता महागिरयः संजाताः। यस्य च महिम्ना समुद्रे उदधौ। रसाम् रसोस्याम् अस्तीति रसा नदी। अर्शआदित्वाद् अच्। [10]रसति शब्दायत इति वा रसा। पचाद्यच्। 'रसा नदी भवति रसतेः शब्दकर्मणः इति यास्कः (नि ११,२५) जातावेकवचनम्। इच्छब्दः अवधारणे। सर्वा नदीः अन्तर्भूता एव आहुः ब्रुवन्ति। समुद्रा नद्यश्च यस्य विभूतिरूपा इत्यर्थः। इमाश्च प्रदिशः प्रधानभूताश्चतस्रो दिशः यस्य देवस्य बाहू बाहुभूताः तस्मै। कस्मा इत्यादि गतम्।

आपो॒ अग्रे॒ विश्व॑मावन् गर्भं॒ दधा॑ना अ॒मृता॑ ऋत॒ज्ञाः।
[11]यासु॒ †दे॒वीष्वधि॑ दे॒व[11] [12]आसी॑त् कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ६ ॥

१. वैतु. मंपा. द्र. २. उ॒र्व१॒॑न्त॰ Bh,D,Sm,R. ३. तस्य S',Kd. ४. यस्ये॒मे ऋ १०,१२१,४ मा २५,१२ तै ४,१,८,५; यस्ये॒मे विश्वे॑ मै २,१३,२३. ५. गिर॑यो मै. ६. समु॒द्रं ऋ. मा. तै. मै. पै ४,१,६. ७. र॒सया॑ स॒हाहुः ऋ. मा. तै. मै. पै. ८. यस्ये॒माः ऋ. मा. तै., दिशो॒ यस्य॑ मै. पै. ९. पञ्च दे॒वीः मै. पै. १०. रस इति S', Kd. ११. यो दे॒वेष्वधि॑ दे॒व एकः॑ ऋ १०,१२१,८ मा २७,२६ तै. † देवेष्व॰ S. सा. १२. द्र. I,RW; वैतु. शंपा. आसी॑त्.

आपः । अग्ने । विश्वम् । आवन् । गर्भम् । दधानाः । अमृताः । ऋतऽज्ञाः ।
यासु । देवीषु । अधि । देवः । [1]आसीत् । कस्मै । देवाय । हविषा । विधेम ॥ ६ ॥

अग्रे सृष्टयादौ सृष्टा आपः विश्वम् कृत्स्नं जगत् कारणरूपेण अवस्थितम् आवन् अरक्षन् उपचितम् अकुर्वन् । किं कुर्वत्यः । गर्भम् विश्वजगद्विधानाय गर्भरूपेण अवस्थितं हिरण्यगर्भं दधानाः धारयन्त्यः अमृताः अविनाशा ऋतज्ञाः । ऋतं सत्यं जगत्कारणं ब्रह्म । ब्रह्म जानानाः । स्मर्यते हि—

'अप एव ससर्जादौ तासु [2]वीर्यम् अवाकिरत्[2] ।'
'तद् अण्डम् अभवद्धैमम् ××× ।' ( मस्मृ १,८;९ ) इति ।

दधाना इति । 'अभ्यस्तानामादिः' ( पा ६,१,१८९ ) इति आद्युदात्तत्वम् । ऋतज्ञा इति । ज्ञा अवबोधने । 'आतोऽनुपसर्गे कः' ( पा ३,२,३ ) इति कः । यासु अप्सु [3]देवेषु लिङ्गव्यत्ययः । देवीषु देवतारूपासु देवः गर्भभूतः अध्यासीत् । अधिकम् अवर्धतेत्यर्थः । ता आप इति संबन्धः । तस्मै अपां गर्भभूताय । कस्मा इत्यादि गतम् ।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीमुत द्यां कस्मै देवाय हविषा विधेम ॥ ७ ॥

हिरण्यऽगर्भः । सम् । अवर्तत । अग्रे । भूतस्य । जातः । पतिः । एकः । आसीत् ।
सः । दाधार । पृथिवीम् । उत । द्याम् । कस्मै । देवाय । हविषा । विधेम ॥ ७ ॥

हिरण्यगर्भः हिरण्यस्य हिरण्मयस्याण्डस्य गर्भः गर्भवद् अन्तरवस्थितः अग्रे सर्वजगत्सृष्टेः प्राक् समवर्तत उदपद्यत । स च जातः सन् भूतस्य सत्तया प्रतिभासमानस्य प्रपञ्चस्य एकः असाधारणः पतिः ईश्वर आसीत् । स्मर्यते हि—

'स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिगर्भः स भूतानां ब्रह्माग्रे समवर्तत ॥' इति ।

स च पृथिवीम् इमां भूमिम् । उतशब्दः समुच्चये । द्याम् दिवं च दाधार धृतवान् । पृथिव्याद्युपलक्षितं कृत्स्नं जगत् सृष्टवान् इत्यर्थः । गतम् अन्यत् ।

आपो [4]वत्सं [5]जनयन्तीर्गर्भमग्रे समैरयन् ।
तस्योत जायमानस्योल्ब[6] आसीद्धिरण्ययः कस्मै देवाय हविषा विधेम ॥ ८ ॥

१. आसीत् शंपा. २. बीजमवासृजत् इति उपलभ्यमानः पाठः. ३. वैतु. भंपा. द्र.
४. गर्भं पै ४,१,८. ५ °न्तीर्वत्समग्रे पै. ६. °स्योल्बा S^m.

आपः। ¹वत्सम्। जनयन्तीः। गर्भम्। अग्रे। सम्। ऐरयन्।
तस्य। उत। जायमानस्य। उल्बः। आसीत्। हिरण्ययः। कस्मै। देवाय। हविषा। विधेम॥ ८॥

ईश्वरेण प्रथमसृष्टा आपः वत्सम् पुत्रभूतं हिरण्यगर्भं जनयन्तीः। हेतौ शतृप्रत्ययः। उत्पादनहेतोः अग्रे ततः प्राक्काले गर्भं समैरयन्। ईश्वरेण विसृष्टं वीर्यं गर्भाशयं प्रापयन्। तस्य गर्भीभूतस्य हि जायमानस्य हिरण्यगर्भाख्यस्य प्रजापतेः। उतशब्दः अप्यर्थे। स च भिन्नक्रमः। उल्बः अपि। गर्भवेष्टनः पट उल्बशब्दवाच्यः। सोपि हिरण्ययः हिरण्मयः सुवर्णमयं एव आसीत्। 'तद् अण्डम् अभवद्धैमम्' इति प्रागुक्तहिरण्मयाण्डाभिप्रायम् एतत्। 'ऋत्व्यवास्त्व्य' (पा ६,४,१७५) इत्यादिना हिरण्यशब्दो निपातितः। कस्मा इत्यादि व्याख्यातम्।

इति चतुर्थे काण्डे प्रथमेऽनुवाके द्वितीयं सूक्तम्।

'उदितस्त्रयो अक्रमन्' इति सूक्तेन गवादीनां व्याघ्रचोरादिभयनिवृत्त्यर्थं खादिरं शङ्कुं संपात्य अभिमन्त्र्य तेन गोसंचारभूमिं लिखन् गा अनुव्रजेत्।

तथा अनेन ²उदघटम् अभिमन्त्र्य² गोप्रचारदेशे निनयेत्। ततः पांसुकूटं तत्र कृत्वा अर्धं दक्षिणहस्तेन विक्षिपेत्।

एवमेव अनेन सूक्तेन सारूपवत्सम् ओदनम् इन्द्राय त्रिर्जुहुयात्।

सूत्रितं हि—" 'उदितः' इति खादिरं शङ्कुं संपातवन्तम् उद्गृह्णन् ³निखनन् गा अनुव्रजति" ( कौसू ५१,१ ) इत्यादि।

उदितस्त्रयो अक्रमन् व्याघ्रः पुरुषो वृकः।
हिरुग्घि यन्ति सिन्धवो हिरुग् देवो वनस्पतिर्हिरुङ् नमन्तु शत्रवः॥ १॥

उत्। इतः। त्रयः। अक्रमन्। व्याघ्रः। पुरुषः। वृकः।
हिरुक्। हि। यन्ति। सिन्धवः। हिरुक्। देवः। वनस्पतिः। हिरुक्। नमन्तु। शत्रवः॥ १॥

व्याजिघ्रति विशिष्टाऽऽघ्राणमात्रेण प्राणिनो हन्तीति व्याघ्रः। घ्रा गन्धोपादाने इत्यस्मात् 'आतश्चोपसर्गे' (पा ३,१,१३६) इति कप्रत्ययः। तथा पुरुषः चोरः। 'परमेणोत तस्करः' इति उत्तरत्र (२) तस्यैवानुकीर्तनात्। वृकः अरण्यश्वा प्राणिनां घातकः एते त्रयः इतः अस्मात् स्थानात् उदक्रमन् उदक्रामन् उत्क्रान्ता उत्थिता अभवन्। यद्वा इतः अस्मात् स्थानात् उदक्रमन् उत्थाय पलायन्ताम्। 'क्रमः परस्मैपदेषु' (पा ७,३,७६) इति दीर्घाभावश्छान्दसः। ते यथा हिरुक्। अन्तर्हितनामैतत्। अन्तर्हिता

१. वत्सं P. २. °दमभिमभिमं° S', Kd. ३. तु. Bl. के.; वैद्य. शंपा. लिखन्.

भवन्ति तथा सिन्धवः स्यन्दनशीला नद्यः यन्ति गच्छन्ति। हिशब्दः प्रसिद्धौ। यद्वा यथा हि सिन्धवो हिरुक् अन्तर्हिता गूढाशया यन्ति प्रवहन्ति तथा व्याघ्रादयो अन्तर्हिताः। दृग्गोचरा न भवन्तु इत्यर्थः। तथा वनस्पतिः वनानां पतिः अधिष्ठाता देवः तत्र अन्तर्हितो वर्तते तद्वद् व्याघ्रादयोपि हिरुक् अन्तर्हिता भवन्तु। वनस्पतिरिति। पारस्करादित्वात् सुट्। 'उभे वनस्पत्यादिषु°' (पा ६,२,१४०) इति उभयपदप्रकृतिस्वरत्वम्। अपि च व्याघ्रादीनां ये शत्रवः विरोधिनः सन्ति ते तान् व्याघ्रादीन् हिरुक् नमन्तु अन्तर्हितान् कुर्वन्तु। यद्वा शातनशीलास्ते व्याघ्रादयः अन्तर्हिताः सन्तः प्रह्वा भवन्तु।

'परे॑णैतु प॒था वृक॑ः 'पर॒मेणो॒त तस्क॑रः[2]।
परे॑ण द॒त्वती॒ रज्जु॒ः परे॑णाघा॒युर॑र्षतु[3] ॥ २ ॥

परे॑ण। ए॒तु॒। प॒था। वृक॑ः। प॒र॒मेण॑। उ॒त। तस्क॑रः।
परे॑ण। द॒त्वती॑। रज्जु॑ः। परे॑ण। अ॒घ॒ऽयुः। अ॒र्ष॒तु॒ ॥ २

परेण अस्मत्संचारमार्गाद् अन्येन पथा वृकः अरण्यश्वा एतु गच्छतु। उतशब्दः अप्यर्थे। तस्करः चोरोपि परमेण ततोपि दूरतरेण मार्गेण गच्छतु। [4]"किंयत्तद्बहुषु कृञोऽज्विधानम्' (पावा ३,२,२१) इति तच्छब्दोपपदे करोतेरच्। 'तद्बृहतोः करपत्योः°' (पा ६,१,१५७) इति चोरेभिधेये सुट् तलोपः। दत्वती दन्तवती रज्जुः रज्ज्वाकृतिः सर्पः परेण अन्येन मार्गेण गच्छतु। दन्ता अस्याः सन्तीति मतुपि 'पद्दन्' (पा ६,१,६३) इत्यादिना दन्तशब्दस्य दद्भावः। तथा अघम् पापं हिंसनं परेषाम् इच्छतीति अघायुः। 'छन्दसि परेच्छायामपि' (पावा ३,१,८) इति क्यच्। 'अश्वाघस्यात्' (पा ७,४,३७) इति आत्त्वम्। 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः। य एवंविधः अन्योपि हिंस्रः प्राणी अस्मत्संचरणप्रदेशे विद्यते सोपि परेण अन्येन पथा अर्षतु गच्छतु। ऋषी गतौ इति धातुः।

[5]अ॒क्ष्यौ॑ च ते॒ [6]मुखं॑ च [7]ते॒ व्याघ्र[7] जम्भयामसि।
आत् सर्वा॑न् [8]विंश॒तिं न॒खान् ॥ ३ ॥

अ॒क्ष्यौ॑। च॒। ते॒। मुख॑म्। च॒। [7]ते॒। व्या॒घ्र[7]। ज॒म्भ॒या॒म॒सि॒।
आत्। सर्वा॑न्। विं॒श॒तिम्। न॒खान् ॥ ३ ॥

हे व्याघ्र ते तव [6]अक्षी अक्षिणी च मुखं च आस्यं च जम्भयामसि जम्भयामः।

१. परमेण पै २,८,२. २. परेण स्तेनो अर्षतु पै. ३. °रर्ष्येतु Bh,Sm. ४. 'दिवाविभा' इत्यादिना° करोतेष्टः शंपा. ५. अक्ष्यौ A,K,Km,R,P,P², Bp²,I,O,Op,K²,D² पै ३,८,३ [मूको], सा; अक्षी Sm. ६. हनू पै. ७. तु. RW.; वैतु. मूको. (तु. शंपा. Wh.) ते व्याघ्र, (पपा. ते॒। व्या॒घ्र) सात.² ते व्याघ्र जंभ° ८. विंशतिं D,P. ९. वैतु. मंपा. द्र.

जभि नाशने । 'इदन्तो मसि' ( पा ७,१,४६ ) । आत् अनन्तरं विंशतिम् विंशतिसंख्याकान् पादचतुष्टये पञ्चशोऽवस्थितान् सर्वान् नखान् विनाशयामः । 'पङ्क्तिविंशति' (पा ५,१,५९) इत्यादिना निपातितो विंशतिशब्दः । संख्येयानां बहुत्वेपि विंशतिसंख्याया एकत्वात् तदभिप्रायेण एकवचनम् ।

व्याघ्रं दत्वतां वयं प्रथमं जम्भयामसि ।
आदु ष्टेनमथो अहिं यातुधानमथो वृकम् ॥ ४ ॥

व्याघ्रम् । दत्वताम् । वयम् । प्रथमम् । जम्भयामसि ।
आत् । ऊं इति । स्तेनम् । अथो इति । अहिम् । यातुऽधानम् । अथो इति । वृकम् ॥४॥

दत्वताम् दन्तवतां खादनशीलानां हिंस्राणां मध्ये व्याघ्रम् शार्दूलं प्रथमं वयं जम्भयामसि जम्भयामः नाशयामः । आदु अनन्तरमेव स्तेनम् तस्करं जम्भयामः । अथो अनन्तरमेव अहिम् सर्पं यातुधानम् यक्षरक्षःप्रभृतिग्रहम् *[अथो] वृकम् सालावृकं च नाशयामः ।

यो अद्य स्तेन आयति स संपिष्टो अपायति ।
पथामपध्वंसेनैत्विन्द्रो वज्रेण हन्तु तम् ॥ ५ ॥

यः । अद्य । स्तेनः । आऽअयति । सः । सम्ऽपिष्टः । अप । अयति ।
पथाम् । अपऽध्वंसेन[1] । एतु । इन्द्रः । वज्रेण । हन्तु । तम् ॥ ५ ॥

अद्य इदानीं यः स्तेनः चोरः आयति आगच्छति । अय पय गतौ । स चोरः संपिष्टः अस्माभिश्चूर्णीकृतः सन् अपायति अपगच्छति । अपक्रामतु इत्यर्थः । स च पथाम् मार्गाणां मध्ये [2]ध्वंसेन ध्वंसकेन कष्टेन मार्गेण [2]अप एतु अपगच्छतु । तादृशेन मार्गेण अपगच्छन्तं तम् इन्द्रो देवः वज्रेण स्वकीयेन आयुधेन हन्तु हिनस्तु ।

मूर्णा मृगस्य दन्ता [3]अपिशीर्णा उ पृष्टयः ।
निम्रुक् ते गोधा भवतु नीचायच्छशयुर्मृगः ॥ ६ ॥

मूर्णाः । मृगस्य । दन्ताः । अपिऽशीर्णाः । ऊं इति । [4]पृष्टयः ।
निऽम्रुक् । ते । गोधा । भवतु । नीचा । अयत् । शशयुः । मृगः ॥ ६ ॥

मृगस्य हिंस्रस्य व्याघ्रादेः दन्ताः मूर्णाः मूढाः खादनसमर्था न भवन्तु । [5]मुर्छा

• १. °ध्वंसेन P. २. वैतु. मंपा. द्र. ३. अपशीर्णा Sm, उपशीर्णा पै २,८,४.
४. °ष्ट° P. ५. मूर्छा S', Kd.

मोहसमुच्छ्राययोः इत्यस्माद् निष्ठा । 'रालोपः' (पा ६,४,२१) इति छकारलोपः । 'रदाभ्याम्०' (पा ८,२,४२) इति निष्ठानत्वम् । 'न ध्याख्यापृमूर्छिमदाम्' (पा ८,२,५७) इति निषेधस्तु छान्दसत्वाद् न प्रवर्तते । [1]शीर्ष्णाः शिरसि भवा हिंसकाः शृङ्गादयः अवयवा [1]अपि मूढा भवन्तु । उशब्दः समुच्चये । पृष्टयः पर्शवः । पार्श्वास्थीन्यपि मूढानि भवन्तु । हे पान्थ ते तव गोधा एतत्संज्ञः प्राणी [2]निम्रुक् भवतु दृष्टिविषयो न भवतु । [3]ग्रुचु म्लुचु गत्यर्थाः इत्यस्मात् निपूर्वात् दर्शनवाचिनः क्विप् । शशयुः । [4]शयनशीलो दुष्टो मृगः । नीचा न्यग्भूतेन मार्गेण अयत् अयतु गच्छतु । अयतेर्लेटि अडागमः । शशयुरिति । शीङ् स्वप्ने इत्यस्मात् 'भृमृशी' (पाउ १,७) इत्यादिना उप्रत्ययः । बाहुलकाद् द्विर्वचनम् ।

यत् सं॒यमो॒ न वि य॒मो॒ वि य॒मो॒ यन्न सं॒यमः॑ ।
इ॒न्द्र॒जाः सो॑म॒जा आ॑थर्व॒णम॑सि व्या॒घ्र॒जम्भ॑नम् ॥ ७ ॥

यत् । स॒म्ऽय॒मः॑ । न । वि । य॒मः॑ । वि । य॒मः॑ । यत् । न । स॒म्ऽय॒मः॑ ।
इ॒न्द्र॒ऽजाः । सो॒म॒ऽजाः । आ॒थ॒र्व॒णम् । अ॒सि॒ । व्या॒घ्र॒ऽजम्भ॑नम् ॥ ७ ॥

इन्द्रजाः इन्द्राज्जातः सोमजाः सोमाज्जातः । उभयत्र 'जनसनखनक्रमगमो विट्' (पा ३,२,६७) । 'विड्वनोरनुनासिकस्यात्' (पा ६,४,४१) इति आत्वम् । एवंविधः संयमः संयमनं सम्यग् व्याघ्रादीनां मन्त्रसामर्थ्येन नियमनं यत् अस्ति न असौ [5]वियमः विरुद्धयमनं भवति । कृतस्य संयमस्य अन्यथाभावो नास्तीत्यर्थः । तथा [5]वियमः वियमनं विरुद्धप्रापणं यत् मन्त्रेण [6]क्रियते न अयं संयमः । तत् तथैव भवतीत्यर्थः[7] । आथर्वणस्य क्रियाकलापस्य न कुत्रापि अन्यथाभावोस्तीत्यर्थः । अनेन सूक्तेन क्रियमाणं खादिरशङ्कालेखनादिकं क्रियाकलापं संबोध्य ब्रूते — हे क्रियाकलाप त्वम् आथर्वणम् अथर्वणा महर्षिणा दृष्टं कृतं वा व्याघ्रजम्भनम् उपलक्षणम् एतत् । व्याघ्रादिदुष्टप्राणिहिंसकम् असि भवसि । अथर्वन्शब्दाद् अणि 'अन्' (पा ६,४,१६७) इति प्रकृतिभावः ।

इति चतुर्थकाण्डे प्रथमेऽनुवाके तृतीयं सूक्तम् ।

'यां त्वा गन्धर्वः' इति सूक्तेन पुरुषस्य वीर्यकरणकर्मणि कपित्थकमूलम् ओषधिवत् खात्वा दुग्धे श्रपयित्वा अभिमन्त्र्य अधिज्यं धनुः उत्सङ्गे कृत्वा वीर्यकामः पुरुषः पिबेत् ।

एवमेव कीलके मुसले वा उपविश्य पूर्ववद् अभिमन्त्र्य पिबेत् ।

सूत्रितं हि — 'यां त्वा गन्धर्वो अखनद्', 'वृषणस्ते खनितारः' (पै ४,५,२) इति प्रक्रम्य '[6]दुग्धफाण्टावधिज्यम् उपस्थ[6] आधाय पिबति । मयूखे मुसले वासीनः' (कौसू ४०,१४-१६) इति ।

१. वैतु. मंपा. द्र. २. निम्रुक् S', Kd. ३. म्रुचु S', Kd. ४. शशन° S', Kd.
५. क्रियते तत्तथैव भवति नायं संयम इत्यर्थः S', Kd. ६. द्र. के.; वैतु. दुग्धे फाण्टावधिज्योपस्थ Bl.

यां त्वा गन्धर्वो अखनद् वरुणाय [1]मृतभ्रजे ।
तां त्वा वयं खनामस्योषधिं [2]शेपहर्षणीम् ॥ १ ॥

याम् । त्वा । गन्धर्वः । अखनत् । वरुणाय । मृतऽभ्रजे ।
ताम् । त्वा । वयम् । खनामसि । ओषधिम् । [2]शेपःऽहर्षणीम् ॥ १ ॥

मृतभ्रजे नष्टवीर्याय वरुणाय पुनस्तस्य वीर्यं जनयितुं हे ओषधे यां त्वा त्वां गन्धर्वो अखनत् खननेन उद्धृतवान् ताम् तादृशीं त्वा त्वां [3]शेपोहर्षणीम् शेपसः पुंस्प्रजननस्य वर्धनीं वीर्यप्रदानेन उन्नमयित्रीम् ओषधिम् कपित्थकाख्यां वयं खनामसि खनामः । शेपोहर्षणीम् इति । 'वृह्शीङ्भ्यां रूपस्वाङ्गयोः [4]पुट् च' ( पाउ ४,२०१ ) इति स्वाङ्गे अभिधेये शीङः असुन् [4]पुट् आगमश्च । हृष्यतेः करणे ल्युट् । टित्वाद् ङीप् ।

उदुषा उदु सूर्य उदिदं मामकं वचः ।
उदेजतु प्रजापतिर्वृषा शुष्मेण वाजिना ॥ २ ॥

उत् । उषाः । उत् । ऊं इति । सूर्यः । उत् । इदम् । मामकम् । वचः ।
उत् । एजतु । प्रजाऽपतिः । वृषा । शुष्मेण । वाजिना ॥ २ ॥

उषाः सूर्यस्य पत्नी देवी वाजिना बलवता शुष्मेण वीर्येण उद् एजतु उद्वृत्तं करोतु । उशब्दः चार्थे । सूर्यश्च उद् एजतु । उत्कृष्टवीर्ययुक्तं करोतु । मामकम् मदीयम् इदम् मन्त्रात्मकं वचः उद् एजतु । तथा वृषा वर्षकः प्रजापतिः प्रजानां पतिः सर्वजगत्स्रष्टा देवः उक्तलक्षणेन वीर्येण उदेजतु लम्बमानं पुंस्प्रजननं उत्कम्पयतु । एजृ कम्पने इति धातुः । प्रजापतिरिति । प्रजायन्ते इति प्रजाः । 'उपसर्गे च संज्ञायाम्' ( पा ३,२,९९ ) इति डप्रत्ययः । षष्ठीसमासे 'पत्यावैश्वर्ये' ( पा ६,२,१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् ।

यथा स्म ते [5]विरोहतोभितप्तमिवानति ।
ततस्ते शुष्मवत्तरमियं कृणोत्वोषधिः ॥ ३ ॥

यथा । स्म । ते । विऽरोहतः । अभितप्तम्ऽइव । अनति ।
ततः । ते । शुष्मवत्ऽतरम् । इयम् । कृणोतु । ओषधिः ॥ ३ ॥

हे वीर्यकाम पुरुष ते तव [3]विरोहितः पुत्रपौत्रादिरूपेण विरोहणस्य निमित्तं पुंव्यञ्जनम् अभितप्तं फण्यङ्गमिव यथा स्म येन प्रकारेण खलु अनति चेष्टते ततः तेनैव

१. मृतभ्रजे? पै ४,५,१. २. शेपोह° S, सा. ३. वैद्. मंपा द्र. ४. पुक् S', Kᵈ
५. °रोहि° K,V, सा.; °रोहि° ( पक्षे) Bp; °रोह° > °रोहि° > °रोह° R.

प्रकारेण इयम् ओषधिः ते तव पुंव्यञ्जनं शुष्मवत्तरम् अतिशयितवीर्ययुक्तं कृणोतु करोतु ।

[1]उच्छुष्मौषधीनां [2]सार ऋषभाणाम् ।
सं [3]पुंसामिन्द्र वृष्ण्यमस्मिन्[4] धेहि तनूवशिन्[5] ॥ ४ ॥

उत् । [6]शुष्मा । ओषधीनाम् । सारा । ऋषभाणाम् ।
सम् । पुंसाम् । इन्द्र । वृष्ण्यम् । अस्मिन् । धेहि । तनूऽवशिन्[5] ॥ ४ ॥

ओषधीनाम् अन्यासां वीर्ययुक्तानां वीरुधाम् इयम् ओषधिः शुष्मा वीर्यरूपा ऋषभाणाम् सेचनसमर्थानां वीर्यवतां सारा सारभूता। तादृशी ओषधिः इमं पुरुषम् उत् ईरयतु वीर्ययुक्तं करोतु । सार ऋषभाणाम् इति । 'ऋत्यकः' ( पा ६,१,१२८ ) इति प्रकृतिभावः । हे इन्द्र [3]संपूषाम् सम्यक् पोषयित्रीणाम् ओषधीनां संबन्धि यद् वृष्ण्यम् वीर्यम् अस्ति तद् अस्मिन् पुरुषे [5]तनूवशम् शरीराधीनं कृत्वा धेहि धारय । [3]संपूषाम् इति । पुष पुष्टौ इत्यस्मात् 'क्विप् च' ( पा ३,२,७६ ) इति क्विप् । धेहीति 'घ्वसोरेद्धौ°' ( पा ६,४,११९ ) इति एत्वाभ्यासलोपौ ।

अपां रसः [7]प्रथमजोऽथो[8] वनस्पतीनाम् ।
[9]उत सोमस्य [10]भ्रातास्युतार्शमसि वृष्ण्यम् ॥ ५ ॥

अपाम् । रसः । प्रथमऽजः । अथो इति । वनस्पतीनाम् ।
उत । सोमस्य । भ्राता । असि । उत । आर्शम् । असि । वृष्ण्यम् ॥ ५ ॥

हे कपित्थकमूल त्वम् अपाम् मथ्यमानानां प्रथमजः प्रथमम् उत्पन्नो रसः अमृतात्मकस्त्वम् असि । अथो अपि च वनस्पतीनाम् समानजातीयानां वृक्षाणां सारभूतोसि । उत अपि च सोमस्य ओषधीनामधिपतेः अमृतमयस्य देवस्य भ्राता सहजोसि अमृतमथनकाले सहोत्पन्नत्वात् । उत अपि च [10]आर्षम् ऋषीणाम् अङ्गिरःप्रभृतीनां संबन्धि वृष्ण्यम् मन्त्रप्रभावजनितं वीर्यम् असि ।

अद्याग्ने अद्य सवितरद्य [11]देवि सरस्वति ।
[12]अद्यास्य ब्रह्मणस्पते धनुरिवा तानया पसः ॥ ६ ॥

अद्य । अग्ने । अद्य । सवितः । अद्य । देवि । सरस्वति ।
अद्य । अस्य । ब्रह्मणः । पते । धनुःऽइव । आ । तानय । पसः ॥ ६ ॥

१. उच्छु° K,K^m,B^h,V; उच्छुष्मा ओ° ऋ १०,९७,८ मा १२,८२ प्रभृ.; सं शुष्मा ओ° पै ४,५,७. २. सं वाजा पै. ३. पूषा° K,S, सा. पै ⌊मूको.⌋; पूंषा° R. ४. °मस्मै देहि पै. ५. °वशम् K, सा. °बलम् पै. ६. शुष्मा K. ७. वैतु मंपा. द्र. ८. ओषधीनामथो पै ४,५,५. ९. अथो पै. १०. भ्रातास्यार्ष्यम° पै. ११. देव बृहस्पते पै ४,५,८. १२. अद्य मे पै.

हे अग्ने अद्य इदानीम् अस्य वीर्यकामस्य पसः पुंव्यञ्जनं वीर्यप्रदानेन धनुरिव आ तानय आततम् ऊर्ध्वायतं कुरु । अथ सवितः इत्यादिकम् एवं योज्यम् । सविता सर्वस्य प्रेरको देवः । देवी देवतारूपा सरस्वती । अनेन विशेषणेन नदीरूपाया व्यावृत्तिः । ब्रह्मणस्पतिर्मन्त्रस्याधिपतिर्देवः । आ तानयेति । तनु विस्तारे इत्यस्मात् ण्यन्तात् लोट् । पसःशब्दस्य लिङ्गवाचित्वम् 'आहतं गभे पसो निजल्गुलीति धाणिका' (तै ७,४, १९,३ ) इत्यादिमन्त्रान्तरप्रसिद्धम् ।

आहं तनोमि ते पसो अधि ज्यामिव धन्वनि ।
'क्रमस्वर्श इव रोहितमनवग्लायता' 'सदा ॥ ७ ॥

आ । अहम् । तनोमि । ते । पसः । अधि । ज्याम्ऽइव । धन्वनि ।
क्रमस्व । ऋशःऽइव । रोहितम् । अनवऽग्लायता । सदा ॥ ७ ॥

हे वीर्यकाम ते त्वदीयं पसः पुंव्यञ्जनम् अहम् आ तनोमि मन्त्रप्रभावेन आततं वीर्ययुक्तं करोमि । तत्र दृष्टान्तः—धन्वनि धनुषि अध्यारोपितां ज्यामिव मौर्वीमिव । तस्मात् त्वम् [3]ऋश इव सेचनसमर्थो वृषभ इव रोहितम् [3]अनु पुंव्यञ्जनम् अनु [3]वल्गूयेता नृत्यता मनसा सदा सर्वदा क्रमस्व भार्याम् आक्रमस्व । 'वृत्तिसर्गतायनेषु क्रमः' (पा १,३,३८ ) इति आत्मनेपदम् । वल्गूयतिः कण्ड्वादिः । ततो यगन्तात् लटः शत्रादेशः ।

अश्वस्याश्वतरस्याजस्य पेत्वस्य च ।
[4]अथ ऋषभस्य ये वाजास्तानस्मिन् धेहि तनूवशिन् ॥ ८ ॥

अश्वस्य । अश्वतरस्य । अजस्य । पेत्वस्य । च ।
अथ । ऋषभस्य । ये । वाजाः । तान् । अस्मिन् । धेहि । तनूऽवशिन् ॥ ८ ॥

अश्वः प्रसिद्धः । अश्वतरस्तु अश्वगर्दभयोः सांकर्येण उत्पन्नो जातिविशेषः । अजः छागः । पेत्वो मेषः । ऋषभः गोजातिः सेक्ता पुमान् । अथशब्दः चार्थे । एतेषाम् अश्वादीनां ये वाजाः यानि वीर्याणि सन्ति तान् वाजान् हे ओषधे [3]तनूवशाम् तन्वाः शरीरस्य वशो यथा भवति तथा अस्मिन् वीर्यकामे पुंव्यञ्जने वा धेहि स्थापय ।

इति चतुर्थे काण्डे प्रथमेऽनुवाके चतुर्थं सूक्तम् ।

१. क्रमस्व ऋश इव रोहितमनु वल्गूयता V,S, सा. २. त्वम् पै १९,१३,१९
३. °वेतु. मंपा. द्र. ४. अथर्व° A,RW.

'सहस्रशृङ्गः' इति सूक्तेन स्त्र्यभिगमने तस्यास्तत्परिसरवर्तिनां च स्वापनार्थम् उदपात्रं संपात्य अभिमन्त्र्य तेन शयनशालां प्रोक्ष्य शेषम् [1]अभ्यन्तरद्वारे निनयेत्।

तथा नग्नः सन् अनेनैव उलूखलम् अभिमन्त्रयेत।

तथा गृहस्योत्तरां [2]स्रक्तिं स्त्रीखट्वाया दक्षिणं पादं रज्जुं वा अभिमन्त्रयेत।

सूत्रितं हि—" 'सहस्रशृङ्गः' इति स्वापनम्। उदपात्रेण संपातवता शालां संप्रोक्ष्यापरस्मिन् द्वारपक्षे न्युब्जति। एवं नग्नः। उलूखलम् उत्तरां स्रक्तिं [3]दक्षिणं शयनपादं[3] [4]तन्तून् अभिमन्त्रयते" (कौसू ३६,१-४) इति।

[5]सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत्।
तेना सहस्येना वयं नि जनान्त्स्वापयामसि ॥ १॥

सहस्रऽशृङ्गः। वृषभः। यः। समुद्रात्। उत्ऽआचरत्।
तेन। सहस्येन। वयम्। नि। जनान्। स्वापयामसि ॥ १॥

सहस्रशृङ्गः सहस्ररश्मिः सूर्यः वृषभः वर्षिता कामानां वृष्टिजलस्य वा। स्मर्यते हि—

'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः।' (मस्मृ ३,७६) इति।

एवंभूतो य आदित्यः समुद्रात् अम्बुधेः। यद्वा समुद्रम् इति अन्तरिक्षनाम। अन्तरिक्षप्रदेशाद् उदयाचलपरिसरवर्तिनः उदाचरत् उदगाद् तेन उदितेन सहस्येन। सहः शत्रूणाम् अभिभवनम्। तत्र साधुः सहस्यः। तादृशेन आदित्येन वयं जनान् अवस्थितान् नि स्वापयामसि निष्वापयामः। स्वापेन परवशान् कुर्मः।

न भूमिं वातो [6]अति वाति नाति पश्यति [7]कश्चन।
[8]स्त्रियश्च सर्वाः [9]स्वापय शुनश्चेन्द्रसखा चरन् ॥ २ ॥

न। भूमिम्। वातः। अति। वाति। न। अति। पश्यति। कः। चन।
स्त्रियः। च। सर्वाः। [9]स्वापय। शुनः। च। इन्द्रऽसखा। चरन् ॥ २ ॥

वातः वायुः भूमिं नाति वाति नातिमात्रं गच्छतु। अतिवातेन स्वापभङ्गो मा भूद् इत्यर्थः। तथा कश्चन यः कोपि तत्रस्थो जनः नाति पश्यति अतिशयेन न पश्यतु।

---

१. अभ्यंतरे द्वारे S′, Kd.  २. स्त्रीणां S′, Kd.  ३. दक्षिणशयन° Bl.
४. तनूर् S′, Kd.  ५. हिरण्यशृङ्गो पै ४,६,१.  ६. उद् पै ४,६,२.  ७. सूर्यः पै.
८. जनांश्च सर्वान् पै.  ९. तु. सा. पै.; वैतु. A,D,K,K^m,R,S^m,P^3,M,W,E^2,I,H,K^2, Op स्वापयुः; P,P^3,J स्वापयं:.

स्वापपरवशो भवतु इत्यर्थः। अपि च हे वात त्वम् इन्द्रसखा। इन्द्रः आत्मा। स सखा यस्य प्राणवायोः तदात्मकः चरन् देहे वर्तमानः तत्र परितोऽवस्थिताः सर्वाः स्त्रियश्च शुनश्च स्वापय। श्वन्शब्दात् शसि 'श्वयुवमघोनामतद्धिते' (पा ६,४,१३३) इति संप्रसारणम्।

प्रोष्ठेशयास्तल्पेशया नारीर्या ¹वह्यशीवरीः।
स्त्रियो याः ²पुण्यगन्धयस्ताः सर्वाः स्वापयामसि ॥ ३ ॥

प्रोष्ठेऽशयाः। तल्पेऽशयाः। नारीः। याः। वह्यऽशीवरीः।
स्त्रियः। याः। पुण्यऽगन्धयः। ताः। सर्वाः। स्वापयामसि ॥ ३ ॥

प्रोष्ठेशयाः ⁴प्राङ्कणे शयानाः तल्पेशयाः ⁵खट्वायां शयानाः। उभयत्रापि 'अधिकरणे शेतेः' (पा ३,२,१५) इति अच्प्रत्ययः। 'शयवासवासिष्वकालात्' (पा ६,३,१८) इति सप्तम्या अलुक्। या एवंभूता नारीः नार्यः सन्ति याश्च वह्यशीवरीः। वहत्यनेनेति वहन-साधनम् आन्दोलिकादि वह्यम्। तत्र शयनस्वभावा याः स्त्रियः सन्ति। वह्यम् इति। 'वह्यं करणम्' (पा ३,१,१०२) इति यत्प्रत्ययान्तो निपात्यते। तस्मिन्नुपपदे शेतेः 'अन्येभ्योऽपि दृश्यन्ते' (पा ३,२,७५) इति क्वनिप्। 'वनो र च' (पा ४,१,७) इति ङीब्-रेफौ। जसि 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। याश्च अन्याः स्त्रियः पुण्यगन्धयः शोभनगन्धयुक्ताः सन्ति। पुण्यस्य गन्ध इव गन्धो यासु इति विगृह्य 'उपमानाच्च' (पा ५,४,१३७) इति गन्धस्य इत् अन्तादेशः। ता अनुक्रान्ताः सर्वाः स्त्रियः स्वापयामसि स्वापयामः।

एजदेजदजग्रभं चक्षुः प्राणमजग्रभम्।
अङ्गान्यजग्रभं सर्वा ⁶रात्रीणामतिशर्वरे ॥ ४ ॥

एजत्ऽएजत्। अजग्रभम्। चक्षुः। प्राणम्। अजग्रभम्।
अङ्गानि। अजग्रभम्। सर्वा। रात्रीणाम्। अतिऽशर्वरे ॥ ४ ॥

एजदेजत् यद्यद् एजतिमद् अस्ति प्राणिजातं तत् सर्वम् अजग्रभम् स्वापेन गृहीतम् अकार्षम्। एजृ कम्पने इत्यस्मात् लटः शत्रादेशः। ग्रह उपादाने इत्यस्मात् ण्यन्तात् लुङि चङि अजग्रभम् इति रूपम्। 'हृग्रहोर्भः°' (पावा ८,२,३२) इति भत्वम्। तथा चक्षुः प्राणम् तदीयं दर्शनसाधनम् इन्द्रियं प्राणसंचारस्थानाश्रितं गन्धग्राहकम् इन्द्रियं च अजग्रभम् स्वापेन गृहीतम् अकृषि। तथा तदीयानि सर्वा सर्वाणि अङ्गानि

१. वह्येशु° ऋ ७,५५,८ पै ४,६,३. २. तल्पशी° ऋ. पै. ३. °न्धास्ताः ऋ. पै.
४. ,कणे S', Kd. ५. खट्वां S', Kd. ६. °णामुत श° पै ४,६,४.

हस्तपादादीनि अजग्रभम् अजिग्रहम्। एतत् सर्वं कस्मिन् काले कृतम् इति तद् आह — रात्रीणाम् इति। रात्रीणां संबन्धिनि अतिशर्वरे अतिशयिता शर्वरी यस्मिन् काले स कालः अतिशर्वरः। तमोभूयिष्ठे मध्यरात्रकाल इत्यर्थः।

य आस्ते यश्चरति यश्च [1]तिष्ठन् विपश्यति[1]।
तेषां सं [2]दध्मो [3]अक्षीणि यथेदं हर्म्यं तथा ॥ ५ ॥

यः। आस्ते। यः। चरति। यः। च। तिष्ठन्। विऽपश्यति।
तेषाम्। सम्। दध्मः। अक्षीणि। यथा। इदम्। हर्म्यम्। तथा ॥ ५ ॥

अस्मदभिसरणसमये यो जनः तत्र आस्ते यश्च चरति संचरति यश्च तत्र तिष्ठन् स्थितः सन् विपश्यति विविधम् इतस्ततः पश्यति। तेषां सर्वेषाम् अक्षीणि चक्षूंषि सं दध्मः। संहितानि निमीलितानि कुर्मः। तत्र दृष्टान्तः — इदम् दृश्यमानं हर्म्यं यथा दर्शनशक्तिशून्यं तथा। चक्षुष्मदपि प्राणिजातं मां द्रष्टुम् असमर्थं भवतु इत्यर्थः।

[4]स्वप्तु माता [4]स्वप्तु पिता [4]स्वप्तु [5]श्वा [4]स्वप्तु विश्पतिः।
[6]स्वपन्त्वस्यै[6] ज्ञातयः [4]स्वप्त्वयमभितो जनः ॥ ६ ॥

स्वप्तु। माता। स्वप्तु। पिता। स्वप्तु। श्वा। स्वप्तु। विश्पतिः।
स्वपन्तु। अस्यै। ज्ञातयः। स्वप्तु। अयम्। अभितः। जनः ॥ ६ ॥

यस्याः [7]स्त्रियाः प्रस्वापनेन वशीकरणम् अत्र चिकीर्षितं तस्या माता प्रथमं स्वप्तु स्वपितु निद्रापरवशा भवतु। ञिष्वप् शये। अस्मात् लोटि अदादित्वात् शपो लुक्। 'रुदादिभ्यः सार्वधातुके' (पा ७,२,७६) इति इडभावश्छान्दसः। तस्याः पिता च स्वप्तु निद्रातु। यस्तस्य गृहस्य परिरक्षणाय श्वा द्वारि वर्तते सोपि स्वप्तु निद्रातु। विश्पतिः गृहाधिपतिश्च स्वप्तु शेताम्। अस्यै। षष्ठ्यर्थे चतुर्थी। अस्याः प्रेप्सितायाः स्त्रिया ये ज्ञातयः सन्ति तेपि स्वपन्तु। गृहाद् बहिः अभितः रक्षणार्थं नियुक्तः अयं जनश्च स्वप्तु निद्रागृहीतो भवतु। एवं मात्रादीनां स्वापनप्रार्थनेन स्वाभिलषितसिद्धिराशास्यते।

[8]स्वप्न [9]स्वप्नाभिकरणेन सर्वं नि ष्वापया जनम्।
[10]ओत्सूर्यमन्यान्त्स्वापयाव्युषं [12]जागृतादहमिन्द्र इवारिष्टो [13]अक्षितः ॥७॥

---

१. पश्यति नो जनः ऋ ७,५५,६. २. हुम्मो ऋ. ३. अक्षाणि ऋ. पै ४,६,५. ४. सस्तु ऋ ७,५५,५. ५. द्र. सा. ऋ. पै ४,६,६; वेद्. A,B,Bp,B[h],D,K[m],K,R,S[m],P,P[2],J,V श्वा. ६. ससन्तु सर्वे ऋ., स्वपन्तु सर्वे पै. ७. स्त्रियः S', Kd. ८. स्वमः B,D,K,S[m], V, खि २,१४,१. ९. °भाधिक° पै ४,६,७, सा.; °भाधिकरणे खि. १०. आसू° खि. ११. °पयोद्व्युषं पै., °व्युषं खिसा १५,१. १२. चरता° पै., जागृयामह° खि. १३. अक्षतः पै.

स्वप्न॑ । स्वप्न॒ऽअ॒भि॒कर॑णेन । सर्व॑म् । नि । स्वा॒प॒य॒ । जन॑म् । आ॒ऽउ॒त्सू॒र्यम् ।
अ॒न्यान् । स्वा॒पय॑ । आ॒ऽव्यु॒षम् । जा॒गृ॒ता॒त् । अ॒हम् । इन्द्र॑ःऽइव । अरि॑ष्टः । अक्षि॑तः ॥ ७॥

हे स्वप्न स्वप्नाभिमानिन् देव [1]स्वप्नाधिकरणेन स्वप्नस्य यद् अधिकरणम् अधिष्ठानं शय्यादि तेन साधनेन सर्वं जनं नि ष्वापय नितरां स्वापय । अयमेवार्थः अवधिप्रदर्शनेन विव्रियते – माभादयो ये अन्ये अनुक्रान्ताः तान् अन्यान् ओत्सूर्यम् उद्यन् सूर्यो यस्मिन् काले स उत्सूर्यः कालः तावत्पर्यन्तं स्वापय इत्यर्थः । एवं सर्वजनस्य प्रस्वापने सति अरिष्टः अहिंसितः अक्षितः क्षयरहितश्च सन् अहम् इन्द्र इव भोगपरो भूत्वा [1]आव्यूषम् उषःकालावधि [2]जागृतात् । पुरुषव्यत्ययः । जागरं करवाणि ।

इति चतुर्थे काण्डे प्रथमेऽनुवाके पञ्चमं सूक्तम् ।

इति चतुर्थे काण्डे प्रथमोऽनुवाकः ।

'ब्राह्मणो जज्ञे', 'वारिदम्' इत्याभ्यां कन्दविषभैषज्यार्थम् उदकम् अभिमन्त्र्य विषावृतं पुरुषं पाययेत् । तथाविधोदकेन प्रोक्षेत् ।

तथा [3]कृमुकवृक्षशकलं सहोदकम् अभिमन्त्र्य पाययेत् प्रोक्षेच्च ।

तथा आभ्यां [4]जीर्णहरिणचर्मावज्वालितं पतितमार्जनिकाशकलैर्वा अवज्वालितम् उदकम् आभ्याम् अभिमन्त्र्य तेनोदकेन विषावृतम् अवसिञ्चेत् ।

तथा आभ्यां सूक्ताभ्याम् उदपात्रं संपात्य अभिमन्त्र्य तेन प्लावयेत् ।

तथा विषलिप्ताभ्याम् ऊर्ध्वफलाभ्यां सक्तुमन्थं मथित्वा अभिमन्त्र्य पाययेत् ।

तथा मदनफलानि प्रत्यृचम् अभिमन्त्र्य यथा छर्दिर्भवति तथा प्रत्यृचं भक्षयेत् ।

सर्पिषा सहितां हरिद्राम् अनेनैवाभिमन्त्र्य आविष्टविषं पाययेत् ।

सूत्रितं हि — " 'ब्राह्मणो जज्ञे' इति तक्षकायाञ्जलिं कृत्वा [5]जपन्नाचामयति अभ्युक्षति । [3]कृमुकशकलं [6]संक्षुद्य [7]दूर्शजरदजिनावकरज्वालेन । [8]संपातवद् उदपात्रम्[8] ऊर्ध्वफलाभ्यां [9]दिग्धाभ्यां मन्थम् उपमथ्य [10]रयिधारणपिण्डान् अन्वृचं [11]प्रकीर्य छर्दयते । हरिद्रां [12]सर्पिषा पाययति" ( कौसू २८, १–४ ) इति ।

अत्र 'ब्राह्मणो जज्ञे' इति [13]एकसूक्तप्रतीकोपादानेन विषापनोदनपरं 'वारिदम्' इति समनन्तरं सूक्तमपि गृह्यते । 'ग्रहणम् आ ग्रहणात्' ( कौसू ८,२१ ) इति परिभाषायाः सौत्रक्रम इव संहिताक्रमेपि प्रवृत्तिरस्तीति व्याख्यातृभिरभिहितत्वात् ।

---

१. वेतु. मंपा. द्र. २. जाग्र° S', Kd. ३. क्रमुक° S', Kd. ४. अजीर्ण° S', Kd. ५. °श्चाचम° Bl. ६. संक्षिप्य S', Kd. ७. दूर्षजर° S', Kd. ८. °वत्सुदपात्र Bl. ९. दग्धा° S', Kd. १०. °धारिण° S', Kd. ११. प्रतीर्य S', Kd. १२. सर्पिषि Bl. १३. एकेन सूक्त° S', Kd.

ब्राह्मणो जज्ञे प्रथमो दशशीर्षो दशास्यः।
स सोमं प्रथमः पपौ स चकारारसं विषम् ॥ १ ॥

ब्राह्मणः। जज्ञे। प्रथमः। दशऽशीर्षः। दशऽआस्यः।
सः। सोमम्। प्रथमः। पपौ। सः। चकार। अरसम्। विषम् ॥ १ ॥

मनुष्यजातिवत् सर्पजातावपि चातुर्वर्ण्यम् अस्ति। तत्र प्रथमः सर्पजातीयानां आविर्भूतस्तक्षकाख्यो ब्राह्मणः ब्राह्मणजातिः जज्ञे उत्पन्नः। स विशेष्यते — दशशीर्षः दशसंख्यानि शीर्षाणि शिरांसि यस्य स तथोक्तः। अत एव दशास्यः दशमुखः। यस्माद् अयं ब्राह्मणः तस्मात् स तक्षकः प्रथमः क्षत्रियादिजातीयेभ्यः पूर्वभावी सन् सोमं पपौ द्युलोकस्थम् अमृतमयं सोमं पीतवान्। स च सोमपो ब्राह्मणः कन्दमूलादिजनितम् एतद् विषम् अरसम् रसरहितं निर्वीर्यं चकार करोतु। छान्दसो लिट्। जज्ञे इति। जनी प्रादुर्भावे इत्यस्मात् लिट्। 'गमहन°' (पा ६,४,९८) इति उपधालोपे 'द्विर्वचनेऽचि' (पा १,१,५९) इति स्थानिवद्भावात् द्विर्वचनम्।

यावती द्यावापृथिवी[1] वरिम्णा यावत् सप्त सिन्धवो[2] वितष्ठिरे।
वाचं विषस्य दूषणीं तामितो निरवादिषम् ॥ २ ॥

यावती इति। द्यावापृथिवी इति। वरिम्णा। यावत्। सप्त। सिन्धवः। विऽतस्थिरे।
वाचम्। विषस्य। दूषणीम्। ताम्। इतः। निः। अवादिषम् ॥ २ ॥

द्यावापृथिवी द्यौश्च पृथिवी च द्यावापृथिव्यौ। 'दिवो द्यावा', 'दिवसश्च पृथिव्याम्' (पा ६,३,२९;३०) इति द्यावादेशः। 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। ते द्यावापृथिव्यौ वरिम्णा उरुत्वेन विस्तारेण यावती यावत्यौ यावत्परिमाणयुक्ते भवतः। यच्छब्दात् 'यत्तदेतेभ्यः परिमाणे वतुप्' (पा ५,२,३९) इति वतुप्। 'आ सर्वनाम्नः' (पा ६,३,९१) इति आत्वम्। वरिम्णेति। उरुशब्दाद् इमनिचि 'प्रियस्थिर' (पा ६,४,१५७) इत्यादिना वरादेशः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। तथा सप्त सप्तसंख्याकाः सिन्धवः समुद्रा यावत् यत्परिमाणवैशिष्ट्येन वितस्थिरे व्यावर्तन्ते। 'समवप्रविभ्यः स्थः' (पा १,३,२२) इति आत्मनेपदम्। इतः अस्मात् तादृक्परिमाणविशिष्टयोर्द्यावापृथिव्योः सकाशात् [3]सप्तसमुद्रवेष्टितस्थानाच्च [4]विषस्य दूषणीम् कन्दमूलादिजनितविषस्य नाशनीं ताम् तादृशीं वाचम् मन्त्रात्मिकां निरवादिषम्। ताल्वोष्ठपुटव्यापारेण निर्गमय्य उच्चारयामीत्यर्थः। वदेश्छान्दसो लुङ्। 'वदव्रजहलन्तस्याचः' (पा ७,२,३) इति वृद्धिः।

१. महित्वा तै ३,२,६,१. २. °तस्थिरे S; मा ३८,२६; °तस्थुः तै.; °तष्ठुः पै ५,८,१.
३. सिंधु सप्त° S', Kd. ४. विषयस्य S', Kd.

सुपर्णस्त्वा गरुत्मान् ¹विष ²प्रथममावयत् ।
³नामीमदो †नारूरुप⁴ उतास्मा अभवः पितुः ॥ ३ ॥

सुऽपर्णः । त्वा । गरुत्मान् । ¹विष । प्रथमम् । आवयत् ।
न । अमीमदः । न । अरूरुपः । उत । अस्मै । अभवः । पितुः ॥ ३ ॥

सुपर्णः शोभनपत्रयुक्तः । बहुव्रीहौ 'नञ्सुभ्याम्' (पा ६,२,१७२ ) इति उत्तरपदान्तोदात्तत्वम् । एवंभूतो गरुत्मान् वैनतेयः हे विष त्वा त्वां प्रथमम् पूर्वम् आवयत् । आवयतिः अत्तिकर्मा । अभक्षयत् । अतो निर्वीर्यत्वाद् विषोपहतं पुरुषं नामीमदः मत्तं ज्ञानविकलं मा कार्षीः । अत एव नारूरुपः । युप रुप लुप विमोहने इति धातुः । विमूढं मा कार्षीरित्यर्थः । उभयत्रापि ण्यन्तात् लुङि चङि रूपम् । उत अपि च अस्मै विषदुष्टाय पुरुषाय हे विष त्वं पितुः । अन्ननामैतत् । अन्नम् अभवः । छान्दसो लङ् । अन्नवज्जीर्णं भवेत्यर्थः ।

⁵यस्त आस्यत्⁵ ⁶पञ्चाङ्गुरिर्वक्राच्चिदधि धन्वनः ।
अपस्कम्भस्य ⁷शल्यान्निरवोचमहं विषम् ॥ ४ ॥

यः । ते । आस्यत् । पञ्चऽअङ्गुरिः । वक्रात् । चित् । अधि । धन्वनः ।
अपऽस्कम्भस्य । ⁷शल्यात् । निः । अवोचम् । अहम् । विषम् ॥ ४ ॥

पञ्चाङ्गुरिः पञ्च अङ्गुरयः अङ्गुलयो यस्य स तथोक्तः । 'वालमूललघ्वलमङ्गुलीनां वा रो लम् आपद्यते' ( पावा ८,२,१८ ) इति लत्वस्य विकल्पनाद् रेफः । एवंभूतो यो हस्तः ते त्वां वक्रात् वक्रीभूताद् अधि अधिज्याद् धन्वनः आस्यत् धनुर्यन्त्रेण पुरुषशरीरे प्राक्षिपत् । चिच्छब्दः अप्यर्थे । तं विषम् विषप्रदं हस्तम् अपस्कम्भस्य अपस्कभ्यते विधार्यते अन्तरिक्षे इति अपस्कम्भः क्रमुकवृक्षः तस्य शल्यात् शकलाद् निमित्ताद् अहं निरवोचम् मन्त्रेण निर्वीर्यं करोमि । यद्वा अपस्कभ्यते धनुषि धार्यते इति अपस्कम्भो बाणः । तस्य शल्यात् विषदिग्धाद् अयोमयाद् अग्रात् । यो विषम् आस्यत् इति संबन्धः । ष्टभि स्कभि गतिप्रतिबन्धे । अस्मात् कर्मणि घञ् । यद्वा तदीयं विषं निर्गतं ब्रवीमीत्यर्थः ।

शल्याद् विषं निरवोचं ⁸प्राञ्जनादुत पर्णधेः ।
अपाष्ठाच्छृङ्गात् कुल्मलान्निरवोचमहं विषम् ॥ ५ ॥

१. सु. सा. K, पै ५,८,२; वैसु. A,B,Bp,B[h],D,K[m],R,S[m],P,P[2],J,V विषः.
२. °मादयत् पै. ३. नारोपयो नामादय पै. † नारूरू° S[m], नारूरु° B[h].
४. यां चास्तृतत्ती पै ५,८,३. ५. °गुलिर्व° पै. ६. बाह्वोर्नि° पै. ७. सुल्यात् P[2].
८. आञ्ज° पै ५,८,४.

शल्यात् । विषम् । निः । अवोचम् । प्रऽअञ्जनात् । उत । पर्णऽधेः ।
[1]अपाष्ठात् । शृङ्गात् । कुल्मलात् । निः । अवोचम् । अहम् । विषम् ॥ ५ ॥

शल्यात् उक्तलक्षणाद् बाणादिशल्यात् संभूतं विषं निरवोचम् निर्गतं ब्रवीमि । तथा प्राञ्जनात् प्रलेपात् । उतशब्दः समुच्चये । पर्णधेः । पर्णानि पत्राणि धीयन्तेस्मिन्निति पर्णधिः इषुकाण्डः विषमयपत्रयुक्तो वृक्षो वा । तस्माच्च यद् उद्भूतं विषम् अपाष्ठात् अपकृष्टावस्थाद् एतत्संज्ञाद् विषोपादानात् शृङ्गात् विषाणात् कुल्मलात् कुत्सितप्राणिमलाच्च यद् उद्भूतं विषम् तत् सर्वं विषम् अहं निरवोचम् निर्ब्रवीमि । मन्त्रसामर्थ्येन निर्गतं करोमीत्यर्थः ।

अरसस्त इषो शल्योऽथो ते अरसं विषम् ।
उतारसस्य वृक्षस्य धनुष्टे अरसारसम् ॥ ६ ॥

अरसः । ते । इषो इति । शल्यः । अथो इति । ते । अरसम् । विषम् ।
उत । अरसस्य । वृक्षस्य । धनुः । ते । अरस । अरसम् ॥ ६ ॥

हे इषो बाण ते त्वदीयो विषदिग्धः शल्यः अरसः निर्विषो भवतु । अथो अनन्तरं च ते त्वदीयं विषम् अरसम् रसरहितं निर्वीर्यं भवतु । उत अपि च अरसस्य निःसारस्य वृक्षस्य संबन्धि ते त्वदीयं धनुः [2]अरसारसम् अत्यर्थम् अरसं नीरसं निर्वीर्यं भवतु ।

[3]ये अपीषन्[3] ये [4]अदिहन् य आस्यन् ये अवासृजन् ।
सर्वे ते वध्रयः [5]कृता वध्रिर्विषगिरिः कृतः ॥ ७ ॥

ये । अपीषन् । ये । अदिहन् । ये । आस्यन् । ये । अवऽअसृजन् ।
सर्वे । ते । वध्रयः । कृताः । वध्रिः । विषऽगिरिः । कृतः ॥ ७ ॥

ये जनाः अपीषन् विषोपादानम् औषधम् अपिषन् । चूर्णीकृत्य प्रयच्छन्तीत्यर्थः । छान्दसो लङ् । ये च जना अदिहन् अलिम्पन् । लेपनविषं प्रयुञ्जत इत्यर्थः । ये च आस्यन् विषम् अस्यन्ति दूरात् प्रक्षिपन्ति ये च अवासृजन् समीपस्थाः विषम् अन्नपानादिषु संसृजन्ति ते सर्वे जनाः एतन्मन्त्रप्रभावाद् वध्रयः निर्वीर्याः कृताः । विषगिरिः कन्दमूलादिविषोत्पत्तिहेतुः पर्वतश्च वध्रिः निर्वीर्यः कृतः ।

वध्रयस्ते खनितारो वध्रिस्त्वमस्योषधे ।
वध्रिः स पर्वतो गिरिर्यतो जातमिदं विषम् ॥ ८ ॥

१. अपाष्ठात् P². २. वैद्ध. पपा. द्र. ३. येपीषन् S. ४. अदुष्यन् पै ५,८,६. ५. सन्तु पै.

वभ्रयः । ते । खनितारः । वभ्रिः । त्वम् । असि । ओषधे ।
वभ्रिः । सः । पर्वतः । गिरिः । यतः । जातम् । इदम् । विषम् ॥ ८ ॥

हे ओषधे विषोपादानभूते ते तव कन्दमूलादेः खनितारः खननेन उद्धर्तारो जनाः वभ्रयः निर्वीर्या भवन्तु । त्वम् अपि मन्त्रप्रभावात् वभ्रिरसि निर्वीर्या भवसि । स तादृशः पर्वतः पर्ववान् गिरिः शिलोच्चयः वभ्रिः निर्वीर्यो भवति । यतः यस्माद् गिरेः इदम् कन्दमूलादिलक्षणं विषं जातम् उत्पन्नम् । स पर्वत इति संबन्धः । जातम् इति । जनेः कर्तरि निष्ठा । 'श्वीदितो निष्ठायाम्' ( पा ७,२,१४ ) इति इट्प्रतिषेधः । 'जनसनखनां सञ्झलोः' ( पा ६,४,४२ ) इति आत्वम् ।

इति चतुर्थे काण्डे द्वितीयेऽनुवाके प्रथमं सूक्तम् ।

'वारिदं वारयातै' इति द्वितीयसूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

वारिदं वारयातै [1]वरणावत्यामधि ।
तत्रामृतस्यासिक्तं [2]तेना ते वारये विषम् ॥ १ ॥

वाः । इदम् । वारयातै । [1]वरणऽवत्याम् । अधि ।
तत्र । अमृतस्य । आऽसिक्तम् । तेन । ते । वारये । विषम् ॥ १ ॥

वरणावत्याम् वरणा नाम वृक्षविशेषाः ते अस्यां सन्तीति वरणावती । 'शरादीनां च' ( पा ६,३,१२० ) इति मतौ पूर्वपदस्य दीर्घः । तस्याम् अधि । अधिः सप्तम्यर्थाऽनुवादी । तस्यां स्थितम् इदम् विषहरं वाः वारि वारयातै अस्मदीयं विषं वारयतु । वारयतेर्लेटि आडागमः । वरणावत्युदकस्य कोतिशय इति तत्राह — तत्रामृतस्येति । तत्र वरणावत्याम् अमृतस्य द्युलोकस्थस्य विषहरं स्वरूपम् आसिक्तम् प्रक्षिप्तं विद्यते । अतः तेन अमृतमयेन उदकेन ते त्वदीयं कन्दमूलादिजनितं विषं वारये निवारयामि ।

अरसं प्राच्यं विषमरसं यदुदीच्यम् ।
अथेदमधराच्यं[3] करम्भेण वि कल्पते ॥ २ ॥

अरसम् । प्राच्यम् । विषम् । अरसम् । यत् । उदीच्यम् ।
अथ । इदम् । [3]अधराच्यम् । करम्भेण । वि । कल्पते ॥ २ ॥

प्राच्यम् प्राग्देशे भवं विषम् अरसम् नीरसं निर्वीर्यम् अस्तु । तथा उदीच्यम् उदग्देशे भवं यद् विषम् अस्ति तदपि अरसं निर्वीर्यं भवतु । 'द्युप्रागपागुदक्प्रतीचो यत्' ( पा ४,२,१०१ ) इति शैषिको यत्प्रत्ययः । अथ अनन्तरं इदम् अधराच्यम् । अधरम्

१. °वत्याँ आभृतम् पै ५,८,८. २. तवकारारसं पै. ३. ऊ. RW. सात.; वैद्य. मूको. (ऊ. शंपा. Wh.) °धराच्यं, Bp. °धराच्यम्.

अधोदेशम् अश्नातीति अधराङ् पृथिव्या अधस्तात् वर्तमाना दिक्। तत्र भवम् अधराच्यं विषम्। यद्वा 'प्रागपागुदगधराक्' (अ २०,१३४,१), 'प्राक्तादपाक्ताद्-धरादुदक्तात्' (ऋ ७,१०४,१९) इत्यादिमन्त्रान्तरेषु प्रागादिदिक्त्रयसमभिव्याहारेण दक्षिणा दिक् अधराक्शब्दवाच्या। एतच्च प्रत्यग्दिशोऽप्युपलक्षकम्। एवं सर्वदिक्संबन्धि विषं करम्भेण। 'मन्थं संयुतं करम्भ इत्याचक्षते' (आपश्रौ १२,४,१३) इति आपस्तम्बवचनात् अत्र विषहरे प्रयोगे प्रयुज्यमानो मन्थः करम्भशब्दवाच्यः। तेन वि कल्पते। विगतसामर्थ्यं भवतीत्यर्थः। कृपू सामर्थ्ये। 'कृपो रो लः' (पा ८,२,१८) इति लत्वम्।

करम्भं कृत्वा [1]तिर्यं [2]पीबस्पाकमुदारथिम्[3]।
क्षुधा किल त्वा दुष्टनो [4]जक्षिवान्त्स न रूरुपः ॥ ३ ॥

करम्भम्। कृत्वा। तिर्यम्। [5]पीबःऽपाकम्। उदारथिम्।
क्षुधा। किल। त्वा। दुस्तनो इति दुःऽस्तनो। जक्षिऽवान्। सः। न। [6]रूरुपः ॥ ३ ॥

हे दुष्टनो दुष्टशरीर विष तिर्यम् तिरोभवं प्रच्छन्नत्वेन प्रयुक्तम्। [7]तिरस्-शब्दात् 'भवे छन्दसि' (पा ४,४,११०) इति यत्। 'अव्ययानां भमात्रे' (पावा ६,४,१४४) इति टिलोपः। [8]पीबस्पाकम्। पीवो मेदः पच्यते येन तत् पीवस्पाकम्। पचेः करणे घञ्। उदारथिम् उद्रिक्तार्तिजनकम् ईदृशं त्वा त्वां करम्भं कृत्वा करम्भशब्दवाच्यं मन्थं विभाव्य क्षुधा किल बुभुक्षया। किलेति अपरमार्थे। जक्षिवान् भक्षितवान्। पुरुषो भक्षितवान्। स भक्षितस्त्वं तं पुरुषं न रूरुपः मूर्छितं मा कुरु। जक्षिवान् इति। अदेर्लिटः क्वसुः। 'लिट्यन्यतरस्याम्' (पा २,४,४०) इति घस्लादेशः। 'वस्वेकाजाद्घसाम्' (पा ७,२,६७) इति इटि कृते उपधालोपे स्थानिवद्भावाद् द्विर्वचनादि। रूरुप इति। रुप विमोहने। ण्यन्तात् लुङि चङि रूपम्।

वि ते मदं [9]मदावति [10]शरमिव पातयामसि।
[11]प्र त्वा चरुमिव †येषन्तं[11] वचसा स्थापयामसि ॥ ४ ॥

वि। ते। मदम्। मदऽवति। शरम्ऽइव। पातयामसि।
प्र। त्वा। चरुम्ऽइव। येषन्तम्। वचसा। स्थापयामसि ॥ ४ ॥

हे मदावति मूर्छाकरमदयुक्ते विषोपादानभूते ओषधे ते त्वदीयं मदम् मूर्छा-

१. तुरीयं? पै २,१,२. २. पीवस्पाक॰ T, पै. सा.; पिबस्पा॰>पीबस्फा॰ R[3]; पीबस्फाक॰ Wh. RW. ३. ॰दाहतम्? पै. ४. ज क्षि वी ष्य स्वा? पै. ५. पीबऽस्फाकम् Wh. ६. रुरुपः P,P[2]; रूरुपः>रुरुपः J. ७. तिरस्यशब्दात् S', Kd. ८. वैतु. भंपा. द्र. ९. सारयति? पै २,१,३. १०. शुरुमिव K,V, सा. पै. ११. परि त्वा बर्मेव ? शम्वं? पै. † पेषन्तं B,K,V,Op.

करं विषम् ¹शरुमिव धनुषो विमुक्तं शरमिव वि पातयामसि विपातयामः । शरीराद् विश्लेषयामः । शरुम् इति । शॄ हिंसायाम् इत्यस्मात् 'शॄस्वृस्निहि' (पाउ १,१०) इत्यादिना उप्रत्ययः । हे विष चरुम् चरणशीलं गूढचरं दूतम् इव ¹जेषन्तम् । जेषृ प्रयत्ने । प्रयतमानम् अङ्गप्रत्यङ्गानि व्याप्नुवन्तं त्वा त्वां वचसा मन्त्रेण प्र स्थापयामसि प्रस्थापयामः ।

परि ग्राममिवाचितं ²वचसा स्थापयामसि ।
तिष्ठा वृक्ष इव ³स्थाम्न्यभ्रिखाते न रूरुपः ॥ ५ ॥

परि । ग्रामम्ऽइव । आऽचितम् । वचसा । स्थापयामसि ।
तिष्ठ । वृक्षःऽइव । स्थाम्नि । अभ्रिऽखाते । न । रूरुपः ॥ ५ ॥

ग्राममिव जनसमूहमिव आचितम् उपचितं विषम् । ग्रामदृष्टान्तेन विषस्य प्राबल्यम् उक्तम् । ईदृशमपि वचसा मन्त्रेण ⁵[परि] परिहृत्य अन्यत्र स्थापयामसि स्थापयामः । निरस्याम इत्यर्थः । हे ³अभ्रिखाते । अभ्रिः खननसाधनम् । तदीयखननेन लब्धे ओषधे स्थाम्नि स्थाने स्वकीये वृक्ष इव निश्चला भूत्वा तिष्ठ । मा व्याप्नुहीत्यर्थः । अत एव न रूरुपः पुरुषं नामूमुहः ।

पवस्तैस्त्वा पर्यक्रीणन् दूर्शेभिरजिनैरुत ।
प्रक्रीरसि त्वमोषधेऽभ्रिखाते न रूरुपः ॥ ६ ॥

पवस्तैः । त्वा । परि । अक्रीणन् । दूर्शेभिः । अजिनैः । उत ।
प्रऽक्रीः । असि । त्वम् । ओषधे । अभ्रिऽखाते । न । ⁴रूरुपः ॥ ६ ॥

हे ओषधे विषमूलिके त्वा त्वाम् पवस्तैः पवनाय अस्तैः संमार्जनीतृणैः पर्यक्रीणन् परिक्रीतवन्तो महर्षयः । पवस्तशब्दो दाशतय्यां द्यावापृथिव्योर्वाचकत्वेन दृष्टः । 'द्वे पवस्ते परि तं न ⁴भूतः' (ऋ १०,२७,७) इति । तथा दूर्शेभिः दूर्शैः दुष्टस्पृश्यसंबन्धिभिः अजिनैः त्वग्भिश्च पर्यक्रीणन् । उतशब्दः समुच्चये । दूर्शेभिरिति । 'बहुलं छन्दसि' (पा ७,१,१०) इति भिस ऐसभावः । यत एवम् अतो हेतोः त्वं प्रक्रीः प्रकर्षेण क्रीता असि भवसि । अतस्तैर्द्रव्यैस्त्वं प्रक्रीता सती अस्मात् स्थानान्निर्गच्छेति भावः । प्रपूर्वात् क्रीणातेः कर्मणि संपदादिलक्षणः क्विप् । ³अभ्रिखाते इत्यादि व्याख्यातम् ।

१ वैतु. मंपा. द्र. २. परि त्वा पै २,१,४. ३. स्थामन्नभ्रि॰ पै. ४. रूरुपः P,P⁸,J. ५. भूतम् S', Kd.

अनाप्ता ¹ये वः प्रथमा ²यानि कर्माणि ³चक्रिरे ।
वीरान् नो अत्र मा दभन् तद् व एतत्पुरो दधे ॥ ७ ॥

अनाप्ताः[४] । ये । वः । प्रथमाः[५] । यानि । कर्माणि । चक्रिरे ।
वीरान्[६] । नः । अत्र । मा । दभन् । तत् । वः । एतत् । [७]पुरः । दधे ॥ ७ ॥

हे जनाः वः युष्माकम् अनाप्ताः अननुकूला ये शत्रवः प्रथमाः प्रथमानि मुख्यानि यानि योगादीनि कर्माणि चक्रिरे कृतवन्तः तैः कर्मभिस्ते शत्रवः नः अस्माकं वीरान् वीर्याज्जातान् पुत्रपौत्रादीन् अत्र अस्मिन् देशे यद्वा एषु कर्मसु निमित्तभूतेषु मा दभन् मा हिंसन्तु । दम्भु दम्भे । तद् एतत् क्रियमाणं भैषज्यरूपं कर्म वः युष्माकं पुरः पुरस्ताद् दधे रक्षणार्थं धारयामि ।

इति द्वितीयं सूक्तम् ।

'भूतो भूतेषु' इति तृतीयसूक्तेन महति लघौ वा राजाभिषेककर्मणि शान्त्युदककलशेन उदपात्रेण च अभिषेकं जपं च पुरोहितः कुर्यात् ।

तथा संपातितस्थालीपाकप्राशनम् अभिमन्त्रितम् अश्वम् आरोह्य अपराजितदिशं प्रति गमनं च कारयेत् । सूत्रितं हि — " 'भूतो भूतेषु' इति राजानम् अभिषेक्ष्यन् महानदे शान्त्युदकं करोति" (कौसू १७,१) इत्यादि ।

तथा राजसूये आसन्द्यारोहणे राजाभिषेके च एतत् सूक्तम् । उक्तं वैताने राजसूयं प्रक्रम्य — [८]"वैयाघ्रचर्म । उपबर्हणायाम् आसन्द्यां 'भूतो भूतेषु' इत्यारोहयति अभिषिञ्चति च" (वैताश्रौ ३६,६;७) इति ।

भूतो भूतेषु [१०]पय आ दधाति[१०] स भूतानामधिपतिर्बभूव ।
[११]तस्य [१२]मृत्युश्चरति[१३] राजसूयं स राजा राज्यमनु मन्यतामिदम् ॥ १ ॥

भूतः । भूतेषु । पयः । आ । दधाति । सः । भूतानाम् । अधिऽपतिः । बभूव ।
तस्य । मृत्युः । चरति । राजऽसूयम् । सः । राजा । राज्यम् । अनु । मन्यताम् । इदम् ॥ १ ॥

भूतः समृद्धः अभिषेकेण प्राप्तैश्वर्यः भूतेषु समृद्धेषु जनपदेषु स्वाम्यमात्यादिप्रकृतिजनेषु वा पयः । उपलक्षणम् एतत् क्षीरोपलक्षितं भोज्यं वस्तुजातम् आ दधाति स्थापयति । सर्वेषाम् अनुजीविनाम् अन्नप्रदो भवतीत्यर्थः । अत एव सः

१. यां काठ ३८,१४ आपश्रौ १६,१८,७. २. यस्यां काठ. आपश्रौ. ३. कुर्वते काठ., कृण्वते आपश्रौ. ४. °प्ता P,P², J, Wh. ५. °मा Bp². ६. वीरात् P,J. ७. पुरः P. ८. वैतु. पपा. द्र. ९. वैयाघ्रं चर्म RG. १०. चरति प्रविष्टः तैब्रा २,७,१५,१. ११. स ते पै ४,२,१. १२. मृत्यौ च° तैब्रा. १३. °रते पै.

अभिषिक्तो राजा भूतानाम् प्राणिनाम् अधिपतिः अधिष्ठाता स्वामी बभूव । मृत्युः धर्मराजः धर्माधर्मप्रविभागेन दुष्टनिग्रहशिष्टपरिपालने कारयितुं तस्य राज्ञो राजसूयं चरति । राजा सूयते अनुज्ञायते जगद्रक्षणविधौ येन कर्मणा तद् राजसूयम् अभिषेकाख्यम् इदं कर्म अनुतिष्ठतीत्यर्थः । स कृताभिषेको राजा इदं राज्यम् । राज्ञः कर्म दुष्टनिग्रहशिष्टपरिपालनादिकं राज्यम् । तद् अनु मन्यताम् अङ्गीकरोतु । राज्यम् इति । 'पत्यन्तपुरोहितादिभ्यो यक्' (पा ५,१,१२८) इति कर्मणि अभिधेये यक्प्रत्ययः । तत्र पुरोहितादिषु 'राजाऽसे' इति पठितम् ।

अभि प्रेहि [1]मापं वेन[1] उग्रश्चेत्ता सपत्नहा ।
आ तिष्ठ [2]मित्रवर्धन तुभ्यं देवा [3]अधि [4]ब्रुवन्[3] ॥ २ ॥

अभि । प्र । इहि । मा । अप । वेनः । उग्रः । चेत्ता । सपत्नऽहा ।
आ । तिष्ठ । मित्रऽवर्धन । तुभ्यम् । देवाः । अधि । [5]ब्रुवन् ॥ २ ॥

हे राजन् सिंहासनं हस्त्यश्वरथादियानं च अभि प्रेहि अभिलक्ष्य प्रगच्छ । मा अप वेनः । वेनतिः कान्तिकर्मा । अपकामम् अनिच्छां मा कार्षीः । उग्रः उद्गूर्णबलः दुरासदः[6] चेत्ता चेतिता । कार्याकार्यविभागज्ञानशीलवान् इत्यर्थः । चिती संज्ञाने इत्यस्मात् ताच्छीलिकस्तृन् । अत एव सपत्नहा सपत्नानां शत्रूणां हन्ता । 'बहुलं छन्दसि' (पा ३,२,८८) इति हन्तेः क्विप् । राजासनादिसमीपं गत्वा च [2]मित्रवर्धनः यानि राजमित्राणि महामात्रादीनि सन्ति तेषां वर्धयिता सन् आ तिष्ठ राजासनं हस्त्यश्वादियानं च आरोह । एवंभूताय तुभ्यं देवाः इन्द्रादयो लोकपालाः अधि ब्रुवन् अधिब्रुवन्तु । अधिवचनम् पक्षपातेन वचनम् । मदीयोऽयम् इति त्वाम् अनुगृह्णन्तु इत्यर्थः ।

आतिष्ठन्तं परि विश्वे [7]अभूषं छ्रियं[7] वसानश्चरति [8]स्वरोचिः ।
[9]महत् तद्[9] [10]वृष्णो असुरस्य नामा विश्वरूपो अमृतानि तस्थौ ॥ ३ ॥

आऽतिष्ठन्तम् । परि । विश्वे । अभूषन् । श्रियम् । वसानः । चरति । स्वऽरोचिः ।
[11]महत् । तत् । वृष्णः[11] । असुरस्य । नाम । आ । विश्वऽरूपः । अमृतानि । तस्थौ ॥३॥

आतिष्ठन्तम् सिंहासनादिकम् आरोहन्तं विश्वे सर्वे जनाः पर्यभूषन् परितः अलंकुर्वन्तु । भूष अलंकारे । भौवादिकः । यद्वा परितो भवन्तु वर्तन्ताम् । सेवन्ताम् इत्यर्थः ।

---

१. वीरयस्व तैब्रा २,७,८,१; वीडयस्व पै ४,२,२. २. °र्धनः K, सा. तैब्रा. वृत्रहन्तमः तैब्रा. २,७,१६,१. ३. अधिब्रुवन् मा १७,५२ प्रभृ. †ब्रवन् A,P², J, Km. ४. ब्रुवन् P², J. ५. वैदु. मैपा. द्र. ६. न S', Kd. ७. °षच्छ्रियो ऋ ३,३८,४ पै ४,२,३. ८. स्वरोचाः तैब्रा २,७,८,१. ९. महस्तद् K.V, सा. १०. वृष्णोद् पै., विष्णोद् सा. पै [मूको.], असुरस्य तैब्रा. ११. महः । तद् । विष्णो इति K.

भवतेश्छान्दसे लुङि 'सिब्बहुलम्' ( ३,१,३४ ) इति बहुलग्रहणात् सिप्। आस्था- नानन्तरं श्रियं वसानः राजलक्ष्मीं धारयन् स्वरोचिः स्वायत्तदीप्तिः चरति राज्यपरि- पालने वर्तते। वसान इति। वस आच्छादने। अस्मात् लटः शानच्। अनुदात्तेत्त्वात् "लसार्वधातुक" (पा ६,१,१८३) इति अनुदात्तत्वे धातुस्वरः। 'विष्णोः अभिषेकजनितराज- तेजसा दशदिगन्तान् व्याप्नुवतः असुरस्य शत्रूणां निरसितुः। असु क्षेपणे 'असेरुरन्' ( पाउ १,४२ ) इति उरन्प्रत्ययः। यद्वा असून् प्राणान् राति प्रयच्छति पादाक्रान्तानां द्विषाम् इति असुरः। रा दाने इत्यस्माद् 'आतोनुपसर्गे कः' ( पा ३,२,३ ) इति कः। ईदृशस्य तस्याभिषिक्तस्य राज्ञः तन्नाम अभिषेकसमये कृतं सुन्दरपाण्ड्यादिकं नाम 'महः महत् अधिकं यन्नामश्रवणमात्राद् भीताः शत्रवः पलायन्ते तादृशम्। तादृ- ङ्नामाङ्कितो राजा विश्वरूपः शत्रुमित्रकलत्रादिषु नानाविधरूपः सन् अमृतानि अमृत- त्वप्रापकानि दण्डयुद्धादीनि अध्ययनादीनि च कर्माणि आ तस्थौ आतिष्ठतु। आचरतु इत्यर्थः।

व्याघ्रो अधि वैयाघ्रे वि [1]क्रमस्व दिशो महीः।
[2]विशस्त्वा सर्वा [3]वाञ्छन्त्वापो दिव्याः पयस्वतीः ॥ ४ ॥

व्याघ्रः। अधि। वैयाघ्रे। वि। क्रमस्व। दिशः। महीः।
विशः। त्वा। सर्वाः। वाञ्छन्तु। आपः। दिव्याः। पयस्वतीः ॥ ४ ॥

वैयाघ्रे व्याघ्रस्य विकारश्चर्म वैयाघ्रम्। 'अवयवे च प्राण्योषधिवृक्षेभ्यः' ( पा ४,३,१३५) इति विकारार्थे अण्। 'न य्वाभ्यां पदान्ताभ्याम्' ( पा ७,३,३ ) इति वृद्धिनिषेधः ऐजा- गमश्च। व्याघ्रचर्मणि अधि उपरि उपविष्टः सन् व्याघ्रः। लुप्तोपमम् एतत्। व्याघ्रवद् दुष्प्रधर्षो भूत्वा महीः महतीः प्राच्याद्या दिशः वि क्रमस्व विजयस्व। विक्रमेण शौर्येण व्याप्नुहीत्यर्थः। 'वेः पादविहरणे' ( पा १,३,४१ ) इति क्रमेरात्मनेपदम्। हे राजन् एवं तेजस्विनं त्वा त्वां सर्वा विशः प्रजाः वाञ्छन्तु। स्वामित्वेन इच्छन्तु। वाछि इच्छा- याम्। त्वदाज्ञावशे वर्तन्ताम् इत्यर्थः। तथा दिव्याः दिवि भवाः पयस्वतीः पयस्वत्यः सारवत्यः आपश्च त्वां वाञ्छन्तु। त्वद्विषये अनावृष्टिर्मा भूद् इत्यर्थः।

या आपो दिव्याः पयसा [5]मदन्त्यन्तरिक्ष उत [6]वा पृथिव्याम्।
तासां त्वा [7]सर्वासामपामभि षिञ्चामि वर्चसा ॥ ५ ॥

१. वैतु. मंपा. द्र. २. क्रमस्व तैब्रा २,७,१५,३. ३. दिश° पै ४,२,५.
४. आयान्त्वापो पै. ५. संबभूवु याँ अन्त° तैब्रा. ६. पार्थिवा याः पै ४,२,६; पार्थिवीर् याः तैब्रा २,७,१५,४. ७. °सां त्वा अभि तैब्रा.

याः । आपः । दिव्याः । पयसा । मदन्ति । अन्तरिक्षे । उत । वा । पृथिव्याम् ।
तासाम् । त्वा । सर्वासाम् । अपाम् । अभि । सिञ्चामि । वर्चसा ॥ ५ ॥

दिव्याः **दिवि भवा** या आपः पयसा **स्वकीयेन सारभूतेन रसेन** मदन्ति **प्राणिन-स्तर्पयन्ति । मद तृप्तियोगे । चुरादिरदन्तः(?) । 'छन्दस्युभयथा'** ( पा ३,४,११७ ) **इति शप आर्धधातुकत्वात्** 'णेरनिटि' ( पा ६,४,५१ ) **इति णिलोपः । याश्च** अन्तरिक्षे **वर्तमाना आपः** उत वा **अपि वा** पृथिव्याम् **भूम्याम् अवस्थिताः** तासां सर्वासाम् **लोकत्रयव्याप्तानाम्** अपां वर्चसा **बलकरेण सारेण हे राजन्** त्वा **त्वाम्** अभि षिञ्चामि ।

अभि त्वा [1]वर्चसासिचन्नापो दिव्याः पयस्वतीः[2] ।
यथासो [3]मित्रवर्धनस्तथा त्वा सविता करत् ॥ ६ ॥

अभि । त्वा । वर्चसा । [4]असिचन् । आपः । दिव्याः । पयस्वतीः ।
यथा । असः । मित्रऽवर्धनः । तथा । त्वा । सविता । करत् ॥ ६ ॥

**हे राजन्** त्वा **त्वां प्रागुक्ता** दिव्याः पयस्वतीः **पयस्वत्यः** आपः **स्वकीयेन** वर्चसा अभ्यसृजन्[5] **आभिमुख्येन संसृजन्तु ।** यथा **त्वं** मित्रवर्धनः **मित्राणां वर्धयिता** असः **भवेः । वृधेर्ण्यन्तात् नन्द्यादिलक्षणो ल्युप्रत्ययः । अस्तेर्लेटि अडागमः ।** सविता **सर्वप्रेरको देवः** त्वा **त्वां** तथा करत् **करोतु ।**

एना व्याघ्रं परिषस्वजानाः सिंहं [6]हिन्वन्ति महते [7]सौभगाय ।
[8]समुद्रं [9]न सुभुवस्तस्थिवांसं [10]मर्मृज्यन्ते द्वीपिनमप्स्व१न्तः[11] ॥ ७ ॥

एना । व्याघ्रम् । परिऽसस्वजानाः । सिंहम् । हिन्वन्ति । महते । सौभगाय ।
समुद्रम् । न । सुऽभुवः । तस्थिऽवांसम् । मर्मृज्यन्ते । द्वीपिनम् । अप्ऽसु । अन्त ॥ ७ ॥

'या आपो दिव्याः' **इति प्राग् उक्ता आपः** एना **इति अन्वादिश्यन्ते । एना एता उक्ताः आपः ।** 'द्वितीयाटौस्स्वेनः' ( पा २,४,३४ ) **इति एतच्छब्दस्य एनादेशः । ततः** 'सुपां सुलुक्' ( पा ७,१,३९ ) **इति जस आजादेशः । अत एव अन्तोदात्तत्वम् । इतरथा हि अनुदात्त इत्यनुवृत्तेरेनादेशोनुदात्तः । जसस्तु सुप्त्वाद् अनुदात्ततेति ।** व्याघ्रं **व्याघ्रवत् पराक्रमयुक्तं** परिषस्वजानाः **परितः अभितः अतिशयेन आलिङ्गन्त्यः ।**

---

१. °सासृजन् K, सा. पै ४,२,७; °सासिञ्चन् RW; °सा सिचं तैब्रा २,७,१५,४. २. दिव्येन पयसा सह तैब्रा. पै. ३. यथासो राष्ट्रवर्ध° तैब्रा. ४. असृजन् K. ५. वैतु. संपा. द्र. ६. मृजन्ति मै २,१,४. ७. धनाय मै. ८. महिषं मै. पै ४,२,४. ९. नः सुभ्वं मै.; न सुहुवं तैब्रा २,७,१६,४. १०. परिमृ° पै. ११. °मप्स्वइन्तः B,B^h,S^m, °मप्स्वन्तः A,R,

मातरो वत्सम् इव अत्यन्तं प्रीणयन्त्य इत्यर्थः। परिषस्वजाना इति। ष्वञ्ज सङ्गे। अस्मात् लिट्। तस्य कानजादेशः। सिंहम् सहनशीलम् यद्वा सिंहतुल्यपराक्रमं राजानं हिन्वन्ति वीर्यप्रदानेन प्रीणयन्ति। [1]हिवि: प्रीणनार्थः। इदित्वान्नुम्। किमर्थम्। महते सौभगाय अधिकाय सौभाग्याय। 'सुभग मन्त्रे' इति उद्गात्रादिषु (पा ५,१,१२९) पाठाद् भावे अञ्। 'ञ्नित्यादिर्नित्यम्' (पा ६,१,१९७) इति आद्युदात्तत्वम्। 'बृहन्महतोरुपसंख्यानम्' (पावा ६,१,१७३) इति महतो विभक्तिरुदात्ता। तत्र दृष्टान्तः — समुद्रं न इति। यथा नदीरूपा आपः समुद्रं प्रीणयन्ति तद्वद् अभिषेकसाधनभूता आपो राजानं प्रीणयन्तीत्यर्थः। यद्वा समुद्रशब्देन वरुण उच्यते। समुद्रं न वरुणमिव। अप्सु उदकेषु परितो वर्तमानेषु अन्तः मध्ये तस्थिवांसम् स्थितवन्तं द्वीपिनम् शार्दूलवद् अप्रधृष्यं राजानं सुभुवः। सुष्ठु [2]भवन्ति समृद्धा भवन्तीति सुभुवः सेवकजनाः। ते मर्मृज्यन्ते पुनःपुनः अङ्गप्रत्यङ्गानि अभिषेकेण शोधयन्ति। यद्वा पट्टवस्त्रकटकमुकुटादिभिरलंकुर्वन्ति। मृजू शौचालंकारयोः। "मर्मृज्यागनीगन्तीति च' (पा ७,४,६५) इति निपातनाद् अभ्यासस्य रुगागमः। अप्स्विति। 'ऊडिदम्' (पा ६,१,१७१) इत्यादिना विभक्तेरुदात्तत्वम्।

इति चतुर्थकाण्डे द्वितीयेऽनुवाके तृतीयं सूक्तम्।

'एहि जीवम्' इति सूक्तेन उपनयनानन्तरम् आयुष्कामस्य माणवकस्य आञ्जनमणिं संपात्य अभिमन्त्र्य बध्नीयात्। सूत्रितं हि — "'एहि जीवम्' इत्याञ्जनमणिं बध्नाति" (कौसू ७,९) इति। 'ऐरावतीं गजक्षये' (शाक १७,५) इति विहितायाम् ऐरावत्याख्यायां महाशान्तौ आञ्जनमणिबन्धनेऽपि एतत् सूक्तम्। उक्तं शान्तिकल्पे — "'एहि जीवम्' इत्याञ्जनमणिम् ऐरावत्याम्" (शाक १९,८) इति।

एहि॑ जी॒वं त्राय॑माणं॒ पर्व॑तस्या॒स्यक्ष्य॑म्[3] ।
विश्वे॑भिर्दे॒वैर्द॒त्तं प॑रि॒धिर्जीव॑नाय॒ कम् ॥ १ ॥

आ । इ॒हि॒ । जी॒वम् । त्राय॑माणम् । पर्व॑तस्य । अ॒सि॒ । [4]अक्ष्य॑म् ।
विश्वे॑भिः । दे॒वैः । द॒त्तम् । प॒रि॒ऽधिः । जीव॑नाय । कम् ॥ १ ॥

हे आञ्जन एहि आगच्छ। कुतो हेतोरिति तत्राह — जीवम् इति। [5]जीवति प्राणं धारयतीति जीवः आत्मा। तं त्रायमाणम् पालयत्। जीवात्मनः पालनाद्धेतोरित्यर्थः। त्रैङ् पालने इत्यस्मात् हेतौ लटः शानच्। तथा पर्वतस्य त्रिककुन्नाम्नो गिरेः [6]अक्षम् असि चक्षुर्भवसि। विश्वेभिः सर्वैः देवैः इन्द्रादिभिरस्मभ्यं जीवनाय रोगादिराहित्येन

१. हिवि S', Kd. २. भवन्तीति S', Kd. ३. °स्यक्षम् K, Bp[2], सा. RW.; °स्यक्ष्यऽम् Op; स्यक्ष्यऽम् I; °स्यक्ष्यौ पै ८,३,८. ४. अक्षम् K. ५. जीवतीति S', Kd. ६. वैतु. मंपा. द्र.

चिरकालजीवनार्थं दत्तं सत् परिधिरसि। परितो धीयत इति परिधिः प्राकारः। मृत्योरनागमनाय प्राकारो भवसीत्यर्थः। परिधिरिति। परिपूर्वाद् धाञः 'उपसर्गे घोः किः' (पा ३,३,९२) इति किप्रत्ययः। कम् इति पदपूरणः।

परिपाणं पुरुषाणां परिपाणं गवामसि।
अश्वानामर्वतां परिपाणाय तस्थिषे ॥ २ ॥

परिऽपानम्। पुरुषाणाम्। परिऽपानम्। गवाम्। असि।
अश्वानाम्। अर्वताम्। परिऽपानाय। तस्थिषे ॥ २ ॥

हे [1]त्रिककुदाञ्जन त्वं पुरुषाणाम् मनुष्याणां परिपाणम् परिरक्षणसाधनम् असि। पातेः करणे ल्युट्। 'वा भावकरणयोः' (पा ८,४,१०) इति विकल्पेन णत्वम्। गवां च त्वं परिपाणम् परिरक्षणम् असि। गवाम् इति। 'सावेकाचः°' (६,१,१६८) इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'न गोश्वन्साववर्ण°' (पा ६,१,१८२) इति प्रतिषेधः। अश्वानाम् अर्वताम् वडवानां च [2]परिपाणाय परिरक्षणाय तस्थिषे तिष्ठसि। 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति वर्तमाने लिट्। क्रादिनियमाद् इट्। अर्वताम् इति। 'अर्वणस्त्रसावनञः' (पा ६,४,१२७) इति नकारान्तस्य तकारान्तता।

[3]उतासि परिपाणं यातुजम्भनमाञ्जन।
उतामृतस्य त्वं वेत्थाथो[4] असि[5] जीवभोजनमथो हरितभेषजम् ॥ ३ ॥

उत। असि। परिऽपानम्। यातुऽजम्भनम्। आऽअञ्जन।
उत। अमृतस्य। त्वम्। वेत्थ। अथो इति। असि। जीवऽभोजनम्। अथो इति। हरितऽभेषजम् ॥ ३ ॥

आ समन्तात् अनक्ति चक्षुषी अनेनेति आञ्जनम्। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। अस्माद् आङ्पूर्वात् करणे ल्युट्। हे आञ्जन त्वं यातुजम्भनम्। यातवो यातनाः रक्षःपिशाचादिजनिताः पीडाः। तेषां नाशनं [5]परिपाणम् परिरक्षणम् असि। उतशब्दः समुच्चये। ईदृक् सामर्थ्यम् आञ्जनस्य कुत इत्यत आह—उत अपि च त्वम् अमृतस्य अमृतत्वसाधनस्य द्युलोकस्थस्य पीयूषस्य सारं वेत्थ वेत्सि जानासि। 'विदो लटो वा' (पा ३,४,८३) इति थलादेशः। अथो अपि च जीवभोजनम् जीवानां जीवतां प्राणिनाम् अनिष्टनिवर्तनेन पालकम् असि। यद्वा भोगसाधनम् असि। अथो अपि च हरितभेषजम्। हरितस्य पाण्ड्वादिरोगजनितस्य श्यामलत्वस्य निवर्तकम् असि।

१. ककुदांजन S', Kd. २. °पानाय S', Kd. ३. उतैवासि पै ८,३,२.
४. °थोसि O. ५. °पानम् S', Kd.

यस्याञ्जन प्रसर्पस्यङ्गमङ्गं परुष्परुः ।
ततो यक्ष्मं वि बाधस उग्रो मध्यमशीरिव ॥ ४ ॥

यस्य । आऽअञ्जन । प्रऽसर्पसि । अङ्गम्ऽअङ्गम् । परुःऽपरुः ।
ततः । यक्ष्मम् । वि । बाधसे । उग्रः । मध्यमशीःऽइव ॥ ४ ॥

हे आञ्जन यस्य पुरुषशरीरस्य अङ्गमङ्गं सर्वाणि हस्तपादादीन्यङ्गानि परुष्परुः सर्वाणि परूंषि पर्वाणि अङ्गसंधींश्च प्रसर्पसि प्रविश्य अन्तःसिरामुखैर्व्याप्नोषि । 'नित्यवीप्सयोः' (पा ८,१,४) इति अङ्गशब्दपरुःशब्दयोर्द्विर्वचनम् । ततः तस्मात् पुरुषशरीराद् यक्ष्मम् रोगं वि बाधते । पुरुषव्यत्ययः । विबाधसे । तत्र दृष्टान्तः— उग्रः उद्गूर्णबलः मध्यमशीरिव । मध्यमे अन्तरिक्षस्थाने शेते संचरतीति मध्यमशीः वायुः । स यथा मेघजालादिकं क्षणमात्रेण अपसारयति तद्वद् इत्यर्थः । यद्वा मध्यमशीः 'अरिर्मित्रम् अरेर्मित्रम्' इति नीतिशास्त्रोक्तराजमण्डलमध्यवर्ती राजा । स यथा उद्गूर्णबलः सन् पर्यन्तवर्तिनो रिपून् निगृह्णाति तद्वद् इत्यर्थः । मध्यमशीः । मध्ये भवं मध्यमम् । 'मध्यान्मः' (पा ४,३,८) इति मप्रत्ययः । तत्र शेत इति मध्यमशीः । 'क्विप् च' (पा ३,२,७६) इति शीङः क्विप् ।

नैनं प्राप्नोति शपथो न कृत्या नाभिशोचनम् ।
नैनं विष्कन्धमश्नुते यस्त्वा बिभर्त्याञ्जन ॥ ५ ॥

न । एनम् । प्र । आप्नोति । शपथः । न । कृत्या । न । अभिऽशोचनम् ।
न । एनम् । विऽस्कन्धम् । अश्नुते । यः । त्वा । बिभर्ति । आऽअञ्जन ॥ ५ ॥

हे आञ्जन आञ्जनद्रव्य त्वा त्वां यो जनो बिभर्ति धारयति । डुभृञ् धारणपोषणयोः । 'भीह्रीभृहुमद' (पा ६,१,१९२) इत्यादिना पितः प्रत्ययात् पूर्वस्य उदात्तत्वम् । एनम् तव धारकं पुरुषं शपथः परकृतः शापः न प्राप्नोति । तथा पराभिचारजनिता कृत्या च न प्राप्नोति । 'कृञः श च' (पा ३,३,१००) इति चकारात् संज्ञायां करोतेः क्यप् । 'ह्रस्वस्य पिति' (पा ६,१,७१) इति तुक् । अभिशोचनम् अभिशोकः कृत्याजनितो न प्राप्नोति । विष्कन्धम् गतिप्रतिबन्धकम् विघ्नजातमपि एनं नाश्नुते न व्याप्नोति ।

असन्मन्त्राद् दुष्वप्न्याद् दुष्कृताच्छमलादुत ।
दुर्हार्दश्चक्षुषो घोरात्तस्मान्नः पाह्याञ्जन ॥ ६ ॥

---

१. यस्यौषधीः ऋ १०,९७,१२; यस्यौषधयः पै ११,१२,६; यस्य यव पै ९,९,२. २. प्रसर्प्य॰ (?प्रसर्पे॰) B, Bh; प्रसर्पथाङ्ग॰ ऋ. ३. तस्माद् पै ८,३,११. ४. बाधध्वम् ऋ., बाध त्वम् पै., बाध ध्वम् पै [मूको.]. ५. वैतु. मंग. द्र. ६. न तं पै ८,३,५., ७. त्वां पै. ८. ॰मन्त्याद्॰ पै ८,३,६ सा. ९. क्षेत्रियाच्छपथादुत पै.

असत्ऽमन्त्रात् । दुःऽस्वप्न्यात् । दुःऽकृतात् । शमलात् । उत ।
दुःऽहार्दः । चक्षुषः । घोरात् । तस्मात् । नः । पाहि । आऽअञ्जन ॥ ६ ॥

¹असन्मन्त्र्यात् असन्तः अशोभना अभिचारार्था मन्त्रा असन्मन्त्राः । तत्र भवाद् दुःखात् दुःष्वप्न्यात् दुःस्वप्नजनिताद् दुःखात् दुष्कृतात् जन्मान्तरकृतात् पापात् उत शमलात् अन्यस्मादपि क्रियमाणात् पापात् दुर्हार्दः दौर्मनस्याद् घोरात् क्रूरात् परकीयात् चक्षुषः च तस्मात् अनुक्रान्तात् सर्वस्मात् हे आञ्जन नः अस्मान् पाहि रक्ष ।

इदं विद्वानाञ्जन सत्यं वक्ष्यामि नानृतम् ।
सनेयमश्वं ²गामहमात्मानं तव ³पूरुष ॥ ७ ॥

इदम् । विद्वान् । आऽअञ्जन । सत्यम् । वक्ष्यामि । न । अनृतम् ।
सनेयम् । अश्वम् । गाम् । अहम् । आत्मानम् । तव । ⁴पुरुष ॥ ७ ॥

हे आञ्जन विद्वान् तव माहात्म्यं जानन् इदं सत्यम् यथार्थमेव वक्ष्यामि न तु अनृतम् असत्यम् । अतः तव ³पूरुषः दासभूतः अहम् अश्वं गाम् आत्मानम् जीवं सनेयम् संभजेयम् ।

त्रयो दासा आञ्जनस्य तक्मा बलास आदहिः ।
वर्षिष्ठः पर्वतानां त्रिककुन्नाम ते पिता ॥ ८ ॥

त्रयः । दासाः । आऽअञ्जनस्य । तक्मा । बलासः । आत् । अहिः ।
वर्षिष्ठः । पर्वतानाम् । त्रिऽककुत् । नाम । ते । पिता ॥ ८ ॥

आञ्जनस्य आञ्जनसाधनस्य द्रव्यस्य त्रयो रोगाः दासाः दासवद् वशवर्तिनः । तान् अनुक्रामति—तक्मा । तकि कृच्छ्रजीवने⁵ इति धातुः । तस्माद् औणादिको मनिन् । कृच्छ्रजीवनहेतुर्ज्वरः तक्मशब्दवाच्यः । बलासः शारीरं बलम् अस्यति क्षिपतीति बलासः संनिपातादिः । आत् अनन्तरम् अहिः सर्पः । तज्जन्यविषविकार इत्यर्थः । एते प्राणापहारिणो रोगाः आञ्जनप्रभावेन निवर्तन्त इत्यर्थः । अपि च पर्वतानां मध्ये वर्षिष्ठः वृद्धतमः त्रिककुत् नाम त्रीणि ककुदानि शृङ्गाणि यस्य स तथोक्तः । 'त्रिककुत् पर्वते' (पा ५,४,१४७) इति अन्त्यलोपः समासान्तो निपात्यते । एतत्संज्ञः पर्वतः हे आञ्जन ते तव पिता जनकः । वर्षिष्ठ इति । वृद्धशब्दात् इष्ठनि 'प्रियस्थिर' (पा ६,४,१५७) इत्यादिना वर्षादेशः ।

१. वैद्यु. मंपा. द्र. २. गां वासं आत्मानं ऋ १०,९७,४ पै ८,३,१३. ३. पूरुषः A,B, Bp,Bh,D,K,Km,R,Sm,V,Wh. सा. ४. पुरुष P,P²,J,K. ५. °जीवनम् S', Kd.

यदाञ्जनं त्रैककुदं जातं हिमवतस्परि[1] ।
[2]यातूंश्च [3]सर्वाञ्जम्भयत्सर्वाश्च यातुधान्यः ॥ ९ ॥

यत् । आऽअञ्जनम् । त्रैककुदम् । जातम् । हिमऽवतः । परि ।
यातून् । च । सर्वान् । जम्भयत् । सर्वाः । च । यातुऽधान्यः ॥ ९ ॥

हिमवतस्परि हिमवत्पर्वतात्[4] परि उपरिभागे । 'पञ्चम्याः परावध्यर्थे' (पा ८,३,५१) इति विसर्जनीयस्य सत्वम् । त्रैककुदम् । तत्रस्थः त्रिककुन्नाम पर्वतः तत्संबन्धि यद् आञ्जनं जातम् उत्पन्नं तद् यातून् यातुधानांश्च सर्वान् अशेषान् सर्वा यातुधान्यः यातुधानीः । 'वा छन्दसि' (पा ६,१,१०६) इति शसि पूर्वसवर्णदीर्घाभावः । यातुधानस्त्रियश्च जम्भयत् नाशयद् वर्तते । अतः [6]अस्मद्रोगादीन् नाशयतु इत्यर्थः ।

यदि वासि त्रैककुदं यदि [7]यामुनमुच्यसे ।
उभे ते भद्रे नाम्नी ताभ्यां नः पाह्याञ्जन ॥ १० ॥

यदि । वा । असि । त्रैककुदम् । यदि । यामुनम् । उच्यसे ।
उभे इति । ते । भद्रे इति । नाम्नी इति । ताभ्याम् । नः । पाहि । आऽअञ्जन ॥ १० ॥

हे आञ्जन त्वं यदि वा त्रैककुदम् असि [8]त्रिककुत्पर्वतसंबन्धि भवसि यदि वा यामुनम् यमुनायाः संबन्धि उच्यसे जनैः कथ्यसे ते? उभे त्रैककुदं यामुनम् इति नाम्नी नामनी संज्ञे भद्रे कल्याण्यौ । ताभ्यां नामभ्याम् हे आञ्जन नः अस्मान् पाहि रक्ष ।

इति चतुर्थं सूक्तम् ।

'वाताज्जातः' इति सूक्तेन उपनयनानन्तरम् आयुष्कामस्य माणवकस्य शङ्खमणिं संपात्य अभिमन्त्र्य बध्नीयात् । तद् उक्तं कौशिकेन उपनयनं प्रक्रम्य — " 'वाताज्जातः' इति कृशनम्" (कौसू ५८,७) इति ।

'वारुणीं जलभये' (शाक १७,४) इति विहितायां वारुण्याख्यायां महाशान्तौ शङ्खमणिबन्धनेपि एतत् सूक्तम् । उक्तं शान्तिकल्पे — " 'वाताज्जातः' इति शङ्खं वारुण्याम्" (शाक १९,६) इति ।

वाताज्जातो अन्तरिक्षाद्विद्युतो ज्योतिषस्परि ।
स नो [9]हिरण्यजाः शङ्खः कृशनः पात्वंहसः ॥ १ ॥

---

१. °त उपरि आपमं २,८,११ हिगृ १,११,५. २. अहीँश्च मा १६,५ ते ४,५,१,२ मै २, ९,२ काठ १७,११ क २७,१. ३. सर्वांज्ज° Bh,D,Km,Sm,RW. ४. °युस्स° B,K, Bh,R,Bp2,M,I, मा. तै. मै. काठ. क. ५. °पर्वतपरि S', Kd. ६. अस्माद्रो° S', Kd. ७. [illegible] पै ८,३,१०. ८. त्रैकक° S', Kd. ९. °ण्यदाः पै ४,२५,१.

वातात् । जातः । अन्तरिक्षात् । विऽद्युतः । ज्योतिषः । परि ।
सः । नः । हिरण्यऽजाः । शङ्खः । कृशनः । पातु । अंहसः ॥ १ ॥

वातात् वायोः जातः उत्पन्नः शङ्खः तथा अन्तरिक्षात् तदधिष्ठितात् अन्तरिक्षलोकात् विद्युतः तडितः । यद्वा विद्योतमानात् । ज्योतिषः ज्योतिर्मण्डलाच्च परि अधि उपरिभागे जातः । 'पञ्चम्याः परावध्यर्थे' (पा ८,३,५१) इति विसर्जनीयस्य सत्वम् । स तादृशो वातादिकारणकः हिरण्यजाः हिरण्यात् सुवर्णाद् उत्पन्नः कृशनः कर्शयिता शत्रूणां तनूकर्ता एवंमहानुभावः शङ्खः अंहसः पापात् नः अस्मान् पातु रक्षतु ।

यो अंग्रतो रोचनानां समुद्रादधि जज्ञिषे ।
शङ्खेन हत्वा रक्षांस्यत्त्रिणो वि षहामहे ॥ २ ॥

यः । अग्रतः । रोचनानाम् । समुद्रात् । अधि । जज्ञिषे ।
शङ्खेन । हत्वा । रक्षांसि । अत्त्रिणः । वि । सहामहे ॥ २ ॥

हे शङ्ख यस्त्वं रोचनानाम् रोचमानानां भास्वराणां नक्षत्रादीनाम् अग्रतः अग्रे प्रमुखे वर्तमानः श्रेष्ठः समुद्रादधि समुद्रस्योपरि जज्ञिषे जायसे । रुच दीप्तौ इत्यस्माद् 'अनुदात्तेतश्च हलादेः' (पा ३,२,१४९) इति युच् । तेन ज्योतिर्मयेन शङ्खेन त्वया रक्षांसि हत्वा अत्त्रिणः अदनशीलान् पिशाचादीन् वि सहामहे विशेषेण अभिभवामः । अत्त्रिण इति । 'अदेस्त्रिनिश्च' (पाउ ४,६८) इति औणादिकः त्रिनिप्रत्ययः ।

शङ्खेनामीवाममतिं[1] शङ्खेनोत सदान्वाः ।
शङ्खो नो विश्वभेषजः कृशनः पात्वंहसः ॥ ३ ॥

शङ्खेन । अमीवाम् । अमतिम् । शङ्खेन । उत । सदान्वाः ।
शङ्खः । नः । विश्वऽभेषजः । कृशनः । पातु । अंहसः ॥ ३ ॥

अमीवाम् रोगम् अमतिम् सर्वानर्थमूलम् अज्ञानं च शङ्खेन मणिरूपापन्नेन । विषहामहे इत्यनुषङ्गः । उत अपि च शङ्खेन सदान्वाः सदा नोनूयमानाः अलक्ष्मीः अभिभवामः । एवं विश्वभेषजः सर्वस्योपद्रवजातस्य निराकर्ता कृशनः । हिरण्यनामैतत् । विकारे प्रकृतिशब्दः । हिरण्याज्जातः शङ्खः नः अस्मान् अंहसः पापात् पातु रक्षतु ।

१. °वाममर्यं पै ७,२५,५.

दिवि जातः ¹समुद्रजः सिन्धुतस्पर्याभृतः ।
स नो ²हिरण्यजाः शङ्ख ³आयुष्प्रतरणो मणिः ॥ ४ ॥

दिवि । जातः । समुद्रऽजः । सिन्धुतः । परि । आऽभृतः ।
सः । नः । हिरण्यऽजाः । शङ्खः । आयुःऽप्रतरणः । मणिः ॥ ४ ॥

दिवि द्युलोके अन्तरिक्षे प्रथमं जातः उत्पन्नः ततः समुद्रजः समुद्रे जातः । 'सप्तम्यां जनेर्डः' ( पा ३,२,९२ ) इति डप्रत्ययः । सिन्धुतः सिन्धोः समुद्रात् नदीमुखाद् वा पर्याभृतः परित आहृतः स तादृशः हिरण्यजाः हिरण्याज्जातः शङ्खः शङ्खविकारो मणिः नः अस्माकम् आयुःप्रतरणः आयुषः प्रवर्धयिता भवतु ।

समुद्राज्जातो मणिर्वृत्राज्जातो दिवाकरः ।
सो अस्मान्त्सर्वतः पातु हेत्या देवासुरेभ्यः ॥ ५ ॥

समुद्रात् । जातः । मणिः । वृत्रात् । जातः । दिवाऽकरः ।
सः । अस्मान् । सर्वतः । पातु । हेत्याः । देवऽअसुरेभ्यः ॥ ५ ॥

समुद्रात् अम्बुधेः। यद्वा समुद्रम् इति अन्तरिक्षनाम। अन्तरिक्षात् जातो मणिः मण्युपादानभूतः शङ्खः वृत्रात् लोकत्रयावरकाद् वृत्रासुरशरीरात् । यद्वा आवरकस्वभावाद् मेघात् । जातः विनिर्मुक्तो दिवाकरः सूर्यः । लुप्तोपमम् एतत् । तद्वत् प्रभातिशययुक्तोऽयं शङ्ख इत्यर्थः । स शङ्खविकारो मणिः ⁴हेत्या हननेन हेतुना देवासुरेभ्यः । उपलक्षणम् एतत् । देवासुरप्रभृतिभ्यो भयहेतुभ्यः सर्वतः सर्वस्माद् उपद्रवजातात् अस्मान् पातु रक्षतु ।

हिरण्यानामेकोऽसि ⁵सोमात् त्वमधि⁵ जज्ञिषे ।
⁶रथे त्वमसि दर्शत इषुधौ रोचनस्त्वं प्र ण आयूंषि ⁷तारिषत् ॥ ६ ॥

हिरण्यानाम् । एकः । असि । ⁸सोमात् । त्वम् । अधि । जज्ञिषे ।
रथे । त्वम् । असि । दर्शतः । इषुऽधौ । रोचनः । त्वम् । प्र । नः । आयूंषि । तारिषत् ॥

हे शङ्ख त्वं हिरण्यानाम् सुवर्णरजतादिभासुरद्रव्याणां मध्ये एकोसि मुख्यो भवसि । यतः त्वं सोमात् अमृतमयात् सोममण्डलाद् अधि जज्ञिषे जातोसि । अधिः पञ्चम्यर्थानुवादी । तथा संग्रामेषु त्वं रथे दर्शतोसि दर्शनीयो भवसि । दृशेरौणादिकः

---

१. °भृतः पै ४,२५,६. २. °ण्यदाश् पै. ३. आयुःप्र° A,B,B²,Bp²,D².E² H, I,L,M,Op,P³,R²,T,W, पै [मूको.]; आयुप्र° D. ४. वैतु. पपा. द्र. ५. स होमादधि पै ४,२५,२. ६. रथेषु पै. ७. तारिषद् A,B^h,K,R,S^m,Wh. ८. सोमा P,P²,J, K,Wh.

अतन्प्रत्ययः। तथा इषुधौ शराधारभूते निषङ्गे ध्रियमाणः त्वं रोचनः रोचमानः दीप्यमानो दृश्यसे। एवंमहानुभावः शङ्खः तद्विकारो मणिः नः अस्माकम् आयूंषि प्र तारिषत् प्रवर्धयतु। प्रपूर्वस्तिरतिर्वर्धनार्थः। तस्मात् लेटि अडागमः। "सिब्बहुलम्" (पा ३,१,३४) इति सिप्। तस्य आर्धधातुकत्वेन इटि कृते 'सिब्बहुलं छन्दसि णिद् वक्तव्यः' (पावा ३,१,३४) इति वचनाद् वृद्धिः।

देवानामस्थि कृशनं बभूव तदात्मन्वच्चरत्यप्स्व१न्तः[1]।
[2]तत् ते बध्नाम्यायुषे वर्चसे बलाय दीर्घायुत्वाय शतशारदाय
[3]कार्शनस्त्वाभि रक्षतु ॥७॥

देवानाम्। अस्थि। कृशनम्। बभूव। तत्। आत्मन्ऽवत्। चरति। अप्ऽसु। अन्तः। तत्। ते। बध्नामि। आयुषे। वर्चसे। बलाय। दीर्घायुऽत्वाय। शतऽशारदाय। [4]कार्शनः। त्वा। अभि। रक्षतु॥

देवानाम् इन्द्रादीनां संबन्धि यद् रक्षाकरम् [5]अस्ति तत् कृशनम् शङ्खस्य कारणभूतं सुवर्णं बभूव। तत् कृशनम् आत्मन्वत् शङ्खरूपशरीरयुक्तं सत् अप्सु उदकेषु अन्तः चरति प्राण्यात्मना वर्तते। हे उपनीत तत् तथाविधं शङ्खरूपेण अवस्थितं कृशनं ते तव बध्नामि। किमर्थम्। आयुषे आयुरादिफलसिद्ध्यर्थम्। आयुः चिरकालजीवनम्। वर्चः शरीरकान्तिः। बलं प्रसिद्धम्। आयुषे इत्युक्तमेवार्थं विवृणोति दीर्घायुत्वायेति। दीर्घम् आयुरस्य दीर्घायुः। तस्य भावस्तत्त्वम्। 'छन्दसीणः' (पाउ १,२) इति एतेरुण्प्रत्ययः। आयुषो दैर्घ्यमपि स्पष्टयति शतशारदायेति। शरदा ऋतुना सह वर्तन्त इति शारदाः संवत्सराः। शतं शारदाः परिमाणम् अस्य तत् शतशारदम्। तावत्कालव्यापिजीवनायेत्यर्थः। स कार्शनः कृशनसंबन्धी मणिः हे माणवक त्वा त्वाम् अभि रक्षतु सर्वतः पालयतु।

इत्यथर्ववेदार्थप्रकाशे चतुर्थे काण्डे द्वितीयोऽनुवाकः।

'अनड्वान् दाधार' इति आद्येन सूक्तेन अनडुत्सवे निरुप्तहविरभिमर्शनम् संपातम् दातृवाचनं च कुर्यात्। तद् आह कौशिकः—" 'अनड्वान्' इत्यनड्वाहम्, 'सूर्यस्य रश्मीन् (अ ४,३८,५-७) इति' [6]कर्कीम्" (कौसू ६६,११;१२) इति। [7]अभिमर्शनादीनां सूत्रं तु 'आशानाम्' (अ १,३१) इति सूक्त एव उदाहृतम्।

अनड्वान् दाधार पृथिवीमुत द्यामनड्वान् दाधारोर्व१न्तरिक्षम्।
अनड्वान् दाधार प्रदिशः षडुर्वीरनड्वान् विश्वं भुवनमा विवेश ॥ १ ॥

१. °स्वन्तः Bh,D,R,Sm. २. तं पै ४,२५,७. ३. तु. सा.; वैतु. A,B,Bp,Bh, D,Km,R,Sm,P,P2,J,V,RW. कर्शन°, पै [मूको.] कार्षण°. ४. कृशनः P,P2,J. ५. वैतु. मंपा. द्र. ६. कर्किम् S', Kd. ७. अभिमर्शना अभि° S', Kd. ८. °र्वन्त° Bh,D,Sm.

अ॒न॒ड्वान् । दा॒धा॒र॒ । पृ॒थि॒वीम् । उ॒त । द्याम् । अ॒न॒ड्वान् । दा॒धा॒र॒ । उ॒रु । अ॒न्तरि॑क्षम् ।
अ॒न॒ड्वान् । दा॒धा॒र॒ । प्र॒ऽदिशः॑ । षट् । उ॒र्वीः । अ॒न॒ड्वान् । विश्व॑म् । भुव॑नम् । आ । वि॒वे॒श॒ ॥

अनः शकटं वहतीति अनड्वान् शकटवहनसमर्थो वृषभः । सोयं कर्षणभारवहनादिना पृथिवीम् भूमिं दाधार धारयति पोषयति । धृञ् धारणे इत्यस्मात् छान्दसो वर्तमाने लिट् । तुजादित्वाद् अभ्यासदीर्घत्वम् । यद्वा अनडुच्छब्देन वृषरूपो धर्मोभिधीयते । 'धर्मो वृषभाकृतिर्भूत्वा पृथिव्यादिधारणं करोतीति योज्यम् । श्रूयते हि—'धर्मो विश्वस्य जगतः प्रतिष्ठा' (तैआ १०,६३,१) इति । उत द्याम् द्युलोकं स्वर्गलोकमपि स एव दाधार । कर्षणादिनिष्पन्नेन चरुपुरोडाशादिहविषा द्युलोकं पोषयतीत्यर्थः । तथा उरु विस्तीर्णम् अन्तरिक्षं अन्तरिक्षलोकमपि स धारयति । अनड्वान् प्रदिशः प्राच्याद्या महादिशश्च दाधार धारयति । षडुर्वीः उर्वीशब्दवाच्याः 'द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्चौषधयश्च' ( आश्री १,२,१ ) इति षट्संख्याकाः सन्ति । ता अपि असौ धारयति । पृथिव्या [2]द्योश्च पृथगुपादानाद् इतरचतुष्टयापेक्षम् उर्वीग्रहणम् । इत्थं ब्रह्मणा सृष्टः अनड्वान् विश्वम् सर्वं भुवनम् पृथिव्यादिभ्यः अन्यमपि लोकम् आ विवेश रक्षणार्थं प्रविश्य वर्तते ।

अ॒न॒ड्वानिन्द्रः॒ स प॒शुभ्यो॒ वि च॑ष्टे [3]त्र॒यांछ॒क्रो वि[4] मि॑मीते॒ अध्व॑नः ।
भू॒तं भ॑वि॒ष्यद् भुव॑ना[5] दुहा॑नः॒ सर्वा॑ [6]दे॒वानां॒ चर॑ति व्र॒तानि॑ ॥ २ ॥

अ॒न॒ड्वान् । इन्द्रः॑ । सः । प॒शुऽभ्यः॑ । वि । च॒ष्टे॒ । त्र॒यान् । श॒क्रः । वि । मि॒मी॒ते॒ । अध्व॑नः ।
भू॒तम् । भ॒वि॒ष्यत् । भुव॑ना । दुहा॑नः । सर्वा॑ । दे॒वाना॑म् । च॒र॒ति॒ । व्र॒तानि॑ ॥ २ ॥

सः प्रागुक्तः अनड्वान् पशुभ्यः पशवो गोमहिषाद्याः तादर्थ्ये चतुर्थी । तेषाम् अर्थे इन्द्रः सन् वि चष्टे प्रकाशते । रिरंसावशाद् इन्द्रवत् पशूनां दृष्टौ भासत इत्यर्थः । यद्वा अयम् अनड्वान् इन्द्र एव । इन्द्रो यथा वृष्टिजलसेकेन चराचरात्मकं सर्वं जगद् उत्पादयति एवम् अनड्वानपि रेतःसेकेन पशून् उत्पादयन् तज्जन्यपयोदध्यादिद्रव्येण कृत्स्नं जगद् उत्पादयतीति एककार्यकरत्वाद् अनयोरभेदः । स च अन्येभ्यः पशुभ्यः सकाशात् वि चष्टे वीर्यवत्त्वेन प्रकाशते । चष्टिः पश्यतिकर्मा । स च शक्रः सर्वकर्मसु शक्तः इन्द्रात्मको वा [7]स्तियान् । 'स्तिया आपो भवन्ति स्त्यायनात् ( नि ६,१७ ) इति यास्कवचनात् स्त्यायतेरेतद् रूपम् । अत्र तु अयम् अर्थः— स्तियान् संस्त्यानप्रभवान् अध्वनः अध्ववद् अविच्छिन्नान् पशुसंतानान् वि मिमीते विशेषेण निर्मिमीते । माङ् माने शब्दे च । शपः श्लुः । 'भृञामित्' ( पा ७,४,७६ ) इति अभ्यासस्य इत्वम् । एवम् इन्द्रात्मकोनड्वान् भूतम् भूतकालावच्छिन्नं वस्तु भविष्यत्

१. धर्मं S', Kd. २. द्यौश्च S', Kd. ३. स्त्रयान् K. ४. आ पै. १,२५,३. ५. °नम् पै. ६. देवानां विभ्रंश् चरति पै. ७. वैद्यु. मंपा. द्र.

आगामिकालावच्छिन्नं वस्तु भुवना भुवनानि वर्तमानकालावच्छिन्नसद्भावानि च वस्तूनि दुहानः उत्पादयन् देवानाम् इन्द्रादू अन्येषामपि व्रतानि कर्माणि सर्वा सर्वाणि चरति अनुतिष्ठति । भुवना सर्वा इत्युभयत्र 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपः ।

इन्द्रो [1]जातो मनुष्येष्वन्तर्घर्मस्तप्तश्चरति [2]शोशुचानः ।
सुप्रजाः [3]सन्त्स उदारे [4]न सर्षद् [5]यो नाश्नीयादनडुहो विजानन् ॥ ३ ॥

इन्द्रः । जातः । मनुष्येषु । अन्तः । घर्मः । तप्तः । चरति । शोशुचानः ।
सुऽप्रजाः । सन् । सः । उत्ऽआरे । न । सर्षत् । यः । न । अश्नीयात् । अनडुहः । विऽजानन् ॥३॥

मनुष्येषु मनोरपत्येषु मनुष्यजातीयेषु अन्तः मध्ये तावत् अनड्वान् प्रागुक्तरीत्या इन्द्रो जातः । तथा सोऽनड्वान् घर्मः दीप्तः सूर्यः सन् तप्तः । कर्तरि क्तः । कृत्स्नं जगत् तपन् संतापयुक्तं कुर्वन् शोशुचानः अत्यर्थं दीप्यमानः चरति वियति संचरति । यद्वा घर्मः प्रवर्ग्यः तप्तः [6]वैकङ्कतखादिरादिभिरिध्मैः संततः शोशुचानः अत्यर्थं शोचन् चरति वर्तते । तादृग्घर्मरूपः अनड्वान् जात इत्यर्थः । सोपि हि कर्षणादिव्यापार-जनितश्रमेण तप्तः संतप्तगात्रः अतिशयितशोकयुक्तश्च सन् चरति । अतस्तप्तत्वादि-धर्मसामान्याद् अनडुहो घर्मतादात्म्यम् । इत्थं [7]नः अस्माकं संबन्धिनः अनडुहः दीप्य-मानस्य माहात्म्यं विजानन् विशेषेण अवगच्छन् यः प्रतिग्रहीता अश्नीयात् भुञ्जीत स सुप्रजाः शोभनप्रजोपेतः सन् [8]आरे दूरे देहावसानकाले [8]उत अस्माच्छरीरात् उत्क्रान्तः न [8]सं सर्षत् न संसरति पुनः संसारधर्मान् न प्राप्नोति । किंतु सूर्यादिलोकं प्राप्नोती-त्यर्थः । अत एव सोमयागविशेषस्य अनडुहां लोकः प्राप्यत्वेन आम्नायते — 'अग्निष्टोमेन अनडुहो लोकम् आप्नोति ××× ज्योतिष्मतो लोकान् जयति' ( तांब्रा १८,३,३;४ ) इति । सुप्रजा इति । 'नित्यमसिच् प्रजामेधयोः' ( पा ५,४,१२२ ) । इति असिच् समासान्तः । सर्षत् इति । सृ गतौ इत्यस्मात् लेटि अडागमः । 'सिब्बहुलम्' ( पा ३,१,३४ ) इति सिप् ।

अनड्वान् दुहे सुकृतस्य लोक ऐनं प्याययति पवमानः पुरस्तात् ।
पर्जन्यो धारा मरुत ऊधो अस्य यज्ञः पयो दक्षिणा दोहो अस्य ॥ ४ ॥

अनड्वान् । दुहे । सुऽकृतस्य । लोके । आ । एनम् । प्याययति । पवमानः । पुरस्तात् ।
पर्जन्यः । धाराः । मरुतः । ऊधः । अस्य । यज्ञः । पयः । दक्षिणा । दोहः । अस्य ॥ ४ ॥

सुकृतस्य यागादिजनितपुण्यस्य फलभूते लोके इन्द्रादिदेवतात्मकः अयम् अनड्वान् दुहे अपेक्षितम् अक्षयं फलं दुग्धे । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) इति

१. एष पै ३,२५,५. २. संशिशानः पै. ३. सं स S. ४. ण P[2],M,W,E[1] पै. ५. योनोश्नी° S. ६. वैकंकते° S', Kd. ७. वैदु. मंपा. इ. ८. °वर्षेद् पै ३,२५,२.

तलोपः। तत्प्रकारमेव विभज्य दर्शयति—पुरस्तात् पूर्वं पवमानः पवित्रेण शोध्यमानः अमृतमयः सोमः एनम् अनड्वाहम् आ प्यायति आप्यायितं रसभरितं करोति। ततश्च पर्जन्यः वृष्टिप्रेरको देवो धारा भवति। मरुतः एकोनपञ्चाशत्संख्या देवगणाः अस्य अनडुहः ऊधो भवति। योऽयं क्रतुः यज्ञः सवयज्ञः स एव पयः दोग्धं भवति। येयं तस्मिन् यज्ञे दत्ता दक्षिणा सा अस्य अनडुहो दोहः दोहक्रिया संपद्यते। इत्थम् इन्द्रादिदेवतात्मकस्य अनडुहो दोहोपि देवतात्मकः संपन्न इति अक्षयफलत्वम्।

यस्य॒ नेशे॑ य॒ज्ञप॑ति॒र्न य॒ज्ञो नास्य॑ दा॒तेशे॒ न प्र॑तिग्र॒हीता।
यो ¹वि॑श्व॒जिद् वि॑श्व॒भृद् वि॒श्वक॑र्मा घ॒र्मं नो॑ ब्रूत यत॒मश्चतु॑ष्पात् ॥ ५ ॥

यस्य॑। न। ईशे॑। य॒ज्ञऽप॑तिः। न। य॒ज्ञः। न। अ॒स्य॒। दा॒ता। ईशे॑। न। प्र॒ति॒ऽग्र॒ही॒ता।
यः। वि॒श्व॒ऽजित्। वि॒श्व॒ऽभृत्। वि॒श्वऽक॑र्मा। घ॒र्मम्। नः॒। ब्रू॒त। य॒त॒मः। चतुः॑ऽपात् ॥ ५ ॥

यस्य देवतात्मकस्य अनडुहः। 'अधीगर्थदयेशाम्०' (पा २,३,५२) इति कर्मणि षष्ठी। यम् इत्यर्थः। यज्ञपतिः यजमानः नेशे नेष्टे। 'लोपस्त आत्मनेपदेषु' (पा ७,१,४१) इति तलोपः। यज्ञपतिः। 'पत्यावैश्वर्ये' (पा ६,२,१८) इति पूर्वपदप्रकृतिस्वरत्वम्। यज्ञः यागक्रिया च न ईशे नेष्टे। दाता प्रतिग्रहीता च अस्य अनडुहो नेशे नेष्टे। सर्वत्र ईशितृत्वमेव अनडुहः न ईशितव्यत्वम् इत्युक्तमर्थं समर्थयते—य इन्द्रादिदेवतारूपः अनड्वान् विश्वजित् विश्वस्य सर्वस्य जेता विश्वभृत् विश्वस्य सर्वस्य वाय्वात्मना भर्ता यद्वा अन्नप्रदानेन पोषयिता। विश्वकर्मा। "०प्रजापतिः परमेष्ठी०" (७) इत्याम्नास्यते तदभिप्रायेणेदम्। विश्वं सर्वं जगत् कर्म कर्तव्यं यस्य स विश्वकर्मा। तथा यतमः यज्जातीयः चतुष्पान् पादचतुष्टयोपेतः सन् नः अस्मभ्यं घर्मम् दीप्यमानम् आदित्यं ब्रूत ब्रूते कथयति। लटि टेरेत्वाभावश्छान्दसः। तत्स्वरूपम् उपदिशतीत्यर्थः। नास्य दातेति संबन्धः। यतम इति। 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा ५,३,९३) इति यच्छब्दाद् डतमच्।

येन॑ ²दे॒वाः ²स्व॒रा॑रुरु॒हुर्हि॒त्वा शरी॑रम॒मृत॑स्य॒ ³नाभि॑म्।
तेन॑ गेष्म सु॒कृत॑स्य लो॒कं घ॒र्मस्य॑ व्र॒तेन॒ ⁴तप॑सा यश॒स्यवः॑ ॥ ६ ॥

येन॑। दे॒वाः। स्वः॑। आ॒ऽरु॒रु॒हुः। हि॒त्वा। शरी॑रम्। अ॒मृत॑स्य। नाभि॑म्।
तेन॑। गे॒ष्म॒। सु॒ऽकृ॒तस्य॑। लो॒कम्। घ॒र्मस्य॑। व्र॒तेन॑। तप॑सा। य॒श॒स्यवः॑ ॥ ६ ॥

येन देवतात्मना अनडुहा देवाः स्वः स्वर्गं लोकम् आरुरुहुः आरूढवन्तः।

१. विश्वदृग् पै ३,२५,४. २. देवा स्वरा° Bʰ,D,R,Sᵐ. ३. धाम पै ३,२५,६. ४. यशसा तपस्यवः पै.

तत्प्रकार उच्यते — पार्थिवम् एतत् शरीरं हित्वा त्यक्त्वा। ओहाक् त्यागे इत्यस्मात् क्त्वाप्रत्यये 'जहातेश्च' क्त्वि' (पा ७,४,४३) इति हित्वम्। अमृतस्य अमरणस्य नाभिम् बन्धकम्। मोक्षद्वारभूतम् इत्यर्थः। तेन अनडुहा सुकृतस्य पुण्यस्य फलभूतं लोकं जेष्म जयेम। जयतेर्लिङि 'बहुलं छन्दसि' (पा २,४,७३) इति शपो लुक्। 'सिब्बहुलम्°' (पा ३,१,३४) इति सिप्। कथंभूताः सन्तः। घर्मस्य दीप्यमानस्य सूर्यस्य संबन्धिना व्रतेन कर्मणा तपसा दीक्षादिनियमजनितेन अनशनादिना च यशस्यवः। 'न तस्येशे कश्चन तस्य नाम महद् यशः' (तैआ १०,१,२) इति यशःशब्दस्य अद्वितीयब्रह्मपरत्वेन श्रुतत्वाद् अत्रापि यशःशब्देन तद् विवक्ष्यते। यशःशब्दोपलक्षितं निरतिशयं मोक्षसुखम् आत्मन इच्छन्तः। [2]यशःशब्दात् 'सुप आत्मनः क्यच्' (पा ३,१,८)। 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः।

इन्द्रो॑ रू॒पेणा॒ग्निर्वहे॑न प्र॒जाप॑तिः पर॒मे॒ष्ठी वि॒राट्।
वि॒श्वान॑रे अक्रमत वैश्वान॒रे अ॑क्रमतान॒डुह्य॑क्रमत[3]।
[4]सो॑ऽदृंहयत॒ सो॑ऽधारयत[4] ॥ ७ ॥

इन्द्रः॑। रू॒पेण॑। अ॒ग्निः। वहे॑न। प्र॒जाऽप॑तिः। प॒र॒मे॒ऽस्थी। वि॒ऽराट्। वि॒श्वान॑रे। अ॒क्र॒म॒त॒। वै॒श्वा॒न॒रे। अ॒क्र॒म॒त॒। अ॒न॒डु॒हि॑। अ॒क्र॒म॒त॒। सः। [5]अ॒दृं॒ह॒य॒त॒। सः। अ॒धा॒र॒य॒त॒[5] ॥ ७ ॥

रूपेण आकृत्या अयम् अनड्वान् इन्द्रो भवति। वहेन युगवहनप्रदेशेन स्कन्धेन अग्निः अग्न्यात्मको भवति। 'अग्निदग्धमिव ह्यस्य वहं भवति' (माश ४,५,१,१५) इति ब्राह्मणम्। वहत्यनेनेति वहः। 'गोचरसंचर' (पा ३,३,११९) इत्यादिना करणे घप्रत्ययान्तो निपातितः। प्रजापतिः प्रजानां पतिः प्रजासृष्टिकर्ता। परमेष्ठी परमे सत्यलोके तिष्ठतीति परमेष्ठी आदिब्रह्मा। विराट् स्थूलप्रपञ्चस्य कर्ता 'तस्माद् विराड् अजायत' (तैआ ३,१२,२) इति श्रुतिप्रसिद्धः। एते त्रयः क्रमेण विश्वानरादिषु व्याप्य वर्तन्ते। तत्र विश्वानर इति सर्वनरात्मकस्य 'विश्वानरस्य वस्पतिम् अनानतस्य शवसः' (ऋ ८,६८,४) इति श्रुत्यन्तरप्रसिद्धस्य देवस्य संज्ञा। तस्मिन् प्रजापतिः अक्रमत तादात्म्येन प्रविष्टः। वैश्वानर इति विश्वनरहितः अग्निः। तत्र परमेष्ठी अक्रमत तदात्मना संक्रान्तवान्। उक्तप्रभावे अनडुहि विराड् अक्रमत तद्रूपेण प्राविशत्। अतः अयम् अनड्वान् विराडात्मक इत्यर्थः। यद्वा इन्द्रो देवः रूपेण स्वकीयेन विश्वानरे देवे अक्रमत। अग्निर्वहेन वहनसामर्थ्येन वैश्वानरे अक्रमत। परमेष्ठी परमे सत्यलोके स्थितः प्रजापतिः विराट्। 'सुपां सुलुक्°' (पा ७,१,३९) इति तृतीयाया लुक्। विराजा अन्नेन अनडुहि अक्रमत। अतः प्रजापत्यात्मकोयम् अनड्वान् इति स्तुतिः।

१. वैद्र. मंपा. द्र. २. श्रवःश° S', Kd. ३. °मत् A,B[h],P[3],M,W,E[2],O,Op. ४. सा. इममंशम् अष्टम्यामृचि व्याख्याति (तु. P[3],M,W,E,O,Op.) ५. अदृंहयत। सः। अधारयत P[2].

मध्यमेतदनडुहो यत्रैष वह आहितः ।
एतावदस्य प्राचीनं यावान् प्रत्यङ् समाहितः ॥ ८ ॥

मध्यम् । एतत् । अनडुहः । यत्र । एषः । वहः । आऽहितः ।
एतावत् । अस्य । प्राचीनम् । यावान् । प्रत्यङ् । सम्ऽआहितः ॥ ८ ॥

सः अनडुच्छरीरे प्रविष्टः प्रजापतिः तस्य अनडुहः एतत् मध्यम् अङ्गम् अदृंहयत दृढम् अकरोत् । तथा स प्रजापतिः [1]अधारयत तद् मध्यं भारवहनसमर्थम् अकरोत् । तद् मध्यं विशिनष्टि—यत्र यस्मिन् मध्ये पृष्ठभागे एष वहः भारः आहितः स्थापितः । एतद् मध्यम् इति संबन्धः । भारवहनप्रदेशस्य मध्यत्वम् उपपादयति—एतावद् इति । अस्य अनडुत्संबन्धिनो मध्यदेहस्य प्राचीनम् प्राग्भागः एतावत् एतत्परिमाणयुक्तम् प्रत्यङ् प्रत्यग्भागो यावान् यत्परिमाणवान् समाहितः सम्यक् [2]निर्वर्तितः । एवं प्राक्प्रत्यग्भागावुभावपि समानौ । तयोर्मध्यदेशेन भारं वहतीत्यर्थः ।

यो वेदानडुहो दोहान् सप्तानुपदस्वतः ।
प्रजां च लोकं चाप्नोति तथा [3]सप्तऋषयो विदुः ॥ ९ ॥

यः । वेद । अनडुहः । दोहान् । सप्त । अनुपऽदस्वतः ।
प्रऽजाम् । च । लोकम् । च । आप्नोति । तथा । सप्तऽऋषयः । [4]विदुः ॥ ९ ॥

यः पुरुषः अनडुहः बलीवर्दस्य सप्त सप्तसंख्याकान् अनुपदस्वतः क्षयरहितान् दोहान् व्रीह्यादिसप्तग्राम्यौ[5]षधिरूपान् वेद जानाति । यद्वा अनडुहः प्रजापतिरूपत्वस्य उक्तत्वात् तत्सृष्टौ लोकसमुद्रादयो ये सप्तसंख्याकाः सन्ति तान् सर्वान् सप्तधा विभक्तान् अनडुहो दोहान् यो जानाति स विद्वान् प्रजां च पुत्रपौत्रादिकां यागादिभिः प्राप्यं लोकम् स्वर्गादिलोकं च आप्नोति । यथैतद् उक्तम् तथा तेनैव प्रकारेण अनडुन्माहात्म्यं सप्तर्षयो विदुः जानन्ति । ते च आश्वलायनेन अनुक्रान्ताः—

'विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते [6]सप्तऋषयः ॥' ([7]बौश्रौप्र ५४:१२) इति ।

सप्तर्षिप्रख्यानामेव इयम् अनडुहि प्रजापतिविद्या नान्येषाम् इति विद्यास्तुतिः ।

१. अधारयद् S', Kd. २. निर्वर्तितः S', Kd. ३. सप्तर्ष° Km, V, पै ३,२५,९., ४. विदुः P. ५. °म्यौषधि S', Kd. ६. सप्तर्ष° S', Kd. ७. आश्रौप. १२,१ संपा.

पृद्भिः सेदिमवक्रामन्निरां[1] जङ्घाभिरुत्खिदन् ।
श्रमेणानड्वान् कीलालं कीनाशश्चाभि[2] गच्छतः ॥ १० ॥

पत्ऽभिः । सेदिम् । अवऽक्रामन् । [3]इराम् । जङ्घाभिः । उत्ऽखिदन् ।
श्रमेण । अनड्वान् । कीलालम् । [4]कीनाशः । च[4] । अभि । गच्छतः ॥ १० ॥

अयम् प्रजापत्यात्मकः अनड्वान् पद्भिः पादैश्चतुर्भिः सेदिम् अवसादकरीम् अलक्ष्मीम् अवक्रामन् अवाङ्मुखीम् अधितिष्ठन् इराम् भूमिं जङ्घाभिः उत्खिदन् कर्षणेन उद्भिन्दन् स्वकीयेन श्रमेण कर्षणादिव्यापारजनितदुःखेन अभि [5]गच्छतः स्वाभिमुखं गच्छतः [5]कीनाशस्य कर्षकस्य कीलालम् अन्नम् । प्रयच्छतीत्यर्थः ।

द्वादश वा एता रात्रीर्व्रत्या आहुः प्रजापतेः ।
[6]तत्रोप ब्रह्म यो वेद तद् वा अनडुहो [7]व्रतम् ॥ ११ ॥

द्वादश । वै । एताः । रात्रीः । व्रत्याः । आहुः । प्रजाऽपतेः ।
तत्र । उप । ब्रह्म । यः । वेद । तत् । वै । अनडुहः । व्रतम् ॥ ११ ॥

अनडुहि संक्रान्तस्य यज्ञात्मकस्य प्रजापतेः द्वादश वै एता व्रत्याः व्रतार्हा द्वादशसंख्याका रात्रीः आहुः कथयन्ति । वैशब्दः श्रुत्यन्तरप्रसिद्धिं द्योतयति । 'द्वादश रात्रीर्दीक्षितः[8] स्यात् । द्वादश मासाः संवत्सरः । संवत्सरो विराट् । विराजम् आप्नोति' ( तै ५,६,७,१ ) इति । 'तस्माद् दीक्षितो द्वादशाहं भृतिं वन्वीत' ( तु० काठ २३,६ ) इति च । तत्र तावति काले अनडुद्रूपम् उपगतं प्रजापत्यात्मकं ब्रह्म यो वेद विद्यात् स [9]एव अस्मिन्[9] अनडुत्सवे अधिक्रियत इत्यर्थः । तत् एतत् ज्ञानम् अनडुहः प्रजापत्यात्मकस्य व्रतम् अनुष्ठेयं कर्म ।

दुहे सायं दुहे प्रातर्दुहे [10]मध्यंदिनं परि ।
दोहा ये अस्य संयन्ति तान् विद्मानुपदस्वतः ॥ १२ ॥

दुहे । सायम् । दुहे । प्रातः । दुहे । मध्यंदिनम् । परि ।
दोहाः । ये । अस्य । सम्ऽयन्ति । तान् । [11]विद्म । अनुपऽदस्वतः ॥ १२ ॥

सायम् सायाह्ने उक्तलक्षणम् अनड्वाहं दुहे । देवतारूपेण उपासीनस्तत्फलं प्राप्नोमीत्यर्थः । तथा प्रातःकालेपि दुहे । मध्यन्दिनं परि मध्याह्नेऽपि दुहे । 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' ( पा १,४,९० ) इति लक्षणे परेः कर्मप्रवचनीयत्वम् ।

१. °निरान् P³,M,W,E²,I. २. °शस्याभि K; °शश्चोप पै ३,२५,११. ३. ईरान् P; इरान् P²,J,K. ४. कीनाशस्य K, सा. ५. वेतु. मंपा. द्र. ६. तद्वापि पै ३,२५,७. ७. बलम् पै. ८. °क्षित S', Kd. ९. एकस्मिन् S', Kd. १०. दिवा पै ३,२५,८. ११. विद्मा P ।

तद्योगाद् मध्यंदिनम् इति द्वितीया । यद्वा सायमादिकालत्रयेपि उक्तरीत्या अनड्वान् दुहे । सवयज्ञानुष्ठातुः फलानि दुग्धे । 'लोपस्त आत्मनेपदेषु' ( पा ७,१,४१ ) इति तलोपः । एवम् अस्य अनडुहो दोहा ये संयन्ति फलेन संगच्छन्ते अनुपदस्वतः । उपदासः क्षयः । तद्रहितांस्तान् दोहान् विद्म जानीमः । 'विदो लटो वा' ( ३,४,८३ ) इति मसो मादेशः ।

इति तृतीयेऽनुवाके प्रथमं सूक्तम् ।

[1]'रोहिण्यसि' इति सूक्तेन शस्त्राद्यभिघातजनितरुधिरप्रवाहनिवृत्तये अस्थ्यादिभङ्गनिवृत्तये च लाक्षोदकं कथितम् अभिमन्त्र्य उषःकाले क्षतप्रदेशं अवसिञ्चेत् ।

तथा अनेन सूक्तेन घृतदुग्धम् अभिमन्त्र्य क्षताङ्गं पुरुषं पाययेत् ।

तथा तेनैव द्रव्येण क्षतदेशम् अभ्यञ्ज्यात् ।

सूत्रितं हि — [1]"'रोहिणी' इत्यवनक्षत्रेऽवसिञ्चति । पृषातकं पाययत्यभ्यनक्ति" (कौसू २८, ५;६) इति ।

[2]रोहिण्यसि [3]रोहिण्यस्थ्नश्छिन्नस्य [4]रोहिणी । रोहयेदमरुन्धति ॥ १ ॥

रोहिणी । असि । रोहिणी । अस्थ्नः । छिन्नस्य । रोहिणी । रोहय । इदम् । अरुन्धति ॥१॥

हे [2]रोहिणि लोहितवर्णे लाक्षे । रोहितशब्दात् 'वर्णादनुदात्तात् तोपधात् तो नः' ( पा ४,१,३९ ) इति ङीप् तकारस्य च नकारः । त्वं [3]रोहिणी रोहित्री प्ररोहयित्री असि भवसि । अतस्त्वं खड्गादिधारया छिन्नस्य अङ्गस्य सकाशात् प्रवहतः [4]अस्नः असृजः । 'पद्दन्' ( पा ६,१,६३ ) इत्यादिना असृक्शब्दस्य असन् आदेशः । रुधिरस्य [4]रोहिणी रोधयित्री स्वस्थाने स्थापयित्री भव । हे अरुन्धति अन्यैरनभिभूते अरोधनशीले वा देवि इदम् [5]स्रुतरक्तम् अङ्गं रोहय प्ररोहय । संपूर्णरुधिरम् अव्रणं कुर्वित्यर्थः ।

[6]यत् ते रिष्टं यत् ते द्युत्तमस्ति †पेष्ट्रं त आत्मनि[7] ।
धाता तद् [8]भद्रया पुनः[9] सं दधत् परुषा परुः ॥ २ ॥

यत् । ते । रिष्टम् । यत् । ते । द्युत्तम् । अस्ति । पेष्ट्रम् । ते । आत्मनि ।
धाता । तत् । भद्रया । पुनः । सम् । दधत् । परुषा । परुः ॥ २ ॥

१. वैतु. मंपा. द्र. २. रोहि° K, सा. पै ४,१५,४. ३. °ण्यस्नश्छि° K, सा. ४. शीर्णस्य पै. ५. श्रुत° S', Kd. ६. यद् शीर्णं यद् द्युत्तमस्थि पेष्ट्रं त आत्मनः पै ४,१५,५. † प्रेष्ठं K, सा. ७. सर्वं कल्पयात् पै.

हे शस्त्राद्यभिहत ते तव यद् अङ्गं रिष्टम् हिंसितम् यत् च ते त्वदीयम् अङ्गं द्युत्तम् द्योतितं शस्त्रप्रहारादिजनितवेदनया प्रज्वलितमिव अस्ति भवति। तथा ते तव आत्मनि शरीरे [1]प्रेष्ठम् प्रियतमं यद् अन्यद् अङ्गं मुद्गरप्रहारादिभिर्भग्नं भवति धाता सर्वस्य जगतो विधाता देवः तत् सर्वम् अङ्गं भद्रया कल्याण्या लाक्षारूपया ओषध्या परुषा पर्वणा परुः अन्यत् पर्वभग्नं पुनः सं दधत् संदधातु संयुनक्तु।

सं ते [2]मुज्जा मुज्ज्ञा भवतु समु ते परुषा परुः।
सं ते मांसस्य [3]विस्रस्तं समस्थ्यपि रोहतु ॥ ३ ॥

सम्। ते। मुज्जा। [4]मुज्ज्ञा। भवतु। सम्। ऊं इति। ते। परुषा। परुः।
सम्। ते। मांसस्य। [5]विऽस्रस्तम्। सम्। अस्थि। अपि। रोहतु ॥ ३ ॥

हे प्रहृत ते तव शरीरस्थो मज्जा एतत्संज्ञः षष्ठो धातुः प्रहारेण विभक्तः मज्ज्ञा मज्जाख्यधातुना प्रहारविभक्तेन [1]शम् सुखं यथा भवति तथा भवतु संयुक्तो भवतु। यद्वा भवतु प्राप्नोतु। भू प्राप्तौ। व्यत्ययेन परस्मैपदम्। तथा ते त्वदीयशरीरस्य परुषा भग्नेन पर्वणा परुः भग्नं पर्व [1]शम् सुखं यथा भवति तथा प्राप्नोतु। संधीयताम् इत्यर्थः। ते तव शरीरगतस्य मांसस्य प्रहाराभिघातेन यद् विस्रस्तं तत् [1]शम् सुखं यथा भवति तथा अपि रोहतु अपिरूढं प्ररूढं पुनरुत्पन्नं भवतु। तथा तव शरीरगतं यद् अस्थि भग्नम् आसीत् तच्च [1]शम् सुखेन प्ररूढं संहितं भवतु।

मुज्जा मुज्ज्ञा सं धीयतां [6]चर्मणा चर्म [7] रोहतु।
असृक् ते [8]अस्थि रोहतु मांसं मांसेन रोहतु ॥ ४ ॥

मुज्जा। मुज्ज्ञा। सम्। धीयताम्। चर्मणा। चर्म। रोहतु।
असृक्। ते। अस्थि। रोहतु। मांसम्। मांसेन। रोहतु ॥ ४ ॥

मज्जा मज्जाख्यो धातुः मज्ज्ञा मज्जधातुना सं धीयताम् संहितः संयुक्तो भवतु। चर्मणा शस्त्रादिप्रहारभिन्नेन चर्म रोहतु प्ररूढं भवतु। संयुज्यताम् इत्यर्थः। असृक् [8]रक्तं त त्वच्छरीरगतं [9]यद् अस्थ्नः सकाशात् विश्लिष्टं पुनस्तद् अस्थि रोहतु प्राप्नोतु। मन्त्रौषधिसामर्थ्येन संयुज्यताम् इत्यर्थः। यद्वा चर्मणा चर्मेति तृतीयान्तस्य तत्र दृष्टत्वात् असृजा अस्थ्ना इति तृतीयान्तं पदम् अध्याहृत्य योज्यम्। असृजा असृग् रोहतु अस्थ्ना अस्थि रोहत्विति। शिष्टं निगदसिद्धम्।

१. वैद्ध. मंपा. द्र. २. मुन्या D,R. ३. विभ्रंस्तं K,Km,V,H,O,Op.
४. मुज्ञा P,P[2],J. ५. °भ्रंस्तम् K,H,O,Op. ६. अस्थ्नास्थि वि पै ४,१५,२.
७. अस्ना पै ४,१५,३. ८. अस्थिः S', Kd. ९. म S',Kd.

लोम॒ लोम्ना॒ सं [1]कल्पया त्व॒चा सं [1]क॑ल्पया॒ त्वच॑म् ।
असृ॑क् ते॒ अस्थि॑ रोहतु॒ च्छि॒न्नं सं धे॑ह्योषधे ॥ ५ ॥

लोम॑ । लोम्ना॑ । सम् । क॒ल्प॒य॒ । त्व॒चा । सम् । क॒ल्प॒य॒ । त्वच॑म् ।
असृ॑क् । ते॒ । अस्थि॑ । रो॒ह॒तु॒ । छि॒न्नम् । सम् । धे॒हि॒ । ओ॒ष॒धे॒ ॥ ५ ॥

हे लाक्षात्मिके ओषधे शरीरस्थं लोम लोम्ना प्रहारविश्लिष्टेन सं कल्पय संक्लृप्तं पुनः स्वस्थानगतं कुरु । तथा त्वचमपि विश्लिष्टत्वचा सं कल्पय संक्लृप्तां[2] कुरु । असृक् ते अस्थि रोहतु इति पूर्ववत् । एवम् अन्यदपि छिन्नम् भग्नं यद्यद् अङ्गम् अस्ति तत् सर्वं सं धेहि संहितं संश्लिष्टं व्यापारक्षमं कुर्वित्यर्थः ।

स उत् ति॑ष्ठ॒ प्रेहि॒ प्र द्र॑व॒ रथः॑ सु॒च॒क्रः [3]सु॑प॒विः सु॒नाभिः॑ । प्रति॑ तिष्ठो॒र्ध्वः ॥६॥

सः । उत् । ति॒ष्ठ॒ । प्र । इ॒हि॒ । प्र । द्र॒व॒ । रथः॑ । सु॒ऽच॒क्रः । सु॒ऽप॒विः । सु॒ऽनाभिः॑ । प्रति॑ । ति॒ष्ठ॒ । ऊ॒र्ध्वः ॥ ६ ॥

हे शस्त्रप्रहारादिभिर्विश्लिष्टावयव पुरुष स तादृशः मन्त्रौषधिसामर्थ्येन संहितगात्रः सन् उत् तिष्ठ शयनाद् उद्गच्छ । प्रेहि तस्मात् स्थानात् प्रगच्छ । प्र द्रव प्रधाव वेगेन गच्छ । उक्तम् अर्थं दृष्टान्तेन द्रढयति रथ इत्यादिना । सुचक्रः सुदृढैश्चक्रैर्युक्तः सुपविः सुदृढः पविर्नेमिश्चक्रधारा यस्य स तथोक्तः सुनाभिः सुदृढया नाभ्या अक्षच्छिद्रेण युक्तः एवंगुणविशिष्टो रथः यथा प्रगमनादिव्यापारं कुर्वन् प्रतिष्ठितो भवति एवं त्वमपि सुदृढाङ्गो भूत्वा ऊर्ध्वः उत्थितः सन् प्रति तिष्ठ प्रतिष्ठितो भव ।

[4]यदि॑ कु॒र्तं प॑ति॒त्वा[5] सं॑श॒श्रे यदि॑ वाश्मा॒ प्रहृ॑तो ज॒घान॑ ।
ऋ॒भू रथ॑स्ये॒वाङ्गा॑नि॒ सं द॑ध॒त् परु॑षा॒ परुः॑ ॥ ७ ॥

यदि॑ । [6]कु॒र्तम् । प॒ति॒त्वा[5] । स॒म्ऽश॒श्रे । यदि॑ । वा॒ । अश्मा॑ । प्रऽहृ॑तः । ज॒घान॑ ।
ऋ॒भुः । रथ॑स्यऽइव । अङ्गा॑नि । सम् । द॒ध॒त् । परु॑षा । परुः॑ ॥ ७ ॥

यदि [6]कर्तम् कर्तकं छेदकम् आयुधं पुरुषशरीरे पतित्वा संशश्रे संशृणाति संहिनस्ति । शॄ हिंसायाम् इत्यस्मात् छान्दसो लिट् । यदि वा अपि वा अश्मा पाषाणः प्रहृतः परेण

१. श्रीयतां पै ४,१५,३. २. °क्लृप्तं S', Kd. ३. सुपविः > सुप्रविः B.।
४. यदि कर्तुं प्रति त्वा (!) K; यदि कर्तुं पतित्वा V,P[3],M,O,Op.; यदि कर्तुं > यदि कुतु D; , यदि कर्तुं Km; कर्तुं B,Sm,S. ५. कर्तुम् । प्रतिऽत्वा K. ६. कर्तुं S', Kd.

पुरुषशरीरे प्रक्षितः सन् अघान हन्ति पुरुषं हिनस्ति। तेन आयुधेन अश्मना च हिंसितं परुः पर्व परुषा पर्वान्तरेण सं दधत् मन्त्रौषधप्रभावः संदधातु। तत्र दृष्टान्तः — ऋभू रथस्येवेति। 'सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुर्ऋभुर्विभ्वा वाज इति' ( नि ११,१६ ) इति यास्कवचनात् सुधन्वनः पुत्रा ऋभ्वादयो रथनिर्माणादिना देवत्वं प्राप्ताः। तथात्वं च दाशतय्याम् 'तक्षन् रथं सुवृतं विद्मनापसः' ( ऋ १,१११,१ ) इत्याद्यार्भवसूक्तेषु प्रसिद्धम्। ऋभुर्यथा रथस्य अङ्गानि अक्षचक्रेषायुगादीनि निर्माय संदधाति एवम् आथर्वणो मन्त्रो विश्लिष्टम् अङ्गं संदधातीत्यर्थः।

इति द्वितीयं सूक्तम्।

'उत देवाः' इति सूक्तेन उपनयनानन्तरम् आयुष्कामं माणवकम् अभिमृश्य अनुमन्त्रयेत। सूत्रितं हि — 'वि देवा जरसा' ( अ ३,३१ ), 'उत देवाः' ( अ ४,१३ ), 'आवतस्ते' ( अ ५,३० ) इत्यादि "'विषासहिम्' ( अ १७,१ ) [1]इत्यनुमन्त्रयते ब्राह्मणोक्तम्" ( कौसू ५८, ३;४ ) इत्यन्तम्।

तथा ऋषिहस्ते माणवकशरीरानुमन्त्रणेपि एतत् सूक्तम्। सूत्रितं हि — 'मुञ्चामि त्वा' ( अ ३,११ ), 'उत देवाः', 'आवतस्ते' इत्यादि "'विषासहिम्' इत्यनुमन्त्रयते" ( कौसू ५८, ११ ) इत्यन्तम्।

तथा लघुगणे 'हिरण्यवर्णाः' ( अ १,३३ ), शंतातीयम् ( अ ४, १३ ), 'यदन्तरिक्षे' ( अ ७,६८ ) ( तु. कौसू ९,४ ) इति शंतातीयपदेन शंतातिशब्दयुक्तस्य अस्य सूक्तस्य विवक्षितत्वाद् अस्य गणस्य यत्रयत्र विनियोगः तत्र सर्वत्र अस्य विनियोगो द्रष्टव्यः।

तथा अंहोलिङ्गगणेपि अस्य सूक्तस्य पाठात् तस्य गणस्य यत्रयत्र भैषज्यादिषु विनियोगस्तत्र सर्वत्र अस्य विनियोगो द्रष्टव्यः।

तथा क्रतुमध्ये व्याधितस्य यजमानस्य भैषज्यकरणेपि एतत् सूक्तम्। सूत्रितं हि — "'अथ भैषज्याय यजमानम् 'अक्षीभ्यां ते' ( अ २,३३ ), 'मुञ्चामि त्वा', 'उत देवाः'" ( वैताश्रौ ३८,१ ) इति।

उत देवा अवहितं देवा [2]उन्नयथा पुनः।
उतागश्चक्रुषं देवा देवा जीवयथा पुनः॥ १॥

उत। देवाः। अवऽहितम्। देवाः। उत्। नयथ। पुनः।
उत। आगः। चक्रुषम्। देवाः। देवाः। जीवयथ। पुनः॥ १॥

१. इत्यभिमन्त्रयते Bl. २. उद्धरथा पै ५,१८,१.

उतशब्दः अप्यर्थे। हे देवाः इमम् उपनीतं धर्मविषये अवहितम् सावधानम् अप्रमत्तं कुरुत। यद्वा अवहितम् अवस्थापितं कुरुत। यथासौ चिरकालम् अवतिष्ठते तथा कुरुतेत्यर्थः। अवपूर्वाद् धाञः कर्मणि निष्ठा। 'गतिरनन्तरः' (पा ६,२,४९) इति गतेः प्रकृतिस्वरत्वम्। हे देवाः यूयं संभाविताद् अनवधानाद् एनं पुनः उन्नयथ उद्गमयथ। यद्वा अध्ययनतदर्थज्ञानादिलक्षणं यद् उत्कृष्टं फलं तद् उपनीतं प्रापयथ। देवा इत्यस्य पादादित्वात् षाष्ठिकम् आमन्त्रितायुदात्तत्वम्। उत अपि च हे देवाः आगः अपराधं विहितानुष्ठानादिजनितम् पापं चक्रुषम् चकृवांसं कृतवन्तम्। करोतेर्लिटः क्वसुः। अमि भत्वाभावेपि छान्दसं वसोः संप्रसारणम्। अज्ञानात् पापं कृतवन्तमपि एनं तस्मात् पापाद् रक्षतेत्यर्थः। एवं संभवदायुर्भङ्गनिमित्तापराधपरिहारेण हे देवाः यूयं पुनरिमं जीवयथ शतसंवत्सरपरिमितजीवनयुक्तं कुरुत। इत्थम् आमन्त्रितभेदेन वाक्यचतुष्टयं साध्याध्याहारेण योजयितव्यम्। यद्वा पूर्वोत्तरार्धे द्वे वाक्ये। तत्र एकैको देवशब्दो गौणः। अपरः संज्ञा। हे दानादिगुणयुक्ता देवाः अवहितमपि एनं पुनरुन्नयथ। आगः कृतवन्तमपि एनं पुनर्जीवयथेति। अक्षरार्थस्तु स एव।

द्वाविमौ वातौ वात आ सिन्धोरा परावतः।
दक्षं[1] ते अन्य आवातु[2] व्य१न्यो[3] वातु यद् रपः ॥ २ ॥

द्वौ। इमौ। वातौ। वातः। आ। सिन्धोः। आ। पराऽवतः।
दक्षम्। ते। अन्यः। आऽवातु। वि। अन्यः। वातु। यत्। रपः ॥ २ ॥

इमौ दृश्यमानौ द्वौ वातौ। 'पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति' (तै २,४,९,१) इति श्रुत्यन्तरप्रसिद्धौ वायू आ सिन्धोः आ समुद्रात्। मर्यादायाम् आकारः। समुद्रपर्यन्तम्। तथा आ परावतः। परावत् इति दूरनाम। समुद्रादपि यो दूरदेशः तावत्पर्यन्तं वा वातः गच्छतः। वा गतिगन्धनयोः। आदादिकः। यद्वा इमौ प्राणापानात्मकौ द्वौ वातौ वातः शरीरेषु संचरतः आ सिन्धोः। अत्र सिन्धुशब्देन स्यन्दनशीलानि स्वेदायनानि उच्यन्ते। तावत्पर्यन्तम्। आ परावतः। परावच्छब्देन शरीराद् बाह्यदेशो द्वादशाङ्गुलपरिमितो विवक्षितः। तावत्पर्यन्तं च प्राणापानयोः संचारस्थानम्। उक्तं हि —

'नाडीभ्याम् अस्तम् अभ्येति प्राणतो द्विषडङ्गुलः' इति।

तयोर्वातयोः अन्यः पुरोवातः प्राणो वा हे उपनीत ते तव दक्षम् बलम् आवातु आगमयतु। अन्यः पश्चाद्वातः अपानवायुर्वा तव यद् रपः पापम् अस्ति। 'रपो रिप्रम् इति

१. मे तैब्रा २,४,१,७ तैआ ४,४२,२.		२. आ वातु ऋ १०,१३७,२ RW.
३. व्युंऽन्यो B,Bh,D,R,Sm.; परान्यो ऋ. पै ५,१८,३ तैब्रा. तैआ.

पापनामनी भवतः' इति हि निरुक्तम् (४,२१)। तत् पापं वि वातु स्वस्थकाशाद् विगमयतु।

आ वात वाहि भेषजं वि वात वाहि यद् रपः।
त्वं हि [1]विश्वभेषज देवानां दूत ईयसे ॥ ३ ॥

आ। वात। वाहि। भेषजम्। वि। वात। वाहि। यत्। रपः।
त्वम्। हि। विश्वऽभेषज। देवानाम्। दूतः। ईयसे ॥ ३ ॥

हे वात वायो भेषजम् सर्वव्याधिनिवर्तकम् औषधम् आ वाहि आगमय। हे वात वायो यद् रपः पापं व्याधिनिदानम् अस्ति तद् वि वाहि विगमय अस्मत्तो विनाशय। हे विश्वभेषज सर्वव्याधिनिवर्तक हि यस्मात् त्वं देवानाम् इन्द्रादीनां दूतः चारः सन् सर्वजगद्रक्षणाय ईयसे संचरसि। ईङ् गतौ। दिवादित्वात् श्यन्। यद्वा देवानाम् इन्द्रियाणां दूतः दूतवद् आसन्नवर्ती सन् तत्पोषणाय ईयसे। कृत्स्नं शरीरं व्याप्य वर्तसे इत्यर्थः।

[2]त्रायन्तामिमं[3] देवास्त्रायन्तां[4] मरुतां [5]†गणाः[5]।
त्रायन्तां विश्वा भूतानि यथायमरपा[6] [7]असत् ॥ ४ ॥

त्रायन्ताम्। इमम्। देवाः। त्रायन्ताम्। मरुताम्। गणाः ॥
त्रायन्ताम्। विश्वा। भूतानि। यथा। अयम्। अरपाः। असत् ॥ ४ ॥

देवाः इन्द्रादयः इमम् उपनीतं माणवकं त्रायन्ताम्। यद्वा 'अग्निर्वाग् भूत्वा मुखं प्राविशत्' (ऐआ २,४,२) इत्यादिश्रुतिप्रसिद्धा अग्न्याद्या इन्द्रियाधिष्ठातृदेवता देवाः। ते तत्तदिन्द्रियपाटवप्रदानेन इमं रक्षन्तु इत्यर्थः। तथा मरुताम् एकोनपञ्चाशत्संख्याकानाम् 'ईदृङ् चान्यादृङ् च' (तै १,८,१३,२) इत्यादिश्रुत्यन्तरप्रसिद्धसंज्ञकानां ये गणाः सप्तसंख्याकाः सन्ति तेपि इमं त्रायन्ताम् [8]संरक्षन्तु। यद्वा मरुताम् प्राणापानव्यानादीनां देहे अवस्थितानां गणाः पूजार्थं बहुवचनम्। तथा विश्वा विश्वानि सर्वाणि अन्यानि भूतानि भूतजातानि यथा येन प्रकारेण अयं पुरुषः अरपा असत् अपापो भवेत् तथा त्रायन्ताम् इमं पालयन्तु। त्रैङ् पालने। अरपा इति। न विद्यन्ते रपांसि पापानि यस्मिन्निति बहुव्रीहौ 'नञ्सुभ्याम्' (पा ६,२,१७२) इति उत्तरपदान्तोदात्तत्वम्।

१. विश्वभेषजो ऋ १०,१३७,३ पै ५,१८,४ तैब्रा २,४,१,७ तैआ ४,४२,१. २. °यतां Bh,P,P. ३. °मिह ऋ १०,१३७,५. ४. यंतां ऋ. ५. मरुतो गणैः पै ५,१८,५ †गणः ऋ. ६. °मगदो पै. ७. असत् Sm., ऽसति पै. ८. रक्षंतु S', Kd.

आ त्वागमं शंतातिभिरथो अरिष्टतातिभिः ।
दक्षं त 'उग्रमाभारिषं' परा 'यक्ष्मं सुवामि ते' ॥ ५ ॥

आ । त्वा । अगमम् । शंतातिऽभिः । अथो इति । अरिष्टतातिऽभिः ।
दक्षम् । ते । उग्रम् । आ । अभारिषम् । परा । यक्ष्मम् । सुवामि । ते ॥ ५ ॥

हे उपनीत त्वा त्वां शंतातिभिः शंकरैः सुखकरैर्मन्त्रैः अथो अपि च अरिष्टतातिभिः अरिष्टम् अहिंसा तत्करैः श्रेयोहेतुभिः कर्मभिश्च आगमम् आगतवान् अस्मि। गमेर्लुङि लृदित्वात् च्लेः अङ् आदेशः। 'शिवशमरिष्टस्य करे' (पा ४,४, १४३) इति उभयत्र करणेऽर्थे तातिल्प्रत्ययः। 'लिति' (पा ६,१,१९३) इति प्रत्ययात् पूर्वस्य उदात्तत्वम्। अपि च उग्रम् उद्गूर्णं दक्षम् समृद्धिकरं बलं ते तव आभार्षम् आहार्षम्। 'हृग्रहोर्भः°' (पावा ३,१,८४) इति भत्वम्। 'दक्षं ते अन्य आवातु' (२) इति वायुप्रार्थनया तत्सकाशाद् आनैषम्। तथा यक्ष्मम् रोगं ते तव सकाशात् परा सुवामि पराङ्मुखं प्रेरयामि। षू प्रेरणे तौदादिकः।

अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥ ६ ॥

अयम् । मे । हस्तः । भगऽवान् । अयम् । मे । भगवत्ऽतरः ।
अयम् । मे । विश्वऽभेषजः । अयम् । शिवऽअभिमर्शनः ॥ ६ ॥

मे मदीयः अयम् अभिमर्शनसाधनो हस्तः भगवान् भाग्यवान्। तथा मे मदीयः अयम् ऋषिहस्तः भगवत्तरः अतिशयितभाग्ययुक्तः। मे मम अयं हस्तो विश्वभेषजः विश्वानि भेषजानि सर्वव्याधिनिवर्तकानि औषधानि यस्मिन्नृषिहस्ते स तथोक्तः। यस्माद् एवंगुणविशिष्टो मदीयो हस्तः तस्माद् अयं शिवाभिमर्शनः सुखकरस्पर्शनयुक्तो भवतु।

हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ।
अनामयित्नुभ्यां हस्ताभ्यां ताभ्यां त्वाभि मृशामसि ॥ ७ ॥

हस्ताभ्याम् । दशऽशाखाभ्याम् । जिह्वा । वाचः । पुरःऽगवी ।
अनामयित्नुऽभ्याम् । हस्ताभ्याम् । ताभ्याम् । त्वा । अभि । मृशामसि ॥ ७ ॥

१. भग्रमाभार्षं ऋ १०,१३७,४ पै ५,१८,२. २. सुवाम्यनयो ते पै. ३. वैतु. मैपा. इ. ४. आनयिष्वं S', Kd. ५. शंभुभ्यां पै ५,१८,८; त्वा ऋ १०,१३७,७. ६. त्वोप ऋ. ७. स्पृशा° ऋ.

दशशाखाभ्याम् दश अङ्गुलयः शाखाभूता ययोः ताद्दशाभ्यां हस्ताभ्यां प्रजापतिसंबन्धिभ्यां • सृज्यमाना जिह्वा वागिन्द्रियाधिष्ठानभूता रसना वाचः शब्दस्य पुरोगवी पुरतो गन्त्री भवति । यत्रयत्र शब्दः प्रयुज्यते तत्र सर्वत्र तस्य शब्दस्योच्चारणाय पुरतो व्याप्रियत इत्यर्थः । अनामयित्नुभ्याम् अनामय-शीलाभ्याम् आरोग्यहेतुभ्यां ताभ्यां प्रजापतिसंबन्धिभ्यां हस्ताभ्याम् हे उपनीत त्वा त्वाम् अभि मृशामसि अभितः संस्पृशामः । 'इदन्तो मसि' ( पा ७,१,४६ ) ॥

इति तृतीयं सूक्तम् ।

'अजो ह्यग्नेः' इति सूक्तेन अजौदनसवे हविरभिमर्शनादिकं कुर्यात् । सूत्रितं हि— 'तस्मिन्नन्वारब्धं दातारं वाचयति । 'तन्त्रं[1] सूक्तं [2]'पञ्चस्नानेन यौ ते पक्षौ' इत्यु-पक्रम्य 'क्रमध्वम् अग्निना नाकम्' ( २ ), 'पृष्ठात् पृथिव्या अहम् अन्तरिक्षम् आरुहम्' ( ३ ) 'स्वर्यन्तो नापेक्षन्ते' ( [ ४ कौसू ६८,२५-२७ ]) इति ।

'क्रमध्वम् अग्निना' इत्याद्यास्तिस्रः सर्वेषु सवयज्ञेषु वाचने विनियुक्ताः ।

'अजो ह्यग्नेः' इत्यनया ऋचा अग्निचयने उपधीयमानम् अजशिरोऽनुमन्त्रयेत[१] । " 'अजो हि' इत्यजशिरः[3]" ( वैताश्रौ २९,२ ) इति हि वैतानं सूत्रम् ।

'अग्ने प्रेहि' इत्यनया सर्वेषु सवयज्ञेषु आज्यं जुहुयात् । सूत्रितं हि— " 'अग्ने प्रेहि' ( ५ ), 'समाचिनुष्व' ( शौ ११,१,३६ ) इत्याज्यं जुहुयात्" ( कौसू ६३,९ ) इति ।

'अजम् अनज्मि' ( ६ ) इत्यनया अजौदनसवे दर्भैरुद्धृतं पाशुकं हविः आज्येनाभ्यञ्ज्यात् । सूत्रितं हि— " उद्धृतम् 'अजम् अनज्मि' इत्याज्येनानक्ति" (कौसू ६४,१७ ) इति ।

'पञ्चौदनम्' ( ७,८ ) इति द्वाभ्यां सवयज्ञे पञ्चधाविभक्तौदनसहितान् शिरः-पार्श्वाद्यवयवान् प्राच्यादिदिक्षु स्थापयेत् । सूत्रितं हि— " 'पञ्चौदनम्' इति मन्त्रोक्तम् ओदनान् पृथक्पादेषु निदधाति मध्ये पञ्चमम्" ( कौसू ६४,१८-२० ) इति ।

'शृतम् अजम्' ( ९ ) इत्यनया शिरःपाद्याद्यवयवोपेतं चर्म जुहुयात् । सूत्रितं हि— " 'शृतम् अजम्' इत्यनुबद्धशिरःपादम् [4]अजस्य [5]चर्म" ( कौसू ६४,२१ ) इति ।

वाजपेये 'पृष्ठात् पृथिव्याः' ( ३ ) इत्येतां यूपम् आरुह्य यजमानो जपेत् । उक्तं वैताने वाजपेयं प्रक्रम्य— " 'पृष्ठात् पृथिव्या अहम्' इत्यारूढः" ( वैताश्रौ २७,६;७ ) इति ।

वरुणप्रघासाख्ये पर्वणि अग्निप्रणयनकाले 'अग्ने प्रेहि' ( ५ ) इति ब्रह्मा जपन् गच्छेत् । तद् उक्तं वैताने— "आषाढ्यां वरुणप्रघासेऽग्नौ[6] प्रणीयमाने 'अग्ने प्रेहि' इति जपन्नेति" ( वैताश्रौ ८,१७ ) इति ।

१. तंत्र S', Kd. २. °स्थानेन S', Kd.; पञ्चः स्नानेन Bl. ३. °अजशरीर S', Kd. ४. स्वेतस्य Bl. ५. चर्म जुहोति S', Kd. ६. °ग्न्योः BG.

सोमयागे उत्तरवेद्यग्निप्रणयनेपि एषा जप्या। उक्तं वैताने—"अग्नौ प्रणीयमाने 'अग्ने प्रेहि' इति जपित्वा बर्हिर्वेद्युपविशति" (वैताश्रौ १५,७) इति।

[1]अजो [2]ह्य१ग्नेरजनिष्ट [3]शोकात् सो[4] अपश्यज्जनितारमग्रे[5]।
[6]तेन देवा देवतामग्र[7] आयन् [8]तेन [9]रोहान् रुरुहुर्मेध्यासः[9] ॥ १ ॥

अजः। हि। अग्नेः। अजनिष्ट। शोकात्। सः। अपश्यत्। जनितारम्। अग्रे।
तेन। देवाः। देवताम्। अग्रे। [7]आयन्। तेन। रोहान्। रुरुहुः। मेध्यासः ॥ १ ॥

अजः छागः अग्नेः शोकात् तापाद् अजनिष्ट [8]उदपद्यत। हिशब्दः श्रुत्यन्तरप्रसिद्धिं द्योतयति। तथा च तैत्तिरीयके अजस्याग्निसकाशात् उत्पत्तिराम्नाता- 'स आत्मनो वपाम् उदक्खिदत्। ताम् अग्नौ प्रागृह्णात्। ततोऽजस्तूपरः समभवत्' (तै २,१,१,४) इति। सः जातोऽजः अग्रे सर्वप्रजापतिपशुसृष्टेः प्राग् जनितारम् जनयितारं प्रजापतिम् अग्निं वा अपश्यत् दृष्टवान्। जनयितृगौरवेण आत्मनो गौरवम् अज्ञासीद् इत्यर्थः। 'जनिता मन्त्रे' (पा ६,४,५३) इति णिलोपो निपात्यते। तेन प्रथमसृष्टेन अजेन देवाः इन्द्रादयः देवताम् देवत्वं देवभावम् अग्रे सृष्टयादौ आयन् तत्साध्ययागद्वारा प्राप्नुवन्। देवताम् इति। 'तस्य भावस्त्वतलौ' (पा ५,१,११९) इति तल्प्रत्ययः। तथा मेध्यासः मेधार्हाः। 'छन्दसि च' (पा ५,१,६७) इति यत्प्रत्ययः। 'आज्जसेरसुक्' (पा ७,१,५०)। यज्ञार्हा अन्येपि ऋषिजनाः रोहान्। रोहन्ते प्राप्यन्त इति रोहाः स्वर्गादिलोकाः। रुहेर्ण्यन्तात् कर्मणि घञ्। तान् तेन अजेन साधनेन यागद्वारा रुरुहुः आरूढवन्तः। तस्माद् ईदृक्साधनकः अजौदनसवो देवत्वादिसर्वफलप्राप्तिसाधक इत्यर्थः।

क्रमध्वमग्निना[10] नाकमुख्यान् हस्तेषु बिभ्रतः।
दिवस्पृष्ठं स्व१र्गत्वा मिश्रा देवेभिराध्वम्[11] ॥ २ ॥

क्रमध्वम्। अग्निना। नाकम्। [12]उख्यान्। हस्तेषु। बिभ्रतः।
दिवः। पृष्ठम्। स्वः। गत्वा। मिश्राः। देवेभिः। आध्वम् ॥ २ ॥

१. अजा तै ४,२,१०,४. २. ह्यग्ने B,D. ३. गर्भात् सा वा तै. ४. सर्वा तै. ५. 'ग्रम्' मा १३,५१ तै. काठ १६,१७ मै २,७,१७. ६. रोहांरुरुहु A; रोहानरोहन्नुप मेधीयासः पै ३,३८,१., रोहमायन्नुप मेध्यासः मा. तै. काठ. ७. आयम् P,P², J,K. ८. उदपद्यत S', Kd. ९. 'मग्निभिर् पै ३,३८,२. १०. नाकमख्यान् K, सा' 'कमेख्यां? पै.; 'क्रमुख्यं मा १७,६५, तै ४,६,५,१ मै २,१०,६ काठ १८,४. ११. 'राध्वम् RW. १२. अख्यान् K, सा.

हे जनाः अग्निना सवयज्ञार्थम् उत्पादितेन तत्साध्यान् सवयज्ञान् अनुष्ठाय तत्फलभूतं नाकम् दुःखसंभेदरहितम् उत्तमं लोकं क्रमध्वम् आरोहत । कथंभूताः सन्तः । 'अक्षान् अक्षवत् प्रकाशकान् अनुष्ठितान् यज्ञान् हस्तेषु बिभ्रतः धारयन्तः । यागादिजनितसुकृतविशेषान् अवलम्ब्य तत्फलभूतं लोकं प्राप्नुतेत्यर्थः । क्रमध्वम् इति । 'अनुपसर्गाद् वा' (पा १,३,४३) इति क्रमेरात्मनेपदम् । बिभ्रत इति । डुभृञ् धारणपोषणयोः । अस्मात् लटः शत्रादेशः । 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्त्वम् । 'अभ्यस्तानामादिः' (पा ६,१,१८९) इति आद्युदात्तः । तदनन्तरं दिवः अन्तरिक्षस्य पृष्ठम् पृष्ठवंशवद् उन्नतप्रदेशं स्वः स्वर्गाख्यं लोकं गत्वा प्राप्य देवेभिः देवैः आजानशुद्धैः मिश्राः मिश्रिताः समानैश्वर्येण एकीभूताः आध्वम् उपविशत । 'षष्ठ्याः पतिपुत्र' (पा ८,३,५३) इति दिवो विसर्जनीयस्य सत्वम् । देवेभिरिति । 'बहुलं छन्दसि' (पा ७,१,१०) इति भिस ऐसभावः । ततो 'बहुवचने झल्येत्' (पा ७,३,१०३) इति एत्वम् । आध्वम् इति । आस उपवेशने । अदादित्वात् शपो लुक् । 'झलां जश् झशि' (पा ८,४,५३) इति सकारस्य जश्त्वम् । 'दकारः ।

पृष्ठात् पृ॒थि॒व्या अ॒हम॒न्तरि॑क्ष॒मारु॑हम॒न्तरि॑क्षा॒द् दिव॒मारु॑हम् ।
दि॒वो नाक॑स्य पृ॒ष्ठात् [2]स्व१र्ज्योति॑रगाम॒हम् ॥ ३ ॥

पृ॒ष्ठात् । पृ॒थि॒व्याः । अ॒हम् । अ॒न्तरि॑क्षम् । आ । अ॒रु॒ह॒म् । अ॒न्तरि॑क्षात् । दिव॑म् । आ । अ॒रु॒ह॒म् ।
दि॒वः । नाक॑स्य । पृ॒ष्ठात् । स्वः॑ । ज्योतिः॑ । अ॒गा॒म् । अ॒हम् ॥ ३ ॥

पृथिव्याः पृष्ठात् भूलोकाद् अहम् अन्तरिक्षम् आरुहम् अन्तरिक्षलोकम् आरोहामि । रुहेश्छान्दसो लुङ् । 'कृमृदृरुहिभ्यश्छन्दसि' (पा ३,१,५९) इति च्लेः अङ् आदेशः । तस्माद् [अन्तरिक्षात्] अन्तरिक्षलोकाद् दिवम् द्युशब्दवाच्यं तृतीयं लोकम् आरुहम् आरोहामि । नाकस्य नास्मिन् अकं दुःखम् अस्तीति नाकः तादृशस्य दिवः द्युलोकस्य पृष्ठात् उपरिदेशात् स्वः । आदित्यनामैतत् । आदित्यमण्डलस्थं हिरण्मयपुरुषाख्यं ज्योतिः अहम् अगाम् प्राप्नोमि । एतेश्छान्दसो लुङ् । 'इणो गा लुङि' (पा २,४,४५) इति गादेशः । इत्थं सोपानक्रमेण पृथिव्यादिलोकेषु नानाविधान् भोगान् भुक्त्वा अन्ते सूर्यसायुज्यं प्राप्नोतीत्यर्थः ।

'स्व१र्यन्तो॒ नापे॑क्षन्त॒ आ द्यां [3]रोहन्ति॒ रोद॑सी' ।
य॒ज्ञं ये वि॒श्वतो॑धारं॒ सुवि॑द्वांसो वितेनि॒रे ॥ ४ ॥

स्वः॑ । यन्तः॑ । न । अप॑ । ई॒क्ष॒न्ते॒ । आ । द्याम् । रो॒ह॒न्ति॒ । रोद॑सी॒ इति॑ ।
य॒ज्ञम् । ये । वि॒श्वतः॑ऽधारम् । सुऽवि॑द्वांसः । वि॒ऽते॒नि॒रे ॥ ४ ॥

स्वः स्वर्गं यज्ञफलभूतं यन्तः गच्छन्तः नापेक्षन्ते पुत्रपश्वादिजनितम् ऐहिकसुखम् अल्पं नेच्छन्ति । किं तु द्याम् अन्तरिक्षं रोदसी द्यावापृथिव्यौ चेति लोकत्रयं

१. वैतु. मंपा. द्र. २. °स्वः B,D,R,S[m]. ३. रोहन्त् रावसः पै ३,३८,४.

प्रागुक्तरीत्या आ रोहन्ति। के पुनस्ते। ये यजमानाः विश्वतोधारम् विश्वतः सर्वतो धारकम् यद्वा विश्वतः सर्वतो धारकाः अविच्छिन्नफलप्राप्त्युपाया यस्मिंस्तादृशम् यज्ञं सुविद्वांसः सुष्ठु जानन्तः वितेनिरे वितन्वन्ति विस्तारयन्ति। छान्दसो वर्तमाने लिट्। ते स्वर्यन्तः इति संबन्धः।

अग्ने॒ प्रेहि॑ प्र॒थ॒मो [१]दे॒व॒ता॒नां॒ चक्षु॑र्दे॒वाना॑मु॒त [२]मानु॑षाणाम्।
इय॑क्षमाणा॒ भृगु॑भिः [३]स॒जोषाः॒ स्व॑र्यन्तु॒ यज॑मानाः॒[४] स्व॒स्ति ॥ ५ ॥

अग्ने॑। प्र। इ॒हि॒। प्र॒थ॒मः। दे॒व॒ताना॑म्। चक्षुः॑। दे॒वाना॑म्। उ॒त। मानु॑षाणाम्।
इय॑क्षमाणाः। भृगु॑ऽभिः। स॒ऽजोषाः॑। स्वः॑। य॒न्तु॒। यज॑मानाः। स्व॒स्ति ॥ ५ ॥

हे प्रणीयमान अग्ने त्वं प्रेहि प्रगच्छ आहवनीयदेशं प्राप्नुहि। कीदृशस्त्वम्। देवतानाम् यष्टव्यानां प्रथमः मुख्यः। अत एव दर्शपूर्णमासयोस्तावद् अग्निः प्रथमम् इज्यते। चातुर्मास्येषु च पञ्चसंचरेषु आग्नेयः प्रथमो यागः। सोमयागे च दीक्षणीयायाम् आग्नावैष्णवयागे अग्निः प्रथमभावी। अत एव मन्त्रवर्णः—'अग्निरग्रे प्रथमो देवतानाम्' (तैब्रा २,४,३.३) इति। तथा देवानाम् इन्द्रादीनां हविर्वहनेन अयम् अग्निः चक्षुः चक्षुरिन्द्रियवत् प्रियः। उत अपि च मानुषाणाम् मनोरपत्यभूतानां मनुष्याणां चक्षुः आहवनीयादिरूपेण पुण्यलोकस्य दर्शयिता। 'मनोर्जातावञ्यतौ षुक् च' (पा ४,१,१६१) इति अञ्प्रत्ययः षुगागमश्च। यस्माद् एवम् अग्निर्देवानां मानुषाणां च चक्षुः तस्मात् तदीयप्रकाशेन इयक्षमाणाः प्रथमं यष्टुम् इच्छन्तः पश्चाद् यजमानाः यागं कुर्वाणाश्च जनाः भृगुभिः एतत्संज्ञैर्महर्षिभिः सजोषाः समानप्रीतयः सन्तः स्वः स्वर्गं कर्मफलभूतं स्वस्ति क्षेमेण यन्तु प्राप्नुवन्तु। इयक्षमाणा इति। यजेः सन् 'सन्यतः' (पा ७,४,७९) इति अभ्यासस्य इत्वे आदिवर्णलोपश्छान्दसः। सजोषाः। जुषी प्रीतिसेवनयोः। भावे घञ्। ततो बहुव्रीहौ 'समानस्य छन्दसि०' (पा ६,३,८४) इति समावः। 'परादिश्छन्दसि बहुलम्' (पा ६,२,१९९) इति उत्तरपदाद्युदात्तत्वम्। यद्वा समानं जोषमाणाः प्रीयमाणाः। असुनि 'सुपां सुलुक्०' (पा ७,१,३९) इति जसः सुः। कृदुत्तरपदप्रकृतिस्वरत्वम्।

[५]अ॒जम॑न॒ज्मि [६]पय॑सा घृ॒तेन॑ दि॒व्यं [७]सु॑प॒र्णं [८]प॑य॒सं [९]बृ॒हन्त॑म्।
तेन॑ गेष्म सुकृ॒तस्य॑ लो॒कं [१०]स्व॑रा॒रोह॑न्तो अ॒भि[१०] [११]नाक॑मुत्त॒मम् ॥ ६ ॥

---

१. दैवयुतां मा १७,६९ तै ४,६,५,२ पै ३,३८,३; देवायतां मै २,१०,६. २. मर्त्यानाम् मा. तै. मै. पै. ३. सजोषसः पै., सह मै. ४. °माना B,B^h,D,S^m. ५. अग्निं युन° मै २,१२,३. ६. सर्वसा तै.मै.पै. ७. समुद्रं पै. ८. वयसं तै ३,१,११,२ मै. वयसा तै ४,७,१३,१ काठ १८,१५; वायसं ऋ १,१६४,५२ काठ १९,१४. ९. सह° पै. १० स्रुगो (सुगो तै.) रुहाणा अधि तै. मै.काठ १८,१५ पै. ११. नाकं उत्तमे तै. मै. काठ.

अजम् । अनज्मि । पयसा । घृतेन । दिव्यम् । सुऽपर्णम् । पयसम् । बृहन्तम् ।
तेन । गेष्म । सुऽकृतस्य । लोकम् । स्वः । आऽरोहन्तः । अभि । नाकम् । उत्ऽतमम् ॥

हवीरूपम् आपन्नम् अजं पयसा पयोविकारेण पयोवद् रसवता वा घृतेन आज्येन अनज्मि अभिघारयामि । अञ्जू व्यक्तिम्लक्षणकान्तिगतिषु । रुधादित्वात् श्नम् । 'श्नान्नलोपः' ( पा ६,४,२३ ) । कीदृशम् अजम् दिव्यम् दिवि भवं द्युलोकार्हं वा सुपर्णम् शोभनपक्षयुक्तं पयसम् । छान्दसो वर्णविकारः । वयसं पक्षिरूपमापन्नं बृहन्तम् महान्तं यजमानं स्वर्गं प्रापयितुं शक्तम् । तेन ईदृक्प्रभावेन अजेन सुकृतस्य पुण्यस्य फलभूतं लोकं गेष्म वयं गच्छेम । ततश्च उत्तमम् उत्कृष्टं नाकम् दुःखसंस्पर्शशून्यं स्वः स्वर्गं सूर्यात्मकं वा परमं ज्योतिः अभि आरोहन्तः अभिगच्छन्तः भवेमेत्यर्थः ।

पञ्चौदनं पञ्चभिरङ्गुलिभिर्दर्व्योद्धर पञ्चधैतमोदनम् ।
प्राच्यां दिशि शिरो अजस्य धेहि दक्षिणायां दिशि दक्षिणं धेहि पार्श्वम् ॥ ७ ॥

पञ्चऽओदनम् । पञ्चऽभिः । अङ्गुलिऽभिः । दर्व्या । उत् । हर । पञ्चऽधा । एतम् । ओदनम् ।
प्राच्याम् । दिशि । शिरः । अजस्य । धेहि । दक्षिणायाम् । दिशि । दक्षिणम् । धेहि । पार्श्वम् ॥ ७ ॥

हे पावक पञ्चौदनम् पञ्चधा विभक्तम् ओदनम् । 'दिक्संख्ये संज्ञायाम्' ( पा २,१,५० ) इति समासः । पञ्चभिरङ्गुलिभिः करणैः दर्व्या साधनेन उद्धर । स्थाल्याः सकाशाद् उद्धृत्य बर्हिषि स्थापयेत्यर्थः । एतम् उद्धृतम् ओदनं पञ्चधा विभज्य तत्र एकं भागम् अजस्य एकं शिरः शिरोगतमांसं च प्राच्यां दिशि धेहि स्थापय । पुनः एकम् ओदनभागम् अजस्य दक्षिणम् पार्श्वम् दक्षिणपार्श्वस्थं मांसं च दक्षिणायाम् दक्षिणस्यां दिशि धेहि स्थापय ।

प्रतीच्यां दिशि भसदमस्य धेह्युत्तरस्यां दिश्युत्तरं धेहि पार्श्वम् ।
ऊर्ध्वायां [1]दिश्य१जस्यानूकं धेहि दिशि ध्रुवायां धेहि [2]पाजस्यमन्तरिक्षे
मध्यतो मध्यमस्य ॥ ८ ॥

प्रतीच्याम् । दिशि । भसदम् । अस्य । धेहि । उत्तरस्याम् । दिशि । उत्तरम् । धेहि । पार्श्वम् ।
ऊर्ध्वायाम् । दिशि । अजस्य । अनूकम् । धेहि । दिशि । ध्रुवायाम् । धेहि । पाजस्यम् ।
अन्तरिक्षे । मध्यतः । मध्यम् । अस्य ॥ ८ ॥

प्रतीच्याम् पश्चिमायां दिशि अस्य अजस्य भसदम् । भसत् कटिप्रदेशः । तत्रत्यं

---

१. दिश्युर्ध्व° Bh; दिश्यार्ध्व° R.   २. °स्यम् । अन्त° RW.

**मांसम् ओदनभागसहितं** धेहि **स्थापय।** उत्तरस्याम् **उदीच्यां** दिशि **ओदनभागसहितम्** उत्तरं पार्श्वम् **उत्तरपार्श्वसंबन्धि मांसं** धेहि। **तथा** ऊर्ध्वायां दिशि **अस्य अजस्य** अनूकम् **पृष्ठवंशस्थं मांसम् ओदनभागसहितं** धेहि **स्थापय।** ध्रुवायाम् **स्थिरायां भूम्यात्मिकायाम् अधस्ताद्** दिशि पाजस्यम्। **पाज इति बलनाम। तत्र हितम् उदरगतम् ऊवध्यं** धेहि **स्थापय। निखनेत्यर्थः।** मध्यतः **मध्यभागे** अन्तरिक्षे **आकाशे** अस्य **अजस्य** मध्यम् [1]**शरीरमध्यवर्ति आकाशम् संयोजयेत्यर्थः।**

**शृतमजं शृतया प्रोर्णुहि त्वचा सर्वैरङ्गैः संभृतं विश्वरूपम्।**
**स उत् तिष्ठेतो अभि नाकमुत्तमं पद्भिश्चतुर्भिः प्रति तिष्ठ दिक्षु॥ ९॥**

शृतम्। अजम्। शृतया। प्र। ऊर्णुहि। त्वचा। सर्वैः। अङ्गैः। सम्ऽभृतम्। विश्वऽरूपम्।
सः। उत्। तिष्ठ। इतः। अभि। नाकम्। उत्ऽतमम्। पत्ऽभिः। चतुःऽभिः। प्रति। तिष्ठ। दिक्षु॥

**हे शमितः** शृतम् **पक्वम्** अजं [2]श्रथया **विशसनेन विभक्तया** त्वचा **तदीयेन चर्मणा सपादवालशीर्षेण** प्रोर्णुहि **प्रकर्षेण च्छादय। ऊर्णुञ् छादने। कीदृशम् अजम्।** सर्वैः **अशेषैः** अङ्गैः **हस्तपादाद्यवयवैः** संभृतम् **संयुक्तं** विश्वरूपम् **सर्वाकारम्। हे अज** स **तादृशः सर्वाङ्गसहितस्त्वम्** उत्तमम् **उत्कृष्टं** नाकम् **स्वर्गम्** अभिलक्ष्य इतः **अस्माद् भूलोकाद्** उत् तिष्ठ **उद्गच्छ। ऊर्ध्वकर्मत्वाद् आत्मनेपदाभावः। तथा** चतुर्भिः पद्भिः **पादैः** दिक्षु **प्राच्यादिषु चतसृषु** प्रति तिष्ठ **प्रतिष्ठितो भव। पद्भिरिति।** 'पद्दन्' (पा ६,१,६३) **इत्यादिना पादशब्दस्य पद् आदेशः।** 'ऊडिदंपदादि°' (पा ६,१,१७१) **इति विभक्त्युदात्तत्वम्। चतुर्भिरिति।** 'झल्युपोत्तमम्' (पा ६,१,१८०) **इति उकार उदात्तः। दिक्ष्विति** 'सावेकाचः°' (पा ६,१,१६८) **इति विभक्तेरुदात्तत्वम्।**

**इति चतुर्थं सूक्तम्।**

'समुत्पतन्तु' **इति सूक्तेन वृष्टिकामः मरुद्भ्यो मान्त्रवर्णिकीभ्यो वा देवताभ्य आज्यहोमः। काशादिविभुवकवेतसाख्या ओषधीः एकस्मिन् पात्रे कृत्वा संपात्य अभिमन्त्र्य जलमध्ये अधोमुखं निनयनम्। तासामेव काशादीनां संपातिताभिमन्त्रितानाम् अप्सु प्लावनम्। श्वशिरसो मेषशिरसश्च अभिमन्त्रितस्य अप्सु प्रक्षेपणम्। मानुषकेशजरदुपानहां वंशाग्रे बन्धनम् तुषसहितम् आमपात्रम् अभिमन्त्रितोदकेन संप्रोक्ष्य** [4]**त्रिपादे शिक्ये निधाय अप्सु प्रक्षेपणं च इत्येतानि अभिवर्षणकर्माणि कुर्यात्। सूत्रितं हि—**" 'समुत्पतन्तु' (अ ४,१५), 'प्र नभस्व' (अ ७, १९) इति वर्षकामो द्वादशरात्रम्" **इत्यादि** 'त्रिपादेऽश्मानम् अवधाय अप्सु निदधाति' (**कौसू ४१,१-७**) **इत्यन्तम्।**

1. शरीरम° S', Kd. 2. वैतु. मंपा. द्र. 3. °शिरश्च S', Kd. 4. त्रिपदे S', Kd.

तथा उपतारकाद्भुतशान्तौ अनेन सूक्तेन आज्यं जुहुयात्। सूत्रितं हि— 'अथ यत्रैतद् उपतारकाः[1]' इति प्रक्रम्य " 'समुत्पतन्तु' 'प्र नभस्व' इति [2]वर्षाज्जुहुयात्। सा तत्र प्रायश्चित्तिः" (कौसू १०३,१-४) इत्यन्तम्।

चातुर्मास्यान्वारम्भणीयेष्टौ 'अभि क्रन्द' (६) इति पर्जन्यचरुयागाभिमन्त्रणम्। उक्तं वैताने— " पूर्वेणुर्वैश्वानरपार्जन्येष्टिर्वा[3] 'अग्ने वैश्वानर' (अ २,१६,४), 'अभि क्रन्द स्तनय' (वैताश्रौ ८,९) इति।

धूमकेतूत्पातदर्शने पञ्चपशुयागमध्ये प्राजापत्यपशुपुरोडाशस्थाने आग्नेयस्य प्राजापत्यस्य क्षीरौदनान् इति विहितं क्षीरौदनं 'प्रजापतिः सलिलात्' (११) इत्यृचा जुहुयात्। सूत्रितं हि— 'अथ यत्रैतद् धूमकेतुः' इति प्रक्रम्य " 'प्रजापतिः सलिलात्' इति प्राजापत्यस्य" (कौसू १२७,१-९) इति।

'प्राजापत्यां प्रजापशुभकामस्य प्रजाक्षये च' (शाक १७,२) इति विहितायां महाशान्तौ 'प्रजापतिः सलिलात्' इत्येषा आवपनीया। उक्तं शान्तिकल्पे। " 'प्रजापतिः सलिलाद्' इति प्राजापत्यायाम्" (शाक १८,३) इति।

समुत्पतन्तु प्रदिशो नभस्वतीः सम्भ्राणि वातजूतानि [4]यन्तु ।
[5]महऋषभस्य नदतो नभस्वतो वाश्रा आपः पृथिवीं तर्पयन्तु ॥ १ ॥

सम्ऽउत्पतन्तु । प्रऽदिशः । नभस्वतीः । सम् । अभ्राणि । वातऽजूतानि । यन्तु ।
महाऽऋषभस्य । नदतः । नभस्वतः । वाश्राः । आपः । पृथिवीम् । तर्पयन्तु ॥ १ ॥

प्रदिशः प्रकृष्टाः प्राच्याद्या दिशः नभस्वतीः नभस्वता वायुना युक्ताः सत्यः समुत्पतन्तु मेघैः संहता उद्गच्छन्तु। नभस्वतीरिति। एकस्य मतुपो लोपो द्रष्टव्यः। 'वा छन्दसि' (पा ६,१,१०६) इति पूर्वसवर्णदीर्घः। अभ्राणि। अपो बिभ्रति वृष्ट्यर्थम् उदकं धारयन्तीति उदकपूर्णा मेघा अभ्रशब्देनोच्यन्ते। तानि च वातजूतानि वातेन वायुना प्रेरितानि भूत्वा सं यन्तु संगच्छन्तां संहतानि भवन्तु। [6]महर्षभस्य महांश्चासौ ऋषभश्च महर्षभः। 'आन्महतः' (पा ६,३,४६) इति आत्वम्। नदतः ध्वनिं कुर्वतः यथा लोके महान् ऋषभः सेचनसमर्थः पुंगवो हृष्टः सन् गर्जति तादृगाकारयुक्तस्य गर्जतो नभस्वतः वायुप्रेरितस्य मेघस्य संबन्धिन्य आपः वाश्राः शब्दायमानाः पृथिवीम् भूमिं तर्पयन्तु तृप्ताम् ओषधिप्ररोहणसमर्थां कुर्वन्तु। वाश्रा इति। वाशृ शब्दे। 'स्फायितञ्चि' (पाउ २,१३) इत्यादिना रक्प्रत्ययः।

१. °कम् S', Kd. २. वार्षी° S', Kd. ३. वा नास्ति S', Kd. ४. वन्ति पै ५,७,१. ५. महर्षभ° पै. ६. वैतु. मंपा. द्र.

[1]समीक्षयन्तु तविषाः सुदानवोऽपां रसा[2] ओषधीभिः[3] सचन्ताम् ।
वर्षस्य सर्गा महयन्तु भूमिं पृथग् जायन्तामोषधयो विश्वरूपाः ॥ २ ॥

सम् । ईक्षयन्तु । तविषाः । सुऽदानवः । अपाम् । रसाः । ओषधीभिः । सचन्ताम् ।
वर्षस्य । सर्गाः । महयन्तु । भूमिम् । पृथक् । जायन्ताम् । ओषधयः । विश्वऽरूपाः ॥ २ ॥

तविषाः । महन्नामैतत् । महान्तः सुदानवः शोभनदाना मरुतः समीक्षयन्तु वृष्टिं संदर्शयन्तु । यथा वृष्टिर्भवति तथा अस्मान् अनुगृह्णन्तु इत्यर्थः । अपाम् वृष्ट्युदकानां रसाः ओषधीभिः व्रीहियवादिभिः पृथिव्याम् उप्तैर्बीजैः सचन्ताम् समवयन्तु । षच समवाये । उक्त एवार्थो विव्रियते वर्षस्य इति । वर्षस्य वृष्ट्युदकस्य सर्गाः सृज्यन्त इति सर्गा धाराः । कर्मणि घञ् । भूमिम् पृथ्वीं महयन्तु पूजयन्तु । मह पूजायाम् । वर्षधाराभिरलंकृताद् भूप्रदेशाद् विश्वरूपाः नानाविधा ओषधयः व्रीहियवाद्याः पृथक् अवान्तरजातिभेदेन जायन्ताम् उत्पद्यन्ताम् ।

[4]समीक्षयस्व गायतो[5] नभांस्यपां वेगासः पृथगुद्[6]विजन्ताम् ।
वर्षस्य सर्गा महयन्तु भूमिं पृथग् जायन्तां [7]वीरुधो विश्वरूपाः ॥ ३ ॥

सम् । ईक्षयस्व । गायतः । नभांसि । अपाम् । वेगासः । पृथक् । उत् । विजन्ताम् ।
वर्षस्य । सर्गाः । महयन्तु । भूमिम् । पृथक् । जायन्ताम् । वीरुधः । विश्वऽरूपाः ॥ ३ ॥

हे मरुद्गण त्वं गायतः स्तुवतः अस्मान् नभांसि अभ्राणि समीक्षयस्व दर्शय । अपां वेगासः वेगाः वेगयुक्ता प्रवाहाः पृथक् भेदेन उद् विजन्ताम् उच्चलन्तु । ओविजी भयचलनयोः । उत्तरार्धर्चः पूर्ववत् । ओषधीनां स्थाने वीरुधः इति विशेषः । वीरुधः विरोहणशीला आरण्या ओषधिवनस्पतयः ।

गणास्त्वोप गायन्तु मारुताः पर्जन्य घोषिणः पृथक् ।
सर्गा वर्षस्य वर्षतो [8]वर्षन्तु पृथिवीमनु ॥ ४ ॥

गणाः । त्वा । उप । गायन्तु । मारुताः । पर्जन्य । घोषिणः । पृथक् ।
सर्गाः । वर्षस्य । वर्षतः । वर्षन्तु । पृथिवीम् । अनु ॥ ४ ॥

हे पर्जन्य वृष्ट्यभिमानिन् देव त्वा त्वां घोषिणः गर्जनघोषयुक्ता मारुताः मरुत्संबन्धिनो गणाः उप गायन्तु उपश्लोकयन्तु । वर्षस्य वृष्टिजलस्य पृथक् नानात्वेन सर्गाः सृज्यमानाः [8]वर्षन्तः सिञ्चन्तो बिन्दवः पृथिवीम् अनु वर्षन्तु अनुगतम् आर्द्रीकुर्वन्तु ।

---

१. प्र वर्षयन्ति पै ५,७,४.   २. रसैः पै.   ३. ओषधीः पै.   ४. समीक्षयद् विश्वग्वातो पै ५,७,२.   ५. °गुद् पतन्तु पै.   ६. ओषधयो पै.   ७. सृजन्तु पै ५,७,५.   ८. वैद्य. मंपा. द्र.

[1]उदीरयत मरुतः [2]समुद्रतस्त्वेषो[3] अर्को[3] नभ उत् [4]पातयाथ ।
महऋषभस्य नदतो नभस्वतो वाश्रा आपः पृथिवीं तर्पयन्तु ॥ ५ ॥

उत् । ईरयत । मरुतः । [5]समुद्रतः । त्वेषः । अर्कः । नभः । उत् । पातयाथ ।
[6]महाऽऋषभस्य । नदतः । नभस्वतः । वाश्राः । आपः । पृथिवीम् । तर्पयन्तु ॥ ५ ॥

हे मरुतः समुद्रतः समुद्रमध्यात् उदीरयत वृष्टिजलम् ऊर्ध्वं प्रेरयत । त्वेषः दीप्तिमत् अर्कः अर्चनसाधनम् उदकम् तद्युक्तं नभः अभ्रम् उत् पातयाथ उद्गमयत । [7]महर्षभस्य इत्यादि व्याख्यातम् ।

अभि क्रन्द स्तनयार्दयोदधिं भूमिं पर्जन्य पयसा समङ्ग्धि ।
त्वया सृष्टं बहुलमैतु वर्षमाशारैषी[8] कृशगुरेत्वस्तम् ॥ ६ ॥

अभि । क्रन्द । स्तनय । अर्दय । उदऽधिम् । भूमिम् । पर्जन्य । पयसा । सम् । अङ्ग्धि ।
त्वया । सृष्टम् । बहुलम् । आ । एतु । वर्षम् । [9]आशारऽएषी । कृशऽगुः । एतु । अस्तम् ॥ ६ ॥

हे पर्जन्य अभि क्रन्द अभितः शब्दं कुरु । स्तनय मेघान् प्रविश्य घोषय । उदधिम् जलधिम् अर्दय उदकादानेन पीडय । पयसा वृष्टेन उदकेन भूमिं समङ्ग्धि समक्तां संसिक्तां कुरु । त्वया सृष्टम् प्रेरितं बहुलम् सान्द्रं वर्षम् वर्षणसमर्थम् अभ्रम् ऐतु आगच्छतु । [10]आसारैषी । आसारो धारासंपातः तमिच्छतीति आसारैषी सूर्यः । कृशगुः [11]कृशाः तनूकृता[11] गावो रश्मयो यस्य तथाविधः सन् अस्तम् एव अदर्शनं प्राप्नोतु । 'दिवा चित् तमः कृण्वन्ति पर्जन्येनोदवाहेन' ( ऋ १,३८,९ ) इति हि मन्त्रान्तरम् ।

[12]सं वोऽवन्तु सुदानव उत्सा अजगरा उत ।
मरुद्भिः प्रच्युता मेघा वर्षन्तु पृथिवीमनु ॥ ७ ॥

सम् । वः । अवन्तु । सुऽदानवः । उत्साः । अजगराः । उत ।
मरुत्ऽभिः । [13]प्रऽच्युताः । मेघाः । वर्षन्तु । पृथिवीम् । अनु ॥ ७ ॥

सुदानवः शोभनदाना मरुतः हे जना वः युष्मान् सम् अवन्तु संतर्पयन्तु । अजगरा उत । उतशब्दोत्र वितर्के । अजगरात्मना वितर्क्यमाणाः स्थूला उत्साः

---

१. °यथा ऋ ५,५५,५ तै २,४,८,१; °यता मै २,४,७. २. °द्रजः K,K,V,O,Op. ३. °षा अर्का पै ५,७,४. ४. °तयन्तु पै. ५. समुद्रजः K. ६. महु° K. ७. वैद्व. मंपा. द्र. ८. °रैशी O,Op. °सारैषी K,V, पै. ९. आसार° K. १०. वैद्व. मंपा. द्र. ११. कृशान् कृता S', Kd. १२. सम् अवन्तु पै ५,७,६. १३. प्रच्यु° P.

वारिप्रवाहाः। उत्पद्यन्ताम् इत्यर्थः। यद्वा हे सुदानवः वः युष्माकं संबन्धिनः उदकलक्षणा उत्साः समवन्तु संतर्पयन्तु इति एकवाक्यता। ईदृशानाम् उत्सानाम् उत्पत्तिः कथं सेत्स्यतीत्यत्राह— मरुद्भिः इति। मरुद्भिः वायुविशेषैः प्रच्युताः स्वस्थानात् प्रेरिता मेघाः पृथिवीम् अनु वर्षन्तु।

आशामाशां वि द्योततां वाता वान्तु दिशोदिशः।
मरुद्भिः प्रच्युता मेघाः [1]सं यन्तु[1] पृथिवीमनु ॥ ८ ॥

आशाम्ऽआशाम्। वि। द्योतताम्। वाताः। वान्तु। दिशःऽदिशः।
मरुत्ऽभिः। प्रऽच्युताः। मेघाः। सम्। यन्तु। पृथिवीम्। अनु ॥ ८ ॥

आशामाशाम् दिशंदिशम् आश्रित्य विद्युद् वि द्योततां स्फुरतु। दिशोदिशः सर्वस्या अपि दिशो वाता वान्तु मेघस्य उद्गमयितारो वायवः संचरन्तु। यद्वा दिशोदिश इति द्वितीया। सर्वा अपि दिशः प्राप्य वायवो वान्तु। तदनन्तरं मरुद्भिः प्रच्युताः वायुप्रेरिता मेघाः पृथिवीम् भूमिम् अनुलक्ष्य सं यन्तु संगता भवन्तु। वृष्ट्यर्थं संहन्यन्ताम् इत्यर्थः।

[2]आपो विद्युदभ्रं वर्षं सं वोऽवन्तु सुदानव उत्सा अजगरा उत।
मरुद्भिः प्रच्युता मेघाः प्रावन्तु पृथिवीमनु ॥ ९ ॥

आपः। [3]विऽद्युत्। अभ्रम्। वर्षम्। सम्। वः। अवन्तु। सुऽदानवः। उत्साः। अजगराः। उत।
मरुत्ऽभिः। प्रऽच्युताः। मेघाः। प्र। अवन्तु। पृथिवीम्। अनु ॥ ९ ॥

हे [4]सुदानवः शोभनदाना मरुतः वः युष्माकं संबन्धिनः अबादिपदार्थाः समवन्तु जगत् संतर्पयन्तु। आपो मेघस्थानि उदकानि। विद्युत् सौदामनी[5]। अभ्रम् उदकपूर्णो मेघः। वर्षम् वृष्टिजलम्। अजगराः अजगरसमानाकारा उत्साः वारिप्रवाहाश्च युष्मत्संबन्धिनः संतर्पयन्तु। लोकम् इत्यर्थः। तदर्थं मरुद्भिः प्रच्युताः प्रेरिता मेघाः पृथिवीम् अनु [6]प्लावन्तु प्रावन्तु। 'उपसर्गस्यायतौ' (पा ८,२,१९) इति विधीयमानं लत्वं व्यत्ययेन अत्रापि भवति।

अपामग्निस्तनूभिः संविदानो य ओषधीनामधिपा बभूव।
स नो वर्षं वनुतां जातवेदाः प्राणं प्रजाभ्यो अमृतं दिवस्परि ॥ १० ॥

अपाम्। अग्निः। तनूभिः। सम्ऽविदानः। यः। ओषधीनाम्। अधिऽपाः। बभूव।
सः। नः। वर्षम्। वनुताम्। जातऽवेदाः। प्राणम्। प्रऽजाभ्यः। अमृतम्। दिवः। परि ॥

---

१. वर्षन्तु पै ५,७,९. २. वातो पै ५,७,७. ३. विद्युत P. ४. वैद्यु. मंपा. द्र. ५. °मिनी शंपा. ६. °धिपो पै ५,७,८.

अपाम् मेघस्थानां तनूभिः शरीरैः संविदानः ऐकमत्यं गतो यो वैद्युतः अग्निः ओषधीनाम् उत्पत्स्यमानानाम् अधिपा बभूव अधिपतिः ईश्वरो भवति । जातवेदाः जातानां वेदिता सः अग्निः नः अस्मभ्यं वर्षं वनुताम् प्रयच्छतु । कीदृशं वर्षम् । प्रजाभ्यः । षष्ठ्यर्थे चतुर्थी । प्रजानां प्राणम् जीवनप्रदं दिवस्परि दिवः संबन्धि अमृतम् अमृतत्वप्रापकम् । यद्वा दिवः द्युलोकाद् अन्तरिक्षाद् वनुताम् इति संबन्धः ।

प्र॒जाप॑तिः सलि॒लादा स॑मु॒द्रादाप॑ ई॒रय॑न्नुद॒धिम॑र्दयाति ।
प्र[1] प्या॑यतां॒ वृष्णो॒ अश्व॑स्य॒ [2]रेतो॒ऽर्वाङे॒तेन॑ स्तनयि॒त्नुनेहि॑ ॥ ११ ॥

प्र॒जाऽप॑तिः । स॒लि॒लात् । आ । स॒मु॒द्रात् । आपः॑ । ई॒रय॑न् । उ॒द॒ऽधिम् । अ॒र्द॒या॒ति॒ ।
प्र । प्या॒य॒ता॒म् । वृष्णः॑ । अश्व॑स्य । रेतः॑ । अ॒र्वाङ् । ए॒तेन॑ । स्त॒न॒यि॒त्नुना॑ । आ । इ॒हि॒ ॥ ११ ॥

प्रजापतिः प्रजानां पालयिता वृष्टिप्रदः संवत्सरात्मकः सूर्यः सलिलात् । षल गतौ इत्यस्माद् इलच्प्रत्ययः । व्यापनशीलात् समुद्राद् आपः । व्यत्ययेन जस् । अपः उदकानि आ समन्तात् ईरयन् वृष्ट्यर्थं प्रेरयन् उदधिम् जलधिम् अर्दयाति । अर्दयतु रश्मिभिरादानेन पीडयतु । अर्दयतेर्लेटि आडागमः । [4]विष्णोः व्यापनशीलस्य अश्वस्य अश्ववद् वेगवतो मेघस्य रेतः वृष्ट्युपादानभूतं वीर्यं प्र प्यायताम् प्रवर्धताम् । एतेन प्रवृद्धवीर्येण स्तनयित्नुना मेघेन हे पर्जन्य त्वम् अर्वाङ् अस्मदभिमुखः सन् एहि आगच्छ ।

अ॒पो नि॑षि॒ञ्चन्नसु॑रः पि॒ता नः॒ श्वस॑न्तु॒ गर्ग॑रा अ॒पां [5]व॑रु॒णाव॒ नीची॑र॒पः सृ॑ज ।
वद॑न्तु[5] पृश्नि॑बाहवो [6]म॒ण्डूका॒ इरि॒णानु॑[6] ॥ १२ ॥

अ॒पः । [7]नि॒ऽसि॒ञ्चन् । असु॑रः । पि॒ता । नः॒ । श्वस॑न्तु । गर्ग॑राः । अ॒पाम् । व॒रु॒ण॒ । अव॑ ।
नीचीः॑ । अ॒पः । सृ॒ज॒ । वद॑न्तु । पृश्नि॑ऽबाहवः । म॒ण्डूकाः॑ । इरि॑णा । अनु॑ ॥ १२ ॥

असुरः मेघानां क्षेप्ता । यद्वा असवः प्राणाः । तान् रातीत्यसुरः । वृष्टिजलेन प्राणप्रद इत्यर्थः । 'आपोमयः प्राणः' (छां उ ६,५,४) इति हि ब्राह्मणम् । एवंभूतो नः अस्माकं पिता उत्पादयिता सूर्यः अपः निषिञ्चन् वृष्ट्युदकानि न्यग्भावेन सिञ्चन् । वर्तताम् इत्यर्थः । श्रूयते हि — 'यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति' ( तै २,४,१०,२ ) इति । ततश्च अपाम् उदकानां गर्गराः । अनुकरणशब्दोयम् । ईदृग्ध्वनियुक्ताः प्रवाहाः श्वसन्तु उच्छ्वसिता भवन्तु । हे वरुण त्वमपि [4]अवनीचीः अवनिं भूमिम् अञ्चन्ति गच्छन्तीत्यवनीच्यः आपः । अवनिशब्दोपपदाद् अञ्चतेः 'ऋत्विग्' ( पा ३,२,५९ ) इत्यादिना क्विन् । 'अनिदिताम्' (पा ६,४,२४ ) इति नलोपः । 'अञ्चतेश्चोपसंख्यानम्' (पावा ४,१,६) इति

१. प्रा पै ५,७,१०. २. पिन्वतु ऋ ५,८३,६. ३. धाराः ऋ. ४. वैदु. मंपा. द्र. ५. वरुण । अव॑ सृज वद॑ RW. ६. मण्डूका इरिणा॑ Bh. ७. निऽसिंचन् P.

ङीप्। 'अचः' ( पा ६,४,१३८ ) इति अकारलोपे 'चौ' ( पा ६,३,१३८ ) इति दीर्घत्वम्। भूमिं प्राप्नुवतीरपः ¹अप सृज मेघेभ्यः अपगमय। अनन्तरं पृश्निबाहवः श्वेतबाहवो मण्डूकाः इरिणानु। इरिणशब्दो निस्तृणभूवचनः। 'शेश्छन्दसि बहुलम्' ( पा ६,१,७० ) इति शेर्लोपः। इरिणानि अनुप्राप्य वृष्टिजलेन लब्धप्राणाः सन्तः वदन्तु शब्दं कुर्वन्तु।

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः।
¹वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥ १३ ॥

सम्ऽवत्सरम्। शशयानाः। ब्राह्मणाः। व्रतऽचारिणः।
¹वाचम्। पर्जन्यऽजिन्विताम्। प्र। मण्डूकाः। अवादिषुः ॥ १३ ॥

व्रतं नियमविशेषं चरन्ति अनुतिष्ठन्तीति व्रतचारिणः। लुप्तोपमम् एतत्। व्रतचारिणो ब्राह्मणा इव संवत्सरं शशयानाः संवत्सरकालपर्यन्तं वातातपाभ्यां शुष्काः शयानाः संवत्सरान्ते वृष्टिजलेन लब्धसंज्ञा मण्डूकाः पर्जन्यजिन्विताम् पर्जन्यप्रीतां वाचम् अवादिषुः अवोचन्। पर्जन्यप्रीतिकरं घोषं कृतवन्त इत्यर्थः। 'वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव। तं मण्डूका अन्वमोदन्त। स मण्डूकान् अनुमोदमानान् दृष्ट्वा तुष्टाव' ( नि ९,६ ) इत्यादि निरुक्तम् अत्र अनुसंधेयम्।

²उपप्रवद मण्डूकि वर्षमा वद तादुरि।
मध्ये ह्रदस्य प्लवस्व विगृह्य⁴ चतुरः पदः ॥ १४ ॥

उपऽप्रवद। मण्डूकि। वर्षम्। आ। वद। तादुरि।
मध्ये। ह्रदस्य। प्लवस्व। विऽगृह्य। चतुरः। पदः ॥ १४ ॥

हे मण्डूकि त्वं हर्षम् ³उप उपेत्य ³प्रवद प्रकृष्टं घोषं कुरु। हे तादुरि। तदुरस्य अपत्यं स्त्री तादुरी। हे तादृशि वर्षम् वृष्टिम् आ वद आभाषय। यादृशेन त्वद्घोषेण वृष्टिर्जायते तादृशं शब्दं कुर्वित्यर्थः। वृष्टिजलेन ह्रदे पूर्णे सति तस्य ह्रदस्य मध्ये चतुरः पदः आत्मीयान् चतुःसंख्याकान् ⁵पादान् विगृह्य प्लवनानुगुणं प्रसार्य प्लवस्व प्रतर। प्लवनेन यथेच्छं विहरेत्यर्थः।

⁶खण्वखा३इ खैमखा३इ⁶ मध्ये तदुरि।
वर्षं वनुध्वं पितरो मरुतां मन ⁷इच्छत⁷ ॥ १५ ॥

१. वैतु. मंपा. इ. २. तु. K, सा. ऋ ७,१०३,१; वैतु. मूको. [ तु. शंपा. Wh. ] वै. च वार्त. ३. उपु॰ P³,M,E²,I,H,K²; उपप्लवत खिसा १७,१. ४. निगृह्य खिसा. ५. पादावन Kd., पादान्वन S'. ६. स्वरस्य कृते तु. शौच. [१,९६]; वैतु. शुप्रा [ २,५० ] अप्रा३इ इति सर्वोदात्तम्; खण्वखा३इ खैमखा३इ D, खण्वखा३इ खैमखा३इ सात.³ ७. इच्छतः A,B,B,ʰ,D,R,Sᵐ,RW.

[1]खण्वखा३इ । [2]खैमखा३इ । मध्ये । तदुरि ।
वर्षम् । वनुध्वम् । पितरः । मरुताम् । मनः । [3]इच्छत ॥ १५ ॥

खण्वखा [4]खैमखा तदुरी इति मण्डूकस्त्रीजातेः संज्ञाविशेषाः । हे खण्वखे हे [4]खैमखे हे तदुरि इति तिस्रः संबोध्यन्ते । [5]"आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः" (पावा ८,२,१०७) इति विगृह्य अवर्णस्य प्लुतः । हे तत्संज्ञा मण्डूक्यः ह्रदस्य मध्ये वर्तमाना यूयं युष्मदीयेन घोषेण वर्षम् वृष्टिं वनुध्वम् [6]प्रयच्छत । हे पितरः पालयितारो मण्डूकाः [4]मारुतम् मरुत्संबन्धि वृष्ट्यभिमुखं मनः इच्छत घोषेण वशीकुरुत ।

महान्तं [7]कोशमुदचाभि षिञ्च [8]सविद्युतं [9]भवतु वातु वातः ।
[10]तन्वतां यज्ञं बहुधा विसृष्टा[11] आनन्दिनीरोषधयो भवन्तु ॥ १६ ॥
महान्तम् । कोशम् । उत् । अच । अभि । सिञ्च । सऽविद्युतम् । भवतु । वातु । वातः ।
तन्वताम् । यज्ञम् । बहुऽधा । विऽसृष्टाः । आऽनन्दिनीः । ओषधयः । भवन्तु ॥ १६ ॥

महान्तम् अधिकं कोशम् । मेघनामैतत् । मेघम् हे पर्जन्य त्वम् उदच समुद्राद् उदकपूर्णम् उद्धर । अञ्चु गतौ इत्यस्य एतद् रूपम् । तेन मेघेन अभि षिञ्च सर्वां भूमिम् अभितः सिक्तां कुरु । तदर्थं तं मेघं सविद्युतम् विद्युत्सहितं कुरु । ततो वृष्टिर्भवतु । यद्वा सविद्युतम् । लुगभावश्छान्दसः । सविद्युत् विद्युत्सहितम् अन्तरिक्षं भवतु । वातः वायुः वृष्ट्यनुकूलं वातु संचरतु । बहुधा बहुप्रकारं विसृष्टाः वृष्ट्या प्रेरिता आपः यज्ञं तन्वताम् विस्तारयन्तु । यज्ञादिक्रियाहेतवो भवन्तु इत्यर्थः । ओषधयः व्रीहियवाद्या ग्राम्याः आरण्यास्तरुगुल्माद्याः आनन्दिनीः वृष्टिजलेन हर्षयुक्ता भवन्तु ।

इति पञ्चमं सूक्तम् ।

इति अथर्ववेदार्थप्रकाशे चतुर्थकाण्डे तृतीयोऽनुवाकः ।

चतुर्थेऽनुवाके पञ्च सूक्तानि । तत्र 'बृहन्नेषाम्' इति आद्येन सूक्तेन अभिचारकर्मणि शत्रुं क्रोशन्तम् अनुब्रूयात् ( कौसू ४८,७ )। धूमकेतूत्पातशान्तौ वारुणपशुप्रयोगे 'उतेयं भूमिः' (३) इत्येषा ( कौसू १२७,३ )।

बृहन्नेषामधिष्ठाता अन्तिकादिव पश्यति ।
[12]यस्तायन्मन्यते चरन्त्सर्वं देवा इदं विदुः ॥ १ ॥

१. खण्वखा३इ P,P². २. खैमखा३इ P. ३. इच्छत: P,P²,J. ४. वैतु. मूपा. द्र. ५. पृथोऽप्रगृह्यस्य° (पा ८,२,१०७) शंपा. ६. प्रयच्छ S', Kd. ७. कोषमु° पै ५,७,१४. ८. संवि° B,Bp. ९. भवति पै. १०. तन्वन्तां P²,M,W. ११. °ष्टम् पै. १२. य स्ताय° RW.

बृहन् । एषाम् । अधिऽस्थाता । अन्तिकात्ऽइंव । पश्यति ।
यः । [1]स्तायत् । मन्यते । [2]चरन् । सर्वम् । देवाः । इदम् । विदुः ॥ १ ॥

बृहन् महान् परिवृढो वा वरुणः एषाम् दुरात्मनां शत्रूणाम् अधिष्ठाता नियन्ता सन् तैः कृतं सर्वम् अन्याय्यम् अन्तिकादिव पश्यति समीपदेशादिव जानाति । न तस्य व्यवधायकं किंचिद् अस्तीत्यर्थः । यो वरुणः तायत्[3] सांतत्येन वर्तमानं स्थिरवस्तु [4]चरत् चरणशीलं नश्वरं च वस्तु मन्यते । स्थावरजङ्गमात्मकं सर्वं जगज्जानातीत्यर्थः । स बृहन् इति [5]संबन्धः । तायत् इति । तायृ संतानपालनयोः । अस्मात् लटः शत्रा-देशः । ईदृग्विधज्ञानसद्भावं वरुणस्य उपपादयति सर्वम् इति । व्यवहितं विप्रकृष्टं स्थिरं नश्वरं स्थूलं सूक्ष्मम् इति एतादृग् इदं सर्वम् अतिरोहितज्ञानत्वाद् देवाः विदुः जानन्ति । विद ज्ञाने । 'विदो लटो वा' ( पा ३,४,८३ ) इति झेः उसादेशः ।

यस्तिष्ठति [6]चरति यश्च वञ्चति यो निलायं चरति यः [7]प्रतङ्कम् ।
द्वौ संनिषद्य [8]यन्मन्त्रयेते राजा तद् वेद वरुणस्तृतीयः ॥ २ ॥

यः । तिष्ठति । चरति । यः । च । वञ्चति । यः । [9]निऽलायम् । चरति । यः । [10]प्रऽतङ्कम् ।
द्वौ । सम्ऽनिषद्य । यत् । मन्त्रयेते इति । राजा । तत् । वेद । वरुणः । तृतीयः ॥२॥

पूर्वस्याम् ऋचि एषाम् इत्युक्तम् । तत्र इदमा के पुनः प्रतिनिर्दिश्यन्त इति तान् निर्दिशति यस्तिष्ठति इति पूर्वार्धेन । यः शत्रुस्तिष्ठति अभिमुखम् अवतिष्ठते यश्चरति गच्छति यश्च वञ्चति कौटिल्येन प्रतारयति यः शत्रुः निलायम् निलयनेन अनिर्गमनेन चरति । यद्वा निलीनः अदृश्यः सन् चरति । अयतेर्निस्पूर्वात् णमुल् । निपूर्वात् लीयतेर्वा । उभयथापि समानोर्थः । 'उपसर्गस्यायतौ' ( पा ८,२,१९ ) इति लत्वम् । यः शत्रुः प्रतङ्कम् प्रकर्षेण कृच्छ्रजीवनं प्राप्य चरति वर्तते । तकि कृच्छ्रजीवने । अस्मात् प्रपूर्वात् णमुल् । एषां शत्रूणाम् इति पूर्वेण संबन्धः । अन्तिकादिव पश्यतीति यद् उक्तं तदपि समर्थयते द्वौ संनिषद्येत्युत्तरार्धेन । द्वौ पुरुषौ रहसि [11]संनिषद्य उपविश्य यत् कार्यं मन्त्रयेते गुप्तं भाषेते । मन्त्रि गुप्तभाषणे इति धातुः । तयोर्गुप्तं भाषमाणयोः तृतीयः त्रित्वसंख्यापूरकः सन् राजा ईश्वरो वरुणः स्वसार्वज्ञ्येन तत् सर्वं वेद । जानातीत्यर्थः । ततश्च अकार्यचिन्तावसर एव तान् निग्रहीतुं वरुणः शक्नोतीत्यर्थः । 'त्रेः संप्रसारणं च' ( पा ५,२,५५ ) इति पूरणार्थे तीयप्रत्ययः संप्रसारणं च ।

१. तु. P,P², Wh.,WI ; वैतु. सा. अनु शंपा. ता°, तायत् > स्तायत् J. २. चरत् K. ३. वैतु. पपा. द्र. ४. वैतु. मंपा. द्र. ५. संबंधनीयः S', Kd. ६. मनसा पै ५,३२,४ ७. प्रलायम् पै. ८. यद् वदतः पै. ९. तु. वैप१,१८२८ e; वैतु. शंपा. °लायन्. १०. प्रतंकम् P. ११. सं° नास्ति S', Kd.

उतेयं भूमिर्वरुणस्य राज्ञ उतासौ द्यौर्बृहती दूरेअन्ता।
उतो समुद्रौ वरुणस्य [1]कुक्षी उतास्मिन्नल्प उदके [2]निलीनः॥ ३ ॥

उत। इयम्। भूमिः। वरुणस्य। राज्ञः। उत। असौ। द्यौः। बृहती। दूरेऽअन्ता।
उतो इति। समुद्रौ। वरुणस्य। कुक्षी इति। उत। अस्मिन्। अल्पे। उदके। निऽलीनः॥ ३ ॥

उतशब्दः अप्यर्थे। इयं सर्वाधिष्ठानत्वेन निहिता भूमिः अपि राज्ञः ईश्वरस्य दुष्टनिग्रहे अधिकृतस्य वरुणस्य [3]वशे वर्तते। उत अपि च असौ विप्रकृष्टा बृहती महती दूरेअन्ता दूरे विप्रकृष्टे देशे अन्ते अन्तिके च भवतीति दूरेअन्ता। यत एवं व्याप्य वर्तते अतो बृहतीति भावः। एवंरूपा द्यौश्च वरुणस्य राज्ञो वशे वर्तते। बृहती [4]दूरेअन्तेति विशेषणद्वयं भूम्या अपि योज्यम्। अत एव 'दूरेअन्ते' इति द्यावापृथिव्योर्नामसु पठितम्' ( निघ ३,३० )। उतो अपि च समुद्रौ पूर्वपश्चिमौ वरुणस्य राज्ञः कुक्षी दक्षिणोत्तरपार्श्वभेदेन अवस्थिते द्वे उदरे। एवं भूम्यादिकं कृत्स्नं जगद् व्याप्य वर्तमानोपि [5]अस्मिन् अल्पेऽपि उदके तटाकह्रदादिगते निलीनः अन्तर्हितो भवति।

उत यो द्यामतिसर्पात् परस्तान्न स [6]मुच्यातै वरुणस्य [7]राज्ञः।
[8]दिव स्पशः प्र [9]चरन्तीदमस्य सहस्राक्षा अति पश्यन्ति भूमिम्॥ ४ ॥

उत। यः। द्याम्। अतिऽसर्पात्। परस्तात्। न। सः। मुच्यातै। वरुणस्य। राज्ञः।
दिवः। स्पशः। प्र। चरन्ति। इदम्। अस्य। सहस्रऽअक्षाः। अति। पश्यन्ति। भूमिम्॥४॥

उत अपि च यः शत्रुः अनर्थकारी अस्माकं [10]परस्तात् द्याम् अन्तरिक्षप्रदेशम् अतिसर्पात् अतिक्रम्य सर्पेद् गच्छेत्। यद्वा सुकृतप्राप्यं द्यां स्वर्गम् अतिक्रम्य अपथे प्रवर्तेतेत्यर्थः। स शत्रुः वरुणस्य राज्ञः पाशेभ्यो न मुच्यातै न मुच्येत। तैर्बद्ध एव वर्तताम् इत्यर्थः। मुचेः कर्मणि लेटि आडागमः। 'वैतोन्यत्र' ( पा ३,४,९६ ) इति ऐकारः। कथं द्युलोकस्थो वरुणः मनुष्यकृतम् अपराधं जानातीति तत्राह — दिवः स्पश इति। दिवः द्युलोकान्निर्गताः अस्य वरुणस्य स्पशः चाराः इदं पार्थिवं स्थानं प्र चरन्ति प्राप्य संचरन्ति। ते च सहस्राक्षाः सहस्रसंख्याकैर्दर्शनोपायैर्युक्ताः सन्तः भूमिम् अति पश्यन्ति। भूलोकवृत्तान्तं सर्वम् अतिशयेन साक्षात्कुर्वन्तीत्यर्थः।

सर्वं तद् राजा वरुणो वि चष्टे यदन्तरा रोदसी यत् परस्तात्।
संख्याता अस्य निमिषो जनानामक्षानिव[11] श्वघ्नी [12]नि मिनोति तानि[12]॥५॥

१. कक्षाव् पै ५,३२,३. २. निषक्तः पै. ३. विशे S', Kd. ४. द्यौरिति S', Kd. ५. अस्मान् S', Kd. ६. मुच्यते पै ५,३२,२. ७. पाशात् पै. ८. दिवः स्प° K<sup>m</sup>,V; इह पै. ९. चरन्तीमे अस्य पै. १०. वेतु. मंपा. ग्र. ११. क्षान् न पै ५,३२,५. १२. भुवना मिमीते पै.

सर्वम् । तत् । राजा । वरुणः । वि । चष्टे । यत् । अन्तरा । रोदसी इति । यत् । परस्तात् । सम्ऽख्याताः । अस्य । निऽमिषः । जनानाम् । अक्षान्ऽइव । श्वऽघ्नी । नि । मिनोति । तानि ॥

रोदसी अन्तरा द्यावापृथिव्योर्मध्ये यत् प्राणिजातं वर्तते तथा [1]पुरस्तात् स्वस्य पुरोभागे यत् प्राणिजातम् अस्ति तत् सर्वं वरुणो राजा वि चष्टे विशेषेण पश्यति । तस्मात् तेषां जनानाम् प्राणिनां निमिषः निमेषणव्यापारस्य । उपलक्षणम् एतत् । अक्षिपरिस्पन्दोपलक्षितस्य अस्य साध्वसाधुकर्मणः [1]संख्याता परिमाणयिता वरुणः तानि पापिनां शिक्षाकर्माणि तत्तत्पापानुसारेण नि मिनोति निक्षिपति । डुमिञ् प्रक्षेपणे । तत्र दृष्टान्तः– अक्षानिव इति । [1]श्वघ्नी स्वम् आत्मानं [2]स्वकीयं धनं च हन्तीति कितवः श्वघ्नी । तथा च यास्कः — '[3]श्वघ्नी कितवो भवति । स्वं हन्ति' ( नि ५,२२ ) इति । यथा कितवः अक्षान् आत्मनो जयार्थं निक्षिपति तद्वद् इत्यर्थः ।

ये ते पाशा वरुण सप्तसप्त[4] त्रेधा तिष्ठन्ति [5]विषिता रुशन्तः[5] ।
[6]छिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं [7]सृजन्तु ॥ ६ ॥

ये । ते । पाशाः । वरुण । सप्तऽसप्त । त्रेधा । तिष्ठन्ति । विऽसिताः । रुशन्तः ।
छिनन्तु । सर्वे । अनृतम् । वदन्तम् । यः । सत्यऽवादी । अति । तम् । सृजन्तु ॥ ६ ॥

हे वरुण ये ते त्वदीयाः पाशाः सप्तसप्त उत्तममध्यमाधमभेदेन [8]प्रत्येकं सप्तसंख्याकाः त्रेधा त्रिप्रकारं विसिताः तत्रतत्र पापिनां निग्रहाय जालवद् बद्धाः । एतच्च त्रैविध्यम् 'उदुत्तमं वरुण' ( ऋ १,२४,१५ ) इति मन्त्रान्तरादप्यवसितम् । [5]रुषन्तः तत्तत्पापानुसारेण पापिष्ठान् हिंसन्तः तिष्ठन्ति सर्वे ते पाशाः अनृतम् वदन्तम् पापकृतम् अस्मदीयं शत्रुं [6]छिनत्तु छिन्दन्तु । यस्तु सत्यवादी सत्यवदनशीलः पुण्यकृत् तम् अति सृजन्तु विमुञ्चन्तु ।

शतेन पाशैरभि धेहि वरुणैनं मा ते मोच्यनृतवाङ् नृचक्षः ।
आस्तां जाल्म उदरं [9]श्रंशयित्वा कोश इवाबन्धः[10] परिकृत्यमानः[11] ॥ ७ ॥

शतेन । पाशैः । अभि । धेहि । वरुण । एनम् । मा । ते । मोचि । अनृतऽवाक् । नृऽचक्षः ।
आस्ताम् । जाल्मः । उदरम् । श्रंशयित्वा । कोशःऽइव । अबन्धः । परिऽकृत्यमानः ॥ ७ ॥

---

१. वैतु. मंपा. द्र. २. स्वकीये S', Kd. ३. स्वघ्नी S', Kd. ४. °सप्तसप्तीस् पै ५,३२,१. ५. रुषता रुषन्तः पै. ६. सिनन्तु RW., शिनन्तु Bp², E², H, A; छिनत्तु Bp, K, J; छिर्न्तु Bh, R; विनन्तु P³, M; छिनद्यं? पै. ७. सृजामि पै. ८. प्रत्येक S', Kd. ९. श्रंस° A, D, K, Km, V, P², M, W, H, Op., सात. पै.; श्रंस° > श्रस° B; स्रंश° K², Kp; स्रंस° सा. १०. °बंध्रः A, B, Bp, Bh, D, K, Km, R, Sm, P, P², J, B², Bp², D², E², H, I, K², L, R², T, पै ५,३२,८; °बन्ध्रः P; °बुध्नः B; बध्निः पै [मूको.]. ११. °माणा पै [मको.].

हे वरुण शतेन शतसंख्याकैस्त्वदीयैः पाशैः एनम् अनृतवादिनं शत्रुम् अभि धेहि बधान। बद्ध्वा निगृहाणेत्यर्थः। अभिपूर्वो दधातिर्बन्धने वर्तते यथा 'अश्वाभिधानीम् आ दत्ते' ( तै ५,१,२,१ ) इति। हे नृचक्षः नृणां मनुष्याणाम् साध्वसाधुचरित्राणाम् विवेकेन द्रष्टः। चक्षिङः असुनि 'असनयोश्च' ( पावा २,४,५४ ) इति ख्याञादेशाभावः। ईदृश हे वरुण अनृतवाक् अनृतं ब्रुवन् पुरुषः ते त्वत्तः मा मोचि विमुक्तो विसृष्टो मा भूत्। किं तु जाल्मः असमीक्ष्यकारी स्वकीयम् उदरं [1]स्रंसयित्वा जलोदररोगेण स्रस्तं कृत्वा अबन्धः बन्धरहितः प्रान्तेषु अकृतबन्धनः अस्तेः कोश इव परिकृत्यमानः आस्ताम् त्वत्पाशबद्धं एव वर्तताम्। अत एव अन्यत्राम्नातम्—'अनृते खलु वै क्रियमाणे वरुणो गृह्णाति' ( तैब्रा १,७,२,६ ) इति। परिकृत्यमान इति। कृती छेदने। अस्मात् कर्मणि यक्।

यः स॒मा॒म्यो॒३॒॑ वरु॑णो॒ यो व्या॒म्यो॒३॒॑ यः सं॑दे॒श्यो॒३॒॑ वरु॑णो॒ यो वि॑दे॒श्यः॑।
यो [2]दै॒वो वरु॑णो॒ यश्च॒ मानु॑षः ॥ ८ ॥

यः। स॒म्ऽआ॒म्यः॑। वरु॑णः। यः। वि॒ऽआ॒म्यः॑। यः। स॒म्ऽदे॒श्यः॑। वरु॑णः। यः। वि॒ऽदे॒श्यः॑। यः। दै॒वः। वरु॑णः। यः। च॒। मानु॑षः ॥ ८ ॥

समानम् आमयति व्याधितो भवति पुरुषोऽनेनेति समाम्यः। ईदृशो यो वरुणः। लुप्ततद्धितोयं निर्देशः। वारुणः। पाश इत्यर्थः। [3]विगमनेन विविधं वा आमयति पुरुषोऽनेनेति व्याम्यो यः पाशः। तथा यो वरुणः वरुणसंबन्धी पाशः संदेश्यः समानदेशे भवः यश्च विदेश्यः विदेशे भवः यश्च वरुणः वरुणसंबन्धी पाशो दैवः देवेषु भवः यश्च वरुणपाशो मानुषः मनुष्येषु प्रयुक्तः। तैस्त्वा सर्वैः इति वक्ष्यमाणेन संबन्धः।

[4]तैस्त्वा॒ सर्वै॑र॒भि ष्या॑मि॒ पाशै॑रसावामुष्यायणामुष्याः पुत्र।
ताँनु॑ ते॒ सर्वा॑ननु॒संदि॑शामि ॥ ९ ॥

तैः। त्वा॒। सर्वैः॑। अ॒भि। स्या॒मि॒। पाशैः॑। अ॒सौ॒। आ॒मु॒ष्या॒य॒ण॒। अ॒मु॒ष्याः॒। पु॒त्र॒। तान्। उँ इति॑। ते॒। सर्वा॑न्। अ॒नु॒ऽसंदि॑शामि ॥ ९ ॥

असौ इत्यस्य स्थाने संबुद्ध्या शत्रुनामग्रहणम्। आमुष्यायणेति गोत्रतो निर्देशः। अमुष्याः पुत्रेति अदःशब्दस्थाने मातृनामनिर्देशः। तद् अयम् अर्थः—हे देवदत्तायाः पुत्र गार्ग्य यज्ञशर्मन् त्वा त्वां तैः पूर्वस्याम् ऋचि उक्तैः सर्वैः पाशैः अभि ष्यामि अभिद्-

[1] १. वेतु. मंपा. द्र. [2] २. दैव्यो पै ५,३२,७. [3] ३. विगमनेन S', Kd.
[4] ४. तैष्ट्वा Km,V.

धामि । बध्नामीत्यर्थः । तथा हे शत्रो ते तुभ्यं तान् सर्वान् पाशान् अनुलक्षीकृत्य संदिशामि संप्रयच्छामि ।

इति चतुर्थे काण्डे चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

स्त्रीशूद्रकापालादिकृताभिचारदोषनिवृत्त्यर्थं दर्भापामार्गसहदेव्याद्या मन्त्रोक्ता ओषधीः शान्त्युदककलशे प्रक्षिप्य तदनुमन्त्रणविनियुक्ते महाशान्तिगणे 'ईशानां त्वा' इत्यादिसूक्तत्रयम् आवपनीयम् । सूत्रितं हि—" 'दूष्या दूषिरसि' ( २,११ ), 'ये पुरस्तात्' ( अ ४,४० ), 'ईशानां त्वा' ( अ ४,१७ ), 'समं ज्योतिः' ( अ ४,१८ ), 'उतो अस्य बन्धुकृत्' ( अ ४,१९ ), 'सुपर्णस्त्वा' ( अ ५,१४ ), 'यां ते चक्रुः' ( अ ५,३१ ), 'अयं प्रतिसरः' ( अ ८,५ ), 'यां कल्पयन्ति' ( अ १०,१ ) इति महाशान्तिम् आवपते" ( कौसू ३९,७ ) इति ।

एतत्सूक्तसंघस्य कृत्याप्रतिहरणगणत्वाद् अस्य गणस्य यत्रयत्र विनियोगस्तत्र सर्वत्र अस्य सूक्तत्रयस्यापि विनियोगो द्रष्टव्यः ।

ईशानां त्वा [1]भेषजानामुज्जेष[2] आरभामहे[3] ।
चक्रे [4]सहस्रवीर्यं [5]सर्वस्मा ओषधे त्वा ॥ १ ॥

ईशानाम् । त्वा । भेषजानाम् । उत्ऽजेषे । आ । रभामहे ।
चक्रे । सहस्रऽवीर्यम् । सर्वस्मै । ओषधे । [6]त्वा ॥ १ ॥

हे सहदेव्याख्ये ओषधे भेषजानाम् तत्तद्रोगशान्तये भेषजत्वेन प्रयुज्यमानानाम् अन्यासाम् ओषधीनाम् ईशानाम् ईश्वरीं त्वा त्वाम् उज्जेषे शत्रुकृताभिचारदोषम् उज्जेतुं निवर्तयितुम् आ रभामहे संस्पृशामः । ईशानाम् इति । ईश ऐश्वर्ये । अस्मात् लटः शानच् । अदादित्वात् शपो लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । उज्जेष इति । 'तुमर्थे सेसेन°' ( पा ३,४,९ ) इति सेप्रत्ययः । ईश्वरत्वमेवास्या उपपादयति— हे ओषधे सहदेवि त्वा त्वां सर्वस्मै अभिचारजनितज्वरादिसर्वदोषनिवृत्तये सहस्रवीर्यं चक्रे अपरिमितसामर्थ्ययुक्तां करोमि । यस्माद् एवं तस्मात् त्वम् ओषधीनाम् अधिपतिरसीत्यर्थः ।

सत्यजितं [7]शपथयावनीं सहमानां [8]पुनःसराम् ।
सर्वाः [9]समह्वयोषधीरितो [10]नः पारयादिति[10] ॥ २ ॥

१. वैतु. संपा. द्र. २. °णनत्वात् S', Kd. ३. °नां विजेष आ गृह्णीमहे पै ५,२३,१; †वैप १, ८७५ c द्र. ४. °वीर्यां K,K^m,V. ५. सहस्वान् पै. ६. त्वम् पै. ७. °शयोपनीं K, सा. ८. पुनस्सराम् RW., पुनश्चराम् पै. ९. °मह्वयो° B^h,Bp; °मह्वयो° A,B,D,K^m,R,S^m V,K; °मह्वयो° O,Op.; °मम्यो° V,S. १०. मा पारयामिति पै.

सत्यऽजितम् । शपथऽयावनीम् । सहमानाम् । पुनःऽसराम् ।
सर्वाः । सम् । अह्वि । ओषधीः । इतः । नः । पारयात् । इति ॥ २ ॥

सत्यजितम् सत्येन याथार्थ्येन अभिचारादिदोषं जयति निवर्तयतीति सत्यजित् । तां [3]शपथयोपनीम् शपथस्य परकृतस्य आक्रोशस्य पृथक्कर्त्रीं नाशयित्रीं वा सहमानाम् अभिभवनशीलां पुनःसराम् पुनःपुनः आभीक्ष्ण्येन बहुतरव्याधिनिवृत्तये सरति प्रवर्तत इति पुनःसरा ताम् ईदृशीम् ओषधिम् अन्याः सर्वा ओषधीः ओषध्यः इतः अस्माद् अभिचारदोषशमनाद्धेतोः नः अस्मान् पारयात् । पार तीर कर्मसमाप्तौ । अस्मत्कर्तव्यं समापयेत् इति अनेन अभिप्रायेण [3]समभि । गच्छन्तीति उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ।

या शशाप शपनेन [4]याघं मूरमादधे[5] ।
या रसस्य [6]हरणाय जातमारेभे[6] तोकमत्तु सा ॥ ३ ॥

या । शशाप । शपनेन । या । अघम् । मूरम् । आऽदधे ।
या । रसस्य । हरणाय । जातम् । आऽरेभे । तोकम् । अत्तु । सा ॥ ३ ॥

एषा प्रथमकाण्डे ( अ १,२८,३ ) व्याख्याता । अक्षरार्थस्तु या पिशाची शपनेन आक्रोशेन शशाप या च मूरम् मूर्च्छाप्रदम् अघम् पापम् [5]आददे । या च रसस्य शरीरगतासृगादिरसस्य हरणाय जातम् पुत्रादिम् आरेभे आलिङ्गति सा सर्वा मद्विषये अभिचरतः शत्रोः तोकम् पुत्रम् अत्तु भक्षयतु इति ।

यां ते चक्रुरामे पात्रे यां [7]चक्रुर्नीललोहिते ।
आमे मांसे कृत्यां यां [8]चक्रुस्तया कृत्याकृतो जहि ॥ ४ ॥

याम् । ते । चक्रुः । आमे । पात्रे । याम् । । चक्रुः । नीलऽलोहिते ।
आमे । मांसे । कृत्याम् । याम् । चक्रुः । [9]तया । कृत्याऽकृतः । जहि ॥ ४

हे कृत्ये ते त्वां याम् आमे अपक्वे मृत्पात्रे चक्रुः कृतवन्तः अभिचारकाः । यद्वा नीललोहिते धूमोद्गमेन नीलः ज्वालया च लोहितः अग्निः नीललोहितः तादृशे अग्नौ अग्न्यायतने यां चक्रुः कृतवन्तः । आमे अपक्वे मांसे कुक्कुटादिप्राणिशरीरे यां कृत्यां चक्रुः कृतवन्तः । आमपात्रम् अग्न्यायतनं कुक्कुटादिप्राणिशरीरं सभास्थलम् इत्ये-

१. °योपनीम् K. २. आह्वि P; अह्वि P[2],J; अभि K. ३. वैद्य. मंपा. इ.
४. या वाघं पै ५,२३,३. ५. °मादुधे K,V, सा.; °दुधे इत्यपि V. ६. प्रासारेभा? पै.
७. सूत्रे नी° पै ५,२३,६. ८. चक्रुस्तया K, सा. पै. ९. तया K.

यमादीनि हि कृत्यानिधानस्थानानि । एवं कृत्याकृतः कृत्यायाः, प्रयोक्तॄन् हे कृत्ये [1]त्वया । विभक्तिव्यत्ययः । त्वं जहि नाशय । यद्वा ओषधिः संबोध्यते । हे ओषधे त्वया कृत्याप्रयोक्तारो हन्तव्या इत्यर्थः । कर्मणि कर्तृप्रत्ययः ।

[2]दौष्ष्व॒प्न्यं॑ [3]दौर्जी॑वित्यं॒ रक्षो॑ [4]अ॒भ्व॑म॒रा॒य्यः॑ ।
दु॒र्णाम्नीः॒ सर्वा॑ दु॒र्वाच॒स्ता [5]अ॒स्मन्ना॑शयामसि ॥ ५ ॥

दौः॒ऽस्व॒प्न्यम् । [6]दौः॒ऽजी॒वि॒त्यम् । रक्षः॑ । अ॒भ्व॒म् । अ॒रा॒य्यः॑ ।
दुः॒ऽना॒म्नीः । सर्वाः॑ । दुः॒ऽवाचः॑ । ताः । अ॒स्मत् । ना॒श॒या॒म॒सि॒ ॥ ५ ॥

दुष्टः स्वप्नः दुःष्वप्नः तत्र भवम् अरिष्टं दर्शनं दौष्वप्न्यम् । [3]दौर्जीवत्यं दुष्टा जीवता [7]जीवभावो यस्य स दुर्जीवतः तस्य भावो दौर्जीवत्यम् । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । रक्षः राक्षसजातिः अभ्वम् । महन्नामैतत् । यच्च अभिचारक्रियाजनितम् अन्यद् महद् भयकारणम् अस्तीत्यर्थः । यद्वा अभ्वम् महद् रक्षो ब्रह्मराक्षसादिः इति रक्षोविशेषणत्वेन योज्यम् । अत एव 'द्यावा रक्षतं पृथिवी नो अभ्वात्' (ऋ १,१८५,२) इति अभ्वस्य भयहेतुता श्रुता । अराय्यः असमृद्धिहेतवः पापलक्ष्म्यः तथा [8]दुर्णाम्नीः छेदिका भेदिका इत्येवं दुष्टनाम्नोपेता याः पिशाच्यः दुर्वाचः नाशयामि छेदयामि भक्षयामि इत्येवं दुष्टाः शब्दा याभिः सततं प्रयुज्यन्ते तास्तथोक्ताः । इत्थं या इमाः कृत्या अनुक्रान्ताः ताः सर्वाः [5]अस्मिन् अभिचर्यमाणपुरुषविषये नाशयामसि नाशयामः ।

क्षु॒धा॒मा॒रं तृ॒ष्णा॒मा॒रम॒गोता॑मनप॒त्यता॑म्[9] ।
अपा॑मार्ग॒ त्वया॑ व॒यं सर्वं॒ तदप॑ मृज्महे ॥ ६ ॥

क्षु॒धा॒ऽमा॒रम् । तृ॒ष्णा॒ऽमा॒रम् । अ॒गोता॑म् । [10]अ॒न॒प॒ऽत्यता॑म् ।
अपा॑मार्ग । त्वया॑ । व॒यम् । सर्व॑म् । तत् । अप॑ । मृ॒ज्म॒हे॒ ॥ ६ ॥

क्षुधामारम् क्षुधया क्षुत्पीडया पुरुषस्य मारणम् तृष्णामारम् तृष्णया पिपासातिशयेन पुरुषस्य मारणम् । यद्वा क्षुत्पिपासयोः पुरुषे स्वरूपतो नाशनम् अत्र विवक्षितम् । तद्विरहे पुरुषस्य स्वत एव मरणसंभवात् । अगोताम् गोराहित्यम् अनपत्यताम् अपत्यराहित्यं च । तत् एतत् सर्वं हे अपामार्ग त्वया वयम् अप मृज्महे अपमार्जयामः विनाशयामः ।

१. वैतु. मंपा. द्र. २. दुःष्वप्न्यं पै ५,२३,७. ३. दौर्जीवत्यं K,V, सा.; दुर्जीवतं पै. ४. अभूम॰ I,H. ५. अस्मिन् P[3],M,W,E[2]. ६. ॰जीवत्यम् K. ७. जीवनाभावो S', Kd. ८. दुर्नाम्नीः S', Kd. ९. ॰नपुषताम् B,Bp,B[h],D,K[m],R,S[m],P,P[2],J,V. १०. वैप १,१५९ l द्र.

तृष्णामारं क्षुधामारमथो अक्षपराजयम् ।
अपामार्ग त्वया वयं सर्वं तदप मृज्महे ॥ ७ ॥

तृष्णाऽमारम् । क्षुधाऽमारम् । अथो इति । अक्षऽपराजयम् ।
अपामार्ग । त्वया । वयम् । सर्वम् । तत् । अप । मृज्महे ॥ ७ ॥

क्षुत्तृष्णानाशयोरत्र विपर्यास एव विशेषः । अथो अपि च अक्षपराजयम् अक्षैर्द्यूतसाधनैः द्यूतक्रियानिमित्तः पराजयः । तत् एतत् सर्वं हे अपामार्ग इत्यादि पूर्ववत् ।

अपामार्ग ओषधीनां सर्वासामेक इद् वशी ।
तेन ते मृज्म आस्थितमथ त्वमगदश्चर ॥ ८ ॥

अपामार्गः । ओषधीनाम् । सर्वासाम् । एकः । इत् । वशी ।
तेन । ते । मृज्मः । आऽस्थितम् । अथ । त्वम् । अगदः । चर ॥ ८ ॥

सर्वासाम् अन्यासाम् ओषधीनाम् अपामार्गः एक इत् एक एव वशी वशयिता । सर्वा अस्य वशे वर्तन्त इत्यर्थः । हे अभिचारदोषगृहीत ते तव आस्थितम् कृत्यादिभिरापतितं रोगादिकं तेन अपामार्गेण मृज्मः मार्जयामः अपगमयामः । अथ अनन्तरं त्वम् अगदः व्याधिरहितः चर चिरकालं वर्तस्व ।

इति द्वितीयं सूक्तम् ।

'समं ज्योतिः' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः । सूत्रं तु तत्रैव उदाहृतम् ।

समं ज्योतिः सूर्येणाह्ना रात्री समावती ।
कृणोमि सत्यमूतयेऽरसाः सन्तु कृत्वरीः ॥ १ ॥

समम् । ज्योतिः । सूर्येण । अह्ना । रात्री । समऽवती ।
कृणोमि । सत्यम् । ऊतये । अरसाः । सन्तु । कृत्वरीः ॥ १ ॥

सूर्येण आदित्येन तदीयं ज्योतिः प्रभामण्डलं समम् समानमेव भवति न कदाचित् तेन वियुज्यते । रात्री । 'रात्रेश्चाजसौ' ( पा ४,१,३१ ) इति ङीप् । रात्रिश्च अह्ना समावती

१. मृक्ष्महे (पक्षे) Bp,V; मृक्ष्महे K. २. विश्वासा° पै २,२६,५. ३. इत्पतिः पै. ४. तेना D. ५. मृक्ष्म K,V; मृष्म S^m. ६. मृक्ष्मः K. ७. समा भूमिः पै ५,२४,१. ८. समऽवती P; समऽआवती K,Op.

समानायामा। समशब्दात् आवतुप्रत्ययः स्वार्थिकः । यथैवं आप्रभावतोर्दिवा-रात्रयोश्च समानत्वं यथार्थम् तथा सत्यम् यथार्थं कर्म कृणोमि[1] करोमि। किमर्थम्। ऊतये अभिचर्यमाणस्य पुरुषस्य रक्षणार्थम्। तस्मात् कृत्वरीः कर्तनशीलाः कृत्याः अरसाः शुष्काः कार्यासमर्थाः सन्तु भवन्तु।

यो दे॒वाः कृ॒त्यां कृ॒त्वा [2]हरा॒दवि॑दुषो गृ॒हम्।
व॒त्सो धा॒रुरि॑व मा॒तरं॒ तं प्र॒त्यगुप॑ पद्यताम् ॥ २ ॥

यः। दे॒वाः। कृ॒त्याम्। कृ॒त्वा। [2]हरा॑त्। अवि॑दुषः। गृ॒हम्।
व॒त्सः। धा॒रुःऽइ॑व। मा॒तर॑म्। [3]तम्। प्र॒त्यक्। उप॑। प॒द्य॒ताम् ॥ २ ॥

हे देवाः यः शत्रुः कृत्याम् मन्त्रौषधादिभिः शत्रोः पीडाकरीं कृत्यां कृत्वा अविदुषः अजानानस्य तस्य गृहम् [4]अरात् ऋच्छेत् कृत्यानिखननार्थं गच्छेत्। ऋ गतौ इत्यस्मात् लेटि आडागमः। छान्दसः शपो लुक्। तम् अभिचरन्तं सा कृत्या प्रत्यक् अभिमुखं प्रतिनिवृत्य उप पद्यताम् उपगच्छतु। तत्र दृष्टान्तः — वत्स इति। धारुः। धेट् पाने। 'दाधेट्' (पा ३,२,१५९) इति रुप्रत्ययः। यथा धारुः स्तनपानं कुर्वन् वत्सः मातरम् स्वमातरमेव अनुधावति एवं कृत्यापि स्वोत्पादकमेव प्रतिनिवृत्य गच्छतु इत्यर्थः।

अ॒मा कृ॒त्वा पा॒प्मानं॒ [5]यस्तेना॒न्यं जिघां॑सति।
अश्मा॑न॒स्तस्यां॒ [6]द॒ग्धायां॑ बहु॒लाः फट् क॑रिक्रति[7] ॥ ३ ॥

अ॒मा। कृ॒त्वा। पा॒प्मान॑म्। यः। तेन॑। अ॒न्यम्। जिघां॑सति।
अश्मा॑नः। तस्या॑म्। द॒ग्धाया॑म्। ब॒हु॒लाः। फट्। क॒रि॒क्र॒ति ॥ ३ ॥

यः शत्रुः अनुकूल इव अमा सह स्थितः सन् पाप्मानम् कृत्यानिखननलक्षणं कृत्वा तेन पाप्मना अन्यम् द्वेष्यं जिघांसति हन्तुम् इच्छति। 'अज्झनगमां सनि' (पा ६,४,१६) इति दीर्घः। तस्याम् तेन शत्रुणा कृतायां कृत्यायां [6]दग्धायाम् प्रतीकारेण रिक्तीकृतायां स्वकार्यकरणासमर्थायां सत्याम् अश्मानः पाषाणाः मन्त्रसामर्थ्योत्पादिता बहुलाः सन्तः फट् हिंसनं करिक्रति पुनःपुनः कुर्वन्तु। कृत्याकृतं शत्रुं हिंसन्तु इत्यर्थः। करोतेर्यङ्-लुगन्तात् पञ्चमलकारे 'रुग्रिकौ च लुकि' (पा ७,४,९१) इति अभ्यासस्य रिगागमः।

[8]स॒हस्र॑धामन् [9]विशि॒खान् विग्री॑वां [10]छायया॒ त्वम्।
प्रति॑ स्म च॒क्रुषे॑ कृ॒त्यां प्रि॒यां प्रि॒याव॑ते हर ॥ ४ ॥

१. अरा॒° K, सा.　२. अरा॑त् K.　३. त्वम् P.　४. वैतु. मैपा. द्र.　५. यस्त-वाग्यं पै ५,२४,३.　६. दुग्धा° Bp², सा.; जगधायां? पै.　७. °क्रतु पै.　८. सुहस्त्रं° Bh,P,P².　९. °शीषान् P³,M, W,E²; °शिषान् Bp²,I,H; °शाखान् पै.　१०. छयया T, छायया RW.

[1]सहस्रऽधामन् । [2]विऽशिखान् । विऽग्रीवान् । शायय । त्वम् ।
प्रति । स्म । [2]चक्रुषे । कृत्याम् । प्रियाम् । प्रियऽवते । हर ॥ ४ ॥

हे सहस्रधामन् । 'धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति' ( नि ९,२८ ) इति यास्कवचनाद् धामशब्देन स्थानादिकम् उच्यते । सहस्रं[3] धामानि स्थानादीनि यस्याः सा सहस्रधामा ओषधिः । 'मनः' ( पा ४,१,११ ) इति ङीपः प्रतिषेधः । हे सहस्रधामन् सहदेव्याख्ये ओषधे त्वम् अस्मदीयान् शत्रून् विशिखान् विच्छिन्नकेशान् विग्रीवान् विच्छिन्नग्रीवान् छिन्नशिरसः कृत्वा [4]क्षायय क्षयं प्रापय । क्षै जै षै क्षये इति धातुः । प्रियाम् शत्रूणां हितकारित्वेन अनुकूलां कृत्याम् पिशाचीं चक्रुषे कृतवते उत्पादितवते प्रियावते प्रियया कृत्यया तद्वते प्रति हर स्म तां कृत्यां प्रतिनिवृत्य प्रापय । चक्रुषे । करोतेर्लिटः क्वसुः । चतुर्थ्येकवचने भसंज्ञायां 'वसोः संप्रसारणम्' (पा ६,४,१३१) ।

अनयाहमोषध्या सर्वाः कृत्या [5]अदूदुषम् ।
यां क्षेत्रे चक्रुर्यां [6]गोषु यां वा ते पुरुषेषु[7] ॥ ५ ॥

अनया । अहम् । ओषध्या । सर्वाः । कृत्याः । अदूदुषम् ।
याम् । क्षेत्रे । चक्रुः । याम् । गोषु । याम् । वा । ते । पुरुषेषु ॥ ५ ॥

अनया सहदेव्याख्यया ओषध्या अहं सर्वाः कृत्याः वक्ष्यमाणप्रदेशेषु खाताः अदूदुषम् दूषितवान् अस्मि । कार्यासमर्थाः करोमीत्यर्थः । दुषेर्ण्यन्तात् लुङि चङि रूपम् । ताः कृत्या दर्शयति— यां कृत्यां क्षेत्रे बीजावापार्हे भूप्रदेशे चक्रुः कृतवन्तः निखातवन्तः यां कृत्यां गोषु मध्ये निखातवन्तः [8]वाते वातसंचारप्रदेशे यां कृत्यां कृतवन्तः । कृत्यासंस्पृष्टवाय्वभिघातेनापि अभिचारदोषो जायत इत्येवम् उक्तम् । तथा पुरुषेषु मनुष्येषु [8]तत्संचारदेशे यां कृत्यां निखातवन्तः ताः सर्वाः कृत्या अदूदुषम् इत्यन्वयः ।

[9]यश्चकार न [10]शशाक कर्तुं शश्रे पादमङ्गुरिम्[11] ।
चकार [12]भद्रमस्मभ्यमात्मने तपनं तु सः[12] ॥ ६ ॥

यः । चकार । न । शशाक । कर्तुम् । शश्रे । पादम् । अङ्गुरिम् ।
चकार । भद्रम् । अस्मभ्यम् । आत्मने । तपनम् । तु । सः ॥ ६ ॥

१. सहस्र° P,P[2]. २. चक्रुषे J. ३. सहस्र S', Kd. ४. वैतु. मंपा. द्र.
५. अदूदुषन् P[3],M,W. ६. गोभ्यो पै ५,२४,६. ७. °षेभ्यः पै. ८. °संसार° S', Kd.
९.° यां पै. ५,२४,५. १०. स्वरार्थं तु. अप्रा. [१,१,१४]. ११. °गुलिम् पै., सा.
१२.° भ्यमभगो भगवद्भ्यः अ ५,३१,११ पै.

यः शत्रुः चकार कृत्यां प्रयुङ्क्ते तया कृत्यया एकं पादम् एकाम् [1]अङ्गुलिं वा [2]शश्रे हिनस्ति । शॄ हिंसायाम् इत्यस्मात् छान्दसो लिट् । स शत्रुः कर्तुं तथा हिंसितुं न शशाक न शक्नोतु । छान्दसो लिट् । कृत्याप्रयोगेण मारणम् अवयवहानिं वा कर्तुम् असमर्थो भवेतु इत्यर्थः । तत्कृतम् अभिचारकर्म अस्मभ्यं भद्रम् मङ्गलं चकार । प्रतीकारमन्त्रौषधिप्रभावेन श्रेयः करोतु इत्यर्थः । अपि तु आत्मने स्वस्मै कृत्याप्रयोक्त्रे सः तत्कृतोभिचारः तपनम् दहनं करोतु ।

अपामार्गोऽपं मार्ष्टु क्षेत्रियं शपथश्च यः ।
अपाहं यातुधानीरप सर्वा अराय्यः ॥ ७ ॥

अपामार्गः । अपं । मार्ष्टु । क्षेत्रियम् । शपथः । च । यः ।
अपं । अहं । यातुऽधानीः । अपं । सर्वाः । अराय्यः ॥ ७ ॥

अपामार्गः अपामार्गाख्या ओषधिः क्षेत्रियम् क्षेत्रं मातापितृशरीरम् तत्सकाशाद् आगतं सांक्रामिकं क्षयकुष्ठापस्मारादिकं रोगम् अप मार्ष्टु अस्मत्तोऽपगमयतु । मृजूष् शुद्धौ । अपमृज्यते रोगादिनिराकरणेन पुरुषः शोध्यते अनेनेति अपामार्गः । करणे घञ् । 'चजोः कु घिण्ण्यतोः' (पा ७,३,५२) इति कुत्वम् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा ६,३,१२२) इति दीर्घः । अप मार्ष्टु । अदादित्वात् शपो लुक् । 'मृजेर्वृद्धिः' (पा ७,२,११४) इति वृद्धिः । क्षेत्रियम् इति । 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' (पा ५,२,९२) इति निपात्यते । यश्च शत्रुकृतः शपथः शापः तमपि अप मार्ष्टु । तथा यातुधानीः पिशाचीः अप मार्ष्टु । अह इति विनिग्रहे । तथा अराय्यः अरायीः अलक्ष्मीः सर्वाः अपामार्गः अप मार्ष्टु । अरायीशब्दात् शसि छान्दसः पूर्वसवर्णदीर्घाभावः ।

अपमृज्य यातुधानानप सर्वा अराय्यः ।
अपामार्ग त्वया वयं सर्वं तदप [3]मृज्महे ॥ ८ ॥

अपऽमृज्यं । यातुऽधानान् । अपं । सर्वाः । अराय्यः ।
अपामार्ग । त्वया । वयम् । सर्वम् । तत् । अपं । मृज्महे ॥ ८ ॥

हे अपामार्ग त्वं यातुधानान् यक्षरक्षःप्रभृतीन् अपमृज्य अपमृड्ढि । व्यत्ययेन ल्यप् । तथा सर्वा अराय्यः अलक्ष्मीकरीः पापदेवताः अप गमय । यद्वा अपमृज्येति ल्यबन्तः । हे अपामार्ग त्वया प्रथमं यातुधानादीन् अपमृज्य तैः कृतं सर्वं तद् दुःखजातं त्वयैव साधनेन वयम् अप मृज्महे निराकुर्मः ।

इति तृतीयं सूक्तम् ।

१. वैद्ध. मंपा. द्र. २. शिश्रे S', Kd. ३. मृक्ष्महे इत्यपि Bp, V; मृक्ष्महे K.

'उतो असि' इति सूक्तस्य पूर्ववद् विनियोगः।

उतो[1] अस्यबन्धुकृदुतो[1] असि नु जामिकृत्।
उतो कृत्याकृतः प्रजां नडमिवा च्छिन्धि वार्षिकम् ॥ १ ॥

उतो इति । असि । अबन्धुऽकृत् । उतो इति । असि । नु । जामिऽकृत् ।
उतो इति । कृत्याऽकृतः । [2]प्रऽजाम् । नडम्ऽइव । आ । छिन्धि । वार्षिकम् ॥ १ ॥

सहदेव्यपामार्गयोरन्यतरः संबोध्यः। उतो अपि च हे सहदेवि अपामार्ग वा [3]अबन्धुकृत् अबन्धूनां श-्णां कर्तकश्छेदकोऽसि। कृती छेदने इत्यस्मात् क्विप्। उतो अपि च नु क्षिप्रं [4]जामिकृत् जामयः सहजाः शत्रवः तेषामपि कर्तयिता असि भवसि। इत्थं सहजासहजभेदेन शत्रुद्वैविध्यम् अन्यत्रापि श्रुतम्। 'जामिम् अजामिं प्रमृणीहि शत्रून्' (ऋ ४,४,५) इति। उतो अपि च कृत्याकृतः कृत्यायाः प्रयोक्तुः प्रजाम् पुत्रपौत्रादिकां वार्षिकम् वर्षासु भवं नडम् एतत्संज्ञं [5]सुच्छेदं तृणविशेषम् [6]इव आ छिन्धि आसमन्तात् छिन्नां वियुक्तां कुरु। छिदिर् द्वैधीकरणे। 'हुझल्भ्यो हेर्धिः' ( पा ६,४,१०१ ) इति हेर्धिरादेशः। 'श्नसोरल्लोपः' ( पा ६,४,१११ ) इति अकारलोपः। वार्षिकम् इति। 'वर्षाभ्यष्ठक्', 'छन्दसि ठञ्' ( पा ४,३,१८;१९ ) इति ठञ्प्रत्ययः।

ब्राह्मणेन [7]पर्युक्तासि कण्वेन नार्षदेन।
सेनेवैषि [8]त्विषीमती न तत्र भयमस्ति[9] यत्र [10]प्राप्नोष्योषधे ॥ २ ॥

ब्राह्मणेन । परिऽउक्ता । असि । कण्वेन । [11]नार्षदेन ।
सेनाऽइव । एषि । त्विषिऽमती[12] । न । तत्र । भयम् । [13]अस्ति । यत्र । प्रऽआप्नोषि । ओषधे ॥

नार्षदेन नृषदस्य पुत्रेण कण्वेन एतत्संज्ञेन ब्राह्मणेन मन्त्रद्रष्टा हे ओषधे सहदेवि पर्युक्तासि परितो विनियुक्तासि। अतः [14]त्विषीमते दीप्तिमते यजमानाय परिरक्षणार्थं सेनेव एषि गच्छसि। तादृशी त्वं यत्र यस्मिन् देशे प्राप्नोषि तत्र भयम् अभिचारादिजनितभीतिर्नास्ति। अतो भयनिवारकत्वात् सेनया उपमीयस इत्यर्थः।

[15]अग्रमेष्योषधीनां ज्योतिषेवाभिदीपयन्।
उत त्रातासि पाकस्याथो[16] हन्तासि रक्षसः ॥ ३ ॥

१. उतैव° पै ५,२५,१. २. प्रजाम् P. ३. वैप१,३१५ c द्र. ४. वैप१,१३६७ a द्र.
५. सुच्छदं S', Kd. ६. एव S', Kd. ७. प्रयुक्ता° पै. ८. °षीमते K, V सा. °षिमती P³,M,W,E². ९. तु. पपा.; वैतु. शंपा. RW. °मस्ति. १०. प्राप्नोस्यो° D, K.
११. नार्षं°> नार्सं° Bp², नार्सं° D,K K². १२. °मते K. १३. आस्ति J.
१४. वैतु. मंपा. द्र. १५. अग्र एष्योष° पै ५,२५,३. १६. °स्योत पै.

अग्र॑म् । ए॒षि॒ । ओष॑धीनाम् । ज्योति॑षाऽइव । अ॒भि॒ऽदी॒पय॑न् ।
उ॒त । त्रा॒ता । अ॒सि॒ । पाक॑स्य । अथो॒ इति॑ । ह॒न्ता । अ॒सि॒ । र॒क्षसः॑ ॥ ३ ॥

हे सहदेवि ओषधीनाम् सर्वासां वीरुधाम् अग्रम् प्रथमम् एषि । सर्वौषधिप्रतिनिधित्वेन मुख्या भवसीत्यर्थः । तत्र दृष्टान्तः— ज्योतिषेव इति । ज्योतिषा प्रकाशेन अभिदीपयन् अभितः सर्वतः प्रकाशयन्नादित्यः यथा सर्वज्योतिषाम् अग्रगण्यो भवति तथेत्यर्थः । यद्वा ज्योतिषा आत्मीयेन तेजसैव स्वसामर्थ्येन अभिदीपयन् कृत्यादोषान् संदहन् हे अपामार्ग त्वं पाकस्य पक्तव्यप्रज्ञस्य दुर्बलस्य त्रातासि रक्षिता भवसि । अथो अपि च तद्बाधकस्य च रक्षसः राक्षसस्य हन्तासि नाशयिता भवसि ।

यद॒दो दे॒वा असु॑रां॒स्त्वयाग्रे॑ [1]निर॒कु॑र्वत ।
[2]तत॒स्त्वमध्यो॑षधेऽपामा॒र्गो॑[3] अ॑जायथाः ॥ ४ ॥

यत् । अ॒दः । दे॒वाः । असु॑रान् । त्वया॑ । अग्रे॑ । निः॒ऽअकु॑र्वत ।
तत॑ः । त्वम् । अधि॑ । ओ॒ष॒धे॒ । अ॒पा॒मा॒र्गः॒ । अ॒जा॒य॒थाः॒ ॥ ४ ॥

हे ओषधे यत् यस्माद् अदः अमुष्मिन् विप्रकृष्टे अग्रे पुरा त्वया साधनेन देवाः इन्द्रादयः असुरान् निरकुर्वत निराकृतवन्तः ततः तस्मात् कारणात् हे ओषधे त्वम् अन्यासाम् ओषधीनाम् अधि उपरि वर्तमानः श्रेष्ठः सन् अपामार्गः अजायथाः अपामार्गात्मना उत्पन्ना भवसि । अपमार्जनाद् अपामार्ग इति संज्ञां लब्धवतीत्यर्थः ।

वि॒भि॒न्द॒ती [4]श॒तशा॑खा वि॒भि॒न्दन् नाम॑ ते पि॒ता ।
प्र॒त्यग् [5]वि भि॑न्धि॒ त्वं तं यो अ॒स्मां[6] अ॑भि॒दास॑ति ॥ ५ ॥

वि॒ऽभि॒न्द॒ती । श॒तऽशा॑खा । वि॒ऽभि॒न्दन् । नाम॑ । ते॒ । पि॒ता ।
प्र॒त्यक् । वि । भि॒न्धि॒ । त्वम् । तम् । यः । अ॒स्मान् । अ॒भि॒ऽदास॑ति ॥ ५ ॥

हे अपामार्गाख्ये ओषधे शतशाखा अपरिमितशाखा सती विभिन्दती विभेदनशीला एतत्संज्ञा भवसि । विभेदनशक्तिश्च कारणगुणायातत्वाद् दुःसहेत्याह— विभिन्दन् इति । हे अपामार्ग ते तव पिता उत्पादकः विभिन्दन् नाम विभेदकः एतत्संज्ञो भवति । अतः त्वं तम् अस्मदीयं शत्रुं प्रत्यग् भिन्धि प्रतीपगमनेन विदारय यः शत्रुः अस्मान् [7]अभिदासति उपक्षपयति । दसु उपक्षये । अस्माद् ण्यन्तात् लटि शपः 'छन्दस्युभयथा' (पा ३,४,११७) इति आर्धधातुकत्वात् 'णेरनिटि' (पा ६,४,५१) इति णिलोपः ।

1. निरकृण्वत पै ५,२५,४. 2. तस्मात् त्व° पै. 3. °षधे अपा° B[k]. 4. शतशाखा B[h]. 5. वि नास्ति S, सा. 6. अस्मैं B,D. 7. वैप १, ३४४ m.g.

असद् भूम्याः समभवत् [1]तद्यामेति [2]महद् व्यचः ।
तद् वै ततो [3]विधूपायत् प्रत्यक् कर्तारमृच्छतु ॥ ६॥

असत् । भूम्याः । सम् । अभवत् । तत् । याम् । एति । महत् । व्यचः ।
तत् । वै । ततः । [3]विऽधूपायत् । प्रत्यक् । कर्तारम् । ऋच्छतु ॥ ६ ॥

हे ओषधे [4]त्वत् सकाशाद् महत् अधिकं व्यचः व्याप्तं तेजो निष्क्रम्य यां भूमिम् एति प्राप्नोति तस्यां [4]भूम्यां निखातम् असत् समभवत् । बाधितुं न शक्नोतीत्यर्थः । तद् वै असत्कल्पं कृत्यारूपं ततः तस्माद् देशात् निर्गत्य विधूपायत् विशेषेण धूपितं प्रज्वलितं सत् कर्तारम् कृत्याकृतमेव प्रत्यग् ऋच्छतु प्रतिनिवृत्य पीडयतु । यद्वा असत् अशोभनं कृत्यारूपं समभवत् परपीडार्थं समजायत । तत्र कृत्यायुक्तां यां भूमिं त्वदीयं महद् व्यचः प्राप्नोतीत्यादि पूर्ववत् । विधूपायत् । धूप संतापे । "गुपूधूपविच्छि" ( पा ३,१,२८ ) इति आयप्रत्ययः ।

प्रत्यङ् हि संबभूविथ प्रतीचीनफलस्त्वम् ।
सर्वान् मच्छपथाँ[5] अधि वरीयो यावया वधम् ॥ ७ ॥

प्रत्यङ् । हि । सम्ऽबभूविथ । प्रतीचीनऽफलः । त्वम् ।
[6]सर्वान् । मत् । शपथान् । अधि । वरीयः । यवय । वधम् ॥ ७ ॥

हे [4]प्रतीचीनफल । प्रतीचीनानि आत्माभिमुखानि फलानि यस्य सः अपामार्गः प्रतीचीनफलः । हे तादृश त्वं प्रत्यङ् हि प्रत्यञ्चनः प्रतिनिवृत्तमुख एव खलु संबभूविथ उदपद्यथाः । हिशब्दो हेतौ । हि यस्माद् एवं तस्मात् सर्वान् शत्रुकृतान् शपथान् आक्रोशान् मत् मम सकाशाद् यवय पृथक् कुरु । अधिः पञ्चम्यर्थानुवादी । पृथक्कृत्य च शप्तारमेव प्रतीचीनं प्रापयेत्यर्थः । तथा वरीयः उरुतरं विस्तीर्णतरं वधम् तदीयं हननसाधनम् आयुधं कृत्यारूपं वा अस्मत्तः पृथक् कुरु ।

शतेन मा परि पाहि सहस्रेणाभि रक्ष [7]मा ।
इन्द्रस्ते वीरुधां पत [8]उग्र ओज्मानमा दधत् ॥ ८ ॥

शतेन । मा । परि । पाहि । सहस्रेण । अभि । रक्ष । मा ।
इन्द्रः । ते । वीरुधाम् । पते । उग्रः । ओज्मानम् । आ । दधत् ॥ ८ ॥

१. तद् या° RW.; वैप १, २५६५ c द्र. २. बृहद् पै ५,२५,६. ३. °धूपाय° (°तु.शंपा RW. )? यनि. शोधः (तु.मै १,१०,२०). ४. वैतु. मंपा. द्र. ५. °शपथाँ B,R. ६. °सर्वाम् P² ७. माम् पै ५,२५,८. ८. भद्र पै.

हे ओषधे सहदेवि अपामार्ग वा शतेन शतसंख्याकेन रक्षणोपायेन मा मां परि पाहि। तथा सहस्रेण सहस्रसंख्याकेन मा माम् अभिरक्ष कृत्याकृताद् दोषात् सर्वतः पालय। हे वीरुधां पते लतारूपाणाम् ओषधीनाम् अधिपते ते तव उग्रः उद्गूर्णबलः इन्द्रो देवः ओज्मानम् ओजस्वित्वम् आ दधत् आस्थापयतु। ददातु इत्यर्थः।

इति चतुर्थं सूक्तम्।

'आ पश्यति' इति सूक्तेन ब्रह्मग्रहादिजनितभयनिवृत्तये त्रिसंध्यामणिं संपात्य अभिमन्त्र्य बध्नीयात्। सूत्रितं हि—"'आ पश्यति' इति सदंपुष्पामणिं बध्नाति" (कौसू २८,७) इति।

तथा चातनगणेपि एतत् सूक्तम्। तद् उक्तं कौशिकेन—'शंनो देवी पृश्निपर्णी' (अ २,२५), 'आ पश्यति', 'तान्त्सत्यौजाः' [(अ ४,३६) कौसू ८,२५]। अतोस्य सूक्तस्य 'चातनानाम् अपनोदनेन व्याख्यातम्' (कौसू २५,२२) इत्याद्युक्तकर्मसु विनियोगः।

आ [1]प॑श्यति॒ प्रति॑ [1]पश्यति॒ परा॑ [1]पश्यति॒ [1]पश्य॑ति।
[2]दि॒व॑म॒न्तरि॑क्ष॒माद् भूमिं॒ सर्वं॒ तद् दे॑वि [1]पश्यति ॥ १ ॥

आ। प॒श्य॒ति॒। प्रति॑। प॒श्य॒ति॒। परा॑। प॒श्य॒ति॒। पश्य॑ति।
दिव॑म्। अ॒न्तरि॑क्षम्। आत्। भूमि॑म्। सर्व॑म्। तत्। दे॒वि॒। प॒श्य॒ति॒ ॥ १ ॥

हे देवि देवतारूपे सदंपुष्पाख्ये ओषधे त्वद्विकारमणिधारकोऽयं जनस्त्वत्प्रसादात् आ पश्यति आगामिभयकारणं परिहर्तुं जानाति। तथा प्रति पश्यति प्रतिमुखं स्थितं वर्तमानमपि भयकारणं निरसितुं जानाति। तथा परा पश्यति परागतं दूरस्थमपि भयकारणं अवलोकयति। किं बहुना। [3]अविशेषेण सर्वमपि भयकारणम् असौ पश्यति साक्षात्करोति। ये खलु ब्रह्मग्रहादयो भयहेतवः ते सर्वे पृथिव्यादिलोकत्रयं व्याप्य वर्तन्ते अतस्तदपरिज्ञाने तदाश्रया ब्रह्मग्रहादयो दुष्परिज्ञाना इत्यभिप्रेत्याह-दिवम् अन्तरिक्षम् इति। दिवम् स्वर्गम् अन्तरिक्षम् अन्तरा क्षान्तं मध्यमं लोकम् आत् अनन्तरं भूमिम् पृथिवीम् एतल्लोकत्रयोपलक्षितं तत् तत्रत्यं सर्वम् प्राणिजातं त्रिसंध्यामणिधारणमाहात्म्येन पश्यति साक्षात्करोति। एवं सर्वज्ञतया जागरूकं तं ब्रह्मग्रहादिर्न स्पृशतीत्यर्थः।

ति॒स्रो दिव॑स्ति॒स्रः पृ॑थि॒वीः षट् चे॒माः प्र॒दिशः॒ [4]पृथ॑क्।
[5]त्वया॒हं सर्वा॑ भू॒तानि॒ †पश्या॑नि देव्योषधे ॥ २ ॥

१. पश्यसि पै ८,६,१ २. चामन्त° पै. ३. अपिविशेषेण S', Kd.
४. महीः पै ८,६,२. ५. तथाहं सर्वान् यातून् पश्यामि पै. †. पश्याणि P³,M;

तिस्रः । दिवः । तिस्रः । पृथिवीः । षट् । च । इमाः । प्रऽदिशः । पृथक् ।
त्वया । अहम् । सर्वा । भूतानि । पश्यानि । देवि । ओषधे ॥ २ ॥

'तिस्रो भूमीर्धारयन् त्रीरुत द्यून्' ( ऋ २,२७,८ ) इत्यादिमन्त्रवर्णात्, 'त्रयो वा इमे त्रिवृतो लोकाः' ( ऐब्रा २,१७ ) इत्यादिब्राह्मणवचनाच्च पृथिव्यादिलोकानां प्रत्येकं त्र्यात्मकत्वम् अवसीयते । तद् इदम् उच्यते तिस्रो दिवः इत्यादिना । तिस्रः त्रिसंख्याका दिवः द्युलोकान् तिस्रः त्रिसंख्याकाः पृथिवीश्च इमाः परिदृश्यमानाः प्रदिशः प्रकृष्टा दिशः प्राच्याद्या ऊर्ध्वाधोदिग्भ्यां सह षट्संख्याकाश्च [1]तथा तत्रस्थानि सर्वा सर्वाणि भूतानि भूतजातानि हे देवि देवतारूपे ओषधे त्वया मणिरूपेण धार्यमाणया अहं पृथक् पश्यानि साक्षात्करवाणि ।

दिव्यस्य सुपर्णस्य तस्य हासि कनीनिका ।
सा भूमिमा [2]रुरोहिथ वह्यं श्रान्ता वधूरिव ॥ ३ ॥

दिव्यस्य । सुऽपर्णस्य । तस्य । ह । असि । कनीनिका ।
सा । भूमिम् । आ । रुरोहिथ । वह्यम् । श्रान्ता । वधूःऽइव ॥ ३ ॥

हे [3]सर्वपुष्पौषधे दिव्यस्य दिवि भवस्य देवतारूपस्य सुपर्णस्य शोभनपक्षयुक्तस्य तस्य प्रसिद्धस्य गरुत्मतः चक्षुषोर्वर्तमाना कनीनिका दर्शनसाधनं कृष्णमण्डलम् असि । हशब्दः प्रसिद्धौ । तदीयस्य पुष्पस्य कनीनिकासाधर्म्यात् [4]ताद्रूप्येण ओषध्याः स्तुतिः । सा तादृशी त्वं सौपर्णचक्षुर्मण्डलाद् भूमिम् आ रुरोहिथ । जगद्रक्षणार्थम् ओषधिरूपेण भूमौ अवतीर्णासीत्यर्थः । तत्र दृष्टान्तः — वह्यम् इति । श्रान्ता अध्वश्रमखिन्ना गन्तुम् असमर्था वधूः स्त्री यथा वह्यम् वहनसाधनम् अश्वान्दोलिकादियानम् आरोहति तद्वद् इत्यर्थः । 'वह्यं करणम्' ( पा ३,१,१०२ ) इति वहतेर्यत्प्रत्ययो निपात्यते । श्रान्तेति । श्रमु तपसि खेदे च । 'यस्य [5]विभाषा' ( पा ७,२,१५ ) इति निष्ठायाम् इडभावः । 'अनुनासिकस्य क्विझलोः°' ( पा ६,४,१५ ) इति दीर्घत्वम् ।

[6]तां मे सहस्राक्षो देवो दक्षिणे हस्त आ दधत् ।
[7]तयाहं सर्वं पश्यामि [8]यश्च शूद्र उतार्यः ॥ ४ ॥

ताम् । मे । सहस्रऽअक्षः । देवः । दक्षिणे । हस्ते । आ । दधत् ।
[9]तया । अहम् । सर्वम् । पश्यामि । यः । च । शूद्रः । उत । आर्यः ॥ ४ ॥

१. ताः S', Kd. २. रोहेद् पै ८,६,३. ३. सर्व° S', Kd. ४. ताद्रूप्येण S', Kd. ५. विभाषेच S', Kd. ६. तावन् पै ८,६,४. ७. त्वयाहं K, सा.; तेनाहं पै. ८. यद् भूतं यच्च भव्यम् पै. ९. त्वया K.

ताम् उक्तप्रभावां सदंपुष्पाख्याम् ओषधिं देवः दानादिगुणयुक्तः सहस्राक्षः इन्द्रो मे मम दक्षिणे हस्ते आ दधत् अधारयत् । हे तादृशि ओषधे [1]त्वया दक्षिणहस्ते मणिरूपेण धृतया अहं सर्वम् द्रष्टव्यं विषयं पश्यामि साक्षात्करोमि । द्रष्टव्यं विषयं निर्दिशति — यश्चेति । शूद्रः शूद्रोपलक्षितो यस्त्रैवर्णिकव्यतिरिक्तो जनः आर्यो विद्वान् ब्राह्मणः । त्रैवर्णिकोपलक्षणम् एतत् । ये च ब्राह्मणक्षत्रियवैश्या ये च तद्व्यतिरिक्ताः शूद्रादयः तान् सर्वान् वशीकृत्य तत्कृतं रक्षःपिशाचादिकं निरसितुं पश्यामीत्यर्थः ।

आविष्कृणुष्व रूपाणि मात्मानमपं गूहथाः ।
[2]अथो सहस्रचक्षो त्वं प्रति [3]पश्याः† किमीदिनः[1] ॥ ५ ॥

आविः । कृणुष्व । रूपाणि । मा । आत्मानम् । अप । गूहथाः ।
अथो इति । सहस्रचक्षो इति सहस्रऽचक्षो । त्वम् । प्रति । पश्याः । किमीदिनः ॥ ५ ॥

हे ओषधे त्वदीयानि रक्षःपिशाचादिनिवर्तकानि रूपाणि आविष्कृणुष्व प्रकाशय । आत्मानम् तव स्वरूपं माप गूहथाः संवृतं मा कार्षीः । गुहू संवरणे । अथो अपि च हे सहस्रचक्षो सहस्रसंख्याकानि चक्षूंषि दर्शनसाधनानि इन्द्रियाणि यस्याः सा सहस्रचक्षुः हे तथाविधे ओषधे त्वं किमीदिनः किम् इदानीम् किम् इदानीम् इति गूढं संचरतो राक्षसान् [3]प्रतिपश्याः । अस्मद्रक्षणार्थं प्रतीक्षस्व । प्रतिपश्या इति । प्रतिपूर्वाद् दृशेर्लेटि अडागमः ।

दर्शय मा यातुधानान् दर्शय यातुधान्यः ।
[4]पिशाचान्त्सर्वान् दर्शयेति त्वा रभ ओषधे ॥ ६ ॥

दर्शय । मा । यातुऽधानान् । दर्शय । यातुऽधान्यः ।
पिशाचान् । सर्वान् । दर्शय । इति । त्वा । आ । रभे । ओषधे ॥ ६ ॥

हे सदंपुष्पौषधे यातुधानान् राक्षसान् मा मां दर्शय । गूढं यथा न बाधन्ते तथा कुरु इत्यर्थः । यातुधान्यः यातुधानीः राक्षसीश्च दर्शय । तथा पिशाचान् पिशिताशान् यातुधानव्यतिरिक्तान् सर्वान् रक्षोविशेषान् दर्शय इति एवमर्थम् हे ओषधे त्वा त्वाम् आ रभे धारयामि ।

कश्यपस्य [5]चक्षुरसि शुन्याश्च [6]चतुरक्ष्याः ।
वीध्रे सूर्यमिव सर्पन्तं मा पिशाचं तिरस्करः ॥ ७ ॥

---

१. वैतु. मंपा. द्र. २. एवा पै ८,६,११. ३. पश्यास्यायतः पै. † पश्य पै ३,२२,६.
४. अथायून् पै १९,३१,२. ५. चतुरक्षस्य? पै८,६,६. ६. तु. K,K[m],सा.; वैतु. B,Bp.° °रुक्षः; A,B[h],D,R,S[m],P,P[a],J °रुक्षाः

क॒श्यप॑स्य । चक्षुः॑ । अ॒सि॒ । शु॒न्याः । च॒ । च॒तुः॒ऽअ॒क्ष्याः[1] ।
वी॒ध्रे । सूर्य॑म्ऽइव । सर्प॑न्तम् । मा । पि॒शा॒चम् । ति॒रः । क॒रः ॥ ७ ॥

हे ओषधे त्वं कश्यपस्य महर्षेः चक्षुरसि । तादृशपुष्पोपेतत्वात् तादात्म्येन स्तुतिः । तथा चतुरक्ष्याः चत्वारि अक्षीणि यस्याः सा चतुरक्षी तादृश्याः शुन्याः देवानां संबन्धिन्याः सरमाख्यायाः । चक्षुरसीत्यनुषङ्गः । एतेन अप्रधृष्यत्वम् उक्तम् । वीध्रे । विविधम् इन्धते दीप्यन्तेऽस्मिन् ग्रहनक्षत्रादीनीति वीध्रम् अन्तरिक्षम् । 'वाविन्धेः (पाउ २, २६) इति औणादिको रक्प्रत्ययः । तत्र सर्पन्तम् गच्छन्तं सूर्यमिव इतस्ततः सर्पणशीलं पिशाचं मा तिरस्करः अन्तर्हितं मा कार्षीः । करः इति । करोतेर्माङि लुङि 'कृमृदृरुहिभ्यः' (पा ३,१,५९) इति च्लेः अङ् आदेशः ।

उद॑ग्रभं [2]परि॒पाणा॑द् यातु॒धानं॑[3] किमी॒दिन॑म्[3] ।
तेना॒हं सर्वं॑ पश्याम्यु॒त शू॒द्रमु॒तार्य॑म् ॥ ८ ॥

उत् । अ॒ग्र॒भ॒म् । प॒रि॒ऽपाना॑त् । या॒तु॒ऽधान॑म् । कि॒मी॒दिन॑म् ।
तेन॑ । अ॒हम् । सर्व॑म् । प॒श्या॒मि॒ । उ॒त । शू॒द्रम् । उ॒त । आर्य॑म् ॥ ८ ॥

परिपानात् परिरक्षणात् हेतोः किमीदिनम् किम् इदानीं किम् इदानीम् इति चरन्तं यातुधानम् राक्षसम् उद् अग्रभम् उद्गृहीतवान् अस्मि । वशीकृतवान् अस्मीत्यर्थः । तेन यातुधानेन अहं सर्वं प्रहं पश्यामि । उत शूद्रम् शूद्रजातियुक्तम् उत आर्यम् ब्राह्मणजातियुक्तं च । सर्वं प्रहं पश्यामीत्यर्थः ।

यो अ॒न्तरि॑क्षेण॒ पत॑ति [4]दिवं॒ [5]यश्चा॑ति॒सर्प॑ति ।
[6]भूमिं॒ यो मन्य॑ते ना॒थं तं पि॑शा॒चं [7]प्र द॑र्शय[7] ॥ ९ ॥

यः । अ॒न्तरि॑क्षेण । पत॑ति । दिव॑म् । यः । च॒ । [8]अ॒ति॒ऽसर्प॑ति ।
भूमि॑म् । यः । मन्य॑ते । ना॒थम् । तम् । पि॒शा॒चम् । प्र । द॒र्श॒य॒ ॥ ९ ॥

यः पिशाचः अन्तरिक्षेण द्यावापृथिव्योर्मध्यवर्तिना लोकेन पतति संचरति यश्च दिवम् [6]अधिसर्पति द्युलोकस्योपरि गच्छति यश्च भूमिम् पृथिवीम् आत्मनो नाथम् स्वामिनं मन्यते तं सर्वं त्रैलोक्यवर्तिनं पिशाचम् प्र दर्शय चक्षुर्गोचरं कुरु । त्रिसंध्यामणिधारणेन ब्रह्मग्रहादीन् साक्षात्कृत्य मन्त्रसामर्थ्येन तान् निराकरोमीत्यर्थः ।

इति पञ्चमं सूक्तम् ।

इति सायणाचार्यविरचिते अथर्ववेदार्थप्रकाशे चतुर्थकाण्डे चतुर्थोऽनुवाकः ।

---

१. °अ॒क्षाः P,P[1],J. २. परिपाणं यातुधानात् पै ८,६,८. ३. °नः पै. ४. भूम्या पै ८,६,१०. ५. °चाधिसर्पति K,V,S, सा.; °चोपसर्पति पै. ६. दिवं पै. ७. दर्शे कुरु पै. ८. अ॒धि° K. ९. वैतु. मंपा. द्र.

पञ्चमेऽनुवाके पञ्च सूक्तानि। तत्र 'आ गावः' इत्यादिसूक्तदशकस्य मृगारसंज्ञकत्वात् "मृगारैः (४,२१-३०), 'मुञ्च' (१,१२,३) इत्याप्लावयति" (कौसू २७,३४) इत्यादिसूत्रविहिते सर्वभैषज्यकर्मणि होमसंपातावसेकादिषु विनियोगः। तत्र 'आ गावः' इति प्रथमेन सूक्तेन गवां रोगोपशमनपुष्टिप्रजननकर्मसु सलवणं केवलं वा उदकम् अभिमन्त्र्य गाः पाययेत्। सूत्रितं हि—"'ब्रह्म जज्ञानम्' (अ ४,१), 'आ गावः' (अ ४,२१), 'एका च मे' (अ ५,१५) इति गा लवणं पाययत्युपतापिनीः। प्रजननकामाः। प्रपाम् अभ्युणद्धि" (कौसू १९,१-३) इति।

तथा गोपुष्टिकर्मणि अनेनैव सूक्तेन गोष्ठं प्रत्यागच्छन्तीर्गाः प्रत्युद्गच्छेत्।

तथा तस्मिन्नेव कर्मणि अनेनैव सूक्तेन इन्द्राय चरुं त्रिर्जुहुयात्।

तथा 'प्रजावतीः' (७) इत्यनया अरण्यं प्रति गच्छन्तीर्गा अनुमन्त्रयेत।

सूत्रितं हि—"'आ गावः' इति गा आयतीः प्रत्युत्तिष्ठति। प्रावृषि प्रथमधारस्य इन्द्राय त्रिर्जुहोति। 'प्रजावतीः' इति प्रतिष्ठमाना अनुमन्त्रयते" (कौसू २१,८-१०) इति।

तथा तत्रैव कर्मणि 'प्रजावतीः' (अ ४,२१,७; ७,७९) इति द्वाभ्याम् अभिनवं पयो [1]वत्सलालामिश्रितं संपात्य अभिमन्त्र्य अश्नीयात्।

तथा अनेनैव द्वयृचेन गा अभिमन्त्र्य दद्यात्।

तथा उदपात्रं अभिमन्त्र्य गोष्ठमध्ये निनयेत्।

एवं सारूपवत्सौदने गुग्गुलुलवणशकृत्पिण्डान् प्रक्षिप्य पश्चादग्नेस्त्रिरात्रं निखाय चतुर्थेऽहनि उद्धृत्य अनेन द्वयृचेन संपात्य अभिमन्त्र्य अश्नीयात्।

सूत्रितं हि—"'प्रजावतीः' (अ ४,२१,७; ७,७९), 'प्रजापतिः' (९,१२) इति गोष्ठकर्माणि। गृष्टेः पीयूषं श्लेष्मिश्रम् अश्नाति" (कौसू १९,१४;१५) इति।

सोमयागे माध्यंदिनसवने दक्षिणार्थम् आगता गा हिरण्यहस्तो यजमानः अनेन सूक्तेन प्रत्युत्तिष्ठेत्। उक्तं वैताने—"हिरण्यहस्तो यजमानो [2]बहिर्वेदि दक्षिणा आयतीः 'आ गावः' इति प्रत्युत्तिष्ठति" (वैताश्रौ २१,२४) इति।

आ गावो॑ अग्मन्नु॒त भ॒द्रम॑क्र॒न्त्सीद॑न्तु गो॒ष्ठे र॒णय॑न्त्व॒स्मे।
प्र॒जाऽव॑तीः पुरु॒रूपा॑ इ॒ह स्यु॒रिन्द्रा॑य पू॒र्वीरु॒षसो॒ दुहा॑नाः ॥ १ ॥

आ। गाव॑ः। अ॒ग्मन्। उ॒त। भ॒द्रम्। अ॒क्र॒न्। सीद॑न्तु। गो॒ऽस्थे। र॒णय॑न्तु। अ॒स्मे इति॑।
प्र॒जाऽव॑तीः। पु॒रु॒ऽरूपा॑ः। इ॒ह। स्युः। इन्द्रा॑य। पू॒र्वीः। उ॒षस॑ः। दुहा॑नाः ॥ १ ॥

१. लाला नास्ति S', Kd.　　२. बहिर्वेदिः S', Kd.

गावः आ अग्मन् अस्मान् अभिलक्ष्य आगच्छन्तु । 'छन्दसि लुङ्लङ्लिटः' (पा ३,४,६) इति लोडर्थे लुङ् । 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक् । 'गमहन°' (पा ६,४,९८) इति उपधालोपः । उत अपि च भद्रम् कल्याणम् अकन् कुर्वन्तु । पूर्ववल्लुङ् । गावस्तिष्ठन्त्य-त्रेति गोष्ठम् । तस्मिन्नस्मदीये गोष्ठे सीदन्तु उपविशन्तु । अस्मे अस्मान् रणयन्तु क्षीरा-दिप्रदानेन रमयन्तु । यद्वा अस्मे अस्मासु रमन्ताम् । प्रजावतीः प्रजावत्यः बह्वपत्याः पुरु-रूपाः बहुरूपाः श्वेतकृष्णारुणाद्यनेकवर्णाः इह अस्मिन् यजमानगृहे स्युः समृद्धा भवेयुः। पूर्वीः बह्वीः उषसः उषःकालोपलक्षितान् दिवसान् । अत्यन्तसंयोगे द्वितीया । सर्वकालम् इन्द्राय इन्द्रार्थं सांनाय्यार्थम् आशिरार्थं च पयो दुहानाः । भवन्तु इति शेषः ।

इन्द्रो यज्वने [1]गृणते च †शिक्षत उपेद्[1] ददाति न स्वं [2]मुषायति ।
भूयोभूयो रयिमिदस्य [3]वर्धयन्नभिन्ने [4]खिल्ये नि दधाति देवयुम् ॥ २ ॥

इन्द्रः । यज्वने । गृणते । च । शिक्षते । उप । इत् । ददाति । न । स्वम् । [5]मुषायति ।
भूयःऽभूयः । रयिम् । इत् । अस्य । वर्धयन् । अभिन्ने । खिल्ये । नि । दधाति । देवऽयुम् ॥ २ ॥

यज्वने यागं कुर्वते गृणते स्तुवते च जनाय इन्द्रो देवः शिक्षते । दानकर्मा-यम् । गाः प्रयच्छति । यद्वा यज्वने स्तोत्रे च शिक्षते गवां लाभोपायम् उप-दिशति । शिक्ष विद्योपादाने । शिक्षानन्तरं स्वयम् उप उपेत्य । इच्छब्दः अवधारणे । बह्वीस्ता गाः ददाति एव । तस्य च यज्वनः स्तोतुश्च स्वम् धनं न मुषायति न मुष्णाति नापहरति । अपि तु भूयोभूयः बहुतरम् अस्य यज्वनः स्तोतुश्च रयिम् धनं वर्धयन्नित् समृद्धं कुर्वन्नेव वर्तते । एवम् ऐहिकफलविषये उक्तम् । आमुष्मिक-विषयेऽप्याह— तं देवयुम् देवान् आत्मन इच्छन्तं यज्वानं स्तोतारं च अभिन्ने दुःखेन असंभिन्ने खिल्ये खिलम् अप्रहतं स्थानम् तत्र भवं खिल्यम् तस्मिन् अयज्वभिः अगृणद्भिश्च अनाक्रान्ते नाकस्य पृष्ठे नि दधाति स्थापयति । देवयुम् इति । देवशब्दात् 'सुप आत्मनः क्यच्' (पा ३,१,८) । 'न च्छन्दस्यपुत्रस्य' (पा ७,४,३५) इति ईत्वदीर्घयोः प्रतिषेधः । 'क्याच्छन्दसि' (पा ३,२,१७०) इति उप्रत्ययः ।

न ता नशन्ति न दभाति तस्करो [6]नासामामित्रो [7]व्यथिरा दधर्षति ।
देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ॥ ३ ॥

---

१. गृणते च शिक्षत्युपेद् ऋ ६,२८,२ तैब्रा २,८,८,११. † पाठभ्रेष इति W. २. मुखायति A,R,Wh. ३. वर्धयन्नभिन्ने ऋ. तैब्रा. ४. खिल्ले तैब्रा. ५. मुखायति P,P,J. ६. नैनां अमित्रो (?आमित्रो) तैब्रा २,४,६,९. ७. व्यथिरा Bh,O,ऋ ६,२८,३ तैब्रा.

न। ताः। नशन्ति। न। दभाति। तस्करः। न। आसाम्। आमित्रः। व्यथिः। आ। दधर्षति।
देवान्। च। याभिः। यजते। ददाति। च। ज्योक्। इत्। ताभिः। सचते। गोऽपतिः। सह ॥

ताः इन्द्रेण दत्ता गावः न नशन्ति न नश्यन्तु। तस्करः चोरश्च न दभाति न हिनस्तु। नश अदर्शने। दम्भु दम्भे। आभ्यां लेटि यथाक्रमम्, अडागम आडागमश्च। छान्दसो विकरणस्य लुक्। आसां गवाम् आमित्रः अमित्राः शत्रवः तत्संबन्धी तत्कृतो व्यथिः व्यथाजनकम् आयुधं नादधर्षति आधर्षणं पीडां मा करोतु। याभिर्गोभिः देवान् यजेत क्षीरादिहविर्द्वारा याश्च गास्तत्र यज्ञे दक्षिणात्वेन ददाति ताभिर्गोभिः सह गोपतिः गोस्वामी यजमानः ज्योगित् चिरकालमेव सचते समवैति सेवते वा। न कदाचिद् वियुज्यत इत्यवधारणाभिप्रायः।

न ता अर्वा [1]रेणुककाटोऽश्नुते न संस्कृतत्रमुप यन्ति ता अभि।
उरुगायमभयं तस्य ता अनु गावो [2]मर्तस्य वि चरन्ति यज्वनः ॥ ४ ॥

न। ताः। अर्वा। [3]रेणुकऽकाटः। [4]अश्नुते। न। [5]संस्कृतत्रम्। उप। यन्ति। ताः। अभि।
उरुऽगायम्। अभयम्। तस्य। ताः। अनु। गावः। मर्तस्य। वि। चरन्ति। यज्वनः ॥ ४ ॥

अर्वा हिंसको व्याघ्रादिः रेणुककाटः पादाघातेन रेणोः पार्थिवस्य रजस उद्भेदकः। कटिर्भेदनकर्मा। एवंक्रूरो व्याघ्रादिर्दुष्टमृगः ता गाः नाश्नुते न प्राप्नोतु। तथा ता गावः संस्कृतत्रम्। संस्कृतं विशसितं त्रायते पालयतीति संस्कृतत्रो मांसपाचकः। उक्तं हि —

'संस्कृतः स्याद् विशसितः संस्कृतत्रश्च पाचकः।' इति।

तम् अभिलक्ष्य नोप यन्ति नोपगच्छन्तु। तस्य यज्वनो मर्तस्य मनुष्यस्य उरुगायम् विस्तीर्णगमनम् अभयम् भयरहितं देशम् अनुलक्ष्य ता गावो वि चरन्ति विविधं चरन्तु।

गावो भगो गाव इन्द्रो [6]म इच्छाद् गावः सोमस्य प्रथमस्य भक्षः।
इमा या गावः स जनास इन्द्र इच्छामि[7] हृदा मनसा चिदिन्द्रम् ॥ ५ ॥

गावः। भगः। गावः। इन्द्रः। मे। इच्छात्। गावः। सोमस्य। प्रथमस्य। भक्षः।
इमाः। याः। गावः। सः। जनासः। इन्द्रः। इच्छामि। हृदा। मनसा। चित्। इन्द्रम् ॥

---

१. °टो अश्नुते K,K^m,R,V,O,K² ऋ ६,२८,४ काठ १३,१६ तैब्रा २,४,६,९.
२. मर्त्यस्य Bp², तैब्रा. ३. रेणुऽकक्काटः ऋपपा. ४. अश्नुते P,P². ५. संस्कृतऽत्रम् Op, ऋपपा. ६. मे अच्छान् ऋ ६,२८,५ काठ. तैब्रा २,८,८,१२; मे अच्छात् O,K²
७. °मीद् ऋ. काठ. तैब्रा.

गाव एव भगः धनं पुरुषस्य सौभाग्यं वा । ततश्च मे मह्यं गावः यथा भवन्ति तथा इन्द्रः इच्छात् इच्छेत् । इषु इच्छायाम् । अस्मात् लेटि आडागमः । 'इषुगमियमां छः' (पा ७,३,७७) । प्रथमस्य मुख्यस्य हविषां मध्ये श्रेष्ठस्य सोमस्य गावः भक्षो भवन्ति । अभिषुतो हि सोमो गव्येन पयसा दध्ना च श्रीयते । इमा या गावो दृश्यन्ते हे जनासः जनाः स एव इन्द्रः । प्रतिनिर्दिश्यमानापेक्षं स इत्येकवचनम् । ता एव गावः इन्द्र इति उपजीव्योपजीवकभावेन इन्द्रात्मना गवां स्तुतिः । अतस्तदीयेन पयःप्रभृतिना हविषा इन्द्रं यष्टुं हृदा हृदयेन मनसा तदन्तर्वर्तिना ज्ञानकरणेन च इच्छामि कामये । चिच्छब्दः अप्यर्थे ।

यूयं गावो मेदयथा कृशं [1]चिदश्रीरं चित् कृणुथा सुप्रतीकम् ।
भद्रं गृहं कृणुथ भद्रवाचो बृहद् वो वय उच्यते सभासु ॥ ६ ॥

यूयम् । गावः । मेदयथ । कृशम् । चित् । अश्रीरम् । चित् । कृणुथ । सुऽप्रतीकम् ।
भद्रम् । गृहम् । कृणुथ । भद्रऽवाचः । बृहत् । वः । वयः । उच्यते । सभासु ॥ ६ ॥

हे गावः यूयं कृशं चित् कृशमपि शरीरिणं मेदयथ स्नेहयथ पयोदध्यादिना आप्याययथ । अश्रीरं चित् अश्रीकम् अशोभनाङ्गमपि पुरुषं सुप्रतीकम् शोभनावयवं कृणुथ कुरुथ । हे भद्रवाचः भद्राः कल्याण्यः हम्भारवलक्षणा वाचो यासां तास्तथोक्ताः ईदृश्यो हे गावः अस्मदीयं गृहम् भद्रम् कल्याणम् अलंकृतं [2]कृणुत कुरुत । गोसमृद्धं हि गृहं कल्याणं भवति । वः युष्माकं संबन्धि वयः अन्नं क्षीरदध्यादिलक्षणं सभासु जनसमूहेषु बृहत् महद् अधिकम् उच्यते प्रशस्यते अहो गवां क्षीरं दध्याज्यम् इति ।

प्रजावतीः [3]सूयवसे [4]रुशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः ।
मा वः स्तेन ईशत माघशंसः परि वो रुद्रस्य हेतिर्वृणक्तु[5] ॥ ७ ॥

प्रजाऽवतीः । सुऽयवसे । रुशन्तीः । शुद्धाः । अपः । सुऽप्रपाने । पिबन्तीः ।
मा । वः । स्तेनः । ईशत । मा । अघऽशंसः । परि । वः । रुद्रस्य । हेतिः । वृणक्तु ॥ ७ ॥

हे गावः प्रजावतीः प्रजाभिः पुत्रपौत्रादिभिरुपेताः सूयवसे शोभनतृणयुक्ते देशे रुशन्तीः तृणं भक्षयन्तीः शुद्धाः कालुष्यरहिता अपः सुप्रपाणे सुखेन पातव्ये शोभनावतरणमार्गयुक्ते तटाकादौ पिबन्तीः ईदृशीर्वः युष्मान् स्तेनः तस्करः मा ईशत अपहर्तुम् ईश्वरो मा भूत् । अघशंसः । अघम् पापं वधलक्षणं शंसति अभिलषतीति अघशंसो

१. चिदश्लीलं तैब्रा २,८,८,१२. २. वैतु. मंपा. द्र. ३. सूयवसं ऋ ६,२८,७ तैब्रा. ४. रिशन्तीः ऋ. तैब्रा. ५. वृज्याः ऋ., वृञ्ज्यात् तैब्रा.

व्याघ्रादिर्दुष्टमृगः। सोपि मा ईशत ईश्वरो मा भूत्। रुद्रस्य ज्वराभिमानिदेवस्य हेतिः आयुधं वः युष्मान् परि वृणक्तु परिवर्जयतु। युष्मान् परिहृत्य अन्यत्र वर्तताम् इत्यर्थः।

इति पञ्चमेऽनुवाके प्रथमं सूक्तम्।

'इमम् इन्द्र' इति सूक्तेन संग्रामजयार्थम् आज्यहोमम् सक्तुहोमम् धनुरिध्माधानम् इषुसमिदाधानम् राज्ञे अभिमन्त्रितधनुःप्रदानं च कुर्यात्। सूत्रितं हि—"'इमम् इन्द्र' इति युक्तयोः प्रदानान्तानि" (कौसू. १४,२४) इति।

तथा 'इमम् इन्द्र' इति सूक्तेन अभिषिक्तस्य राज्ञः प्रातःप्रातरभिमन्त्रणम् उदपात्रसमासेचनं च कुर्यात्। तद् उक्तं कौशिकेन—"'इमम् इन्द्र वर्धय क्षत्रियं मे' इति क्षत्रियं प्रातःप्रातरभिमन्त्रयते। उक्तं समासेचनम्" (कौसू. १७,२८;२९) इति।

तथा क्रव्याच्छमनकर्मणि अनेन सूक्तेन वृषभम् अनड्वाहं वा अभिमन्त्रयते। तद् उक्तं कौशिकेन—"'वैश्वदेवीम्' (अ १२,२,२८) इति वत्सतरीम् आलम्भयति। 'इमम् इन्द्र' इति वृषम्। अनड्वाहम्" इति (कौसू. ७२,६-९)।

इममिन्द्र वर्धय [1]क्षत्रियं म इमं [2]विशामेकवृषं कृणु त्वम्।
निरमित्रानक्ष्णुह्यस्य सर्वांस्तान्[3] रन्धयास्मा अहमुत्तरेषु॥ १॥

इमम्। इन्द्र। वर्धय। क्षत्रियम्। मे। इमम्। [4]विशाम्। एकऽवृषम्। कृणु। त्वम्।
निः। अमित्रान्। [5]अक्ष्णुहि। अस्य। सर्वान्। तान्। रन्धय। अस्मै। अहम्ऽउत्तरेषु॥ १॥

हे इन्द्र त्वं मे मदीयम् इमं क्षत्रियम् राजानं वर्धय पुत्रपौत्रादिभिर्वस्तुवाहनादिभिश्च समृद्धं कुरु। [a]वृषाम् सेचनसमर्थानां वीर्यवतां पुरुषाणां मध्ये इमं राजानम् एकवृषम् मुख्यसेक्तारम् असहायशूरं कृणु कुरु। अस्य राज्ञः सर्वान् अमित्रान् शत्रून् निरक्ष्णुहि निर्गतव्याप्तिकान् कुरु। संकुचितप्रभावान् कुरु इत्यर्थः। अक्षू व्याप्तौ। स्वादित्वात् श्नुः। तान् तथाविधान् शत्रून् अस्मै राज्ञे रन्धय वशीकुरु। कर्मकरान् कुरु इत्यर्थः। [b]अहम् अपि मन्त्रसामर्थ्येन [c]उत्तरेषु उत्कृष्टतरेषु इन्द्रादिलोकपालेषु मध्ये इमम् एकं करोमीत्यर्थः।

एमं भज ग्रामे अश्वेषु गोषु [6]निष्टं भज यो अमित्रो अस्य।
[7]वर्ष्मं [8]क्षत्राणामयमस्तु राजेन्द्र [9]शत्रुं रन्धय सर्वमस्मै॥ २॥

१. क्षत्रियाणाम् तैब्रा २,४,७,७ २. वृषामेकं° K, सा. ३. स्तां K,K^m,V.
४. वृषाम् K. ५. अक्षुहि P². ६. वैतु. मंपा. द्र. ७. निरमुं तैब्रा. ८. वर्ष्मन् A,K,S, सा. पै ३,२१,३ तैब्रा. ९. शत्रून् J,K,K^m,R; शत्रून् P,P²P³,M,W,I,K²,S.

आ । इमम् । भज । ग्रामे । अश्वेषु । गोषु । निः । तम् । भज । यः । अमित्रः । अस्य ।
[1]वर्ष्मे । क्षत्राणाम् । अयम् । अस्तु । राजा । इन्द्र । शत्रुम् । रन्धय । सर्वम् । अस्मै ॥२॥

हे इन्द्र इमं राजानं ग्रामे जनसमूहे अश्वेषु गोषु च विषये आ भज आभक्तम् आसमन्तात् संश्लिष्टं कुरु । अस्य राज्ञो यः अमित्रः शत्रुरस्ति तं निर्भज ग्रामादिभ्यो निर्भक्तं वियुक्तं कुरु । तथा क्षत्राणाम् अन्येषां क्षत्रियाणां [2]वर्ष्मन् वर्ष्मणि देहे प्रशस्ते शरीरावयवे शिरसि अयम् अभिषिक्तो राजा वर्तमानोऽस्तु । सर्वान् [3]शत्रून् सर्वं च राष्ट्रम् अस्मै अभिषिक्ताय राज्ञे रन्धय वशीकुरु । रध हिंसासंराद्ध्योः । 'रधिजभोरचि' ( पा ७,१,६१ ) इति नुमागमः । 'रध्यतिर्वशगमने' इति निरुक्तम् ( १०,४० ) ।

अयमस्तु धनपतिर्धनानामयं विशां विश्पतिरस्तु राजा ।
[3]अस्मिन्निन्द्र महि वर्चांसि धेह्यवर्चसं कृणुहि शत्रुमस्य ॥ ३ ॥

अयम् । अस्तु । धनऽपतिः । धनानाम् । अयम् । विशाम् । विश्पतिः । अस्तु । राजा ।
अस्मिन् । इन्द्र । महि । वर्चांसि । धेहि । अवर्चसम् । कृणुहि । शत्रुम् । अस्य ॥ ३ ॥

अयं राजा धनानाम् सुवर्णरजतमणिमुक्ताप्रवालादीनां धनपतिः स्वामी अस्तु भवतु । धनानां पतिर्धनपतिरित्येव धनाढ्यत्वे सिद्धे पुनर्धनानाम् इति व्यस्तनिर्देशः ईशितव्यस्य धनस्य बहुत्वख्यापनार्थः । न हि राजपुरुष इत्युक्ते राज्ञोः पुरुषः राज्ञां पुरुषः इति संख्याविशेषप्रतीतिरस्ति किं तु राजसंबन्धमात्रं प्रतीयते एवम् अत्रापि धनपतिरिति धनसंबन्धमात्रे अवगते तद्बहुत्वप्रतिपादनाय व्यस्तनिर्देश इति न पौनरुक्त्यम् । अतो वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते । तथा अयम् राजा विशाम् प्रजानां विश्पतिरस्तु स्वामी भवतु । विशां विश्पतिरिति पूर्ववद् व्याससमासयोरभिप्रायः । हे इन्द्र अस्मिन् राजनि महि महान्ति वर्चांसि तेजांसि पराभिभवनसमर्थानि वीर्याणि धेहि स्थापय । अस्य राज्ञः शत्रुम् अवर्चसं कृणुहि अतेजस्कं कुरु ।

[4]अस्मै द्यावापृथिवी भूरि वामं [5]दुहाथां घर्मदुघे इव धेनू[6] ।
अयं राजा प्रिय इन्द्रस्य भूयात् प्रियो गवामोषधीनां [4]पशूनाम् ॥ ४ ॥

अस्मै । द्यावापृथिवी[7] इति । भूरि । वामम् । दुहाथाम् । घर्मदुघे इवेति [8]घर्मदुघेऽइव । धेनू इति ।
अयम् । राजा । प्रियः । इन्द्रस्य । भूयात् । प्रियः । गवाम् । ओषधीनाम् । पशूनाम् ॥

१. वर्ष्मन् K. २. वैद्य. मंपा. द्र. ३. अस्मा इन्द्र तैब्रा २,४,७,७. ४. अस्मै तैब्रा २,४,७,८. ५. सं दुहाथां घर्मदुघेव धेनुः तैब्रा. पै ३,२१,४. ६. उतापाम् तैब्रा. पै. ७. •पृथिवी P. ८. घर्म° P,J.

हे द्यावापृथिवी द्यावापृथिव्यौ अस्मै पुरोवर्तिने मदीयाय राज्ञे भूरि प्रभूतं वामम् वननीयं धनं दुहाथाम् प्रयच्छतम् । दुहेर्लोटि अदादित्वात् शपो लुक् । तत्र दृष्टान्तः—घर्मदुघे इवेति । घर्मः प्रवर्ग्यः । तदर्थे पयो या गौर्दुग्धे सा घर्मदुघा । 'दुहः कब् घश्च' (पा ३,२,७०) इति कब्घत्वे । यथा घर्मदुघे धेनू बहुलं क्षीरं दुहाते तद्वद् वात्सल्येन बहुलं धनं द्यावापृथिव्यौ प्रयच्छताम् इत्यर्थः । एवं धनसमृद्धौ सत्यां यागाद्यनुष्ठानेन अयं राजा इन्द्रस्य यज्ञभाजो देवस्य प्रियः इष्टतरो भूयात् । तत्प्रियत्वाद् वृष्टौ सत्यां गवाम् ओषधीनाम् व्रीहियवादिसस्यानाम् अन्येषां पशूनाम् द्विपाच्चतुष्पाल्लक्षणानां प्राणिनाम् अयं राजा प्रियो भूयात् इति संबन्धः ।

युनज्मि त[1] उत्तरावन्तमिन्द्रं येन जयन्ति न पराजयन्ते[2] ।
यस्त्वा करदेकवृषं जनानामुत[3] राज्ञामुत्तमं मानवानाम्[4] ॥ ५ ॥

युनज्मि । ते । उत्तरऽवन्तम् । इन्द्रम् । येन । जयन्ति । न । पराऽजयन्ते ।
यः । त्वा । करत् । एकऽवृषम् । जनानाम् । उत । राज्ञाम् । उत्ऽतमम् । मानवानाम् ॥

हे राजन् ते तव उत्तरावन्तम् अतिशयितोत्कर्षवन्तम् इन्द्रं युनज्मि योजयामि सखित्वापादनेन समानकार्यं करोमि । येन इन्द्रेण प्रेरितास्त्वदीया भटाः शत्रुसेनां जयन्ति न पराजयन्ते पराजयं न प्राप्नुवन्ति । 'विपराभ्यां जेः' (पा १,३,१९) इति आत्मनेपदम् । अपि च त्वा त्वां य इन्द्रः जनानाम् अन्येषां शूरजनानाम् एकवृषम् गोयूथे प्रधानभूतो वृष एकवृषः तद्वद् मुख्यं सर्वोत्कृष्टं करत् करोति । उतशब्दः अप्यर्थे । राज्ञाम् अन्येषामपि एकवृषम् एकवृषवद् अभिभवितारं करोति । मानवानाम् मनोरपत्यानां मनुष्यजातीयानाम् उत्तमम् उत्कृष्टं करोति । यद्वा मानवानाम् मनुवंश्यानाम् इलपुरूरवःप्रभृतीनां राज्ञां मध्ये उत्तमम् प्रजापरिपालनशौर्यादिगुणैरुत्कृष्टं करोति । तथाविधम् इन्द्रं युनज्मि इति संबन्धः ।

उत्तरस्त्वमधरे ते सपत्ना[5] ये के च राजन् प्रतिशत्रवस्ते ।
एकवृष[6] इन्द्रसखा जिगीवां छत्रूयतामा[7] भरा भोजनानि[8] ॥ ६ ॥

उत्तरः । त्वम् । अधरे । ते । सऽपत्नाः । ये । के । च । राजन् । प्रतिऽशत्रवः । ते ।
एकऽवृषः । इन्द्रऽसखा । जिगीवान् । शत्रुऽयताम् । आ । भर । भोजनानि ॥ ६ ॥

हे राजन् त्वम् उत्तरः सर्वोत्कृष्टतरो भव । ते त्वदीयाः सपत्नाः अधरे निकृष्टा भवन्तु । तान् विशिनष्टि—ते । द्वितीयार्थे षष्ठी । त्वां प्रति ये के च जनाः

१. तम् पै ३,२१,५. २. जयासि न पराजयासै तैब्रा २,४,७,८. ३. स त्वाऽकरेकवृषभं स्वानाम् । अथो तैब्रा. ४. राजन्नुत्तमं पै. तैब्रा. ५. सन्त्वन्ये पै ३,२१,६. ६. एकवृषा पै [ मूको. ] तैब्रा. ७. °तामभि तिष्ठा महांसि पै. ८. वैतु. मंपा. द्र.

[1]शत्रवः शत्रुभावेन प्रतिकूलम् आचरन्ति ते सर्वे अधरे भवन्तु इत्यर्थः। अपि च एकवृषः प्रधानभूतः इन्द्रसखा इन्द्रेण सख्या युक्तः जिगीवान् शत्रून् जयन् शत्रूयताम् शत्रुत्वम् आत्मन इच्छतां शत्रुवद् आचरतां वा भोजनानि भोगसाधनानि धनानि आ भर आहर। सर्वान् शत्रून् विजित्य तदीयं सर्वं धनम् अपहरेत्यर्थः। जिगीवान् इति। जि जये। अस्माच्छान्दसो वर्तमाने लिट्। तस्य च लिटः क्वसुरादेशः। 'सन्लिटोर्जेः' (पा ७,३,५७) इति अभ्यासाद् उत्तरस्य कुत्वम्। शत्रूयताम् इति। 'सुप आत्मनः क्यच्' (पा ३,१,८), 'उपमानादाचारे' (पा ३,१,१०) इति वा क्यच्। तदन्तात् लटः शत्रादेशे 'शतुरनुमः°' (पा ६,१,१७३) इति विभक्त्युदात्तत्वम्।

सिंहप्रतीको विशो अद्धि सर्वा व्याघ्रप्रतीकोऽव[2] बाधस्व शत्रून्।
एकवृष इन्द्रसखा जिगीवां छत्रूयतामा खिदा भोजनानि ॥ ७ ॥

सिंहऽप्रतीकः। विशः। अद्धि। सर्वाः। व्याघ्रऽप्रतीकः। अव[3]। बाधस्व। शत्रून्।
एकऽवृषः। इन्द्रऽसखा। जिगीवान्। शत्रुऽयताम्। आ। खिद। भोजनानि ॥ ७ ॥

सिंहप्रतीकः सिंहशरीरः सिंहतुल्यपराक्रमः सन् आज्ञामात्रेण सर्वा विशः स्वराष्ट्रस्थाः प्रजा अद्धि भुङ्क्ष्व। अद भक्षणे। 'हुझल्भ्यो हेर्धिः' (पा ६,४,१०१) इति धित्वम्। व्याघ्रप्रतीकः व्याघ्रशरीरः व्याघ्रवद् आक्रम्य पर्यन्तस्थान् शत्रून् [4]अप बाधस्व। अन्यद् व्याख्यातम्। एतावांस्तु विशेषः — शत्रुसंबन्धीनि धनानि आ खिद आच्छिन्धि। अपहरेत्यर्थः। आङ्पूर्वः खिदिः आच्छेदने वर्तते। यथा— 'आक्खिदते च प्रक्खिदते च' (तै ४,५,९,२) इति।

इति द्वितीयं सूक्तम्।

'अग्नेर्मन्वे' इति सूक्तसप्तकस्य बृहद्गणे पाठात् शान्त्युदकादौ विनियोगः। तथा च कौशिकं सूत्रम्— "[4]'उत देवाः' (अ ४,१३), मृगारसूक्तानि (अ ४,२१–३०)। उत्तमं[5] वर्जयित्वा" (कौसू ९,१;२) इति। अत्र उत्तमशब्देन 'आ गावः' (२१), 'इमम् इन्द्र' (२२) इति आदिमे द्वे 'अहं रुद्रेभिः' (३०) इति अन्तिमं चेति सूक्तत्रयं विवक्षितम्।

तथा अंहोलिङ्गगणे 'अग्नेर्मन्वे' (२३–२९) इत्यादीनां सप्तानां सूक्तानां पाठात् सर्वरोगभैषज्यादिषु विनियोगो द्रष्टव्यः। सूत्रितं हि— "ओषधिवनस्पतीनाम् [6]अनुक्तान्यप्रतिषिद्धानि भैषज्यानाम्। अंहोलिङ्गाभिः' (कौसू ३२,२६;२७) इत्यादि।

'अग्नेर्मन्वे' इति सामिधेन्यनुमन्त्रणं कुर्यात्। तद् उक्तं वैताने— " 'अग्नेर्मन्वे' इति सामिधेनीरनुमन्त्रयते" (वैताश्रौ २,११) इति।

---

१. वैदु. मंपा. द्र. २. °कोऽपं K, सा. ३. अपं K. ४. तथैव Bl.
५. उत्तमान् S', Kd. ६. अनूक्ता° Bl.

अ॒ग्नेर्म॑न्वे प्रथ॒मस्य॒ 'प्रचे॑तसः 'पाञ्च॑जन्यस्य बहु॒धा यमि॒न्धते॑ ।
'विशो॑विशः 'प्रविशि॒वांस॑मीमहे॒ स नो॑ मुञ्च॒त्वंह॑सः ॥ १ ॥

अ॒ग्नेः । म॒न्वे॒ । प्र॒थ॒मस्य॑ । प्रऽचे॑तसः । पाञ्च॑ऽजन्यस्य । ब॒हु॒ऽधा । यम् । इ॒न्धते॑ ।
विशः॑ऽविशः । प्र॒वि॒शि॒ऽवांस॑म् । ई॒म॒हे॒ । सः । नः॒ । मु॒ञ्च॒तु॒ । अंह॑सः ॥ १ ॥

प्रथमस्य मुख्यस्य प्रचेतसः प्रकृष्टज्ञानस्य [4]पाञ्चयज्ञस्य । देवयज्ञः पितृयज्ञः भूतयज्ञः मनुष्ययज्ञः ब्रह्मयज्ञः इत्येते नित्यकर्तव्याः प्रसिद्धाः पञ्चयज्ञाः तैराराधनीयः पाञ्चयज्ञः । यद्वा पञ्चधा यज्ञा विभक्ता अग्निष्टोमादयः पञ्चयज्ञाः । 'धानाः करम्भः परिवापः [6]पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद् यज्ञस्य पाङ्क्तत्वम्' (तै ६,५,११,४) इति तैत्तिरीयश्रुतेः, 'यो वै यज्ञं हविष्पङ्क्तिं वेद' (ऐब्रा २,२४) इत्याद्यैतरेयकश्रुतेश्च यज्ञस्य पञ्चात्मकता । तादृगग्निष्टोमादिनिर्वर्तकः[7] पाञ्चयज्ञः । यद्वा यज्ञशब्देन तन्निष्पादका जना विवक्षिताः । ते च निषादपञ्चमाश्चत्वारो वर्णाः । गन्धर्वाप्सरसो देवा असुरा रक्षांसीत्येके । तेषु भवः पाञ्चयज्ञः । तथा च तैत्तिरीयकम्— 'यं पाञ्चजन्यं बहवः समिन्धते' (तै ४,७,१५,१) इति । तस्य एवंगुणविशिष्टस्य अग्नेः माहात्म्यं मन्वे जानामि । मनु अवबोधने । तनादित्वाद् उप्रत्ययः । तदेव माहात्म्यं प्रतिपादयति बहुधा यम् इत्यादिना । बहुधा बहुप्रकारं यम् अग्निम् इन्धते गार्हपत्यादिरूपेण संदीपयन्ति । विशोविशः सर्वाः प्रजाः प्रविशिवांसम् जाठरादिरूपेण प्रविष्टवन्तं तम् अग्निम् ईमहे याचामहे । 'ईमहे । यामि । मन्महे' (निघ ३,१९) इति याच्ञाकर्मसु पठितम् । यद्वा ईङ् गतौ । दैवादिकः । ईमहे ईयामहे स्तुतिनमस्कारादिना प्राप्नुमः । 'विश्वस्यां विशि प्रविविशिवांसम् ईमहे' (तै ४,७,१५,१) इति तैत्तिरीयकम् । स तादृशोग्निः नः अस्मान् अंहसः सर्वानर्थनिदानभूतात् पापात् मुञ्चतु मोचयतु । अस्मत्तः पापं विश्लेषयतु इत्यर्थः ।

य॒था॑ ह॒व्यं वह॑सि जातवेदो॒ यथा॑ य॒ज्ञं क॒ल्पय॑सि प्रजा॒नन् ।
ए॒वा दे॒वेभ्य॑ः सुम॒तिं न॒ आ व॑ह॒ स नो॑ मुञ्च॒त्वंह॑सः ॥ २ ॥

यथा॑ । ह॒व्यम् । वह॑सि । जा॒त॒ऽवे॒दः॒ । यथा॑ । य॒ज्ञम् । क॒ल्पय॑सि । प्र॒ऽजा॒नन् ।
ए॒व । दे॒वेभ्य॑ः । सु॒ऽम॒तिम् । न॒ः । आ । व॒ह॒ । सः । न॒ः । मु॒ञ्च॒तु॒ । अंह॑सः ॥ २ ॥

हे जातवेदः जातानां वेदितरग्ने यथा येन प्रकारेण हव्यम् चरुपुरोडाशादि होतव्यं हविः वहसि तत्तद्यष्टव्यदेवतां प्रापयसि यथा येन च प्रकारेण यज्ञं पाकयज्ञहविर्यज्ञ-

१. अमृतानां मै ३,१६,५. २. यं पाञ्चजन्यं बहवः समिन्धते तै ४,७,१५,१ मै. [पांचजन्यस्य D, पांचयज्ञस्य S. ३. विश्वस्यां विशि तै. मै. ४. प्रविविशि॰ तै. मै.; प्रविविशान॰ काठ २२,१५. ५. वैतु. मंपा. द्र.; पाञ्चजन्यस्य S′, Kd. ६. पुरोलाशः S′, Kd. ७. ॰निवर्तकः S′, Kd. ८. द्र॒ा पै ४,३३,३.

सोमयागभेदेन एकाहाहीनसत्रात्मना च कल्पयसि विरचयसि प्रजानन् तत्तद्विधां प्रकर्षेण अवगच्छन्[१]। एव एवं देवेभ्यः देवानाम् अर्थे नः अस्माकं सुमतिम् शोभनां बुद्धिम् आ वह प्रापय। यद्वा देवेभ्यः सकाशात् सुमतिम् अनुग्रहात्मिकां बुद्धिं नः अस्मान् प्रापय। गतम् अन्यत्।

यामन्यामन्नुपयुक्तं 'वहिष्ठं कर्मन्कर्मन्नाभगम्। अग्निमीडे† ।
रक्षोहणं[१] यज्ञवृधं घृताहुतं स नो मुञ्चत्वंहसः ॥ ३ ॥

यामन्ऽयामन्। उपऽयुक्तम्। 'वहिष्ठम्। कर्मन्ऽकर्मन्। आऽभगम्। अग्निम्। ईडे।
रक्षःऽहनम्। यज्ञऽवृधम्। घृतऽआहुतम्[४]। सः। नः। मुञ्चतु। अंहसः ॥ ३ ॥

यामन्यामन् यामनियामनि। सप्तम्या लुक्। तत्तत्फलप्रापणे निमित्तभूते सति उपयुक्तम् तत्तद्धोमाधारत्वेन विनियुक्तं वहिष्ठम् वोढृतमम्। वोढृशब्दात् 'तुश्छन्दसि' (पा ५,३,५९) इति इष्ठन्प्रत्ययः। 'तुरिष्ठेमेयस्सु' (पा ६,४,१५४) इति तृलोपः। कर्मन्कर्मन्। पूर्ववत् सप्तम्या लुक्। तत्तत्फलसाधने सर्वस्मिन् कर्मणि आभगम् आभक्तव्यम् आसेव्यम् एवंगुणविशिष्टम् अग्निम् अहम् [५]ईळे स्तौमि। पुनर्विशेष्यते—रक्षोहणम् रक्षसां हन्तारं यज्ञवृधम् यज्ञस्य अग्निष्टोमादेर्वर्धयितारं घृताहुतम् घृतेन आज्येन आहुतम् आहुतिभिः संदीपितम्। स नः इत्यादि पूर्ववत्।

सुजातं जातवेदसमग्निं वैश्वानरं विभुम्।
हव्यवाहं हवामहे स नो मुञ्चत्वंहसः ॥ ४ ॥

सुऽजातम्। जातऽवेदसम्। अग्निम्। वैश्वानरम्। विऽभुम्।
हव्यऽवाहम्। हवामहे। सः। नः। मुञ्चतु। अंहसः ॥ ४ ॥

सुजातम् शोभनजन्मानम्। मन्थैर्निर्मथ्य आहितत्वात्। जातवेदसम् जातानां जनिमतां वेदितारम्। यद्वा जातानि भूतजातानि एनं विदन्तीति जातवेदाः। अथ वा जातमात्र एव वेदः धनं पशुलक्षणम् अलभतेति जातवेदाः। "'यत्तज्जातः पशून् अविन्दतेति तज्जातवेदसो जातवेदस्त्वम्' (तु. मै १,८,२) इति हि ब्राह्मणम्" (नि ७,१९)। वैश्वानरम् विश्वनरात्मकं विश्वनरहितं वा अत एव विभुम् व्यापकं हव्यवाहम् हव्यस्य हविषः अस्माभिर्दत्तस्य वोढारम् एवंगुणविशिष्टम् अग्निं हवामहे आह्वयामः। 'बहुलं छन्दसि' (पा ६,१,३४) इति ह्वः संप्रसारणम्। अन्यद् गतम्।

---

१. वहिष्ठं A,B,Bp,B[h],D,K,K[m],S[m],P[2],V. २. तु. S, RW., W [टि.], सा. पै ४,३३,४; वैतु. A,B,Bp,B[h],D,K,K[m],R,S[m],P,P[2],J,V, शंपा. सात. भगम्। अग्निमीडे रक्षो°.
† पाठः?(स्वार्थे णिचि) ईडये इति शोधः। ३. वहिष्ठम् P[2],J,K. ४. °आऽहुतम् P.
५. वैतु. मंपा. द्र.; ईळे S', Kd.

'येन ऋषयो' 'बलमद्योतयन् युजा येनासुराणामयुवन्त मायाः ।
येनाग्निना पणीनिन्द्रो जिगाय स नो मुञ्चत्वंहसः ॥ ५ ॥

येन । ऋषयः । बलम् । 'अद्योतयन् । युजा । येन । असुराणाम् । अयुवन्त । मायाः ।
येन । अग्निना । पणीन् । इन्द्रः । जिगाय । सः । नः । मुञ्चतु । अंहसः ॥ ५ ॥

ऋषयः अतीन्द्रियार्थदर्शिनः अङ्गिरःप्रभृतयः येन अग्निना युजा सख्या बलम् आत्मीयं सामर्थ्यम् 'उदयोतयन् उद्दीप्तं पराभिभवनक्षमम् अकुर्वन् येन अग्निना असुराणाम् सुरविरोधिनां मायाः व्यामोहकशक्तीः अयुवन्त देवाः पृथक् कृतवन्तः तथा येन अग्निना इन्द्रो देवाधिपतिः पणीन् एतत्संज्ञान् असुरान् जिगाय जितवान् । जि जये । अस्मात् लिटि 'सन्लिटोर्जेः' (पा ७,३,५७) इति अभ्यासाद् उत्तरस्य कुत्वम् ।

येन देवा अमृतमन्वविन्दन् येनौषधीर्मधुमतीरकृण्वन् ।
'येन देवाः' 'स्व१राभरन्त्स नो मुञ्चत्वंहसः ॥ ६ ॥

येन । देवाः । अमृतम् । अनुऽअविन्दन् । येन । ओषधीः । मधुऽमतीः । अकृण्वन् ।
येन । देवाः । स्वः । आऽअभरन् । सः । नः । मुञ्चतु । अंहसः ॥ ६ ॥

येन अग्निना सहायेन देवाः इन्द्रादयः अमृतम् अमरणसाधनं पीयूषम् अन्वविन्दन् अलभन्त येन अग्निना जगदनुप्रविष्टेन ओषधीः व्रीहियवाद्यास्तरुगुल्माद्याश्च मधुमतीः मधुररसयुक्ताः अकृण्वन् अकुर्वन् येन अग्निना यज्ञसाधनभूतेन देवाः देवत्वकामा यजमानाः स्तोतारो वा स्वः स्वर्गम् आभरन् आहरन् । अलभन्तेत्यर्थः ।

यस्येदं प्रदिशि यद् विरोचते यज्जातं जनितव्यं च केवलम् ।
स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वंहसः ॥ ७ ॥

यस्य । इदम् । प्रऽदिशि । यत् । विऽरोचते । यत् । जातम् । जनितव्यम् । च । केवलम् ।
अग्निम् । नाथितः । जोहवीमि । सः । नः । मुञ्चतु । अंहसः ॥ ७ ॥

यस्य अग्नेः प्रदिशि प्रदेशने प्रशासने इदम् सर्वं जगद् वर्तते । इदम् इत्येतद् विशिनष्टि—यद् इदम् अन्तरिक्षे ग्रहनक्षत्रादिकं विरोचते विविधं दीप्यते यच्च प्राणिजातं पृथिव्यां जातम् उत्पन्नं जनितव्यम् जनयितव्यम् जनिष्यमाणं कृत्स्नं कार्यं जगद्

१. येनर्षयो पै ४,३३,५. २. °मुद्यो° K,K^m,V; °मुद्योतयान् S; °तयम् Bp²,K². °यं B,R; °यन् B^h,D. ३. उत् । द्योतयन् K, मद्योतयन् P, अद्योतयन् J,P². ४. वैतु. मंपा, इ. ५. येनेदं पै ४,३३,६. ६. स्व३राभ° B,B^h,S^m,R,D.

यद् अस्ति तत् सर्वं केवलम् अनन्यसाधारणं यस्य प्रदिशि वर्तते तथाविधम् अग्निम् अहं स्तौमि। नाथितः। नाथृ याञ्चायाम्। अस्मात् कर्तरि निष्ठा। नाथमानः फलं कामयमानः। यद्वा नाथः स्वामी संजातोस्य नाथितः। तेनाग्निना नाथवान् भविष्यामीति जोहवीमि पुनःपुनराह्वयामि। 'अभ्यस्तस्य च' (पा ६,१,३३) इति ह्वयतेः संप्रसारणम्। 'गुणो यङ्लुकोः' (पा ७,४,८२) इति अभ्यासस्य गुणः।

इति तृतीयं सूक्तम्।

'अग्नयेंऽहोमुचेऽष्टाकपालः' (तै ७,५,२१,१) इत्यादिना दशहविष्का मृगारेष्टिराथर्वणे विहिता। तत्र अग्नेरंहोमुचः स्तावकम् 'अग्नेर्मन्वे' (२३) इति सूक्तं व्याख्यातम्। इन्द्रस्यांहोमुचः स्तावकम् 'इन्द्रस्य मन्महे' इति सूक्तम्। तस्य पूर्वसूक्तेन सह उक्तो विनियोगः।

इन्द्र॑स्य [1]मन्महे [2]शश्व॒दिद॑स्य† ‡मन्महे॑ [3]वृत्र॒घ्न स्तोमा॒ उप॑ [4]मे॒म आगुः॑ ।
यो दा॒शुषः॑ सु॒कृतो॒ [5]हव॒मेति॒ स नो॑ मुञ्च॒त्वंह॑सः ॥ १ ॥

इन्द्र॑स्य। म॒न्म॒हे॒। शश्व॑त्। इत्। अ॒स्य॒। म॒न्म॒हे॒। वृ॒त्र॒ऽघ्नः। स्तोमाः॑। उप॑। मा॒। इ॒मे। आ। अ॒गुः॒। यः। दा॒शुषः॑। सु॒ऽकृतः॑। हव॑म्। एति॑। सः। नः॒। मु॒ञ्च॒तु॒। अंह॑सः ॥ १ ॥

इन्द्रस्य परमैश्वर्ययुक्तस्य मन्महे महत्त्वं जानीमः। मनु अवबोधने। तनादित्वाद् उप्रत्ययः। 'लोपश्चास्यान्यतरस्यां म्वोः' (पा ६,४,१०७) इति उकारलोपः। असाधारण्यं दर्शयितुम् आह—शश्वदिति। इदिति अवधारणे। शश्वत् पुनःपुनः अस्यैवेन्द्रस्य तद् माहात्म्यं मन्महे अवबुध्यामहे। नान्यस्य तादृङ्माहात्म्यं दृश्यत इत्यर्थः। वृत्रघ्नः वृत्रम् असुरं हतवतस्तस्य इन्द्रस्य इमे पुरतो वक्ष्यमाणाः स्तोमाः स्तोत्राणि मा माम् उपागुः उपायन्ति उपागच्छन्ति। इन्द्रमाहात्म्यविषयाणि स्तोत्राणि उपागत्य मां स्तोतारं कुर्वन्तीत्यर्थः। यः प्रसिद्ध इन्द्रो दाशुषः चरुपुरोडाशादिहवींषि दत्तवतः सुकृतः शोभनकर्मणो यजमानस्य हवम् आह्वानम् एति प्राप्नोति नोदास्ते। दाशुषः। दाशृ दाने। 'दाश्वान् साह्वान् मीढ्वांश्च' (पा ६,१,१२) इति क्वसौ निपात्यते। 'वसोः संप्रसारणम्' (पा ६,४,१३१) इति संप्रसारणम्। हवम् इति। 'भावेऽनुपसर्गस्य' (पा ३,३,७५) इति ह्वयतेरप् संप्रसारणं च। स नः इत्यादि गतम्।

य [6]उ॒ग्रीणा॑मु॒ग्रबा॑हुर्[7]य॒युर्यो दा॑न॒वानां॒ [8]बल॑मारु॒रोज॑ ।
येन॑ जि॒ताः सिन्ध॑वो॒ येन॒ गावः॒ स नो॑ मुञ्च॒त्वंह॑सः ॥ २ ॥

१. मन्वे पै ४,३९,१ तै ४,७,१५,१ मै ३,१६,५ काठ २२,१५. २. प्रथमस्य प्रचेतसः तै. मै. काठ. †. शश्वद् यस्य पै. ‡. मन्विरे पै. ३. वृत्रघ्नः B,B[h],D,R,S[m]. ४. मामुपागुः तै. मै. काठ. ५. हवमेयात् पै.; हवमुप गन्ता तै. मै. काठ. ६. उग्राणा° पै ४,३९,३. ७. °बाहुर्युयु° S[m]. ८. °मारुराद पै.

यः। उग्रीणाम्। उग्रऽबाहुः। ययुः। यः। दानवानाम्। बलम्। आऽरुरोज।
येन। जिताः। सिन्धवः। येन। गावः। सः। नः। मुञ्चतु। अंहसः॥ २॥

य इन्द्रः उग्रबाहुः उद्गूर्णहस्तः उग्रीणाम् उद्गूर्णानां शत्रुसेनानां ययुः श्रावयिता पृथक्कर्ता। 'यौतेर्डुं च' (?; तु. पाउ १,२१ ययुः) इति डुप्रत्ययः। य इन्द्रो दानवानाम् दनोरपत्यानाम् असुराणां बलम् सामर्थ्यम् आरुरोज सर्वतो बभञ्ज। रुजो भङ्गे। येन इन्द्रेण सिन्धवः स्यन्दनशीला मेघस्था आपः जिताः मेघं भित्त्वा जयेन प्राप्ताः। यद्वा सिन्धवो नद्यः समुद्रा वा वृत्रवधेन जिताः। श्रूयते हि—'वज्रेण खान्यतृणन्नदीनाम्' (ऋ २,१५,३), 'अहन्नहिं परिशयानमर्णोऽवासृजो अपो अच्छा समुद्रम्' (ऋ ६,३०,४) इत्यादि। येन इन्द्रेण पणिनामकासुरवधेन तदपहृता गावो जिताः लब्धाः। गतम् अन्यत्।

यश्चर्षणिप्रो वृषभः स्वर्विद् यस्मै ग्रावाणः प्रवदन्ति नृम्णम्।
यस्याध्वरः सप्तहोता मदिष्ठः स नो मुञ्चत्वंहसः॥ ३॥

यः। चर्षणिऽप्रः। वृषभः। स्वःऽवित्। यस्मै। ग्रावाणः। प्रऽवदन्ति। नृम्णम्।
यस्य। अध्वरः। सप्तऽहोता। मदिष्ठः। सः। नः। मुञ्चतु। अंहसः॥ ३॥

य इन्द्रः चर्षणिप्रः[6]। चर्षणयो मनुष्याः तान् अभिलषितफलेन प्राति पूरयतीति चर्षणिप्रः। प्रा पूरणे। 'आतोऽनुपसर्गे कः' (पा ३,२,३) इति कः। वृषभः वर्षिता। यद्वा वृषभवत् प्रसह्यकारी स्वर्वित् स्वर्गस्य लम्भयिता। यस्मै इन्द्राय ग्रावाणः अभिषवार्थाः पाषाणा नृम्णम् सोमरसलक्षणं धनं प्रवदन्ति अभिषवकालीनैर्ध्वनिभिः प्रकथयन्ति। 'देवा ग्रावाण इन्दुरिन्द्र इत्यवादिषुः' (तैब्रा ३,७,९,२), 'प्रैते वदन्तु प्र वयं वदाम' (ऋ १०,९४,१) इत्यादिमन्त्रवर्णाद् ग्राव्णां प्रवदितृत्वम्। यस्य इन्द्रस्य अध्वरः सोमयागः सप्तहोता सप्तभिर्होतृभिर्वषट्कर्तृभिर्युक्तः मदिष्ठः मादयितृतमो भवति। होता मैत्रावरुणः ब्राह्मणाच्छंसी पोता नेष्टा अच्छावाकः आग्नीध्रश्चेति सप्त होतारो वषट्कर्तारो यस्मिन्निति बहुव्रीहौ 'नद्यृतश्च' (पा ५,४,१५३) इति प्राप्तस्य कपः 'ऋतश्छन्दसि' (पा ५,४,१५८) इति प्रतिषेधः। मदिष्ठ इति। मदी हर्षे इत्यस्मात् तृच्। तदन्तात् 'तुश्छन्दसि' (पा ५,३,५९) इति इष्ठन्। 'तुरिष्ठेमेयस्सु' (पा ६,४,१५४) इति तृलोपः। गतम् अन्यत्।

१. वैतु. मंपा. द्र. २. चर्षणिः पै ४,३९,२. ३. यस्य पै. ४. मदिष्ठः A,B[h],K,K[m],S[m],V; मधुष्युत् पै. ५. मदिंष्टः K. ६. °प्राः S', Kd.

[1]यस्य [2]वशास ऋषभास उक्षणो यस्मै मीयन्ते स्वरवः स्वर्विदे ।
[3]यस्मै शुक्रः [4]पवते ब्रह्मशुम्भितः स नो मुञ्चत्वंहसः ॥ ४ ॥

यस्य । वशासः । ऋषभासः । उक्षणः । यस्मै । मीयन्ते । स्वरवः । स्वःऽविदे ।
यस्मै । शुक्रः । पवते । ब्रह्मऽशुम्भितः । सः । नः । मुञ्चतु । अंहसः ॥ ४ ॥

वशासः वशा वन्ध्या गावः ऋषभासः ऋषभाः उक्षणः उक्षाणः सेचनसमर्थाः । 'वा षपूर्वस्य निगमे' (पा ६,४,९) इति उपधादीर्घाभावः । एवं वशादिरूपाः पशवः यस्य इन्द्रस्य यागार्थम् आलभ्यन्ते यस्मै इन्द्राय स्वर्विदे स्वर्गस्य लम्भयित्रे स्वरवः । यूपावतक्षणशकलः स्वरुः । तेन तद्वन्त उपलक्ष्यन्ते । स्वरवः स्वरुमन्तो यूपा मीयन्ते अवटेषु स्थाप्यन्ते । डुमिञ् प्रक्षेपणे । यस्मै इन्द्राय शुक्रः निर्मलो रसवान् सोमः ब्रह्मशुम्भितः ब्रह्मभिर्मन्त्रैः अभिषवसाधनैरलंकृतः सन् पवते दशापवित्रधारया स्रवति । स नः इत्यादि पूर्ववत् ।

यस्य जुष्टिं सोमिनः कामयन्ते यं हवन्त [5]इषुमन्तं गविष्टौ ।
यस्मिन्नर्कः शिश्रिये यस्मिन्नोजः स नो मुञ्चत्वंहसः ॥ ५ ॥

यस्य । [6]जुष्टिम् । सोमिनः । कामयन्ते । यम् । हवन्ते । इषुऽमन्तम् । गोऽइष्टौ ।
यस्मिन् । अर्कः । शिश्रिये । यस्मिन् । ओजः । सः । नः । मुञ्चतु । अंहसः ॥ ५ ॥

यस्य इन्द्रस्य जुष्टिम् प्रीतिं सोमिनः सोमवन्तो यजमानाः कामयन्ते अभिलषन्ति । इषुमन्तम् बाणवन्तं प्रशस्तायुधसहितं यम् इन्द्रं गविष्टौ गवां पणिभिरपहृतानां पुनरन्वेषणे अभिगमने वा हवन्ते आह्वयन्ति । यस्मिन् इन्द्रे अर्कः अर्चनसाधनभूतो मन्त्रः स्तुतशस्त्रादिलक्षणः शिश्रिये आश्रितो भवति । तथा यस्मिन् इन्द्रे ओजः बलम् अनन्यसाधारणं दृश्यते । स नः इत्यादि पूर्ववत् ।

यः [7]प्रथमः कर्मकृत्याय [8]जज्ञे यस्य वीर्यं प्रथमस्यानुबुद्धम्[9] ।
येनोद्यतो वज्रोऽभ्यायताहिं स नो मुञ्चत्वंहसः ॥ ६ ॥

यः । प्रथमः । कर्मऽकृत्याय । जज्ञे । यस्य । वीर्यम् । प्रथमस्य । अनुऽबुद्धम् ।
येन । उत्ऽयतः । वज्रः । अभिऽआयत । अहिम् । सः । नः । मुञ्चतु । अंहसः ॥ ६ ॥

१. यस्मिन् ऋ १०,९१,१४. २. अश्वास ऋ. ३. यस्मिन् पै ४,३९,४. ४. प्रवर्तते पै. ५. इषुवन्तं पै ४,३९,५. ६. जुष्टिम् P². ७. उत्तमः पै ४,३९,६. ८. युजे A,B^h,D,K,K^m,R,S^m,P,P²J,V. ९. °नुबद्धम् B,Bp,V.

य इन्द्रः प्रथमः मुख्यः कर्मकृत्याय कर्मणां ज्योतिष्टोमादीनां करणाय अनुष्ठानाय जज्ञे जातवान्। यस्य इन्द्रस्य प्रथमस्य मुख्यस्य वीर्यम् वीरकर्म वृत्रहननादिकम् 'अनुबद्धम् परस्परं संततम्। श्रूयते हि—'इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री। अहन्नहिम् अन्वपस्ततर्द प्र वक्षणा अभिनत् पर्वतानाम्' (ऋ १, ३२,१) इत्यादि। येन इन्द्रेण उद्यतः उद्धृतो वज्रः अहिम् वृत्रम् अभ्यायत अभितः सर्वतः अहिंसीत्। आङ्पूर्वाद् यमेर्लुङि च्लेः सिच्। 'यमो गन्धने' (पा १,२,१५) इति तस्य कित्वाद् 'अनुदात्तोपदेश' (पा ६,४,३७) इत्यादिना अनुनासिकलोपः। 'ह्रस्वादङ्गात्' (पा ८,२,२७) इति सिज्लोपः। स नः इत्यादि गतम्।

यः [1]सं॒ग्रामा॒न् [2]नय॑ति॒ सं [3]यु॒धे व॒शी यः पु॒ष्टानि॑ संसृ॒जति॑ [4]द्व॒यानि॑।
स्तौमीन्द्रं॑ नाथि॒तो जो॑हवीमि॒ स नो॑ मुञ्च॒त्वंह॑सः ॥ ७ ॥

यः। स॒म्ऽग्रा॒मान्। नय॑ति। सम्। यु॒धे। व॒शी। यः। पु॒ष्टानि॑। स॒म्ऽसृ॒जति॑। द्व॒यानि॑। स्तौमि॑। इन्द्र॑म्। ना॒थि॒तः। जो॒ह॒वी॒मि॒। सः। नः॒। मु॒ञ्च॒तु॒। अंह॑सः ॥ ७ ॥

वशी स्वतन्त्रो य इन्द्रः युधे योधनाय संप्रहाराय 'संग्रामम युद्धं सं नयति सम्यक् प्रापयति। यद्वा युधे योधनाय वशी स्वतन्त्रः। योधयितुं कुशल इत्यर्थः। तथा य इन्द्रः पुष्टानि समृद्धानि द्वयानि स्त्रीपुंसात्मकानि मिथुनानि संसृजति परस्परं संसृष्टानि प्रजननसमर्थानि करोति। तम् इन्द्रं स्तौमि। नाथितो जोहवीमि इत्यादि व्याख्यातम्।

इति चतुर्थं सूक्तम्।

'वायोः सवितुः' इत्यस्य सूक्तस्य 'अग्नेर्मन्वे' (२३) इति सूक्तेन सह उक्तो विनियोगः।

तथा 'वायव्यां वातवात्यायाम्' (शाक १७,४) इत्यादिविहितायां शान्तौ 'वायोः सवितुः' इत्येतत् सूक्तम् आवपनीयम्। तद् उक्तं शान्तिकल्पे—"'वायोः सवितुः' इति वायव्यायाम्" (शाक १८,६) इति।

तत्र मृगारेष्टौ 'वायोसावित्र आगोमुगभ्यां चरुः' (तै ७,५,२२,१) इति विहितस्य हविषो वायुसवितारौ देवता। तयोः स्तावकम् 'वायोः सवितुः' इति सूक्तम्।

वा॒योः स॑वि॒तुर्वि॒दथा॑नि मन्महे॒ यावा॑त्म॒न्वद् [5]वि॒शथो॒ यौ च॒ [6]रक्ष॑थः।
यौ [7]विश्व॑स्य परि॒भू [8]ब॑भू॒वथु॒स्तौ[10] नो॑ मुञ्च॒तमंह॑सः[11] ॥ १ ॥

१. वैद्यु. मंपा. द्र. २. संग्रामं K,V, सा. तै ४,७,१५,२ मै ३,१६,५. ३. जयति काठ २२,१५ ४. युधा काठ. ५. त्रयाणि तै. मै. काठ. ६. बिभृतो तै ४,७,१५,३ मै.; बिभृथो काठ. ७. रक्षतः तै. मै. ८. विश्वस्याधिपा काठ. ९. बभूवतुस् तै. मै. १०. ता मै. ११. °तमागसः तै. मै. काठ.

वायोः। सवितुः। विदथानि। मन्महे। यौ। आत्मन्ऽवत्। विशथः। यौ। च। रक्षथः।
यौ। विश्वस्य। परिभू इति परिऽभू। बभूवथुः। तौ। नः। मुञ्चतम्। अंहसः ॥ १ ॥

वायोः जगदाधारभूतस्य वातस्य सवितुः सर्वप्रेरकस्य च देवस्य विदथानि वेदनानि स्तुत्या गुणविषयज्ञानानि। यद्वा विदथ इति यज्ञनाम। विदथानि वेदितव्यानि श्रुतिविहितकर्माणि मन्महे जानीमहे। विद ज्ञाने इत्यस्माद् औणादिकः अथप्रत्ययः। हे वायुसवितारौ यौ युवाम् आत्मन्वत् सात्मकं स्थावरजङ्गमात्मकं जगद् विशथः प्रविशथः। वायोस्तावत् प्राणात्मना प्रवेशः श्रुतिसिद्धः। 'वायुः प्राणो भूत्वा नासिके प्राविशत्' ( ऐआ २,४,२ ) इति। सविता च प्रेरकत्वेन अन्तर्यामितया 'सर्वं जगद्' अनुप्रविष्टः। 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः' ( बृउ ३,७,३ ) इत्याद्यन्तर्यामिब्राह्मणात्। आत्मन्वत् इति। आत्मन्शब्दाद् मतुप्। 'मादुपधायाः'° ( पा ८,२,९ ) इति वत्वम्। 'अनो नुट्' ( पा ८,२,१६ ) इति नुडागमः। प्रवेशानन्तरं यौ च युवां रक्षथः तज्जगत् पालयथः। तथा यौ युवां विश्वस्य कृत्स्नस्य जगतः [२]परिभू। परिपूर्वो भवतिः परिग्रहार्थे वर्तते। परिग्रहीतारौ बभूवथुः भवथः। परिपूर्वाद् भवतेः क्विप्प्रत्ययः। 'सुपां सुलुक्°' ( पा ७,१,३९ ) इति पूर्वसवर्णदीर्घः। हे वायुसवितारौ तौ युवां नः अस्मान् अंहसः पापाद् मुञ्चतम्। मुच्लृ मोक्षणे। 'शे मुचादीनाम्' ( पा ७,१,५९ ) इति नुम्।

ययोः संख्याता [३]वरिमा [४]पार्थिवानि याभ्यां रजो [५]युपितमन्तरिक्षे।
ययोः प्रायं नान्वानशे कश्चन तौ नो मुञ्चतमंहसः ॥ २ ॥

ययोः। सम्ऽख्याता। वरिमा। पार्थिवानि। याभ्याम्। रजः। युपितम्। अन्तरिक्षे।
ययोः। [६]प्रऽअयम्। न। अनुऽआनशे। कः। चन। तौ। नः। मुञ्चतम्। अंहसः ॥ २ ॥

ययोः देवयोः पार्थिवानि पृथिव्यां भवानि वरिमा उरुत्वानि महत्त्वानि संख्याता संख्यातानि जनैः सम्यक् परिगणितानि प्रख्यातानि दृश्यन्ते। पार्थिवानि। 'पृथिव्या ञाञौ' ( पावा ४,१,८५ ) इति प्राग्दीव्यतीयः अञ्प्रत्ययः। वरिमेति। उरुशब्दाद् इमनिचि 'प्रियस्थिर' ( पा ६,४,१५७ ) इत्यादिना वरादेशः। 'शेश्छन्दसि बहुलम्' ( पा ६.१,७० ) इति शेर्लोपः। याभ्यां वायुसवितृभ्याम् अन्तरिक्षे आकाशे रजः। उदकनामैतत्। उक्तं हि यास्केन—'रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते' ( नि ४,१९ ) इति। तद् रजःशब्दवाच्यं वृष्टिकारणम् उदकं युपितम् मूर्छितं सत् धार्यते। सवितृकिरणैर्वायुना च खलु वर्षतौ विमोक्तुम्

१. सर्वंज° S', Kd. २. परिभूः S', Kd. ३. वरिमाणि पै ३,३४,२.
४. पार्थिवा पै. ५. गुष्पितम्? पै. ६. प्रऽआयम् P[२],J,K; प्रऽअयन् Wh.

आकाशो बहलतरम् उदकं भ्रियत इति श्रुतिस्मृतिप्रसिद्धिः । युपितम् इति । युपु विमोहने । अस्मात् कर्मणि निष्ठा । कश्चन कोपि अन्यो देवः ययोः वायुसवित्रोः प्रायम् प्रकृष्टगमनं नान्वानशे नानुप्राप्नोति । अनुगन्तुं समर्थो न भवतीत्यर्थः । अशू व्याप्तौ । छान्दसो लिट् । 'अश्नोतेश्च' (पा ७,४,७२) इति नुडागमः । तौ नो मुञ्चतम् इत्यादि पूर्ववत् ।

तवं व्रते नि विशन्ते जनासस्त्वय्युदिते प्रेरते चित्रभानो ।
युवं वायो सविता च भुवनानि [1]रक्षथस्तौ नो मुञ्चतमंहसः ॥ ३ ॥

तव॑ । व्रते । नि । विशन्ते । जनासः । त्वयि॑ । उत्ऽइ॑ते । प्र । ईरते । चित्रभानो इति॑ चित्रऽभानो । युवम् । वायो इति॑ । सविता । च । भुव॑नानि । [2]रक्षथः । तौ । नः । मुञ्चतम् । अंहसः ॥ ३ ॥

हे सवितः तव व्रते त्वत्संबन्धिनि कर्मणि परिचरणलक्षणे जनासः जनाः प्राणिनः नि विशन्ते नियमेन वर्तन्ते । 'नेर्विशः' (पा १,३,१७) इति आत्मनेपदम् । हे चित्रभानो विचित्रदीप्ते त्वयि उदिते उदयं प्राप्ते सति प्रेरते सर्वे जनाः स्वस्वकार्यकरणाय प्रवर्तन्ते । ईर गतौ । अदादित्वात् शपो लुक् । हे वायो त्वं सविता च युवम् युवां भुवनानि भूतजातानि [3]रक्षतः पालयथः । तौ नो मुञ्चतम् इत्यादि गतम् ।

अपेतो वायो सविता च दुष्कृतमप [4]रक्षांसि [5]शिमिदां च सेधतम् ।
सं [6]ह्यू३र्जया [7]सृजथः सं बलेन तौ नो मुञ्चतमंहसः ॥ ४ ॥

अप॑ । इतः । वायो इति॑ । सविता । च । दुःऽकृतम् । अप॑ । रक्षांसि । [8]शिमिदाम् । च । सेधतम् । सम् । हि । ऊर्जया । [9]सृजथः । सम् । बलेन । तौ । नः । मुञ्चतम् । अंहसः ॥ ४ ॥

हे वायो त्वं च सविता च दुष्कृतम् अस्मदीयं पापम् [3]अपेतः अपगमयथः । तथा रक्षांसि उपद्रवकारिणो राक्षसान् [3]समिधाम् संदीप्तां कृत्यां च अप सेधतम् अपगमयतम् । अपि च ऊर्जया हि ऊर्जयति बलयतीति ऊर्जा अन्नरसजनिता पुष्टिः । ऊर्ज बलप्राणनयोः । अस्मात् पचाद्यच् । तथा अस्मान् सं सृजथः बलेन तज्जनितेन सं सृजथः । गतम् अन्यत् ।

1. रक्षतुस्तौ K,V, सा. यच्छतस्तौ पै ४,३४,३.　　2. रक्षतः K.　　3. वैतु. मंपा. द्र.　　4. यक्ष्मं पै ४,३४,६　　5. समिदां K,Km,V,S पै.; समिधाम् सा.
6. ह्यू३र्जया A,B,K,Km,V; ह्यूर्जया Bh,R,D,Sm.　　7. सृजथ A,B,Bp,D,Km,R,Sm,V.
8. समिदाम् K.　　9. सृजथं P,P2,J.

रयिं मे पोषं सवितोत वायुस्तनू दक्षमा सुवतां सुशेवम् ।
अयक्ष्मतातिं मह इह धत्तं तौ नो मुञ्चतमंहसः ॥ ५ ॥

रयिम् । मे । पोषम् । सविता । उत । वायुः । तनू इति । दक्षम् । आ । सुवताम् । सुऽशेवम् ।
अयक्ष्मऽतातिम् । महः । इह । धत्तम् । तौ । नः । मुञ्चतम् । अंहसः ॥ ५ ॥

उतशब्दः चार्थे । सविता वायुश्च मे मह्यं रयिम् धनं पोषम् पुष्टिं समृद्धिं च आ सुवताम् प्रेरयताम् । प्रयच्छताम् इत्यर्थः । षू प्रेरणे । तुदादित्वात् शः । तथा तनू तन्वाम् । 'सुपां सुलुक्'' (पा ७,१,३९) इति सप्तम्या लुक् । 'ईदूतौ च सप्तम्यर्थे' (पा १,१,१९) इति प्रगृह्यसंज्ञा । तन्वाम् अस्मदीये शरीरे सुशेवम् सुसुखं दक्षम् बलम् आ सुवताम् आ समन्तात् प्रेरयताम् । तथा हे वायुसवितारौ । अयक्ष्मतातिम् । अयक्ष्मशब्दात् स्वार्थिकस्तातिल्प्रत्ययः । अयक्ष्मम् अरोगं महः तेजः इह अस्मिन् यजमाने धत्तम् धारयतम् । गतमन्यत् ।

प्र सुमतिं सवितर्वाय ऊतये महस्वन्तं मत्सरं मादयाथः ।
अर्वाग् वामस्य प्रवतो नि यच्छतं तौ नो मुञ्चतमंहसः ॥ ६ ॥

प्र । सुऽमतिम् । सवितः । वायो इति । ऊतये । महस्वन्तम् । मत्सरम् । मादयाथः ।
अर्वाक् । वामस्य । प्रऽवतः । नि । यच्छतम् । तौ । नः । मुञ्चतम् । अंहसः ॥ ६ ॥

हे सवितः हे वायो ऊतये रक्षार्थं सुमतिम् शोभनाम् अनुग्रहात्मिकां बुद्धिं युवां प्र यच्छतम् । ऊतय इति 'ऊतियूति' (पा ३,३,९७) इत्यादिना अवतेः क्तिन्नन्त उदात्तो निपातितः । महस्वन्तम् दीप्तिमन्तं मत्सरम् मदकरं सोमं मादयाथः पीत्वा माद्यथः । मत्सरम् इति । मदेः औणादिकः सरप्रत्ययः । वामस्य वननीयस्य प्रवतः प्रकर्षवतो धनस्य अर्वाक् अस्मदभिमुखं नि यच्छतम् नियमयतम् । वामस्येति । क्रियाग्रहणं कर्तव्यम्' ( पावा १,४,३२) इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । प्रवत इति । उपसर्गाच्छन्दसि धात्वर्थे' ( पा ५,१, ११८ ) इति वतिः । गतम् अन्यत् ।

उप श्रेष्ठा न आशिषो देवयोर्धामन्नस्थिरन् ।
स्तौमि देवं सवितारं च वायुं तौ नो मुञ्चतमंहसः ॥ ७ ॥

उप । श्रेष्ठाः । नः । आऽशिषः । देवयोः । धामन् । अस्थिरन् ।
स्तौमि । देवम् । सवितारम् । च । वायुम् । तौ । नः । मुञ्चतम् । अंहसः ॥ ७ ॥

१. सुशेवौ पै ४,३४,५. २. यावयक्ष्मतां पै. ३. महो अस्मासु पै. ४. मादयेताम् पै ४,३४,४. ५. प्रवता पै. ६. यच्छतम् पै. ७. आशीरो मै ३,१६,५. ८. ०धर्मा अस्थि° मै., धर्मे अस्थि° तै. ४,७,१५,३ काठ २२,१५.

देवयोः वायुसवित्रोः धामन् धामनि तेजसि स्थाने वा नः अस्माकं श्रेष्ठाः प्रशस्ता आशिषः फलप्रार्थना उपास्थिरन् उपस्थिता वर्तन्ते । अस्थिरन्निति । तिष्ठतेर्लुङि 'अकर्मकाच्च' ( पा १,३,२६ ) इति आत्मनेपदम् । 'स्थाघ्वोरिच्च' ( पा १,२,१७ ) इति ह्रस्वकित्त्वे । व्यत्ययेन झस्य रनादेशः । तथाविधं देवम् दानादिगुणयुक्तं सवितारं वायुं च स्तौमि प्रशंसामि । 'उतो वृद्धिर्लुकि हलि' ( पा ७,३,८९ ) इति वृद्धिः । अन्यद् व्याख्यातम् ।

इति पञ्चमं सूक्तम् ।

इति चतुर्थकाण्डे पञ्चमोनुवाकः ।

षष्ठेऽनुवाके पञ्च सूक्तानि । तत्र 'मन्वे वाम्' इति आद्यस्य सूक्तस्य पूर्ववद् विनियोगः ।

तथा सोमयागे 'मन्वे वाम्' इति औदुम्बर्या[1] आज्यहोमस्य अनुमन्त्रणं कुर्यात् । उक्तं वैताने " 'मन्वे वां द्यावापृथिवी' इत्यौदुम्बर्या [2]आज्यहोमम्" ( वैताश्रौ १५,१३ ) इति ।

[3]मन्वे वां द्यावापृथिवी [4]सुभोजसौ सचेतसौ ये [5]अप्रथेथाममिता योजनानि [6] ।
प्रतिष्ठे ह्यभवतं वसूनां ते नो मुञ्चतमंहसः ॥ १ ॥

मन्वे । वाम् । द्यावापृथिवी इति । सुऽभोजसौ । सऽचेतसौ । ये इति । अप्रथेथाम् । अमिता । योजनानि । प्रतिस्थे इति [6]प्रतिऽस्थे । हि । अभवतम् । वसूनाम् । ते इति । नः । मुञ्चतम् । अंहसः ॥ १ ॥

हे द्यावापृथिवी द्यावापृथिव्यौ [7]सुभोजसौ सुष्ठु भोजयित्र्यौ शोभनभोगे वा सचेतसौ समानचित्ते वाम् युवां मन्वे स्तौमि । यद्वा वां युवयोर्माहात्म्यं मन्वे अहं जानामि । किं पुनस्तद् इत्याह ये [8]अप्रथेताम् इत्यादिना । ये द्यावापृथिव्यौ अमिता अमितानि अपरिमितानि योजनानि । योजनशब्दः अध्वपरिमाणवाची । अपरिमितान् अध्वनः अप्रथेताम् प्रथिते विस्तीर्णे [8]अभवताम् । कृत्स्नदेशव्याप्त्या सर्वगते भवत इत्यर्थः । हि यस्माद् युवां वसूनाम निवसतां देवमनुष्यादीनाम् निवासहेतूनां धनानां वा प्रतिष्ठे प्रकृष्टावस्थित्यधिकरणे अभवतम् भवथः । तस्मात् सर्वाधारत्वेन युवयोः सर्वगतत्वम् । प्रतिपूर्वात् तिष्ठतेः 'आतश्चोपसर्गे' ( पा ३,३,१०६ ) इति अधिकरणे अङ् । 'उपसर्गात् सुनोति' (पा ८,३,६५) इति षत्वम् । ते युवां नः अस्मान् अंहसः पापाद् मुञ्चतम् ।

१. °र्याम् S', Kd. २. अग्निहोमम् RG.; °होमः S', Kd. ३. 'मन्वे'[2] कौ १,६२२. ४. सुभोजसो[3] कौ. ५. अप्रथेताम° K, सा.; °मितमभियोजनम् कौ. ६. प्रतिऽस्थे P,J. ७. वैसु. मंपा. द्र. ८. भवेताम् S', Kd.

प्रतिष्ठे [1]ह्यभवतुं वसूनां [2]प्रवृद्धे देवी सुभगे उरूची ।
द्यावापृथिवी भवतं मे स्योने ते नो मुञ्चतमंहसः ॥ २ ॥

प्रतिस्थे इति [3]प्रतिऽस्थे । हि । अभवतम् । वसूनाम् । प्रवृद्धे इति प्रऽवृद्धे । देवी इति । सुभगे इति सुऽभगे । उरूची इति । द्यावापृथिवी इति । भवतम् । मे । स्योने इति । ते इति । नः । मुञ्चतम् । अंहसः ॥ २ ॥

प्रतिष्ठे ह्यभवतं वसूनाम् इति पूर्ववत् । यस्मात् सर्वप्राणिनाम् अधिष्ठानभूत द्यावापृथिव्यौ तस्मात् [4]प्रविद्धे प्रकर्षेण मणिसूत्रन्यायेन सूत्रवत् सर्वजगद्नुप्रविद्धे । अनुप्रविष्टे इत्यर्थः । देवी देव्यौ दानादिगुणयुक्ते सुभगे शोभनधने सौभाग्ययुक्ते वा । 'आद्युदात्तं द्व्यच् छन्दसि' ( पा ६,२,११९ ) इति 'उत्तरपदाद्युदात्तत्वम् । उरूची उरु बहुलम् अञ्चन्त्यौ व्याप्नुवत्यौ । उरुशब्दोपपदाद् अञ्चतेः 'ऋत्विग्' ( पा ३,२,५९ ) इत्यादिना क्विन् । 'अनिदिताम्'' ( पा ६,४,२४ ) इति नलोपः । 'अचः' ( पा ६,४,१३८ ) इति अकारलोपे 'चौ' ( पा ६,३,१३८ ) इति दीर्घत्वम् । 'अञ्चतेश्चोपसंख्यानम्' ( पावा ४,१,६ ) इति ङीप् । 'सुपां सुलुक्'' ( पा ७,१,३९ ) इति पूर्वसवर्णदीर्घः । हे द्यावापृथिवी द्यावापृथिव्यौ इत्थंमहानुभावे युवां मे मम स्योने । सुखनामैतत् । सुखहेतू भवतम् । अन्यद् गतम् ।

असन्तापे [5]सुतपसौ [6]हुवेऽहमुर्वी [7]गम्भीरे कविभिर्नमस्ये ।
द्यावापृथिवी भवतं मे स्योने ते नो मुञ्चतमंहसः ॥ ३ ॥

असंतापे [8]इत्यसम्ऽतापे । सुऽतपसौ । हुवे । अहम् । उर्वी इति । गम्भीरे इति । कविऽभिः । नमस्ये३ इति । द्यावापृथिवी इति । ०० ॥ ३ ॥

असंतापे संतापरहिते [9]सर्वप्राणिनां संतापस्य हर्त्र्यौ सुतपसौ उर्वी उर्व्यौ विस्तीर्णे गम्भीरे गाम्भीर्ययुक्ते इदम् ईदृग् इति परिच्छेदरहिते कविभिः क्रान्तदर्शिभिर्महर्षिभिः नमस्ये नमस्कार्ये ईदृश्यौ युवाम् अहं हुवे रक्षणार्थम् आह्वयामि । 'बहुलं छन्दसि' ( पा ६,१,३४ ) इति ह्वयतेः संप्रसारणम् । उत्तरोऽर्धर्चो व्याख्यातः ।

ये अमृतं बिभृथो ये हवींषि ये स्रोत्या बिभृथो ये मनुष्यान् ।
द्यावापृथिवी भवतं मे स्योने ते नो मुञ्चतमंहसः ॥ ४ ॥

१. ह बभूवथुर् पै ४,३६,२. २. प्रविद्धे K,V, सा. पै. ३. प्रतिऽस्थे P,J.
४. धेनु. मंपा. द्र. ५. सुतपसा पै ४,३६,६. ६. हुवे वामुर्वी पै. ७. गभीरे पै.
८. इत्यसम्ऽतापे P[2],Cp.; इत्यसम्ऽतापे P,J. ९. सर्वसर्वप्राणिनां S', Kd.

ये इति॑ । अ॒मृत॑म् । बि॒भृ॒थः । ये इति॑ । ह॒वींषि॑ । ये इति॑ । स्रो॒त्याः । बि॒भृ॒थः । ये इति॑ । म॒नु॒ष्या॑न् ।
द्यावा॑पृथि॒वी इति॑ । भव॑तम् । मे॒ । स्यो॒ने इति॑ । ते इति॑ । न॒ः । मु॒ञ्च॒त॒म् । अंह॑सः ॥ ४ ॥

हे द्यावापृथिव्यौ ये युवाम् अमृतम् अमरणं सर्वप्राणिनाम् अमृतत्वं बिभृथः धारयथः । 'नञो जरमरमित्रमृताः' (पा ६,२,११६) इति उत्तरपदाद्युदात्तत्वम् । बिभृथ इति । 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्वम् । ये च युवां हवींषि चरुपुरोडाशादीनि धारयथः । ये च स्रोत्याः स्रोतस्विनीर्नदीः बिभृथः धारयथः । 'स्रोतसो विभाषा ड्यड्ड्यौ' (पा ४,४,११३) इति ड्यप्रत्ययः । ये च युवां मनुष्यान् धारयथः । गतम् अन्यत् ।

[1]ये उ॒स्रिया॒ बिभृ॒थो ये वन॒स्पती॒न् ययो॑र्वां॒ विश्वा॒ भुव॑नान्य॒न्तः ।
द्यावा॑पृथि॒वी भव॑तं मे स्यो॒ने ते नो॑ मुञ्चत॒मंह॑सः ॥ ५ ॥

ये इति॑ । उ॒स्रिया॑ः । बि॒भृ॒थः । ये इति॑ । वन॒स्पती॑न् । ययो॑ः । वा॒म् । विश्वा॑ । भुव॑नानि । अ॒न्तः ।
द्यावा॑पृथि॒वी इति॑ । भव॑तम् । मे॒ । स्यो॒ने इति॑ । ते इति॑ । न॒ः । मु॒ञ्च॒त॒म् । अंह॑सः ॥ ५ ॥

हे द्यावापृथिव्यौ ये युवाम् उस्रियाः । गोनामैतत् । गाः सर्वा बिभृथः धारयथः । [2]ये च[2] युवां वनस्पतीन् वृक्षान् सर्वान् बिभृथः । वनस्पतिशब्दः पारस्करादिः । 'उभे वनस्पत्यादिषु' (पा ६,२,१४०) इति उभयपदप्रकृतिस्वरत्वम् । ययोर्वाम् युवयोः अन्तः मध्ये विश्वा विश्वानि उक्तानुक्तानि सर्वाणि भुवनानि भूतजातानि ते युवां स्योने मे भवतम् इति संबन्धः । गतमन्यत् ।

ये [3]की॒लाले॑न त॒र्पय॑थो ये घृ॒तेन॒ याभ्या॑मृ॒ते न किं च॒न शक्नु॑वन्ति ।
द्यावा॑पृथि॒वी भव॑तं मे स्यो॒ने ते नो॑ मुञ्चत॒मंह॑सः ॥ ६ ॥

ये इति॑ । की॒लाले॑न । त॒र्पय॑थः । ये इति॑ । घृ॒तेन॑ । याभ्या॑म् । ऋ॒ते । न । किम् । च॒न । [4]शक्नु॑वन्ति ।
द्यावा॑पृथि॒वी इति॑ । भव॑तम् । मे॒ । स्यो॒ने इति॑ । ते इति॑ । न॒ः । मु॒ञ्च॒त॒म् । अंह॑सः ॥ ६ ॥

हे द्यावापृथिव्यौ ये युवां कीलालेन अन्नेन तर्पयथः कृत्स्नं जगत् पोषयथः । ये च युवां घृतेन क्षरणशीलेन उदकेन तर्पयथः । याभ्या द्यावापृथिवीभ्याम् ऋते विना किं चन किमपि कार्यं कर्तुं न शक्नुवन्ति सर्वे जनाः । याभ्याम् ऋत इति । 'अन्यारादितरर्ते' (पा २,३,२९) इति पञ्चमी । अन्यत् पूर्ववत् ।

१. च A,Bh,D,R,Sm,V,H,I २. येन S', Kd. ३. कीलालम् पै ४,३६,५. ४. शुक्रुवंति P,P²,J,K,V,Cp,Wh.

[1]यन्मेदमभिशोचति येनयेन वा कृतं [2]पौरुषेयान्न दैवात् ।
स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहसः ॥ ७ ॥

यत् । मा । इदम् । अभिऽशोचति । येनऽयेन । वा । कृतम् । पौरुषेयात् । न । दैवात् ।
स्तौमि । द्यावापृथिवी इति । नाथितः । जोहवीमि । ते इति । नः । मुञ्चतम् । अंहसः ॥ ७ ॥

यद् इदम् पापं तत्फलं दुःखं वा मा माम् अभिशोचति अभितः सर्वतो दहति । येनयेन वा पापेन निमित्तभूतेन पुनरन्यत् पापं कृतम् । येनयेनेत्युक्तम् अर्थं विवृणोति पौरुषेयान्नेति । नशब्द उपमार्थः । पौरुषेयात् पुरुषप्रेरितात् पापादिव दैवात् देवकृतान्निमित्तात् यत् पापं दुःखं वा उत्पन्नं माम् अभिशोचतीति संबन्धः । पौरुषेयात् इति । 'पुरुषाद् वधविकार°' (पावा ५,१,१०) इति ढञ् प्रत्ययः । दैवात् इति । 'देवाद् यञञौ' (पावा ४,१,८५) इति अञ् । तस्य सर्वस्य पापस्य तत्फलभूतदुःखस्य च अपनोदनार्थं द्यावापृथिवी द्यावापृथिव्यौ स्तौमि प्रशंसामि । नाथितः इत्यादि व्याख्यातम् ।

इति प्रथमं सूक्तम् ।

'मरुतां मन्वे' इति सूक्तस्य पूर्ववद् गणप्रयुक्तो विनियोगः । 'मारुद्गणीं बलकामस्य' (शाक १७,५) इति विहितायां शान्तौ 'मरुताम्' इत्येतत् सूक्तम् आवपनीयम् । तद् उक्तं शान्तिकल्पे — " 'मरुतां मन्वे' (अ ४,२७), 'प्रजापते न त्वद् एतान्यन्यः' (अ ७,८५,३) इति मारुद्गण्याम्" ( शाक १८,७ ) इति ।

अत्र 'तिग्मम् अनीकम्' (७) इत्यनया साकमेधपर्वणि गृहमेधयागम् अनुमन्त्रयेत । उक्तं वैताने — "सायं गृहमेधिनां 'तिग्मम् अनीकम्' " ( वैताश्रौ ९,२ ) इति ।

मरुतां मन्वे अधि [3]मे ब्रुवन्तु [4]प्रेमं वाजं †वाजसाते ‡अवन्तु [5]।
[6]आशूनिव [7]सुयमानह्व ऊतये ते नो मुञ्चन्त्वंहसः [8] ॥ १ ॥

मरुताम् । मन्वे । अधि । मे । ब्रुवन्तु । प्र । इमम् । वाजम् । वाजऽसाते । अवन्तु ।
आशून्ऽइव । सुऽयमान् । अह्वे । ऊतये । ते । नः । मुञ्चन्तु । अंहसः ॥ १ ॥

मरुताम् एकोनपञ्चाशत्संख्याकानां गणदेवानां मन्वे माहात्म्यं जानामि । ते मरुतो मे मह्यम् अधि ब्रुवन्तु अस्मदीयोऽयम् अनुग्राह्य इति पक्षपातेन वदन्तु ।

१. येन मे° पै ४,३६,७. २. पौरुषेयेण दैव्येन तै ४,७,१५,५ मै ३,१६,५; पौरुषेयं न दैव्यम् पै. ३. नो तै. मै. काठ. २२,१५. ४. प्रेमां वाचं विश्वामवन्तु विश्वे काठ २२,१५ तै. मै. † वाजसाता पै ४,३५,१ ‡वन्तु B. ५. अंशूनिव K,V सा. ६. सूय° $P^3$,M,W,E,O. ७. हुवे तै. मै. काठ. ८. °स्त्वेनसः तै. मै. काठ.

तथा वाजसाते वाजस्य अन्नस्य साते लाभे निमित्तभूते सति इमं वाजम् अन्नं प्रावन्तु प्रकर्षेण अस्मदर्थं रक्षन्तु । यद्वा वाज इति बलनाम । वाजम् इमम् आत्मीयं बलं वाजसाते । वाजसातिरिति संग्रामनाम । 'अयं वाजं जयतु वाजसातौ' ( तै १,३,४,१ तैब्रा २,४,६,१२ ) इति हि निगमः । वाजसातशब्देनापि सोर्थोभिधीयते । वाजसाते संग्रामे प्रावन्तु प्ररक्षन्तु । अहम् [1]अंशूनिव सुयमान् । अंशवः अश्वप्रग्रहा रज्जवः । तानिव सुयमान् सुष्ठु यन्तव्यान् सेव्यान् मरुतः ऊतये रक्षायै अह्व आह्वयामि । यद्वा अंशुशब्देन तत्संबन्धिनः अश्वा विवक्षिताः । सुशिक्षितान् अश्वानिव सुयमान् । भक्त-पराधीनतया वशवर्तिन इत्यर्थः । अह्व इति । 'छन्दसि लुङ्लङ्लिटः' ( पा ३,४,६ ) इति लुङ् । 'लिपिसिचिह्वश्च' ( पा ३,१,५३ ) इति च्लेः अङ् आदेशः । ते मरुतो नः अस्मान् अंहसः पापाद् मुञ्चन्तु ।

उत्समक्षितं व्यचन्ति ये सदा [2]य आसिञ्चन्ति रसमोषधीषु ।
पुरो दधे मरुतः [3]पृश्निमातॄंस्ते नो मुञ्चन्त्वंहसः ॥ २ ॥

उत्सम् । अक्षितम् । विऽअचन्ति । ये । सदा । ये । आऽसिञ्चन्ति । रसम् । ओषधीषु ।
पुरः । दधे । मरुतः । पृश्निऽमातॄन् । ते । नः । मुञ्चन्तु । अंहसः ॥ २ ॥

ये मरुतः सदा सर्वदा । 'सर्वस्य सोऽन्यतरस्यां दि' ( पा ५,३,६ ) इति सभावः । उत्सम् वर्षधारायुक्तं मेघम् अक्षितम् क्षयरहितम् । '°अण्यदर्थे' ( पा ६,४,६० ) इति पर्युदस्तत्वात् क्षियो दीर्घाभावः । प्रवृद्धं व्यचन्ति अन्तरिक्षे विस्तारयन्ति । तदनन्तरं ये मरुतः ओषधीषु व्रीहियवाद्यासु तरुगुल्मादिषु च रसम् वृष्ट्युदकलक्षणम् आसिञ्चन्ति आ समन्तात् क्षारयन्ति । षिच क्षरणे । 'शे मुचादीनाम्' ( पा ७,१,५९ ) इति नुम् । तान् मरुतः पृश्निमातॄन् । पृश्निर्माध्यमिका वाक् माता जननी येषां ते पृश्निमातरः । 'ऋतश्छन्दसि' ( पा ५,४,१५८ ) इति कपः प्रतिषेधः । 'पृश्न्यै पयसो मरुतो जाताः' ( तै २,२,११,४ ) इति हि तैत्तिरीयकम् । तथाविधान् मरुतः पुरो दधे पुरस्ताद् धारयामि । भजामीत्यर्थः । गतम् अन्यत् ।

पयो धेनूनां रसमोषधीनां जवमर्वतां कवयो य इन्वथ ।
[4]शग्मा [5]भवन्तु मरुतो [6]नः स्योनास्ते नो मुञ्चन्त्वंहसः ॥ ३ ॥

पयः । धेनूनाम् । रसम् । ओषधीनाम् । जवम् । अर्वताम् । कवयः । ये । इन्वथ ।
शग्माः । भवन्तु । मरुतः । नः । स्योनाः । ते । नः । मुञ्चन्तु । अंहसः ॥ ३ ॥

१. वैतु. मंरा. द्र. २. ये वा सिञ्चन्तु पै ४,३५,२. ३. °मातृस्ते P, M, W, I, O.
४. शुक्मा V, सा. (यनि. अपि V). ५. भवन्ति पै. ६. न Wh.

हे मरुतः ये यूयं [1]कवयः क्रान्तदर्शनाः सन्तः धेनूनाम् गवां पयः क्षीरम् इन्वथ सर्वाङ्गेषु व्यापयथ । इवि व्याप्तौ । इदित्वान्नुम् । ओषधीनां रसम् द्रवं सर्वावयवेषु व्यापयथ । अर्वताम् अश्वानां जवम् वेगं ये व्यापयथ । शक्माः शक्ताः सर्वकार्यसमर्थास्ते मरुतः नः अस्माकं स्योनाः सुखकरा भवन्तु । गतमन्यत् ।

अपः स॒मु॒द्राद् [2]दिव॒मुद् व॑हन्ति दि॒वस्पृ॑थि॒वीम॒भि ये सृ॒जन्ति॑ ।
ये अ॒द्भिरीशा॑ना म॒रुत॒श्चर॑न्ति॒ ते नो॑ मुञ्च॒न्त्वंह॑सः ॥ ४ ॥

अ॒पः । स॒मु॒द्रात् । दिव॑म् । उत् । व॒ह॒न्ति॒ । दि॒वः । पृ॒थि॒वीम् । अ॒भि । ये । सृ॒जन्ति॑ ।
ये । अ॒त्ऽभिः । ईशा॑नाः । म॒रुतः॑ । चर॑न्ति । ते । नः॒ । मु॒ञ्च॒न्तु॒ । अंह॑सः ॥ ४ ॥

ये मरुतः समुद्राद् उदधेः सकाशाद् अपः उदकानि दिवम् अन्तरिक्षं प्रति उद्वहन्ति मेघैः प्रापयन्ति । तदनन्तरं दिवः अन्तरिक्षात् पृथिवीम् अभिलक्ष्य ता अपः सृजन्ति विसृजन्ति । ताभिः अद्भिः ईशानाः ईश्वराः सन्तो ये मरुतः इत्थं चरन्ति । ते नः इत्यादि गतम् । अद्भिरिति । 'अपो भि' ( पा ७,४,४८ ) इति पकारस्य तकारः ।

ये [3]की॒लाले॑न [4]त॒र्पय॑न्ति॒ ये घृ॒तेन॒ ये वा॒ वयो॒ मेद॑सा सं॒सृ॒जन्ति॑ ।
ये अ॒द्भिरीशा॑ना म॒रुतो॑ व॒र्षय॑न्ति॒ ते नो॑ मुञ्च॒न्त्वंह॑सः ॥ ५ ॥

ये । की॒लाले॑न । त॒र्पय॑न्ति । ये । घृ॒तेन॑ । ये । वा॒ । वयः॑ । मेद॑सा । स॒म्ऽसृ॒जन्ति॑ ।
ये । अ॒त्ऽभिः । ईशा॑नाः । म॒रुतः॑ । व॒र्षय॑न्ति । ते । नः॒ । मु॒ञ्च॒न्तु॒ । अंह॑सः ॥ ५ ॥

ये मरुतः कीलालेन अन्नेन वृष्टिद्वारा जनांस्तर्पयन्ति ये च घृतेन उदकेन तर्पयन्ति । ये वा । वाशब्दः चार्थे । ये च मरुतः वयः पक्षिजातं मेदसा तुरीयधातुना संसृजन्ति । मेदस्वि कुर्वन्तीत्यर्थः । यद्वा वयः शरीरपरिणामविशेषः । तत् मेदसा युक्तं कुर्वन्ति । क्षितिपवनसलिलतेजःकारणकात् परिणामविशेषाद्धि पुरुषशरीरस्य मेदस्वित्वं जायते । अतो मरुतां तद्धेतुत्वम् । ये च मरुतः अद्भिः उदकैः मेघस्थैः ईशानाः सन्तो वर्षयन्ति सर्वतो वृष्टिं कुर्वन्ति । ते नः इत्यादि पूर्ववत् ।

यदी॒दिदं म॑रुतो॒ मारु॑तेन॒ यदि॑ देवा॒ दैव्ये॑ने॒दृगार॑ ।
[5]यू॒यमी॑शिध्वे वसव॒स्तस्य॒ निष्कृ॑ति॒स्ते नो॑ मुञ्च॒न्त्वंह॑सः ॥ ६ ॥

१. वैतु. मंपा. द्र. २. वहन्तु कौसू ३,३. ३. कीलालेन् पै ४,३५,५.
४. तर्पयथो अ ४,२६,६. ५. °मीशध्वे K,V,Op., सा.

यदि । इत् । इदम् । मरुतः । मारुतेन । यदि । देवाः । दैव्येन । ईदृक् । आर । यूयम् । ईशिध्वे । वसवः । तस्य । नि ऽकृते. । ते । नः । मुञ्चन्तु । अंहसः ॥ ६ ॥

इदम् अनुभूयमानं मदीयं दुःखं तद्धेतुभूतं पापं वा हे मरुतः मारुतेन। इच्छब्दः अवधारणे। मरुद्विषयेणैवापराधेन ईदृक् एवंरूपं यदि आर प्राप। हे देवाः इन्द्रादयः दैव्येन देवसंबन्धिना अपराधेन यदि एवंरूपं दुःखम् अस्मान् प्राप। आर। ऋ गतौ। अस्मात् लिट्। ईदृक् इति। इदमिव पश्यति 'त्यदादिषु दृशोऽनालोचने कञ् च' (पा ३,२,६०) इति दृशेः क्विन्प्रत्ययः। 'इदंकिमोरीश्की' (पा ६,३,९०) इति इदम ईशादेशः। तस्य दुःखस्य तद्धेतोः पाप्मनो वा निष्कृतेः निष्करणस्य परिहारस्य हे वसवः वासयितारो मरुतः यूयम् ईशिध्वे ईश्वरा भवथ। ईशेर्लेटि अडागमः। गतम् अन्यत्।

तिग्ममनीकं विदितं सहस्वन्मारुतं शर्धः पृतनासूग्रम्।
स्तौमि मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वंहसः ॥ ७ ॥

तिग्मम् । अनीकम् । विदितम् । सहस्वत् । मारुतम् । शर्धः । पृतनासु । उग्रम् । स्तौमि । मरुतः । नाथितः । जोहवीमि । ते । नः । मुञ्चन्तु । अंहसः ॥ ७ ॥

तिग्मम् तीक्ष्णम् अनीकम् सततगणात्मना समूहीभूतं विदितम् प्रख्यातं सहस्वत् बलवत् अभिभवनयुक्तं वा मारुतम् मरुतां संबन्धि शर्धः बलं पृतनासु संग्रामेषु उग्रम् उद्गूर्णं दुःसहं भवति। तान् मरुतः स्तौमि प्रशंसामि। नाथितो जोहवीमीत्यादि व्याख्यातम्।

इति द्वितीयं सूक्तम्।

'भवाशर्वौ मन्वे वाम्' इति सूक्तस्य गणविनियोग उक्तः।

तथा सर्वव्याधिभैषज्यकर्मणि च उदकपूर्णान् सप्त काम्पीलपुटान् प्रत्यृचं संपात्य अभिमन्त्र्य व्याधितम् अवसिञ्चेत्। तद् उक्तं कौशिकेन— "'भवाशर्वौ' इति सप्त काम्पीलपुटान् अपां पूर्णान् संपातवतः कृत्वा दक्षिणेन अवसिच्य पश्चाद् अपविध्यति" (कौसू २८,८) इति।

भवाशर्वौ मन्वे वां तस्य वित्तं ययोर्वामिदं प्रदिशि यद् विरोचते।
यावस्येशाथे द्विपदो यौ चतुष्पदस्तौ नो मुञ्चतमंहसः ॥ १ ॥

१. वैतु. मंपा. द्र. २. तिग्ममायुधं तै ४,७,१५,४ मै ३,१६,५ काठ २२,१५. ३. विततं पै ४,३५,७; वीळितं तै. मै.; ईडितं काठ. ४. दिव्यं तै. मै. काठ. ५. °नाधु जिष्णु तै. मै. काठ. ६. °स्त्वेनसः तै. मै. काठ. ७. उप° S', Kd. ८. वितिष्ठते पै ४,३७,१.

भवाशर्वौ । मन्वे । वाम् । तस्य । वित्तम् । ययोः । वाम् । इदम् । प्रऽदिशि । यत् । विऽरोचते ।
यौ । [1]अस्य । ईशाथे इति । द्विऽपदः । यौ । चतुःऽपदः । तौ । नः । मुञ्चतम् । अंहसः ॥ १ ॥

**भवति उत्पद्यते अस्मात् सर्वं जगद् इति भवः । शृणाति हिनस्ति सर्वम् अन्तकाले इति शर्वः । भवश्च शर्वश्च भवाशर्वौ अष्टमूर्तीनां मध्ये परमेश्वरस्य द्वे मूर्ती** 'भवाय देवाय स्वाहा शर्वाय देवाय स्वाहा' ( आपमं २,१८,१४;१५ ) **इति श्रुत्यन्तरप्रसिद्धे । 'देवताद्वन्द्वे च'** ( पा ६,३,२६ ) **इति आनङ् । हे** भवाशर्वौ वाम् **युवयोर्महत्त्वम् अहं** मन्वे **जानामि** । तस्य वित्तम् । **कर्मणि षष्ठी । तद् वक्ष्यमाणं जानीतम् ।** ययोर्वाम् **युवयोः** प्रदिशि **प्रदेशने प्रशासने** यद् इदं **कृत्स्नं जगद्** विरोचते **प्रकाशते तद् वित्तम् इत्यन्वयः । रुच दीप्तौ ।** अस्य **च** द्विपदः **पादद्वयोपेतस्य प्राणिजातस्य यौ युवाम्** ईशाथे **ईश्वरौ भवथः । ईश ऐश्वर्ये । यौ च युवां** चतुष्पदः **पादचतुष्टयोपेतस्य गवादेः ईशाथे ।** 'अधीगर्थदयेशां कर्मणि' ( पा २,३,५२ ) **इति कर्मणि षष्ठी । द्वौ पादावस्य, चत्वारः पादा अस्येति बहुव्रीहौ** 'संख्यासुपूर्वस्य' ( पा ५,४,१४० ) **इति पादशब्दस्यान्त्यलोपः ।** 'पादः पत्' ( पा ६,४,१३० ) **इति पद्भावः ।** तौ **भवाशर्वौ** नः **अस्मान्** अंहसः **पापाद्** मुञ्चतम् ।

**ययोरभ्यध्व उत यद् दूरे चिद् यौ विदिताविषुभृतामसिष्ठौ[2] ।**
**यावस्येशाथे द्विपदो यौ चतुष्पदस्तौ नो मुञ्चतमंहसः ॥ २ ॥**

ययोः । अभिऽअध्वे । उत । यत् । दूरे । चित् । यौ । विदितौ । [3]इषुऽभृताम् । असिष्ठौ ।
यौ । [1]अस्य । ०० ॥ २ ॥

ययोः **भवाशर्वयोः** अभ्यध्वे । **अभि अध्वनः अभ्यध्वः ।** 'उपसर्गादध्वनः' ( पा ५,४,८५ ) **इति अच् समासान्तः । समीपदेशे ।** उतशब्दः **अप्यर्थे ।** दूरेऽपि **च** यत् **किंचिद् अस्ति तयोः प्रशासनस्य तत् सर्वं विषय एवेत्यर्थः ।** यौ **भवाशर्वौ** विदितौ **सर्वैः प्रज्ञातौ** [4]इषुभृतौ **इषोर्बाणस्य धनुषि आरोपितस्य भर्तारौ ।** असिष्ठौ **अस्तृतमौ क्षेप्तृतमौ । अस्तृशब्दात्** 'तुश्छन्दसि' ( पा ५,३,५९ ) **इति इष्ठन् ।** 'तुरिष्ठेमेयस्सु' ( पा ६,४,१५४ ) **इति तृलोपः ।** यावस्येशाथे **इत्यादि पूर्ववत् ।**

**सहस्राक्षौ वृत्रहणा हुवेहं[5] [6]दूरेगव्यूती स्तुवन्नेम्युग्रौ ।**
**यावस्येशाथे द्विपदो यौ चतुष्पदस्तौ नो मुञ्चतमंहसः ॥ ३ ॥**

---

१. अस्य P,Bp². २. °तावासिष्ठौ K,V, सा. ३. इषुऽभृतौ K. ४. नेषु, मंपक. द्र. ५. हुवे वां पै ४,३७,५. ६. दूरेहेती पै.

सहस्रऽअक्षौ । वृत्रऽहना । हुवे । अहम् । दूरेगव्यूती इति दूरेऽगव्यूती । [1]स्तुवन् । एमि[1] । उग्रौ । यौ ।०० ॥ ३ ॥

सहस्राक्षौ [2]सहस्रसंख्याकानि अक्षीणि चक्षूंषि ययोः तौ सहस्राक्षौ सर्वतो दृष्टारौ । दूरसूक्ष्मादिविषयेष्वपि अप्रतिहतदर्शनावित्यर्थः । 'बहुव्रीहौ सक्थ्यक्ष्णोः' ( पा ५,४,११३ ) इति षच् समासान्तः । वृत्रहणा वृत्रहणौ वृत्रम् असुरं हतवन्तौ दूरेगव्यूती । गावो यूयन्ते मिश्रीभवन्ति संचरन्त्यस्मिन्निति गव्यूतिः गोसंचारभूमिः । सा दूरे विप्रकृष्टे ययोस्तौ दूरेगव्यूती । गोसंचारदेशाद् दूरदेशे वर्तमानावित्यर्थः । 'ऊतियूति' ( पा ३,३,९७ ) इत्यादिना अधिकरणे क्तिन्नन्तो यूतिशब्दः । 'गोर्यूतौ छन्दसि' ( पावा ६,१,७९ ) इति अवादेशः । ईदृशौ भवाशर्वौ अहं हुवे आह्वयामि । [3]कीदृशोहम् । उग्रौ उद्गूर्णौ तीक्ष्णौ तावेव स्तुवन् प्रशंसन् । [4]नेमी । 'त्वो नेम इत्यर्धस्य' (नि ३,२०) इति यास्कः । नेमः अर्धं बलम् अस्यास्तीति नेमी । असंपूर्णबल इत्यर्थः । यद्वा स्तुवन्नेमीति समुदायस्तयोरेव विशेषणम् । नेमिशब्दो रथावयववाची । तेन च तद्वान् लक्ष्यते । स्तुवन्निति कर्मणि कर्तृप्रत्ययः । प्रशस्तरथावित्यर्थः । अन्यत् पूर्ववत् ।

यावारेभाथे बहु साकमग्रे[5] प्र [6]चेदस्राष्ट्रमभिभां जनेषु ।
यावस्येशाथे द्विपदो यौ चतुष्पदस्तौ नो मुञ्चतमंहसः ॥ ४ ॥

यौ । आरेभाथे इत्याऽरेभाथे । बहु । साकम् । अग्रे[5] । प्र । च । इत् । अस्राष्ट्रम । अभिऽभाम् । जनेषु । यौ ।०० ॥ ४ ॥

हे भवाशर्वौ अग्रे सृष्ट्यादौ यौ युवां । [4]बहुसाकम् बहूनां प्राणिनां साकं सहभावो यस्मिन् तद् बहुसाकम् जनसंघम् आरेभाथे आरब्धवन्तौ निर्मितवन्तौ । तेषु उत्पन्नेषु जनेषु । इच्छब्दः अवधारणे । अभिभाम् अभिदीप्तिं [7]शस्त्रादिलक्षणां तत्तत्पापानुसारेण युवामेव च [4]प्रास्राष्टम् प्रकर्षेण सृष्टवन्तौ उत्पादितवन्तौ । 'मा नो विदद् अभिभा मो अशस्तिः' ( अ १,२०,१ ) इति परिहरणीयत्वश्रवणाद् अभिभाशब्दवाच्यस्य अनभिमतरूपतोक्ता । अस्राष्टम् इति । सृज विसर्गे । अस्मात् लुङि थसस्तम् । 'सृजिदृशोर्झल्यमकिति' ( पा ६,१,५८ ) इति अम् आगमः । 'वदव्रजहलन्तस्य' ( पा ७,२,३ ) इति वृद्धिः । सिज्लोपे 'व्रश्च' ( पा ८,२,३६ ) इत्यादिना षत्वे ष्टुत्वम् । यावस्येशाथे इत्यादि पूर्ववत् ।

ययोर्वधान्नापपद्यते [8]कश्चनान्तर्देवेषूत मानुषेषु ।
यावस्येशाथे द्विपदो यौ चतुष्पदस्तौ नो मुञ्चतमंहसः ॥ ५ ॥

---

१. स्तुवन् । नेमि P,P², J, Cp; स्तुवत् । नेमि Op, K; स्तुवन् । नेमी सा. २. °संख्यानि S', Kd. ३. ईदृशो° S', Kd. ४. वैतु. मंपा. द्र. ५. साकमुग्रौ पै ४,३७,४; उग्रौ इति शोधः ( तु. वैप १,८६९ O ). ६. °स्राष्टम° RW., सा. ७. स्वरादि° S', Kd. ८. किंचना° पै ४,३७,३.

ययोः । वधात् । न । अपऽपद्यते । कः । चन । अन्तः । देवेषु । उत । मानुषेषु । यौ ।००॥

ययोः भवाशर्वयोः वधात्। 'हनश्च वधः' (पा ३,३,७६) इति करणे अप्प्रत्ययो वधादेशश्च। हननसाधनाद् आयुधाद् देवेषु अन्तः मध्ये उत मानुषेषु मनुष्येषु च मध्ये कश्चन कोपि नापपद्यते अपवर्जनं न प्राप्नोति अपि तु तद्विषय एव भवति । यावस्येशाथे इत्यादि गतम्।

यः कृत्याकृन्मूलकृद् यातुधानो[1] नि तस्मिन् [2]धत्तं वज्रम् उग्रौ[3] ।
यावस्येशाथे द्विपदो यौ चतुष्पदस्तौ नो मुञ्चतमंहसः ॥ ६ ॥

यः । कृत्याऽकृत् । मूलऽकृत् । यातुऽधानः । नि । तस्मिन् । धत्तम् । वज्रम् । उग्रौ[3] ।
यौ । अस्य । ईशाथे इति । द्विऽपदः । यौ । चतुःऽपदः । तौ । नः । मुञ्चतम् । अंहसः ॥ ६ ॥

यः शत्रुः कृत्याकृत् कृत्यया क्रियानिर्वृत्तया पिशाच्या कृन्तति छिनत्तीति कृत्याकृत्। यश्च यातुधानः राक्षसः मूलकृत् वंशाभिवृद्धेर्मूलं निदानम् अपत्यं कृन्तति छिनत्तीति मूलकृत् । तस्मिन् उभयविधे शत्रौ हे उग्रौ उद्गूर्णबलौ भवाशर्वौ वज्रम् वर्जकम् आयुधं नि धत्तम् निक्षिपतम् । विध्यतम् इत्यर्थः। अन्यत् पूर्ववत्।

अधि [4]नो ब्रूतं पृतनासूग्रौ सं वज्रेण सृजतं यः किमीदी ।
स्तौमि भवाशर्वौ नाथितो जोहवीमि तौ नो मुञ्चतमंहसः ॥ ७ ॥

अधि । नः । ब्रूतम् । पृतनासु । उग्रौ । सम् । वज्रेण । सृजतम् । यः । किमीदी ।
स्तौमि । भवाशर्वौ । नाथितः । जोहवीमि । तौ । नः । मुञ्चतम् । अंहसः ॥ ७ ॥

हे उग्रौ अग्र्यगुणयुक्तौ दुष्प्रधर्षौ भवाशर्वौ नः अस्मभ्यम् अधि ब्रूतम् श्रेयोविषये पक्षपातेन वदतम् । पृतनासु संग्रामेषु वज्रेण आयुधेन अस्मदीयान् शत्रून् सं सृजतम् संयोजयतम् । यश्च किमीदी किम् इदानीम् उत्पन्नं किम् इदानीम् उत्पन्नम् इति रन्ध्रान्वेषी हिंसको राक्षसादिः तमपि आयुधेन संयोजयतम्। एवंमहानुभावौ भवाशर्वौ अहं स्तौमि। गतम् अन्यत्।

इति तृतीयं सूक्तम्।

१. °कृद् यातुधानो महलो? पै ४,३७,६. २. धत्तं B,Bp,Bh,D,Km,Sm,Cs,Cp,Wh; यद्धम्? अधि पै. ३. तु. सा. W. वैप १,८६९O ; वैतु. शंपा. RW. उग्रौ इति ४. मं पै ४,३७,७.

'मन्वे वां मित्रावरुणौ' इति सूक्तस्य उक्तो विनियोगः । 'मित्रावरुणाभ्याम् आगोमुग्भ्यां पयस्या' (तै ७,५,२२,१) इति विहितस्य मृगारहविषो मित्रावरुणौ देवते । तयोः स्तावकम् एतत् सूक्तम् ।

मन्वे वां [1]मित्रावरुणावृतावृधौ[2] [3]सचेतसौ [4]द्रुह्वणो [5]यौ नुदेथे ।
[6]प्र सत्यावानमवथो [7]भरेषु [8]तौ नो [9]मुञ्चतमंहसः ॥ १ ॥

मन्वे । वाम् । मित्रावरुणौ । ऋतऽवृधौ । सऽचेतसौ । द्रुह्वणः । यौ । नुदेथे इति ।
प्र । सत्यऽवानम् । अवथः । भरेषु । तौ । नः । मुञ्चतम् । अंहसः ॥ १ ॥

हे [6]ऋतावृधा ऋतस्य सत्यस्य उदकस्य यज्ञस्य वा वर्धयितारौ सचेतसौ समानज्ञानौ ईदृशौ हे [6]मित्रावरुणा मित्रावरुणौ । मित्रश्च वरुणश्च मित्रावरुणौ । आनङ् ऋतो द्वन्द्वे', 'देवताद्वन्द्वे च' (पा ६,३,२५;२६) इति पूर्वपदस्य आनङ् । 'सुपां सुलुक्°' (पा ७,१,३९) इति पूर्वसवर्णदीर्घः । वाम् युवयोर्महत्त्वं मन्वे स्तौमि । यौ युवां द्रुह्वणः द्रोग्धॄन् नुदेथे प्रेरयेथे स्थानात् प्रच्यावयथः । नुद प्रेरणे । अपि च सत्यावानम् सत्ययुक्तम् । 'छन्दसीवनिपौ' (पावा ५,२,१०८) इति मत्वर्थीयो वनिप् । सत्यप्रतिज्ञं पुरुषं [10]भरेषु संग्रामेषु प्रावथः प्रकर्षेण रक्षथः । तौ युवां नः अस्मान् अंहसः पापाद् मुञ्चतम् ।

[11]सचेतसौ द्रुह्वणो यौ नुदेथे प्र सत्यावानमवथो [12]भरेषु ।
यौ [13]गच्छथो [14]नृचक्षसौ [15]बभ्रुणा सुतं तौ नो मुञ्चतमंहसः ॥ २ ॥

सऽचेतसौ । द्रुह्वणः । यौ । नुदेथे इति । प्र । सत्यऽवानम् । अवथः । भरेषु ।
यौ । गच्छथः । नृऽचक्षसौ । बभ्रुणा । सुतम् । तौ । नः । मुञ्चतम् । अंहसः ॥ २ ॥

सचेतसौ समानज्ञानौ एकार्थकारिणौ हे मित्रावरुणौ यौ युवां द्रुह्वणः द्रोग्धॄन् नुदेथे सत्यावानम् सत्यवन्तं च भरेषु संग्रामेषु प्रावथः प्ररक्षथः । नृचक्षसौ नृणां मंचष्टारौ सम्यग् द्रष्टारौ । अहोरात्राभिमानिनौ हि मित्रावरुणौ तत्र क्रियमाणस्य मानुषव्यापारस्य सर्वस्यापि साक्षिणावित्यर्थः । ईदृशौ यौ मित्रावरुणौ बभ्रुणा बभ्रुवर्णेन पीतवर्णेन रथादियानेन सुतम् अभिषुतं सोमं [6]गच्छथः प्राप्नुतः । नृचक्षसाविति । चक्षेरसुनि 'असनयोश्च' (पावा २,४,५४) इति ख्याञादेशाभावः । तौ नः इत्यादि गतम् ।

---

१. मित्रावरुणा ( मै. ?मित्रावरुणा) तस्य विक्तं तै ४,७,१५,२ मै ३,१६,५ काठ २२,१५. २. सत्यौजसौ पै ४,३८,१; सत्यौजसा तै. काठ.; सत्यौजसा मै. ३. दृंहणा तै., दृहणा काठ., दुर्हणा मै. ४. यं तै. मै. ५. यौ पै. ६. हवेषु पै., भवेषु S. ७. ता तै. मै. ८. °तमागसः तै. मै. काठ. ९. वेंु. मंपा. द्र. १०. भवेषु S', Kd., S. ११. सत्यौजसौ पै ४,३८,२. १२. हवेषु पै. १३. गच्छतो K, Op. १४. °क्षसा पै. १५. बभ्रूणां P[3], M; बभ्रूणा W.

यावङ्गिरसमवथो [1]यावगस्तिं मित्रावरुणा जमदग्निमत्रिम् ।
यौ कश्यपमवथो यौ वसिष्ठं तौ नो मुञ्चतमंहसः ॥ ३ ॥

यौ । अङ्गिरसम् । अवथः । यौ । [2]अगस्तिम् । मित्रावरुणा । जमत्ऽअग्निम् । अत्रिम् ।
यौ । कश्यपम् । अवथः । यौ । वसिष्ठम् । तौ । नः । मुञ्चतम् । अंहसः ॥ ३ ॥

अङ्गिरसम् । अङ्गारेभ्यो जातो महर्षिरङ्गिराः । 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' ( ऐब्रा ३,३४ ) इति हि ब्राह्मणम् । एतत्संज्ञं महर्षिं हे मित्रावरुणौ यौ युवाम् अवथः रक्षथः । यौ च युवाम् [3]अगस्त्यम् कुम्भसंभवम् आत्मीयं पुत्रं रक्षथः । उक्तं हि— " 'मित्रावरुणयोर्दीक्षितयोरुर्वशीम् अप्सरसं दृष्ट्वा वासतीवरे कुम्भे रेतोपतत् । ततोऽगस्त्यवसिष्ठावजायेताम्' ( ऋअ २,१,१६६) इति । तथा जमदग्निम् जमन्तः ज्वलन्तः अग्नयो यस्य स तथोक्तः । एतत्संज्ञं महर्षिम् । अत्रिम् मातृपित्रात्मसंबन्धिनस्त्रिविधा दोषा न सन्ति अस्मिन्निति अत्रिः । 'तस्माद् अत्रिर्न त्रयः' इति हि निरुक्तम् ( ३,१७ ) । एतत्संज्ञं महर्षिम् अवथः । यौ च युवां कश्यपम् दूरसूक्ष्मादिभेदभिन्नस्यापि कृत्स्नस्य जगतो द्रष्टारम् । 'कश्यपः पश्यको भवति । यत् सर्वं परिपश्यतीति सौक्ष्म्यात्' ( तैआ १,८,८ ) इति हि तैत्तिरीयकम् । कश्यपाख्यं महर्षिम् अवथः रक्षथः । यौ च वसिष्ठम् वसुमत्तमम् । वसुमच्छब्दाद् इष्ठनि 'विन्मतोर्लुक्' ( पा ५,३,६५ ) । 'टेः' ( पा ६,४,१४३ ) इति टिलोपः । सर्वश्रेष्ठं वसिष्ठाख्यं महर्षिं रक्षथः । तौ नः इत्यादि गतम् ।

यौ श्यावाश्वमवथो [4]वध्र्यश्वं मित्रावरुणा पुरुमीढमत्रिम् ।
यौ विमदमवथः सप्तवध्रिं तौ नो मुञ्चतमंहसः ॥ ४ ॥

यौ । श्यावऽअश्वम् । अवथः । वध्रिऽअश्वम् । मित्रावरुणा । पुरुऽमीढम् । अत्रिम् ।
यौ । विऽमदम् । अवथः । सप्तऽवध्रिम् । तौ । नः । मुञ्चतम् । अंहसः ॥ ४ ॥

श्यावाश्वम् । श्यावाः कपिशा अश्वा यस्य स श्यावाश्वः । एतत्संज्ञम् ऋषिम् हे मित्रावरुणा मित्रावरुणौ यौ युवाम् अवथः रक्षथः । वध्र्यश्वम् । वध्रयः पण्डा अश्वा यस्य स वध्र्यश्वः । तं च रक्षथः । तथा पुरुमीढम् । मीढम् इति धननाम । पुरूणि मीढानि धनानि यस्य स तथोक्तः । एतत्संज्ञं महर्षिं रक्षथः । अत्रिम् इति पुनर्वचनम् आदरार्थम् । यद्वा उक्तनिरुक्त्या पुरुमीढस्यैव विशेषणम् । अथ वा त्रिविधा ह्यात्रेयाः । यद् आह आपस्तम्बः — 'आत्रेयाय प्रथमाय हिरण्यं ददाति ।

१. यावगस्त्यं K,V, सा. २. अगस्त्यम् K. ३. वैतु. मंपा. द्र. ४. °गविष्ठिरं पै ४,३८,५.

द्वितीयाय तृतीयाय वा' (आपश्रौ १३,६,१२) इति। तन्नेदरभिप्रायम् एतत् पुनरभिधानम्। यौ युवां विमदम् एतत्संज्ञम् ऋषिं सप्तवध्रिम्। सप्त वध्रयः अश्वा यस्येति सप्तवध्रिः। एतत्संज्ञं च अवथः रक्षथः। तौ नः इत्यादि गतम्।

यौ भरद्वाजमवथो यौ 'गविष्ठिरं विश्वामित्रं वरुण मित्र कुत्सम्।
यौ कक्षीवन्तमवथः प्रोत कण्वं तौ नो मुञ्चतमंहसः ॥ ५ ॥

यौ। भरत्ऽवाजम्। अवथः। यौ। 'गविष्ठिरम्। विश्वामित्रम्। वरुण। मित्र। कुत्सम्।
यौ। कक्षीवन्तम्। अवथः। प्र। उत। कण्वम्। तौ। नः। मुञ्चतम्। अंहसः ॥ ५ ॥

हे मित्र हे वरुण यौ युवां भरद्वाजम्। भरत् पोषकं वाजो हविर्लक्षणम् अन्नं यस्य स भरद्वाजो महर्षिः। तम् अवथः रक्षथः। यौ युवां गविष्ठिरम् गवि वाचि वेदात्मिकायां स्थिरो गविष्ठिरः। 'गवियुधिभ्यां स्थिरः' (पा ८,३,९५) इति षत्वम्। 'तत्पुरुषे कृति बहुलम्' (पा ६,३,१४) इति अलुक्। एतत्संज्ञं महर्षिं रक्षथः। विश्वामित्रम् विश्वं कृत्स्नं जगत् मित्रं यस्य स तथोक्तः। 'मित्रे चर्षौ' (पा ६,३,१३०) इति पूर्वपदस्य दीर्घः। 'बहुव्रीहौ विश्वं संज्ञायाम्' (पा ६,२,१०६) इति पूर्वपदान्तोदात्तत्वम्। तथा कुत्सं महर्षिं च रक्षथः। यौ युवां कक्षीवन्तम्। अश्वस्य कक्षयोर्भवा रज्जुः कक्ष्या। 'शरीरावयवाच्च' (पा ४,३,५५) इति यत्। 'कक्ष्या रज्जुरश्वस्य' (नि २,२) इति हि यास्कः। सास्मिन्नस्तीति कक्षीवान् नाम उशिजः पुत्र ऋषिः। 'आसन्दीवदष्ठीवत्°' (पा ८,२,१२) इति निपात्यते। 'कक्षीवन्तं य औशिज.' (ऋ १,१८,१) इति हि निगमान्तरम्। एतत्संज्ञं महर्षिं उत कण्वं कण्वाख्यं च प्रावथः प्ररक्षथः। गतम् अन्यत्।

यौ मेधातिथिमवथो यौ त्रिशोकं मित्रावरुणावुशनां काव्यं यौ।
यौ 'गोतममवथः प्रोत मुद्गलं तौ नो मुञ्चतमंहसः ॥ ६ ॥

यौ। मेधऽअतिथिम्। अवथः। यौ। त्रिऽशोकम्। मित्रावरुणौ। उशनाम्। काव्यम्। यौ।
यौ। गोतमम्। अवथः। प्र। उत। मुद्गलम्। तौ। नः। मुञ्चतम्। अंहसः ॥ ६ ॥

हे मित्रावरुणौ यौ युवां मेधातिथिम्। 'मेधातिथिर्मेध्यातिथिः' इति निरुक्तम् (?)। मेध्या यज्ञार्हा अतिथयो यस्मिन् तं मेधातिथिसंज्ञम् ऋषिम् अवथः रक्षथः। यौ च युवां त्रिशोकम् त्रिशोकाख्यम् ऋषिं रक्षथः। काव्यम् कवेः पुत्रम् उशनाम्

१. तु. P², ऋ ५,१,१२; वैतु. मूको. (तु. शंपा.) वै. च गविष्ठिरम्; वध्र्यश्वं पै ४,३८,४.
२. गौत° S,O,Op, पै ४,३८,६.

उशनसम्। छान्दसम् आत्वम्। एतत्संज्ञं महर्षिं यौ मित्रावरुणौ रक्षथः। तथा यौ 'गोतमम् ऋषिम् उत मुद्गलम् मुद्गलाख्यं च प्रावथः प्ररक्षथः। तौ नः इत्यादि गतम्।

'ययो रथः 'सत्यवर्त्मर्जुरश्मिर्मिथुया' चरन्तमभियाति' दूषयन्।
स्तौमि 'मित्रावरुणौ नाथितो जोहवीमि 'तौ नो मुञ्चतमंहसः' ॥ ७ ॥

ययोः। रथः। सत्यऽवर्त्मा। ऋजुऽरश्मिः। मिथुया। चरन्तम्। अभिऽयाति। दूषयन्।
स्तौमि। मित्रावरुणौ। नाथितः। जोहवीमि। तौ। नः। मुञ्चतम्। अंहसः ॥ ७ ॥

ययोः मित्रावरुणयोः स्वभूतो रथः सत्यवर्त्मा सत्यम् अवितथं वर्त्म मार्गो यस्य स सत्यवर्त्मा ऋजुरश्मिः ऋजवः अकुटिला रश्मयः प्रग्रहा यस्य स ऋजुरश्मिः। एवंगुणविशिष्टो रथः मिथुया मिथ्या चरन्तम् अविहितमार्गेण वर्तमानं पुरुषं दूषयन् बाधमानः। दुष वैकृत्ये। अस्मात् ण्यन्तात् हेतौ शतृप्रत्ययः। 'दोषो णौ' (पा ६,४,९०) इति ऊत्त्वम्। दूषणाद्धेतोः अभियाति अभिमुखं गच्छति। तौ मित्रावरुणौ स्तौमि प्रशंसामि। मित्रावरुणाविति। 'देवताद्वन्द्वे च' ( पा ६,२,१४१ ) इति उभयपदप्रकृतिस्वरत्वम्। नाथितः इत्यादि व्याख्यातम्।

इति चतुर्थं सूक्तम्।

'अहं रुद्रेभिः' इति सूक्तेन जातकर्मणि शङ्खपुष्पिकागन्धपुष्पिके पिष्ट्वा अभिमन्त्र्य हिरण्यशकलेन प्राशयेत्।

तथा तत्रैव कर्मणि अनेन सूक्तेन शङ्खनाभिं पिप्पलीं च पिष्ट्वा अभिमन्त्र्य हिरण्यशकलेन प्राशयेत्।

तथा मेधाजननार्थं प्रथमं वाग्व्यवहारं कुर्वतः शिशोर्मातुरुत्सङ्गे विहितस्य अनेन सूक्तेन आज्यं हुत्वा तालुनि संपातान् आनयेत्।

तथा दधिमधुनी एकत्र कृत्वा अनेन संपात्य अभिमन्त्र्य शिशुं प्राशयेत्।

तथा उपनयनकर्मणि दण्डप्रदानानन्तरम् एतत् सूक्तं माणवकं वाचयेत्।

तथा आयुष्कामोपि शङ्खपुष्पगन्धपुष्पप्राशनादीन्युक्तानि पञ्च कर्माणि कुर्यात्।

तथा च कौशिकं सूत्रम्—"'अहं रुद्रेभिः' इति शुक्लपुष्पहरितपुष्पे किंस्त्यनाभिपिप्पल्यौ

१. गौत° S', Kd. २. यो वां तै ४,७,१५,३ मै ३,१६,५ काठ २२,१५. ३. सुत्यधर्मा तै. मै. काठ. ४. मिथुना (मै. मिथु, काठ. मिथू) चरन्तमुपयाति तै. मै. काठ. ५. मित्रावरुणा काठ. पै. ६. ता तै. मै. ७. °तमांहसः तै. मै.

जातरूपशकलेन प्राक् स्तनग्रहात् प्राशयति। प्रथमप्रवदस्य मातुरुपस्थे तालुनि संपातान् आनयति। दधिमध्वाशयति। उपनीतं वाचयति वार्षशातिकं कर्म" (कौसू १०,१६-१९) इति।

तथा उपनयने अनेन सूक्तेन आज्यहोमं कुर्यात्। सूत्रितं हि उपनयनम् प्रक्रम्य—"मेधाजननायुष्यैर्जुहुयात्' (कौसू ५७,३१) इति।

तथा अध्यायोत्सर्जनकर्मणि अनेन सूक्तेन आज्यं हुत्वा रसेषु संपातान् आनयेत्। तथा च कौशिकः उत्सर्जनम् प्रक्रम्य—'दिवे देवाः' (१,३०), 'अहं रुद्रेभिः', 'सिंहे व्याघ्रे' (अ ६,३८), 'यशो हविः' (अ ६,३९) इत्यादि (कौसू १३९,१५)।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥

अहम्। रुद्रेभिः। वसुऽभिः। चरामि। अहम्। आदित्यैः। उत। विश्वऽदेवैः। अहम्। मित्रावरुणा। उभा। बिभर्मि। अहम्। इन्द्राग्नी इति। अहम्। अश्विना। उभा ॥ १ ॥

सर्वजगत्कल्पनास्पदं सच्चित्सुखात्मकं परं ब्रह्म स्वात्मत्वेन विदुषी अम्भृणाख्यस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मवादिनी स्वात्मानं सर्वात्मभावेन तुष्टाव। तद् उक्तं दाशतय्यनुक्रमणिकायाम्—"'अहम्' अष्टौ। वाग् आम्भृणी तुष्टावात्मानम्" (ऋअ २,१०,१२५) इति। विशुद्धसत्त्वपरिणामरूपस्य अन्तःकरणस्य वृत्तिविशेषः अभिमानात्मकोऽहंकारः। तदुपलक्षितानवच्छिन्नात्मिका अहं रुद्रेभिः रुद्रैः एकादशभिः अष्टभिर्वसुभिः। इत्थंभावे तृतीया। तत्तद्देवात्मना चरामि। एवम् अहम् आदित्यैः इत्यादावपि योज्यम्। आदित्या द्वादशसंख्याका धात्रादयः वसुरुद्रादित्यव्यतिरिक्ता गणशो वर्तमानाः विश्वदेवाख्याः एकस्यैव हि ब्रह्मणः तत्तदुपाध्यवच्छेदेन वस्वादिदेवतारूपेण भेदावभासात्। वस्तुतस्तु ऐक्यमेवेति तदनुसंदधाना ब्रह्मवादिनी एवं ब्रूते। तथा मित्रावरुणा। 'सुपां सुलुक्' (पा ७,१,३९) इति द्वितीयाया आकारः। मित्रावरुणौ देवौ उभा उभौ अहमेव परब्रह्मात्मिका बिभर्मि धारयामि। इन्द्राग्नी अपि अहमेव धारयामि। उभा उभौ अश्विनौ अपि अहमेव धारयामि। मत्स्वरूपे अद्वितीये ब्रह्मणि सर्वं जगत् शुक्तौ रजतमिव अध्यस्तं सत् दृश्यते। माया च जगदाकारेण विवर्तते। तदाधारत्वेन असङ्गस्यापि ब्रह्मणः उक्तस्य सर्वस्योपपत्तिः।

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तः[2] ॥ २ ॥

१. °जनन आयु° Bl.　　२. °यन्तीम् ऋ १०,१२५,३.

अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् । चिकितुषी । प्रथमा । यज्ञियानाम् ।
ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा । भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तः ॥२॥

अद्वितीयब्रह्मात्मिका अहं राष्ट्री । ईश्वरनामैतत् । कृत्स्नस्य दृश्यप्रपञ्चस्य राज्ञी नियन्त्री । अत एव वसूनाम् धनानां संगमनी संगमयित्री उपासकानां फलस्य प्रापयित्री । चिकितुषी यत् साक्षात्कर्तव्यं परं ब्रह्म तत् ज्ञातवती स्वात्मतया साक्षात्कृतवती । कित ज्ञाने इत्यस्मात् लिटः क्वसुः । तदन्तात् 'उगितश्च' (पा ४,१,६) इति ङीप् । अत एव यज्ञियानाम् यज्ञार्हाणां देवानां प्रथमा मुख्या । 'यज्ञर्त्विग्भ्यां घखञौ' ( पा ५,१,७१ ) इति अर्हार्थे घप्रत्ययः । ताम् तादृशीं मा मां भूरिस्थात्राम् बहुभावेन प्रपञ्चात्मना कृतावस्थानां भूरि बहुलं फलम् आवेशयन्तः उपासकान् प्रापयन्तो देवाः पुरुत्रा बहुषु स्थानेषु व्यदधुः विदधति कुर्वन्ति । 'देवमनुष्यपुरुषपुरुमर्त्येभ्यः°' (५,४,५६) इति सप्तम्यर्थे त्राप्रत्ययः । उक्तप्रकारेण वैश्वरूप्येण अवस्थानाद् यद्यत् कुर्वन्ति देवास्तत् सर्वं मामेव कुर्वन्तीत्यर्थः ।

अहमेव स्वयमिदं वदामि जुष्टं 'देवानामुत मानुषाणाम्'[1] ।
यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ३ ॥

अहम् । एव । स्वयम् । इदम् । वदामि । जुष्टम् । देवानाम् । उत । मानुषाणाम् ।
यम् । कामये । तम्ऽतम् । उग्रम् । कृणोमि । तम् । ब्रह्माणम् । तम् । ऋषिम् । तम् । सुऽमेधाम् ॥

अहं स्वयमेव आत्मनैव । एवकारः नान्योस्ति ममोपदेष्टेति अवधारणार्थः । इदम् आपरोक्ष्येण अनुभूयमानं ब्रह्मात्मकं वस्तु वदामि लोकहितार्थम् उपदिशामि । तद् विशेष्यते—देवानाम् इन्द्रादीनां जुष्टम् प्रियम् उत मानुषाणाम् मनुष्याणामपि प्रियं परानन्दरूपत्वात् । 'एतस्यैवानन्दस्य अन्यानि भूतानि मात्राम् उपजीवन्ति' ( बृआ ४,३,३२ ) इति श्रुतेः । यद्वा देवमनुष्यादिभिः सेवितम् इदं वक्ष्यमाणं मदीयं माहात्म्यम् अहमेव स्वयं वदामि । प्रकटयामीत्यर्थः । किं पुनस्तद् इत्याह—यम् इति । यं कामये । तंतम् इति प्रतिनिर्देश्यस्य[2] वीप्सितत्वाद् अत्रापि वीप्सा द्रष्टव्या । यंयं पुरुषं रक्षितुम् अहं वाञ्छामि तंतं कृत्स्नं पुरुषम् उग्रं कृणोमि । सर्वेभ्योधिकं दुष्प्रधर्षं करोमि । यद्वा उग्रः ईश्वरः । जगन्निर्माणसमर्थम् ईश्वरं करोमि । तम् एव ब्रह्माणम् स्रष्टारं करोमि । तथा तम् ऋषिम् अतीन्द्रियार्थदर्शिनं करोमि । तम् एव सुमेधाम् शोभनप्रज्ञं च करोमि । एवं सर्वजगन्नियन्तृब्रह्मात्मकत्वं [3]स्वात्मनि आविष्कृतम् ।

१. देवेभिरुत मानुषेभिः ऋ १०,१२५,५. २. देशेस्य S', Kd. ३. स्वात्मन् S', Kd.

मया [1]सोऽन्नमत्ति यो विपश्यति यः [2]प्राणति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उप क्षियन्ति श्रुधि [3]श्रुत [4]श्रद्धेयं ते वदामि ॥ ४ ॥

मया । सः । अन्नम् । अत्ति । यः । विऽपश्यति । यः । प्राणति । यः । ईम् । शृणोति । उक्तम् ।
अमन्तवः । माम् । ते । उप । क्षियन्ति । श्रुधि । श्रुत । श्रत्ऽधेयम् । ते । वदामि ॥ ४ ॥

यो भोक्तृजनः अन्नम् अत्ति स भोक्तृशक्तिरूपया मया एव अन्नम् अत्ति । यश्च जनो विपश्यति विविधं जगत् चक्षुषा साक्षात्करोति । यश्च [5]प्राणिति श्वासोच्छ्वासादिव्यापारं करोति । अन प्राणने । अदादित्वात् शपो लुक् । 'रुदादिभ्यः सार्वधातुके' (पा ७,२,७६) इति इडागमः । 'अनितेः' (पा ८,४,१९) इति णत्वम् । ईम् इदम् उक्तम् स्वरूपं यश्च पुरुषः शृणोति श्रोत्रेन्द्रियेण गृह्णाति ते सर्वेपि तत्तच्छक्त्यात्मना अवस्थितया मयैव तत्तद्व्यापारं कुर्वन्तीत्यर्थः । शृणोतीति । श्रु श्रवणे । 'श्रुवः शृ च' (पा ३,१,७४) इति श्नुप्रत्ययः धातोः शृभावश्च । ये ईदृशीम् अन्तर्यामिरूपेण स्थितां [6]मां न जानन्ति ते माम् अमन्तवः अमन्यमानाः अजानानाः मद्विषयज्ञानरहिताः उप क्षियन्ति उपक्षीणाः संसारेण निहीना भवन्ति । अमन्तव इति । मनेरौणादिकस्तुप्रत्ययः । नञ्समासेन(?) अन्तोदात्तत्वम् । यद्वा भावे तुप्रत्ययः । ततो बहुव्रीहौ 'नञ्सुभ्याम्' (पा ६,२,१७२) इति उत्तरपदान्तोदात्तत्वम् । हे श्रुत विश्रुत हे सखे श्रुधि मया उक्तं शृणु । छान्दसो विकरणस्य लुक् । 'श्रुशृणुपृकृवृभ्यः°' (पा ६,४,१०२) इति हेर्धिभावः । अहं ते तुभ्यं श्रद्धेयम् श्रद्धातव्यम् । श्रद्धा भक्तिः । तया प्राप्यं परतत्त्वस्वरूपं वदामि उपदिशामि । श्रद्धेयम् इति । 'अचो यत्' (पा ३,१,९७) इति धाञो यत्प्रत्ययः । 'ईद्यति' (पा ६,४,६५) इति ईकारः ।

अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥ ५ ॥

अहम् । रुद्राय । धनुः । आ । तनोमि । ब्रह्मऽद्विषे । शरवे । हन्तवै । ऊं इति ।
अहम् । जनाय । सऽमदम् । कृणोमि । अहम् । द्यावापृथिवी इति । आ । विवेश ॥ ५ ॥

पुरा त्रिपुरविजयसमये रुद्राय । षष्ठ्यर्थे चतुर्थी । रुद्रस्य महादेवस्य धनुः अहम् आ तनोमि आततज्यं करोमि । किमर्थम् । ब्रह्मद्विषे ब्राह्मणानां द्वेष्ट्रे शरवे । शॄ

१. सो अन्नं° ऋ १०,१२५,४. २. प्राणिति ऋ. ३. श्रुत Op. ४. श्रद्धिवं ऋ. ५. वैदु. मंपा. इ. ६. मां ये S', Kd.

हिंसायाम् 'भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः' (पाउ १,१०) इत्यादिना उप्रत्ययः। हिंसकाय। उभयत्र 'क्रियाग्रहणं कर्तव्यम्' (पावा १,४,३२) इति कर्मणः संप्रदानत्वात् चतुर्थी। ब्रह्मद्विषं शरुं [1]त्रिपुरनिवासिनम् असुरगणं हन्तवै हन्तुं हिंसितुम्। हन्तेः 'तुमर्थे सेसेन्°' (पा ३,४,९) इति तवैप्रत्ययः। 'अन्तश्च तवै युगपत्' (पा ६,१,२००) इति आद्यन्तयोर्युगपद् उदात्तत्वम्। उशब्दः पूरणः। अहमेव जनाय स्तोतृजनार्थं समदम्। समानं माद्यन्त्यस्मिन्निति [2]समत् संग्रामः। तं कृणोमि करोमि। तथा द्यावापृथिवी द्यावापृथिव्यौ अहम् आ विवेश अन्तर्यामित्वेन प्रविष्टवती।

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम्।
अहं दधामि [3]द्रविणा हविष्मते [4]सुप्राव्या३ यजमानाय सुन्वते ॥ ६ ॥

अहम्। सोमम्। आहनसम्। बिभर्मि। अहम्। त्वष्टारम्। उत। पूषणम्। भगम्।
अहम्। दधामि। [3]द्रविणा। हविष्मते। [5]सुप्रऽअव्या। यजमानाय। सुन्वते ॥ ६ ॥

[6]आहनसम् आहन्तव्यम् अभिषोतव्यं सोमम् यद्वा शत्रूणाम् आहन्तारं दिवि वर्तमानं देवतात्मानं सोमम् अहम् एव बिभर्मि धारयामि पोषयामि वा। तथा त्वष्टारम् उत अपि च पूषणं भगं च एतत्संज्ञान् देवान् अहमेव बिभर्मि। तथा हविष्मते हविर्भिर्युक्ताय [4]सुप्राव्ये शोभनहविर्भिर्देवानां प्रावित्रे तर्पयित्रे। अवतेस्तर्पणार्थात् 'अवितॄस्तृतन्त्रिभ्य ईः' (पाउ ३,१५८) इति ईकारप्रत्ययः। चतुर्थ्येकवचने यणि 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा ८,२,४) इति अनुदात्तस्य सुपः स्वरितत्वम्। सुन्वते सोमाभिषवं कुर्वते। 'शतुरनुमः°' (पा ६,१,१७३) इति विभक्त्युदात्तत्वम्। ईदृशाय यजमानाय [3]द्रविणम् धनं यागफलरूपम् अहमेव दधामि प्रयच्छामि। 'फलम् अत उपपत्तेः' (ब्रसू ३,२,३९) इति न्यायेन परब्रह्मणः फलदातृत्वस्य निर्णीतत्वात्।

अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्व१न्तः समुद्रे।
ततो वि [7]तिष्ठे [8]भुवनानि विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥

अहम्। सुवे। पितरम्। अस्य। मूर्धन्। मम। योनिः। अप्ऽसु। अन्तः। समुद्रे।
ततः। वि। तिष्ठे। भुवनानि। विश्वा। उत। अमूम्। द्याम्। वर्ष्मणा। उप। स्पृशामि ॥ ७ ॥

१. त्रिपुरविवा° S', Kd. २. समत् समत् S', Kd. ३. द्रविणं K, सा. ऋ १०,१२५,२; द्रविणां R. ४. °प्राव्ये१ A,D; °प्राव्येः K, सा. ऋ. ५. सुप्रऽअव्ये K. ६. वैद्. मंपा. द्र. ७. चष्टे K, सा. ८. भुवनानु ऋ १०,१२५,७.

अस्य दृश्यमानस्य प्रपञ्चस्य मूर्धन् मूर्धनि उपरिभागे सत्यलोके पितरम् प्रपञ्चस्य जनकं विधातारम् अहं सुवे जनयामि । षूङ् प्राणिगर्भविमोचने । अदादित्वात् शपो लुक् । स्रष्टृसहितस्य जगतः कारणभूताया मम योनिः कारणं समुद्रे । समुद् द्रवन्ति अस्माद् भूतजातानीति समुद्रः परमात्मा । 'समुद्र एवास्य बन्धुः समुद्रो योनिः' (माश १०,६,४,१) इति वाजसनेयकश्रुत्या समुद्रशब्दवाच्यत्वं परमात्मनो दर्शितम् । तस्मिन् परमात्मनि अप्सु व्यापनशीलासु धीवृत्तिषु अन्तः मध्ये यद् ब्रह्मचैतन्यं तत् मम कारणम् इत्यर्थः । यद्वा समुद्रे जलधौ अप्सु उदकेषु अन्तः मध्ये वाडववैद्युतरूपेण यत् तेजो वर्तते तदेव माध्यमिकवाग्रूपाया मम योनिः कारणम् । ततः तेजःकारणकत्वाद्धेतोः विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि वि [1]तिष्ठे प्रकाशयामि । उत अपि च अमूं द्याम् विप्रकृष्टां दिवम् । उपलक्षणम् एतत् । एतदुपलक्षितं कृत्स्नं ब्रह्मणि अध्यस्तं विकारजातं वर्ष्मणा देहेन कारणभूतमायात्मकेन उप स्पृशामि । यद्वा अस्य भूलोकस्य मूर्धन् मूर्धनि उपरि पितरम् आकाशम् । 'द्यौः पिता पृथिवी माता' ( तैब्रा ३,७,५,५ ) इति श्रुतेः । सुवे प्रेरयामि । तथा समुद्रे अन्तरिक्षे अप्सु अब्विकारेषु देवशरीरेषु मम कारणभूतं ब्रह्म व्याप्य वर्तत इत्यर्थः । शेषं पूर्ववत् ।

अ॒हमे॒व वात॑इव॒ प्र वा॑म्या॒रभ॑माणा॒ भुव॑नानि॒ विश्वा॑ ।
प॒रो दि॒वा प॒र ए॒ना पृ॑थि॒व्यैताव॑ती [2]महि॒म्ना सं ब॑भूव ॥ ८ ॥

अ॒हम् । ए॒व । वात॑ःऽइव । प्र । वा॒मि॒ । आ॒ऽरभ॑माणा । भुव॑नानि । विश्वा॑ ।
प॒रः । दि॒वा । प॒रः । ए॒ना । पृ॒थि॒व्या । ए॒ताव॑ती । म॒हि॒म्ना । सम् । ब॒भू॒व॒ ॥ ८ ॥

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कार्यरूपेण उत्पादयन्ती अहमेव अनन्यसहाया प्र वामि प्रवर्ते । वा गतिगन्धनयोः । अदादित्वात् शपो लुक् । तत्र दृष्टान्तः—वात इव । यथा वायुः परेण अप्रेरितः स्वेच्छयैव प्रवाति तद्वद् इत्यर्थः । उक्तं सार्वात्म्यं निगमयति उत्तरार्धेन — परो दिवा । परस् इति सकारान्तं परस्तात् इत्यर्थे वर्तते । यथा अध इति अधस्तादर्थे । तद्योगे च तृतीया सर्वत्र दृश्यते । दिवा आकाशस्य परस्तात् एना पृथिव्या । 'द्वितीयाटौस्स्वेनः' ( पा २,४,३४ ) इति इदम एनादेशः । 'सुपां सुलुक्°' ( पा ७,१,३९ ) इति तृतीयाया आच् आदेशः । अस्याः पृथिव्याः परः परस्तात् । द्यावापृथिव्योरुपादानम् उपलक्षणम् । एतदुपलक्षितात् सर्वस्माद् विकारजातात् परस्ताद् वर्तमाना असङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपा अहं महिम्ना माहात्म्येन एतावती सं बभूव । एतत्परिमाणा उदीरितसकलजग-

१. वैद्. मंपा. द्र.　　२. महिमा ऋ १०,१२५,८.

दात्मना संभूतास्मि। एतच्छब्दात् 'यत्तदेतेभ्यः' (पा ५,२,३९) इति वतुप्। 'आ सर्वनाम्नः' (पा ६,३,९१) इति आत्वम्।

इति पञ्चमं सूक्तम्।

इति सायणार्यविरचिते अथर्ववेदार्थप्रकाशे षष्ठोऽनुवाकः।

सप्तमेऽनुवाके पञ्च सूक्तानि। तत्र 'त्वया मन्यो', 'यस्ते मन्यो' इति सूक्तद्वयं स्वपरसेनयोर्मध्ये स्थित्वा सेने निरीक्षमाणो जपेत्।

तथा आभ्यां सूक्ताभ्यां भाङ्गपाशान् मौञ्जपाशान् आमपात्राणि वा संपात्य अभिमन्त्र्य परसेनासंचारस्थलेषु प्रक्षिपेत्।

तथा जयपराजयविज्ञानकर्मणि शरतृणानि सेनयोर्मध्ये निधाय आभ्याम् अभिमन्त्र्य आङ्गिरसाग्निना दहेत्। यां सेनां धूमो व्याप्नोति तस्याः पराजयो भवतीति विजानीयात्।

सूत्रितं हि—" 'त्वया मन्यो', 'यस्ते मन्यो' इति संरम्भणानि सेने समीक्षमाणो जपति" इत्यादि 'यां धूमोऽवतनोति तां जयन्ति' (कौसू १४,२६-३१) इत्यन्तम्। ग्रहयज्ञे 'त्वया मन्यो','यस्ते मन्यो' इत्याभ्याम् अङ्गारकस्य हविराज्ययोर्होमं समिदाधानम् उपस्थानं च कुर्यात्। तद् उक्तं शान्तिकल्पे—" 'त्वया मन्यो', 'यस्ते मन्यो' इत्यङ्गारकाय" (शाक १५?) इति।

त्वया॑ मन्यो स॒रथ॑मारु॒जन्तो॒ [1]हर्ष॑माणा [2]हृषि॒तासो॑ [3]मरुत्वन्।
[4]ति॒ग्मेष॑व॒ आयु॑धा सं॒शिशा॑ना॒ [5]उप॒ प्र [6]य॑न्तु॒ नरो॑ अ॒ग्निरू॑पाः॥ १॥

त्वया॑। म॒न्यो॒ इति॑। स॒ऽरथ॑म्। आ॒ऽरु॒जन्तः॑। हर्ष॑माणाः। हृ॒षि॒तासः॑। म॒रु॒त्व॒न्।
ति॒ग्मऽइ॑षवः। आयु॑धा। स॒म्ऽशिशा॑नाः। उप॑। प्र। य॒न्तु॒। नरः॑। अ॒ग्निऽरू॑पाः॥ १॥

मन्युः क्रोधाभिमानी देवः। 'मन्युर्मन्यतेः कान्तिकर्मणः' इति निरुक्तम् (१०,२९)। हे मन्यो त्वया साधनेन सरथम् रथसहितं शत्रुम् आरुजन्तः आभञ्जन्तः पीडयन्तः। यास्कस्त्वाह—'सरथं समानं रथम् आरुह्य रुजन्तः' (नि १०,३०)। रुजो भङ्गे। तुदादित्वात् शः। हर्षमाणाः हृष्टाः [7]हृषितासः हृषिताः संजातरोषाः तिग्मेषवः तीक्ष्णशराः आयुधा आयुधानि खड्गादीनि संशिशानाः संश्यन्तस्तीक्ष्णीकुर्वन्तः। शो तनूकरणे इत्यस्मात् छान्दसस्य लिटः कानच्। एवंभूता अस्मदीया नरः नराः हे मरुत्वन् मरुद्भिर्गैर्युक्त त्वत्प्रसादात् अग्निरूपाः अग्निवद् दुष्प्रधर्षा उप प्रयन्तु शत्रून् उपगच्छन्तु। अग्निवद् उपप्राप्य दहन्तु इत्यर्थः।

---

१. हर्षमाणासो ऋ १०,८४,१ पै ४,१२,१ तैब्रा २,४,१,१०. २. हृषितासो O,Op, K²; हृषिता ऋ.; हृषता पै. तैब्रा. ३. मरुत्वः ऋ. तैब्रा. ४. तीक्ष्णेषव पै. ५. अग्नि ऋ. ६. यन्तु तैब्रा. पै. ७. वैद्य. मंपा. इ.; ऋषि° S', Kd.

अग्निरिव मन्यो [1]त्विषितः [2]सहस्व सेनानीर्नः[3] सहुरे [4]हूत एधि ।
हत्वाय[5] शत्रून् वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व ॥ २ ॥

अग्निःऽइव । मन्यो इति । त्विषितः । सहस्व । सेनाऽनीः । नः । सहुरे । हूतः । एधि ।
हत्वाय । शत्रून् । वि । भजस्व । वेदः । ओजः । मिमानः । वि । मृधः । नुदस्व ॥ २ ॥

हे मन्यो अग्निरिव त्विषितः प्रदीप्तः सन् सहस्व शत्रून् अभिभव । हे सहुरे सहनशील । सहेः औणादिक उरिन्प्रत्ययः । नः अस्माकं सेनानीः सेनाया नेता सेनाधिपतिः सन् हूतः एधि संग्रामे सहायार्थम् आहूतो भव । अस्तेर्लोटि 'घ्वसोरेद्धौ०' (पा ६,४,११९) इति एत्वम् । तस्य च 'असिद्धवदत्राभात्' ( पा ६,४,२२ ) इति असिद्धत्वात् झलन्तलक्षणो धिभावः । अस्मदीयान् शत्रून् हत्वाय हत्वा तदीयं वेदः धनं वि भजस्व अस्मभ्यं विभज्य प्रयच्छ । पुनरपि ओजः बलं मिमानः कुर्वन् मृधः संग्रामकारिणः शत्रून् वि नुदस्व विजहि ।

सहस्व मन्यो अभिमातिमस्मै[6] रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् ।
उग्रं ते [7]पाजो नन्वा [8]रुरुध्रे वशी [9]वशं [10]नयासा एकज त्वम् ॥ ३ ॥

सहस्व । [11]मन्यो इति । अभिऽमातिम् अस्मै । रुजन् । मृणन् । प्रऽमृणन् । प्र । इहि । शत्रून् ।
उग्रम् । ते । पाजः । ननु । आ । [12]रुरुध्रे । वशी । वशम् । नयासै । एकऽज । त्वम् ॥ ३ ॥

हे मन्यो अस्मै अस्य राज्ञः अभिमातिम् अभिमन्तारं शत्रुं सहस्व अभिभव । किं कुर्वन् । रुजन् हस्त्यश्वादिकं तदीयं बलं भञ्जन् आमर्दयन् । मृणन् हिंसन् । प्रमृणन् प्रकर्षेण हिंसन् नाशयन् । मृण हिंसायाम । एवंकुर्वन् शत्रून् अस्मदीयान् प्रेहि प्रगच्छ हन्तुं प्राप्नुहि । [13]कस्माद् एवम् उच्यसे इति तत्राह — उग्रम् इति । उग्रम् उद्गूर्णं तीक्ष्णम् हे मन्यो ते त्वदीयं पाजः बलं ननु आ रुरुध्रे केचिदपि नैव आरुद्धम् आवृतं कुर्वन्ति । आङ्पूर्वाद् रुधेश्छान्दसे लिटि 'इरयो रे' ( पा ६,४,७६ ) इति रेभावः । अपि तु हे एकज असहायोत्पन्न वशी सर्वस्य वशयिता स्वतन्त्रस्त्वं वशं नयासै कृत्स्नं जनं स्वाधीनतां प्रापयसि ।

१. त्वर पै ४,१२,२.   २. सहस्व B,Bp,D,P[3],M,W,E[1],I,H,K[1]; सासहस्व पै.
३. °नीर्णः A,D,S[m],P[3],M,W.   ४. हुत K.   ५. जित्वाय पै.   ६. °मस्मै R[1],T; °मस्मे RW. पै ४,१२,३ ऋ १०,८४,३.   ७. शर्धो पै.   ८. तु. सा., RW., ऋ.; वैतु मूको. (तु. शंपा. Wh.) वै. च रुरुध्रे; ररुध्रे? पै.   ९. वशान् P[3],M,W,E[1],H.   १०. नयस त्रे
११. मन्यो इति P.   १२. रुरुध्रे P,P[2]; ररुध्रे J.   १३. तस्मा° S', Kd.

एको॑ ब॒हू॒नाम॑सि ॑मन्य ई॑डि॒ता विशं॑विशं॒ यु॒द्धाय॒ सं शि॑शाधि ।
अ॒कृ॒त॒रुक् त्वया॑ यु॒जा व॒यं द्यु॒मन्तं॒ घोषं॑ वि॒ज॒याय॑ कृण्मसि ॥ ४ ॥

एकः॑ । ब॒हू॒नाम् । अ॒सि॒ । म॒न्यो॒ इति॑ । ई॒डि॒ता । विश॑म्ऽविशम् । यु॒द्धाय॑ । सम् । शि॒शा॒धि॒ ।
अ॒कृ॒त॒ऽरुक् । त्वया॑ । यु॒जा । व॒यम् । द्यु॒ऽमन्त॑म् । घोष॑म् । वि॒ऽज॒याय॑ । कृ॒ण्म॒सि॒ ॥ ४ ॥

हे मन्यो ईळितः अस्माभिः स्तुतस्त्वम् एक एव बहूनां शत्रूणां निरसने पर्याप्तः असि भवसि । विशंविशम् सर्वाः प्रजा आविश्य युद्धाय आयोधनाय सं शिशाधि संशासय । शासु अनुशिष्टौ इत्यस्मात् लोटो हिः । 'शा हौ' ( पा ६,४,३५ ) इति शासः शाभावः । छान्दसो विकरणस्य श्लुः । 'असिद्धवदत्राभात्' (पा ६,४,२२ ) इति शाभावस्य असिद्धवद्भावात् 'हुझल्भ्यो हेर्धिः' ( पा ६,४,१०१ ) इति झल्लक्षणं धित्वं भवति । 'बहुलं छन्दसि' ( पा ७,४,७८ ) इति अभ्यासस्य ह्रस्वम् । यद्वा विशंविशम् अस्मदीयां सेनां सं शिशाधि संशितां तीक्ष्णीभूतां कुरु । शो तनूकरणे इत्यस्मात् कृतात्वात् पूर्ववद् विकरणस्य श्लुः । 'वा छन्दसि' ( पा ३,४ ८८ ) इति हेरपित्त्वस्य विकल्पनात् ङित्त्वाभावात् 'अङितश्च' ( पा ६,४,१०३ ) इति धित्वम् । 'बहुलं छन्दसि' इति अभ्यासस्य ह्रस्वम् । हे अकृतरुक् अच्छिन्नदीप्ते मन्यो त्वया युजा सहायेन वयं द्युमन्तम् दीप्तिमन्तम् घोषम् सिंहनादात्मकं विजयाय विजयार्थं कृण्मसि कृण्मः कुर्मः । 'इदन्तो मसि' ( पा ७,१,४६ ) ।

वि॒जे॒ष॒कृदिन्द्र॑ इवानवब्र॒वो॒३॑स्माकं॑ मन्यो अधि॒पा भ॑वे॒ह ।
प्रि॒यं ते॒ नाम॑ सहुरे गृणीमसि वि॒द्मा तमुत्सं॒ यत॑ आब॒भूथ॑ ॥ ५ ॥

वि॒जे॒ष॒ऽकृत् । इन्द्रः॑ऽइव । अ॒न॒व॒ऽब्र॒वः । अ॒स्माक॑म् । म॒न्यो॒ इति॑ । अ॒धि॒ऽपाः । भ॒व॒ । इ॒ह ।
प्रि॒यम् । ते॒ । नाम॑ । स॒हु॒रे॒ । गृ॒णी॒म॒सि॒ । वि॒द्म । तम् । उत्स॑म् । यतः॑ । आ॒ऽब॒भूथ॑ ॥ ५ ॥

हे मन्यो त्वं विजेषकृत् विजयस्य कर्ता इन्द्र इव अनवब्रवः अनवानां पुरातनानां जयोपायानां वक्ता इह अस्मिन् संग्रामे अस्माकम् अधिपाः अधिकं पालको भव । हे सहुरे सहनशील ते तव प्रियम् आह्लादकं नाम गृणीमसि गृणीमः स्तुमः । गॄ शब्दे । 'प्वादीनां ह्रस्वः' ( पा ७,३,८० ) इति ह्रस्वत्वम् । यतः यस्मात् स्थानात् त्वम् आबभूथ आभवसि आजायसे तम् उत्सम् अमृतधारायुक्तं स्थानं विद्म जानीमः ।

१. मन्यवीडितः पद्मज् पदून् पै ७,१२,४. †. ईड़ितो K; मन्यवीळितो ऋ १०, ८४,४. २. युधये ऋ. ३. कृण्महे ऋ. पै. ४. मन्यो इति P. ५. ईड़ितः K. ६. °वेदु. मंपा. द्र. ७. आजगन्थ ऋ १०,४५,२.

आभूत्या 'सहजा वज्र सायक सहो 'बिभर्षि सहभूत' उत्तरम् ।
क्रत्वा नो मन्यो सह 'मेद्ये॒धि महाधनस्य पुरुहूत संसृजि ॥ ६ ॥

आऽभूत्या । सहऽजाः । वज्र । "सायक । सहः । बिभर्षि । सहऽभूते । उत्ऽतरम् ।
क्रत्वा । नः । 'मन्यो इति । सह । मेदी । एधि । महाऽधनस्य । पुरुऽहूत । सम्ऽसृजि ॥ ६ ॥

आभूत्या सहजाः । आभूतिः अभिभवः । तया सह जायते प्रादुर्भवतीति सहजाः । हे वज्र वज्रवद् अकुण्ठितशक्ते हे सायक शत्रूणां अन्तकर । षो अन्तकर्मणि इत्यस्माद् घञि सायः । तस्मिन्नुपपदे 'डोऽन्यत्रापि दृश्यते' (पावा ३,२,४८) इति करोतेर्ड-प्रत्ययः । एवंभूत मन्यो सहः बलं बिभर्षि धारयसि । 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्वम् । कीदृशं सहः । उत्तरम् उद्गततरम् । हे सहभूते आत्मना सह भूतिः उत्पत्तिर्यस्य सः । आत्माविनाभूतो मन्युरित्यर्थः । ईदृश हे मन्यो क्रत्वा क्रतुना कर्मणा सह नः अस्माकं मेदी स्निग्धः एधि भव । मेदीति । ञिमिदा स्नेहने इत्यस्माद् घञन्तान्मत्वर्थीय इनिः प्रत्ययः । कस्मिन् विषये इत्याह — हे पुरुहूत बहुभिर्यजमानैराहूत महाधनस्य । महान्ति धनानि अस्मिन् प्राप्यन्ते इति महाधनः संग्रामः । तस्य संसृजि संसर्गे संयोजने । विषये इत्यर्थः ।

संसृष्टं धनमुभयं समाकृतमस्मभ्यं 'धत्तां† वरुणश्च मन्युः' ।
"भियो दधाना हृदयेषु शत्रवः 'पराजितासो अप नि ‡लयन्ताम्' ॥ ७ ॥

सम्ऽसृष्टम् । धनम् । उभयम् । सम्ऽआकृतम् । अस्मभ्यम् । धत्ताम् । वरुणः । च । मन्युः ।
भियः । दधानाः । हृदयेषु । शत्रवः । पराऽजितासः । अप । नि । लयन्ताम् ॥ ७ ॥

वरुणो मन्युश्च उभौ उभयम् उभयविधम् आत्मीयं धनं संसृष्टम् मिश्रितं कृत्वा समाकृतम् समानीतम् अस्मभ्यं दत्ताम् प्रयच्छताम् । मदीयाः शत्रवः हृदयेषु मनःसु भियः भीतिं दधानाः पराजितासः पराजिताः पराजयं प्राप्ताः अप [९]निलयन्ताम् स्वस्थानाद् अपक्रम्य प्रच्छन्नं वर्तन्ताम् । अय पय गतौ । 'उपसर्गस्यायतौ' (पा ८,२,१९) इति लत्वम् ।

इति प्रथमं सूक्तम् ।

१. सहसा? पै ७,१२,६. २. बिभर्ष्यभिभूत ऋ १०,८४,६ पै. ३. मेद्यौधि Bh. ४. सायक P. ५. मन्यो इति P. ६. दत्तं वरुण च मन्यो पै ७,१२,७. † दत्ताँ ऋ १०,८४,७ सा. ७. भियं ऋ. ८. पराजिता यन्तु परमां परावतम् पै. ‡. लयन्ताम् Bp², E², I. ९. वैतु. मंपा. द.

'यस्ते मन्यो' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

यस्ते॑ मन्योऽवि॑धद्[1] वज्र सायक॒ सह॒ [2]ओजः॑ पुष्यति॒[3] विश्व॑मानुषक् ।
साह्याम॒ दास॒मार्यं॒ त्वया॑ यु॒जा व॒यं सह॑स्कृतेन॒ सह॑सा [4]सह॑स्वता ॥ १ ॥

यः । ते॒ । [4]म॒न्यो इति॑ । अवि॑धत् । व॒ज्र । सा॒य॒क॒ । सहः॑ । ओजः॑ । पु॒ष्य॒ति॒ । विश्व॑म् । आ॒नु॒षक् ।
स॒ह्याम॑ । दास॑म् । आर्य॑म् । त्वया॑ । यु॒जा । व॒यम् । सहः॑ऽकृतेन । सह॑सा । सह॑स्वता ॥१॥

हे मन्यो यः पुरुषः ते त्वाम् अविधत् । विधतिः परिचरणकर्मा । परिचरति । विध विधाने । तौदादिकाच्छान्दसो लङ् । हे वज्र वज्रवद् अकुण्ठितशक्ते हे सायक शत्रूणाम् अन्तकर हे मन्यो स पुरुषः सहः शत्रूणाम् अभिभवनम् ओजः बलं च विश्वम् सर्वम् अन्यत् शत्रुजयादिलक्षणं कार्यजातम् आनुषक् अनुषक्तं संततं पुष्यति वर्धयति । पुष पुष्टौ । त्वया युजा सहायेन दासम् उपक्षपयितारम् असुरम् आर्यम् तद्व्यतिरिक्तम् असुरशत्रुं वयं सह्याम अभिभवेम । कीदृशेन त्वया । सहस्कृतेन सहसा बलेनोत्पादितेन । सहसा सहमानेन अभिभवित्रा । सहस्वता बलवता ।

म॒न्युरिन्द्रो॑[5] म॒न्युरे॒वास॑ दे॒वो म॒न्युर्होता॑ वरु॑णो [6]जा॒तवे॑दाः ।
[7]म॒न्युं विश॑ ईडते॒ [8]मानु॑षी॒र्याः [10]पा॒हि नो॑ मन्यो॒ तप॑सा [11]स॒जोषाः॑ ॥ २ ॥

म॒न्युः । इन्द्रः॑ । म॒न्युः । ए॒व । आ॒स॒ । दे॒वः । म॒न्युः । होता॑ । वरु॑णः । जा॒तऽवे॑दाः ।
म॒न्युम्[12] । विशः॑ । ई॒ड॒ते॒ । मानु॑षीः । याः । पा॒हि । नः॒ । [4]म॒न्यो इति॑ । तप॑सा । स॒ऽजोषाः॑ ॥

यद् इन्द्रादीनाम् इन्द्रत्वं तत् पराभिभवनिमित्ताद् मन्युप्रसादादेवेति सार्वात्म्येन स्तौति । मन्युरेव इन्द्रः । मन्युरेव सर्वः अन्यो देवः आस भवति । अस्तेर्लिटि छान्दसो भूभावाभावः । होता देवानाम् आह्वाता अग्निरपि मन्युरेव । जातवेदाः जातप्रज्ञो वरुणोपि मन्युरेव । मानुषीः मनोरपत्यभूता या विशः प्रजाः सन्ति ता अपि मन्युम् एव ईडते स्तुवन्ति नेन्द्रादीन् । तस्यैव इन्द्रादिरूपेण अवस्थानात् । हे मन्यो स त्वं नः अस्मान् तपसा संतापेन सजोषाः संगतः सन् पाहि रक्ष पालय ।

अ॒भी॑हि मन्यो त॒वस॒स्तवी॑या॒न् तप॑सा यु॒जा वि ज॑हि॒ शत्रू॑न् ।
अ॒मि॒त्र॒हा वृ॑त्र॒हा द॑स्यु॒हा च॒ विश्वा॒ वसू॒न्या भ॑रा॒ त्वं नः॑ ॥ ३ ॥

१. ऽविदधद् P[3],M,W,E[1].  २. तु. RW. ऋ १०,८३,१; वैतु. शंपा. ओज॒ः पुष्यंति॒; ओजः पुष्यद् पै ४,३२,१.  ३. महीयसा पै.  ४. मन्यो॒ इति॑ P.  ५. तु. मंपा.; वैतु. शंपा. पुष्यंति.  ६. म॒न्युर्भगो॑ तैब्रा २,४,१,११.  ७. विश्ववेदाः मै ४,१२,३ तैब्रा.  ८. तु. सा. K, ऋ १०,८३,२, तैब्रा. मै.; वैतु. शंपा. RW. प्रभृ. म॒न्युर्.  ९. देवपत्नीः तैब्रा.  १०. त्रांवा मै.  ११. श्रमेण तैब्रा.  १२. तु. मंपा.; वैतु. शंपा. म॒न्युः.

अभि । इहि । ‘मन्यो इति । तवसः । तवीयान् । तपसा । युजा । वि । जहि । शत्रून् ।
अमित्रऽहा । वृत्रऽहा । दस्युऽहा । च । विश्वा । वसूनि । आ । भर । त्वम् । नः ॥ ३ ॥

हे मन्यो अभीहि अभिमुखं गच्छ । तवसस्तवीयान् । तव इति महन्नाम । प्रवृद्धादपि प्रवृद्धतरः स त्वं तपसा संतापेन त्वज्जन्मकारणेन युजा सहायेन अस्मदीयान् शत्रून् वि जहि विनाशय । अमित्रहा अमित्रः स्नेहरहितः तस्य हन्ता । वृत्रहा वृत्र आवेष्टकः शत्रुः तस्य हन्ता । दस्युहा दस्युः उपक्षपयिता शत्रुः तस्य हन्ता । एवम् अमित्रादीन् हत्वा विश्वा विश्वानि सर्वाणि वसूनि नः अस्मभ्यं त्वम् आभर आहर ।

त्वं हि मन्यो अभिभूत्योजाः ‘स्वयम्भूर्भामो अभिमातिषाहः ।
विश्वचर्षणिः सहुरिः ‘सहीयानस्मास्वोजः पृतनासु धेहि ॥ ४ ॥

त्वम् । हि । ‘मन्यो इति । अभिभूतिऽओजाः । स्वयम्ऽभूः । भामः । अभिमातिऽसहः ।
विश्वऽचर्षणिः । ‘सहुरिः । सहीयान् । अस्मासु । ओजः । पृतनासु । धेहि ॥ ४ ॥

हे मन्यो त्वं हि त्वं खलु अभिभूत्योजाः अभिभूतिः अभिभावुकम् ओजो बलं यस्य स तथोक्तः । स्वयंभूः स्वयमेव आत्मनि उत्पद्यमानः । भामः क्रुद्धः । अभिमातिषाहः अभिमातीनां शत्रूणां सोढा । विश्वचर्षणिः विश्वस्य सर्वस्य द्रष्टा । यद्वा विश्वे चर्षणयो मनुष्या यस्य वशे वर्तन्ते स तथोक्तः । सहुरिः सहनशीलः । सहीयान् सोढृतमः एवंगुणविशिष्टः त्वं पृतनासु संग्रामेषु ओजः बलम् अस्मासु धेहि स्थापय ।

अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः ।
तं त्वा मन्यो ‘अक्रतुर्जिहीडाहं स्वा ‘तनूर्बलदावा न एहि’ ॥ ५ ॥

अभागः । सन् । अप । पराऽइतः । अस्मि । तव । क्रत्वा । तविषस्य । प्रऽचेतः । तम् ।
त्वा । मन्यो इति । अक्रतुः । ‘जिहीड । अहम् । स्वा । तनूः । बलऽदावा । नः । आ । इहि ॥

हे प्रचेतः प्रकृष्टज्ञान हे मन्यो तविषस्य महतः तव क्रत्वा कर्मणा अभागः भागरहितः सन् । त्वाम् अयजमान इत्यर्थः । एवंभूतः सन् युद्धाद् अप परेतः अस्मि अपक्रम्य परागतो भवामि । हे मन्यो तं तादृशं त्वा त्वाम् अक्रतुः त्वत्तोषकरकर्मवर्जितः अहं ‘जिहीळ क्रोधितवान् । हेडतिः क्रुध्यतिकर्मा । अथ इदानीं मम स्वा तनूः स्वकीयशरीरभूतस्त्वं नः अस्माकं बलदावा बलस्य दाता सन् एहि आगच्छ । यद्वा स्वा तनूः इत्युभयत्र ‘सुपां सुलुक्’

१. मन्यो इति P. २. स्वयंजो भामो मै ४,१२,३. ३. सहावान् ऋ १०,८३, ४ मै. ४. सहुरिः P. ५. तु. R,P,$P^{2}$,J, सा. ऋ १०,८३,५ पै ४,३२,५; वैतु. A,B,Bp,$B^{h}$,D,$S^{m}$,V °जीहि°; $K^{m}$ °जि° > °जी°. ६. °बलदेयाय मेहि ऋ. ७. जिहीळा P. ८. वैतु. मंपा. द्र.

( पा ७,१,३९ ) इति सप्तम्या लुक्। स्वायां तन्वाम् अस्माकं स्वभूते शरीरे बलस्य दाता सन् आगच्छेति। बलदावेति। डुदाञ् दाने। 'आतो मनिन्क्वनिब्वनिपश्च (पा ३,२,७४) इति वनिप्।

अयं ते [1]अस्म्युप [2]न एह्यर्वाङ् प्रतीचीनः सहुरे [3]विश्वदावन्।
मन्यो [4]वज्रिन्नभि [5]न आ ववृत्स्व हनाव [6]दस्यूंरुत बोध्यापेः ॥ ६ ॥

अयम्। ते। अस्मि। उप। नः। आ। इहि। अर्वाङ्। प्रतीचीनः। सहुरे। विश्वऽदावन्।
मन्यो इति। वज्रिन्। अभि। नः। आ। ववृत्स्व। हनाव। दस्यून्। उत। बोधि। आपेः॥

हे मन्यो ते तव स्वभूतः अयं कर्मकरः अहम् अस्मि भवामि। नः अस्मान् उपेहि उपागच्छ। अर्वाङ् अस्मदभिमुखः सन् प्रतीचीनः शत्रून् प्रत्यञ्चन् गच्छन् हे सहुरे सहनशील हे विश्वदावन् विश्वस्य सर्वस्य फलस्य दातः हे वज्रिन्। वज्रं वर्जकम् आयुधं बलं वा। तद्वन् हे मन्यो नः अस्मान् अभ्या ववृत्स्व अभिमुखम् आवर्तस्व। छान्दसः शपः श्लुः। आवाम् अस्मदीयान् दस्यून् उपक्षपयितॄन् हनाव हिनसाव। 'आडुत्तमस्य पिच्च' ( पा ३,४,९२ ) इति आडागमः। उत अपि च आपेः आपिम् आप्तं बन्धुभूतं मां बोधि रक्षणीयोयम् इति बुध्यस्व।

अभि प्रेहि दक्षिणतो भवा [7]नोऽधा वृत्राणि जङ्घनाव भूरि।
जुहोमि ते धरुणं मध्वो अग्रमुभावुपांशु [8]प्रथमा [9]पिबाव ॥ ७ ॥

अभि। प्र। इहि। दक्षिणतः। भव। नः। अध। वृत्राणि। जङ्घनाव। भूरि।
जुहोमि। ते। धरुणम्। मध्वः। अग्रम्। उभौ। उपऽअंशु। प्रथमा। पिबाव॥ ७॥

हे मन्यो अभि प्रेहि अस्मदभिमुखं प्रगच्छ। नः अस्माकं दक्षिणतः दक्षिणभागे भव साचिव्यं कर्तुम् अवतिष्ठस्व। 'द्व्यचोऽतस्तिङः' ( पा ६,३,१३५ ) इति दीर्घत्वम्। [10]अध अनन्तरं भूरि भूरीणि बहूनि वृत्राणि शत्रून् जङ्घनाव अत्यर्थं हनाव। हन्तेर्यङ्लुगन्तात् लोटि 'आडुत्तमस्य पिच्च' ( पा ३,४,९२ ) इति आडागमः। हे मन्यो ते तुभ्यं धरुणम् धारकं मध्वः मधुररसस्य सोमस्य अग्रम् अग्र्यं सारभूतं रसं जुहोमि प्रयच्छामि। उभौ आवां प्रथमा प्रथमौ सर्वेभ्यः पूर्वभाविनौ सन्तौ उपांशु अप्रकाशं यथा अन्यैर्न ज्ञायते तथा पिबाव सोमपानं करवाव।

इति द्वितीयं सूक्तम्।

१. अस्म्युप D. २. मेह्य° ऋ १०,८३,६ पै ४,३२,६. ३. विश्वधायः ऋ. ४. वज्रिन्नुप पै. ५. माम् ऋ. ६. दस्यूंरुत Bʰ,D,Sᵐ. ७. मेऽधा ऋ १०,८३,७. ८. °मुभा उपा° ऋ. पै ४,३२,७. ९. पिबेव पै. १०. वैद्. मंपा. इ.

'अप नः शोशुचदघम्' इत्यस्य सूक्तस्य 'अप नः शोशुचदघम्', 'पुनन्तु मा' (अ ६,१९), 'सस्रुषीः' (अ ६,२३) इति बृहद्गणे (कौसू ९,७) पठनात् शान्त्युदकादौ विनियोगः।

तथा स्त्रीणां पुरुषविषयाभिरतिनिवृत्तये पुरुषाणां च स्त्रीविषयाभिरतिनिवृत्तये च अनेन सूक्तेन असंख्याताः शर्करा अभिमन्त्र्य काम्यमानपरगृहं स्त्रीगृहं वा परिकिरन् व्रजेत्। हस्ते धारयन् वा जपेत्। सूत्रितं हि— 'कामं [1]विनेष्यमाणोऽपाघेनासंख्याताः शर्कराः परिकिरन् व्रजति' (कौसू ३६,२२) इत्यादि।

तथा दुःशकुनदर्शने काकमैथुनादिविरुद्धदर्शने अद्भुतदर्शने च एतत् सूक्तं जपेत्। सूत्रं च—'अपनोदनापाघाभ्याम् (अ १,२९;४,३३) [2]अन्वीक्ष्यं प्रतिजपति' (कौसू ४२,२२) इति।

तथा चरमसंस्कारे शववहनानन्तरं [3]अनवेक्ष्यमाणः सबान्धवो गच्छन् कर्ता जपेत्।

तथा तत्रैव कर्मणि स्नानसमये ब्रह्मा एतत् सूक्तं जपेत्। स्नानानन्तरं गृहम् आगत्य अनेन सूक्तेन कर्ता श्यामाकीः समिध आदध्यात्।

अप॑ नः॒ शोशु॑चद॒घम॑ग्ने [4]शुशु॒ग्ध्या र॒यिम्। अप॑ नः॒ शोशु॑चद॒घम्॥ १॥

अप॑। नः॒। शोशु॑चत्। अ॒घम्। अग्ने॑। शु॒शु॒ग्धि। आ। र॒यिम्। अप॑ नः॒। शोशु॑चत्। अ॒घम्॥ १॥

हे अग्ने त्वत्प्रसादात् नः अस्माकम् अघम् पापम् अप शोशुचत् अत्यर्थम् अपगतशोकं भवतु। नश्यतु इत्यर्थः। शुचेर्यङ्लुगन्तात् लेटि अडागमः (?)[5]। त्वं च रयिम् धनम् अस्माकम् आ शुशुग्धि समन्तात् प्रज्वलितं समृद्धं कुरु। शुशुग्धीति। छान्दसः शपः श्लुः। आदरार्थम् उक्त एवार्थः पुनरनूद्यते।

सु॒क्षे॒त्रि॒या सु॑गातु॒या व॑सू॒या च॑ यजामहे। अप॑ नः॒ शोशु॑चद॒घम्॥ २॥

सु॒ऽक्षे॒त्रि॒या। [6]सु॒ऽगा॒तु॒या। व॒सु॒ऽया। च॒। य॒जा॒म॒हे॒। अप॑। नः॒। शोशु॑चत्। अ॒घम्॥२॥

सुक्षेत्रिया शोभनं क्षेत्रं सुक्षेत्रम् 'इयाडियाजीकाराणाम् उपसंख्यानम्' (पावा ७,१,३९) इति तृतीयैकवचनस्य डियाजादेशः। तथा सुगातुयेत्यत्रापि तृतीयाया याजादेशः। उभयत्रापि हेतौ तृतीया। सुक्षेत्रेण शोभनमार्गेण च हेतुना। तद् उभयं यथा स्याद् इत्यर्थः। यद्वा शोभनक्षेत्रेच्छा सुक्षेत्रिया। क्यचि छान्दसं

१. °नेष्यमाणो° S', Kd. २. द्र. पृ १३५ टि २. ३. अवनेक्षमाणः S', Kd.— अनवेक्षमाणाः Bl. ४. शुशुग्ध्या तैआ ६,११,१. ५. वैप १,२८८ P द्र. ६. सुगातुऽया Op, ऋपपा.

ह्रस्वत्वम् । 'अ प्रत्ययात्' (पा ३,३,१०२) इति अकारप्रत्ययः । तृतीयाया लुक् । शोभनक्षेत्रलाभेच्छया । सुगातुया । सुगातुशब्दात् पूर्ववत् क्यच् । 'न च्छन्दस्यपुत्रस्य' (पा ७,४,३५) इति दीर्घप्रतिषेधः । पूर्ववत् तृतीयाया लुक् । शोभनमार्गेच्छया वसूया धनेच्छया च हे अग्ने त्वां यजामहे हविर्भिस्तोषयामः । त्वत्प्रसादाद् अस्मदीयम् अघं नश्यतु ।

प्र यद् भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघम् ॥३॥

प्र । यत् । भन्दिष्ठः । एषाम् । प्र । अस्माकासः । च । सूरयः । अप । नः । शोशुचत् । अघम् ॥ ३ ॥

एषाम् स्तोतॄणां मध्ये अहं प्र प्रकर्षेण यत् यस्माद् भन्दिष्ठः स्तोतृतमः । भदि कल्याणे सुखे च । 'भन्दना भन्दतेः स्तुतिकर्मणः' इति यास्कः (नि ५,२)। भन्दितृशब्दात् 'तुश्छन्दसि' (पा ५,३,५९) इति इष्ठन् । 'तुरिष्ठेमेयस्सु' (पा ६,४,१५४) इति तृलोपः । अस्माकासः आस्माकाः । 'तस्येदम्' (पा ४,३,१२०) इत्यर्थे 'अणि 'तस्मिन्नणि च युष्माकास्माकौ' (पा ४,३,२) इति अस्माकादेशः । छान्दसः आदिवृद्ध्यभावः । 'आज्जसेरसुक्' (पा ७,१,५०) । अस्मत्सम्बन्धिनः सूरयः अभिज्ञाः पुत्रादयश्च प्र प्रकर्षेण स्तोतृतमाः । तस्मात् हे अग्ने त्वत्प्रसादाद् अस्माकं पापं नश्यतु इति सम्बन्धः ।

प्र यत् ते अग्ने सूरयो जायेमहि प्र ते वयम् । अप नः शोशुचदघम् ॥ ४ ॥

प्र । यत् । ते । अग्ने । सूरयः । जायेमहि । प्र । ते । वयम् । अप । नः । शोशुचत् । अघम् ॥ ४ ॥

हे अग्ने ते तव स्तोतारो यत् यस्मात् त्वदनुग्रहेण प्र जायन्ते तस्मात् सूरयः विद्वांसो वयम् अपि ते तव स्तुत्या प्र जायेमहि पुत्रपौत्रादिभिः समृद्धा भवेम । अन्यत् पूर्ववत् ।

प्र यदग्नेः सहस्वतो विश्वतो यन्ति [1]भानवः । अप नः शोशुचदघम् ॥ ५ ॥

प्र । यत् । अग्नेः । सहस्वतः । विश्वतः । यन्ति । भानवः । अप । नः । शोशुचत् । अघम् ॥ ५ ॥

सहस्वतः सहनवतः अभिभवनवतो बलवतो वा अग्नेः भानवः दीप्तयो विश्वतः सर्वतः यत् यस्मात् प्र यन्ति अस्मद्धितार्थं प्रवर्तन्ते तस्माद् आग्नेयेन तेजसा अस्मदीयम् पापं नश्यतु इत्यर्थः ।

त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अप नः शोशुचदघम् ॥ ६ ॥

त्वम् । हि । विश्वतःऽमुख । विश्वतः । परिऽभूः । असि । अप । नः । शोशुचत् । अघम् ॥ ६ ॥

१. अणि सति न स्वरसिद्धिः; वैप १,५५० e द्र. २. सूरयः तैआ ६,११,१.

हे विश्वतोमुख सर्वतोमुख अग्ने त्वं हि त्वं खलु विश्वतः सर्वतः परिभूः परिग्रहीता व्यापकः असि भवसि। सर्वम् इदं जगत् त्वदङ्गे वर्तते। अतस्त्वदाज्ञया अस्मदीयं पापं नश्यत्विति।

द्विषो नो विश्वतोमुखाति नावेव पारय। अप नः शोशुचदघम् ॥ ७॥

द्विषः। नः। विश्वतःऽमुख। अति। [1]नावाऽइव। पारय। अप। नः। शोशुचत्। अघम् ॥ ७॥

हे विश्वतोमुख सर्वतोमुख अग्ने द्विषः द्वेष्टॄन् शत्रून् नावा समुद्रम् इव नः अस्मान् अति पारय अतिक्रामय। त्वत्प्रसादाद् भयकारणम् अस्मदीयं पापं नश्यत्विति।

स नः सिन्धुमिव [2]नावाति [3]पर्षा स्वस्तये। अप नः शोशुचदघम् ॥ ८॥

सः। नः। सिन्धुम्ऽइव। नावा। अति। पर्ष। स्वस्तये। अप। नः। शोशुचत्। अघम् ॥ ८॥

हे अग्ने सः उक्तगुणस्त्वं नावा सिन्धुम् समुद्रम् इव स्वस्तये क्षेमाय नः अस्मान् अति पर्ष दुरितस्य पारं प्रापय। पृ पालनपूरणयोः। अस्माद् लेटि अडागमः। 'सिब्बहुलं लेटि' (पा ३,१,३४) इति सिप्। गतम् अन्यत्।

इति द्वितीयं सूक्तम्।

'ब्रह्मास्य शीर्षम्' इति सूक्तं ब्रह्मास्योदनसवे निरुप्तहविरभिमर्शनादिकर्मणि विनियुक्तम्।

तत्रैवानेन सूक्तेन चतसृषु दिक्षु ह्रदकरणम् कुल्याकरणम् तासां रसैः पूरणम् ह्रदेषु आण्डीकादिमन्त्रोक्तद्रव्यविधानं च कुर्यात्। सूत्रितं हि—"'ब्रह्मास्य' इत्योदने ह्रदान् प्रतिदिशं करोति" (कौसू ६६,६) इत्यादि।

ब्रह्मास्य [4]शीर्षं बृहदस्य पृष्ठं वामदेव्यमुदरमोदनस्य।
छन्दांसि पक्षौ मुखमस्य सत्यं विष्टारी जातस्तपसोऽधि यज्ञः ॥ १॥

ब्रह्म। अस्य। शीर्षम्। बृहत्। अस्य। पृष्ठम्। वामऽदेव्यम्। उदरम्। ओदनस्य।
छन्दांसि। पक्षौ। मुखम्। अस्य। सत्यम्। विष्टारी। जातः। तपसः। अधि। यज्ञः॥ १॥

अस्यौदनस्य दीयमानस्य शिरःप्रभृत्यवयवकल्पनया स्तुतिः क्रियते — ब्राह्मणजात्या सह प्रजापतिमुखाद् उत्पन्नत्वाद् ब्रह्मशब्देनात्र रथंतरं साम विवक्षितम्।

१. नावाऽइव P.   २. नावयाति O, ऋ १,९७,८ पै ४,२९,८ तैआ ६,११,२०
३. परिषा D; पृरिष P, P².   ४. शिरो पै ६,२२,१.

अत एव तस्य ब्रह्मवर्चसरूपता समाम्नाता—'रथंतरं साम भवति ब्रह्मवर्चसं वै रथंतरम्' (तैब्रा २, ७,१,१) इति। तद् ब्रह्मशब्दवाच्यं रथंतरं साम अस्य ओदनस्य शीर्षम् शिरः। तथा बृहत् साम अस्य ओदनस्य पृष्ठम् पृष्ठभागः उपरिभागः। तथा वामदेव्यम् वामदेवेन दृष्टं साम उदरम्। 'वामदेवाड्ड्यड्ड्यौ' (पा ४,२,९) इति ड्यप्रत्ययः। छन्दांसि गायत्र्यादीनि पक्षौ। तथा सत्यम् सत्याख्यं साम परं ब्रह्म वा अस्य ओदनस्य मुखम्। एवं विष्टारी विस्तीर्यमाणावयवः। विपूर्वात् स्तृणातेः कर्मणि णिनिप्रत्ययः। अथवा 'प्रथने वावशब्दे' (पा ३,३,३३) इति घञ्। ततो मत्वर्थीय इनिः। तादृशोयं यज्ञः सवयज्ञः तपसः तप्यमानाद् ब्रह्मणः अधि उपरि जातः उत्पन्नः। यज्ञदानादिलक्षणाद् अन्यस्मात् तपसो वा आधिक्येनोत्पन्न इत्यर्थः।

अनस्थाः [1]पूताः पवनेन [2]शुद्धाः शुचयः [3]शुचिमपि यन्ति [4]लोकम्।
[5]नैषां शिश्नं प्र दहति जातवेदाः स्वर्गे लोके बहु स्त्रैणमेषाम् ॥ २ ॥

अनस्थाः। पूताः। पवनेन। शुद्धाः। शुचयः। शुचिम्। अपि। यन्ति। लोकम्। न। एषाम्। शिश्नम्। प्र। दहति। जातऽवेदाः। स्वःऽगे। लोके। बहु। स्त्रैणम्। एषाम्॥

अनस्थाः। न विद्यते अस्थ्युपलक्षितं षाट्कौशिकं शरीरम् एषाम् इति अनस्थाः। 'छन्दस्यपि दृश्यते' (पा ७,१,७६) इति अस्थिशब्दस्य अनङादेशः। अमृतमयशरीरा इत्यर्थः। अत एव पवनेन पवनसाधनेन पूताः। यद्वा पवनेन अन्तरिक्षसंचारिणा वायुना पवित्रीकृताः शुद्धाः निर्मलाः शुचयः दीप्यमानाः एवंभूताः सवयज्ञस्य कर्तारः शुचिम् दीप्यमानं ज्योतिर्मयं लोकम् अपि यन्ति अपिगच्छन्ति देहावसाने प्राप्नुवन्ति। अपि च एषाम् स्वर्गे लोके अवस्थितानां शिश्नम् भोगसाधनम् इन्द्रियं जातवेदाः जातानां वेदिता अग्निः न प्र दहति न निर्वीर्यं करोति। प्रदाहप्रसक्तिम् आह—बहु स्त्रैणम् इति। तत्र हि सुकृतफलोपभोगस्थाने एषां सुकृतिनां बहु बहुलं स्त्रैणम् स्त्रीणां समूहो भोगार्थं विद्यते। एवं स्त्रीसमूहं भुञ्जानानामपि न निर्वीर्यत्वशङ्केत्यर्थः। स्त्रैणम् इति। 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' (पा ४,१,८७) इति समूहेर्थे नञ् प्रत्ययः।

विष्टारिणमोदनं ये पचन्ति [6]नैनानवर्तिः सचते †कदा चन।
आस्ते यम उप याति देवान्त्सं गन्धर्वैर्मदते [7]सोम्येभिः ॥ ३ ॥

विष्टारिणम्। ओदनम्। ये। पचन्ति। न। एनान्। अवर्तिः। सचते। कदा। चन। आस्ते। यमे। उप। याति। देवान्। सम्। गन्धर्वैः। मदते। सोम्येभिः॥ ३ ॥

---

1. शुद्धाः पै ६,२२,२. 2. पूताः पै. 3. शुचीनपि पै. 4. लोकान् पै. 5. नैतेषां पै. 6. नैनान् यमः परिमुष्णाति रेतः पै ६,२२,३. † कुतश्चन पै ६,२२,४. 7. सौम्यैः पै.

विष्टारिणम् उदीरितरीत्या विस्तीर्यमाणावयवम् ओदनं ये यजमानाः पचन्ति। पक्त्वा ब्राह्मणेभ्यः प्रयच्छन्तीत्यर्थः। एनान् यजमानान् अर्तिः वृत्तिर्जीवनम् तदभावः अवर्तिः दारिद्र्यं कदाचन कदाचिदपि न सचते न समवैति। षच समवाये। बहुवद् उक्तम् एकवद् आह। यः पचति स च सवयज्ञानुष्ठाता देहविश्लेषानन्तरं यमे पितॄणाम् अधिपतौ पूजितः सन् आस्ते सुखेन वसति। तेन अनुज्ञातः सन् देवान् उप याति उपगच्छति। तथा सोम्येभिः सौम्यैः सोमार्हैः गन्धर्वैः विश्वावसुप्रभृतिभिः सोमपालैः सह सं मदते अमृतमयसोमपानेन माद्यति।

विष्टारिणमोदनं ये पचन्ति [1]नैनान् यमः परि [3]मुष्णाति रेतः[1]।
रथी ह भूत्वा रथयानं ईयते पक्षी ह भूत्वाति [2]दिवः समेति ॥ ४ ॥

विष्टारिणम्। ओदनम्। ये। पचन्ति। न। एनान्। यमः। परि। [3]मुष्णाति। रेतः।
रथी। ह। भूत्वा। रथऽयाने। ईयते। पक्षी। ह। भूत्वा। अति। दिवः। सम्। एति ॥

नैनान् इत्यन्तं पूर्ववत्। यमः नियन्ता जीवनापहारी एनान् सवयज्ञानुष्ठातॄन् रेतः न परि मुष्णाति नापहरति। रेतोहीनान् न करोतीत्यर्थः। स च सवयज्ञानुष्ठाता रथयाने रथेन यातव्ये भूलोके यावज्जीवं रथी ह भूत्वा रथाधिरूढ एव ईयते संचरति। ईङ् गतौ। दिवादिः। अन्तरिक्षमार्गे च पक्षी पक्षवान् ह भूत्वा दिवः अन्तरिक्षप्रभृतीन् उपरितनान् लोकान् अतिक्रम्य समेति तत्तद्भोगस्थानेषु भोगैः संगच्छते।

एष [4]यज्ञानां विततो [5]वहिष्ठो [6]विष्टारिणं पक्त्वा †दिवमा विवेश[6]।
[7]आण्डीकं कुमुदं सं तनोति बिसं शालूकं शफको मुलाली।
एतास्त्वा धारा उप यन्तु सर्वाः स्वर्गे लोके [8]मधुमत् पिन्वमाना उप [9]त्वा
तिष्ठन्तु[9] पुष्करिणीः समन्ताः ॥ ५ ॥

एषः। यज्ञानाम्। विऽततः। [10]वहिष्ठः। विष्टारिणम्। पक्त्वा। [11]दिवम्। आ। विवेश।
आण्डीकम्। कुमुदम्। सम्। तनोति। बिसम्। शालूकम्। शफकः। मुलाली। एताः।
त्वा। धाराः। उप। यन्तु। सर्वाः। स्वःऽगे। लोके। मधुऽमत्। पिन्वमानाः। उप।
त्वा। तिष्ठन्तु। पुष्करिणीः। सम्ऽअन्ताः ॥ ५ ॥

एष विततः विस्तृतः सवयज्ञः यज्ञानां मध्ये वहिष्ठः वोढृतमः। विष्टारिणम्

---

१. नैनानवर्तिः सचते कुतश्चन पै ६,२२,४. २. दिवं पै. ३. मुष्णाति P.
४. यज्ञो पै ६,२२,५. ५. तु. P², K², सा. RW.; वैतु. शंपा बर्हिष्ठो ६. विष्टारपक्वो दिवमाससाद पै. † तु. RW.; वैतु. शंपा. दिव° ७. पुण्डरीकं पै ६,२२,८. ८. स्वधया पै. ९. मा तिष्ठन्ति पै. १०. तु. मंपा.; वैतु. शंपा. बर्हिष्ठः. ११. तु. मंपा.; वैतु. शंपा. दिवम्.

शिरःपृष्ठाद्यवयवकल्पनया उदीरितविस्तारोपेतम् ओदनं पक्त्वा यजमानस्तत्फलभूतं दिवम् स्वर्गम् आ विवेश प्राप्नोति। आण्डीकम् अण्डाकृतेः कन्दाद् उत्पन्नं कुमुदम् कैरवं दिश्येषु ह्रदेषु सं तनोति संयोजयति। तथा [1]बिसम् पद्मकन्दम्। शालूकम् उत्पलकन्दम्। शफकः शफाकृतिः जलोत्पन्नः। मुलालीति मृणाली विवक्षिता। एतानि सर्वाणि परितो ह्रदेषु स्थापनीयानि। एवम् इदानीम् अनुष्ठितत्वात् एतत्फलभोगस्थाने स्वर्गे कुमुदोत्पलकमलोपेतानि मधुरोदकानि नित्यपूर्णानि क्रीडासरांसि एनं परितः सेवन्त इत्यर्थः। एतदेवोत्तरत्र विशदीक्रियते—उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः इति। [2]दधिमधुघृतादिलक्षणस्य दिश्यासु कुल्यासु पूर्यमाणस्य रसस्य एताः सर्वा धाराः प्रवाहाः फलभूते स्वर्गे लोके मधुमत् मधुयुक्तं माधुर्यवद् वा पिन्वमानाः सिञ्चन्त्यः त्वा त्वाम् उप यन्तु उपगच्छन्तु। तथा समन्ताः पर्यन्तवर्तिन्यः पुष्करिणीः पुष्करिण्यः सरस्यः हे सवयज्ञानुष्ठातः त्वा त्वाम् उप तिष्ठन्तु उपस्थिताः संगता भवन्तु।

घृतह्र॑दा [3]मधु॑कूलाः सुरो॑दकाः क्षीरे॑ण पू॒र्णा उ॑द॒केन॑ द॒ध्ना।
ए॒तास्त्वा॒ धारा॒ उप॑ यन्तु॒ सर्वाः॑ स्व॒र्गे लो॒के मधु॑मत् पिन्व॑माना॒ उप॑ त्वा
तिष्ठ॑न्तु पुष्क॒रिणीः॒ सम॑न्ताः ॥ ६ ॥

घृतऽह्र॑दाः। मधु॑ऽकूलाः। सुरा॑ऽउदकाः। क्षीरे॑ण। पू॒र्णाः। उ॒द॒केन॑। द॒ध्ना। ए॒ताः। ०० ॥

घृतह्रदाः घृतपूर्णह्रदयुक्ताः। मधुकूलाः मधुना माक्षिकेण युक्तानि कूलानि यासां ताः। सुरोदकाः सुरा मद्यमेव उदकं यासां ताः। तथा क्षीरेण उदकेन दध्ना च पूर्णाः। एतेषु घृतादिद्रव्येषु यद्यत् कामयसे तेन तेन पूर्णा बहुविधाः पुष्करिण्यः त्वां सेवन्ताम् इत्यर्थः। दध्नेति। 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' (पा ७,१,७५) इति अनङादेशः उदात्तश्च। अल्लोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। [1][ एतास्त्वा इत्यादि गतम् ]।

च॒तुरः॑ [4]कु॒म्भांश्च॑तु॒र्धा [5]द॑दामि क्षी॒रेण॑ [6]पू॒र्णाँ उ॑द॒केन॑ द॒ध्ना।
ए॒तास्त्वा॒ [7]धारा॒ उप॑ यन्तु॒ सर्वाः॑ स्व॒र्गे लो॒के मधु॑मत् पिन्व॑माना॒[7] उप॑ त्वा
तिष्ठ॑न्तु पुष्क॒रिणीः॒ सम॑न्ताः ॥ ७ ॥

च॒तुरः॑। कु॒म्भान्। च॒तुः॒ऽधा। द॒दा॒मि। क्षी॒रेण॑। पू॒र्णान्। उ॒द॒केन॑। द॒ध्ना। ए॒ताः। ०० ॥

क्षीरादिद्रव्येण पूर्णान् चतुरः कुम्भान् चतुर्धा प्रागादिदिग्भेदेन चतुष्प्रकारं [5]दधामि दिक्षु निदधामि। एताः क्षीरादिधाराः त्वाम् उप यन्तु इत्यादि योज्यम्।

---

१. वैशु. मंपा. द्र. २. सा. एतास्त्वा॰ इत्येवमाद्यंशं षष्ठ्या ऋचो व्याख्याने समावेशयति (शु. शंपा.). ३. मधुकुल्याः पै ६,२२,७. ४. चतुष्कुम्भ्यं च॰ पै ६,२२,६. ५. दधामि D. ददामि>दधामि Sm., ददाति पै. ६. पूर्णं पै, ७. कुल्या उपयन्ति विश्वतः स्वर्गे लोके स्वधया मादयन्तीः पै,

'इ॒मम॑ो॒द॒नं नि द॑धे ब्रा॒ह्म॒णेषु॑[1] विष्टा॒रिणं॑ लोक॒जितं॑ 'स्व॒र्गम्[2] ।
स मे॒ मा क्षे॑ष्ट 'स्व॒धया॒ पिन्व॑मानो[3] वि॒श्वरू॑पा 'धे॒नुः का॑म॒दुघा॑[4] मे अस्तु ॥८॥

इ॒मम् । ओ॒द॒नम् । नि । द॒धे । ब्रा॒ह्म॒णेषु॑ । वि॒ष्टा॒रिण॑म् । लो॒क॒ऽजित॑म् । स्वः॒ऽगम् ।
सः । मे॒ । मा । क्षे॒ष्ट॒ । स्व॒धया॑ । पिन्व॑मानः । वि॒श्वऽरू॑पा । धे॒नुः । का॒म॒ऽदु॒घा॑ । मे॒ । अ॒स्तु॒ ॥

इमम् पक्वम् ओदनं ब्राह्मणेषु अग्र्यजन्मसु भोक्तृषु नि दधे निक्षिपामि । कीदृशम् । विष्टारिणम् प्रागुक्तविस्तारोपेतं लोकजितम् लोक्यत इति लोकः कर्मफलं तज्जयसाधनम् अत एव 'स्वर्ग्यम् स्वर्गशब्दाभिधेयदुःखासंभिन्ननिरतिशयसुखस्य साधनम् । स मे ओदनः तस्मिन् स्वर्गे लोके स्वधया क्षीरादिरसेन पिन्वमानः वर्धमानः मा क्षेष्ट क्षयं मा प्राप्नोतु । क्षि क्षये । माङि लुङ् । पिन्वमान इति । पिवि मिवि णिवि सेचने । इदित्वान्नुम् । अपि च ओदनः विश्वरूपा नानाविधफलप्रदरूपा धेनुः सती मे मम कामदुघा अभिलषितफलस्य दोग्ध्री अस्तु भवतु । कामान् दुग्धे इति कामदुघा । 'दुहः कब्घश्च' ( पा ३,२,७० ) इति कब्घत्वे ।

इति चतुर्थं सूक्तम् ।

'यम् ओदनम्' इति सूक्तम् अतिमृत्युसवे निरुप्तहविरभिमर्शनादिषु विनियुक्तम् । सूत्रितं हि— " 'यम् ओदनम्' इत्यतिमृत्युम् " ( कौसू ६६,११ ) इति ।

तथा गोर्यमलजननलक्षणाद्भुतशान्तौ अनेन सूक्तेन गोरभ्युक्षणं होमं च कुर्यात् । सूत्रितं हि—" अथ 'यत्रैतद् यमसूः 'यम् ओदनम्' इति[5] तां शान्त्युदकेन अभ्युक्ष्य दोहयित्वा । तस्या एव गोर्दुग्धे स्थालीपाकं श्रपयित्वा" ( कौसू १०९,१;२ ) इत्यादि ।

यमो॑द॒नं प्र॑थम॒जा ऋ॒तस्य॑ प्र॒जाप॑ति॒स्तप॑सा ब्र॒ह्मणेऽप॑चत् ।
यो लो॒काना॒ं विधृ॑ति॒र्नाभि॒रेषा॑त्[7] तेनौ॑द॒नेनाति॑ तराणि मृ॒त्युम् ॥ १ ॥

यम् । ओ॒द॒नम् । प्र॒थ॒म॒ऽजाः । ऋ॒तस्य॑ । प्र॒जाऽप॑तिः । तप॑सा । [8]ब्र॒ह्मणे॑ । अप॑चत् ।
यः । लो॒काना॑म् । विऽधृ॑तिः । न । अ॒भि॒ऽरेषा॑त् । तेन॑ । ओ॒द॒नेन॑ । अति॑ । त॒रा॒णि॒ । मृ॒त्युम् ॥ १ ॥

ऋतस्य परब्रह्मणः प्रथमजाः तत्सकाशात् प्रथमम् उत्पन्नो हिरण्यगर्भाख्यः प्रजापतिः तपसा दीक्षादिनियमेन यम् ओदनं ब्रह्मणे स्वकारणभूताय देवाय अपचत् ।

---

१. यमोदनं पचसि ?मिश्रद् दधानो? पै ६,२२,९. २. स्वर्ग्यम् S, सा. पै. ३. मदमिध्यमाणो पै. ४. धेनुष्कामु° P³,M,W,E². ५. वैतु. मंपा. द्र. ६. तदयमसूर्यमौ जनयति Bl. ७. °रेषां O,Op. ८. ब्रह्मणे P².

यश्च ओदनो लोकानाम् पृथिव्यादीनां विधृतिः विधारयिता [1]एका मुख्या [1]नाभिः शरीरस्य नाभिरिव लोकानां बन्धकः । 'नहो भश्च' (पाउ ४,१२६) इति इञ् प्रत्ययः । तेनौदनेन दीयमानेन मृत्युम् मरणं तद्धेतुभूतं वा देवम् अतितराणि अतिक्रामामि ।

येनातरन् भूतकृतोऽति मृत्युं यमन्वविन्दन् तपसा श्रमेण ।
यं पपाच ब्रह्मणे ब्रह्म पूर्वं तेनौदनेनाति तराणि मृत्युम् ॥ २ ॥

येन । अतरन् । भूतऽकृतः । अति । मृत्युम् । यम् । [2]अनुऽअविन्दन् । तपसा । श्रमेण ।
यम् । पपाच । ब्रह्मणे । ब्रह्म । पूर्वम् । तेन । ओदनेन । [3]अति । तराणि । मृत्युम् ॥ २ ॥

भूतकृतः भूतानां प्राणिनां कर्तारो देवाः येन ओदनेन मृत्युम् अत्यतरन् अतिक्रान्तवन्तः । यम् ओदनं तपसा उपवासादिनियमेन श्रमेण शरीरक्लेशेन च अन्वविन्दन् अन्वलभन्त । तथा पूर्वम् प्रथमोत्पन्नं हिरण्यगर्भाख्यं ब्रह्म ब्रह्मणे स्वकारणभूताय यम् ओदनं पपाच । तद्देवत्यं पक्त्वा ब्राह्मणेभ्यः प्रादाद् इत्यर्थः । तेनौदनेनेत्यादि गतम् ।

यो दाधार पृथिवीं विश्वभोजसं यो अन्तरिक्षमापृणाद् रसेन ।
यो अस्तभ्नाद् दिवमूर्ध्वो महिम्ना तेनौदनेनाति तराणि मृत्युम् ॥ ३ ॥

यः । दाधार । पृथिवीम् । विश्वऽभोजसम् । यः । अन्तरिक्षम् । आऽअपृणात् । रसेन ।
यः । अस्तभ्नात् । दिवम् । ऊर्ध्वः । महिम्ना । तेन । ओदनेन । अति । तराणि । मृत्युम् ॥ ३ ॥

य ओदनो विश्वभोजसम् विश्वस्य कृत्स्नस्य प्राणिजातस्य भोग्यभूतां पृथिवीम् भूमिं दाधार धृतवान् । विश्वं भुनक्ति पालयतीति विश्वभोजाः । भुज पालनाभ्यवहारयोः । अस्माद् असुन्प्रत्ययः । तथा य ओदनः आहुत्यात्मना परिणतेन स्वकीयेन रसेन अन्तरिक्षम् दिवम् आपृणात् आपूरयति । पृ पालनपूरणयोः । प्वादित्वात् ह्रस्वः । तथा य ओदनः महिम्ना महत्त्वेन दिवम् द्युलोकम् ऊर्ध्वः अस्तभ्नात् । यथाऽधो न पतति तथा ऊर्ध्वः सन् धृतवान् इत्यर्थः । एवं विराडात्मना तस्य स्तुतिः । तेनौदनेनेत्यादि गतम् ।

यस्मान्मासा निर्मितास्त्रिंशदराः संवत्सरो यस्मान्निर्मितो द्वादशारः ।
अहोरात्रा यं [4]परियन्तो [5]नापुस्तेनौदनेनाति तराणि मृत्युम् ॥ ४ ॥

१ वैतु. मंपा. द्र. २. अनुऽअविंदन् P,P². ३. अर्ति P. ४. पर्यंतः S.
५ ह्नापु° B^h,K,R,P².

यस्मात्। मासाः। निःऽमिताः। त्रिंशत्ऽअराः। सम्ऽवत्सरः। यस्मात्। निःऽमितः। द्वादशऽअरः।
अहोरात्राः[1]। यम्। परिऽयन्तः। न। [2]आपुः। तेन। ओदनेन। अति। तराणि। मृत्युम्॥४॥

यस्माद् ब्रह्मात्मकाद् ओदनाद् मासा द्वादश निर्मिता उत्पन्नाः त्रिंशदराः। रथचक्रावयवाः कीलका अराः। चक्रवद् आवर्तमानत्वाद् मासास्तथा अनेन रूप्यन्ते। त्रिंशत्संख्याकानि दिनानि अरा येषां ते तथोक्ताः। अपि च द्वादशारः द्वादशमासात्मकः संवत्सरो यस्मात् ब्रह्मात्मकाद् ओदनाद् निर्मितः उत्पादितः। अहानि च रात्रयश्च अहोरात्राः। 'अहःसर्वैकदेश°' (पा ५,४,८७) इति समासान्तः अच्प्रत्ययः। ते च [3]पर्यन्तः पर्यावर्तमानाः यं ब्रह्मात्मकम् ओदनं नापुः न प्रापुः। तेनौदनेन इत्योदनस्य माससंवत्सराहोरात्रातिवर्तित्वेन स्तुतिः।

यः प्राणदः [4]प्राणदवान् बभूव यस्मै लोका घृतवन्तः क्षरन्ति।
ज्योतिष्मतीः प्रदिशो यस्य सर्वास्तेनौदनेनाति तराणि मृत्युम् ॥ ५ ॥

यः। प्राणदः। प्राणदऽवान्। बभूव। यस्मै। लोकाः। घृतऽवन्तः। क्षरन्ति।
ज्योतिष्मतीः। प्रऽदिशः। यस्य। सर्वाः। तेन। ओदनेन। अति। तराणि। मृत्युम् ॥ ५ ॥

यः ओदनः [3]प्राणदवाम् प्राणैर्जिगमिषुभिर्दूयन्ते परिताप्यन्ते इति प्राणद्वः मुमूर्षवः। तेषां प्राणदः प्राणप्रदो बभूव भवति। प्राणद्वाम् इति। दूङ् परितापे। अस्मात् प्राणशब्दोपपदात् क्विप्। अकारोपजनश्छान्दसः। यस्मै ब्रह्मात्मकाय ओदनाय सर्वे लोकाः घृतवन्तः घृतधारायुक्ताः क्षरन्ति स्रवन्ति। यस्य ओदनस्य तेजसा सर्वाः प्रदिशः प्रकृष्टाः प्राच्याद्या ज्योतिष्मतीः प्रशस्ततेजस्का भवन्ति। तेनौदनेनेत्यादि गतम्।

यस्मात् पक्वादमृतं संबभूव यो गायत्र्या अधिपतिर्बभूव।
यस्मिन् वेदा निहिता विश्वरूपास्तेनौदनेनाति तराणि मृत्युम् ॥ ६ ॥

यस्मात्। पक्वात्। अमृतम्। सम्ऽबभूव। यः। गायत्र्याः। अधिऽपतिः। बभूव।
यस्मिन्। वेदाः। निऽहिताः। विश्वऽरूपाः। तेन। ओदनेन। अति। तराणि। मृत्युम्॥ ६ ॥

पक्वात् पाकोत्पन्नाद् यस्माद् ओदनाद् अमृतम् द्युलोकस्थं संबभूव उत्पन्नम्। यश्च गायत्र्याः छन्दसाम् अग्रिमाया अधिपतिः अधिदेवता बभूव भवति। यस्मिन् ओदने वेदाः ऋग्यजुःसामाद्याः विश्वरूपाः शाखाभेदेन आसादितवैश्वरूप्या निहिताः

---

1. अहोरात्रा P,P[2],J,K,Cp. 2. अपुः K, आपुः P[2]. 3. वैतु. मंपा. द्र.
4. °दवां K, सा.; वैप १,२२३२ I द्र.

निक्षिप्ताः। अन्तरवस्थिता इत्यर्थः। पक्वात् इति। 'पचो वः' (पा ८,२,५२) इति निष्ठातकारस्य वत्वम्। गतमन्यत्।

अव॑ बाधे द्विषन्तं॑ ¹देवपीयुं स॒पत्ना॒ ये मेऽप॒ ते भ॑वन्तु।
ब्र॒ह्मौद॒नं वि॑श्व॒जितं॑ पचामि शृ॒ण्वन्तु॒ मे श्र॒द्दधा॑नस्य दे॒वाः ॥ ७ ॥

अव॑। बा॒धे॒। द्वि॒षन्त॑म्। दे॒व॒ऽपीयु॑म्। स॒ऽपत्नाः॑। ये। मे॒। अप॑। ते। भ॒व॒न्तु॒।
ब्र॒ह्म॒ऽओ॒द॒नम्। वि॒श्व॒ऽजित॑म्। प॒चा॒मि॒। शृ॒ण्वन्तु॑। मे॒। श्र॒त्ऽदधा॑नस्य। दे॒वाः ॥ ७ ॥

द्विषन्तम् हिंसन्तं शत्रुम् अहम् अव बाधे अपहन्मि। तथा ²देवपीयून्। पीयतिर्वधकर्मा। 'पीयति त्वो अनु त्वो गृणाति' (ऋ १,१४७,२) इति हि निगमः। देवानां हिंसकान् अपहन्मि। अतो मे मम ये सपत्नाः शत्रवः ते अप अपहता भवन्तु। तदर्थम् अहं विश्वजितम् सर्वस्य जेतारं ब्रह्मौदनम् ब्राह्मणेभ्यो देय ओदनो ब्रह्मौदनः। तं पचामि संस्करोमि। श्रद्दधानस्य श्रद्धायुक्तस्य मे मम वाक्यं देवा यष्टव्याः शृण्वन्तु आकर्णयन्तु।

इति पञ्चमं सूक्तम्।

इति सप्तमोऽनुवाकः।

अष्टमेऽनुवाके पञ्च सूक्तानि। तत्र 'तान्त्सत्यौजाः' (अ ४,३६), 'त्वया पूर्वम्' (अ ४,३७) इति द्वयोः सूक्तयोश्चातनगणे पाठात् 'चातनानाम् अपनोदनेन व्याख्यातम्' (कौसू २५,२२) इति विहितेषु भूतग्रहाद्युच्चाटनकर्मसु विनियोगः।

³तान्त्स॒त्यौ॑जाः॒ प्र ⁴द॑हत्व॒ग्निर्वै॑श्वान॒रो वृषा॑।
यो ⁵नो॑ दु॒रस्या॒द् दिप्सा॒च्चाथो॒ यो नो॑ अराति॒यात्॥ १ ॥

तान्। स॒त्यऽओ॑जाः। प्र। द॒ह॒तु॒। अ॒ग्निः। वै॒श्वा॒न॒रः। वृषा॑।
यः। न॒ः। दु॒र॒स्यात्। दिप्सा॑त्। च॒। अथो॒ इति॑। यः। न॒ः। ⁶अ॒रा॒ति॒ऽयात् ॥१॥

सत्यौजाः सत्यम् अवितथम् ⁷ओजो बलं यस्य तादृशो वैश्वानरः विश्वनरहितः वृषा सेचनसमर्थः पुंस्त्वोपेतः अग्निः तान् शत्रून् प्र दहतु प्रकर्षेण भस्मीकरोतु। तच्छब्दनिर्दिष्टानेव दर्शयति उत्तरार्धेन — यः शत्रुः नः अस्मान् दुरस्यात् दुष्टानिव आचरेत्। अस्मासु अविद्यमानं दोषम् उद्भावयेद् इत्यर्थः। दुष्टशब्दात् 'उपमानादाचारे' (पा ३,१,१०) इति क्यच्। 'दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति' (पा ७,४,३७)

१. °पीयं D, °पीयून् K, सा. २. वैतु. मंपा. द्र. ३. तं स° पै १०,१२,६.
४. दहतामग्नि° पै. ५. मा पै. ६. अ॒रा॒ति॒ऽयत् P,P⁸. ७. अमे ओजो S', Kd.

इति निपातनात् क्यचि तुष्टशब्दस्य तुरस्भावः । तदन्तात् लेटि आडागमः । तथा यश्च शत्रुः अस्मान् दिप्सात् धिप्सेत् हिंसितुम् इच्छेत् । दम्भु दम्भे । 'सनीवन्तर्ध' ( पा ७,२,४९ ) इति इटो विकल्पनाद् अभावः । 'दम्भ इच्च' ( पा ७,४,५६ ) इति इत्वम् । भष्भावाभावश्छान्दसः । पूर्ववत् लेटि आडागमः । अथो अपि च यः शत्रुः नः अस्मान् अरातियात् अरातिवद् आचरेत् अस्मद्विषये शत्रुभावम् अनुतिष्ठति । तान् सर्वान् प्र दहतु इति सम्बन्धः ।

यो [1]नो [2]दिप्सादर्दिप्सतो दिप्सतो यश्च दिप्सति[3] ।
वैश्वानरस्य दंष्ट्रयोरग्नेरपि दधामि तम् ॥ २ ॥

यः । नः । [2]दिप्सात् । अदिप्सतः । दिप्सतः । यः । च । दिप्सति ।
वैश्वानरस्य । दंष्ट्रयोः । अग्नेः । अपि । दधामि । तम् ॥ २ ॥

यः शत्रुः अदिप्सतः दम्भितुं हिंसितुम् अनिच्छतः नः अस्मान् दिप्सात् हिंसितुम् इच्छेत् । पूर्ववद् दम्भेः सन्नन्तात् लेटि आडागमः । तथा दिप्सतः हिंसितुम् इच्छतः अस्मान् यः शत्रुः दिप्सति दम्भितुम् इच्छति । जिहिंसिषतीत्यर्थः । वैश्वानरस्य विश्वनरहितस्य अग्नेः दंष्ट्रयोः खादनसाधनयोर्दन्तविशेषयोः आस्य-मध्यस्थयोः तम् उभयविधं शत्रुम् अपि दधामि प्रक्षिपामि । ताभ्यां पीडितो विनश्यतु इत्यर्थः ।

य आगरे मृगयन्ते प्रतिक्रोशेऽमावास्ये ।
क्रव्यादो अन्यान् दिप्सतः सर्वांस्तान्त्सहसा सहे ॥ ३ ॥

ये । आऽगरे । मृगयन्ते । [4]प्रतिऽक्रोशे । अमाऽवास्ये ।
क्रव्यऽअदः । अन्यान् । दिप्सतः । सर्वान् । तान् । सहसा । सहे ॥ ३ ॥

आगरे आगीर्यते समन्ताद् भज्यते मांसशोणितादिकम् अत्रेति आगरो युद्धरङ्गः । गॄ निगरणे । 'ऋदोरप्' ( पा ३,३,५७ ) इति अधिकरणे अप् । तत्र ये क्रव्यादः मांसभक्षकाः पिशाचादयः मृगयन्ते अस्मान् हिंसितुम् अन्विच्छन्ति । मृग अन्वेषणे । चुरादिरदन्तः । तथा प्रतिक्रोशे प्रतिकूलैः शत्रुभिः कृते आक्रोशे अमावास्ये । अमा सूर्येण सह चन्द्रमा वसत्यस्यां तिथौ इति अमावास्या । अधि-

१. मा पै १०,१२,७. २. तु. सा. RW., सपा. अ ६,३७,३ शपाद°; वैतु. शंपा. दिप्सद°; दिप्सत्यदिप्सन्तं यश्च दिप्सति दिप्सन्तम् पै. ३. तु. मंपा.; वैतु. शांप्र. दिप्सत्. ४. प्रतिऽक्रोशे P,P², J, Cp.

**करणे ण्यत्** । **तत्र जातः उत्पन्नः अर्धरात्रकालः अमावास्यः** । 'अमावास्याया वा', 'अ च' ( पा४,३,३०;३१ ) **इति** [1]**अकारप्रत्ययः** । **तादृशे अमावास्यासम्बन्धिनि अर्धरात्रकाले क्रव्यादः पिशाचाः** अन्यान् [2]दिप्सन्ति **हिंसितुम् इच्छन्ति** । **नष्टचन्द्रायास्तस्या अर्धरात्रे हि रक्षसां संचारकालः** । **तथा च तैत्तिरीयकम्**— 'निशितायां हि रक्षांसि प्रेरते संप्रेर्णान्येवैनानि हन्ति' ( तै २,२,२,३ ) **इति** । **एतच्च आपस्तम्बेन स्पष्टीकृतम्** । 'अग्नये रक्षोघ्ने पुरोडाशम् अष्टाकपालम् अमावास्यायां निशायां निर्वपेत्' ( आपश्रौ १९,१८,१४ ) **इति** । तान् सर्वान् **पिशाचादीन्** सहसा **बलेन मन्त्रप्रभावजनितेन** सहे **अभिभवामि** ।

**स॒हे॑ पि॒शा॒चान्त्सह॑सै॒षां॑[3] द्रवि॑णं ददे ।**
**सर्वा॑न् दुरस्य॒तो ह॑न्मि॒ सं [4]म॒ आकू॑तिर्ऋध्यताम् ॥ ४ ॥**

स॒हे॑ । पि॒शा॒चान् । सह॑सा । [5]आ । ए॒षाम् । द्रवि॑णम् । द॒दे॒ ।
सर्वा॑न् । दु॒र॒स्य॒तः । ह॒न्मि॒ । सम् । मे॒ । आऽकू॑तिः । ऋ॒ध्य॒ताम् ।

सहसा **बलेन** पिशाचान् **पिशिताशिनो राक्षसान्** सहे **अभिभवामि** । एषाम् **रक्षसां** द्रविणम् **बलम्** आ ददे **स्वीकरोमि** । **नष्टवीर्यान् करोमीत्यर्थः** । दुरस्यतः **अस्मद्विषयं दुष्टत्वम् इच्छतः** सर्वान् **शत्रून्** हन्मि **हिनस्मि नाशयामि** । [6]नः **अस्माकम्** आकूतिः **इष्टफलविषयः संकल्पः** [7]शम् **सुखं यथा भवति तथा** ऋध्यताम् **समृध्यताम्** । **समृद्धफला भवतु इत्यर्थः** । **ऋधु वृद्धौ** ।

**ये दे॒वास्तेन॒ हास॑न्ते॒ सूर्ये॑ण [8]मिमते ज॒वम् ।**
**न॒दीषु॒ पर्व॑तेषु॒ ये सं तैः प॒शुभि॑र्विदे ॥ ५ ॥**

ये । दे॒वाः । तेन॑ । हास॑न्ते । सूर्ये॑ण । मि॒म॒ते॒ । ज॒वम् ।
न॒दीषु॑ । पर्व॑तेषु । ये । सम् । तैः । प॒शुऽभिः॑ । वि॒दे॒ ॥ ५ ॥

देवाः **दीव्यन्तो** ये **पिशाचाद्याः** तेन **प्रसिद्धेन विकारेण** हासन्ते **आविष्टं पुरुषं हासयन्ति** । **हसे हसने** । **अस्माद् ण्यन्तात् लटि** 'णिचश्च' ( पा १,३,७४ ) **इति आत्मनेपदम्** । 'छन्दस्युभयथा' ( पा ३,४,११७ ) **इति शप आर्धधातुकत्वात्** 'णेरनिटि' ( पा ६,४,५१ ) **इति णिलोपः** । **तथा** सूर्येण **समानं** जवम् **वेगं** मिमते **कुर्वन्ति** । **सूर्यप्रभावात् शीघ्रं व्याप्नुवन्तीत्यर्थः** । **तथा** नदीषु पर्वतेषु **च विजनस्थाने** ये **संचरन्ति** तैः **सर्वैर्वियुक्तोऽहं तत्कृतप्रतिबन्धविरहात्** पशुभिः **गोमहिषाद्यैः** सं विदे

१. अकारे प्रत्यये न स्वरसिद्धिः. २. वैद्. मंपा. इ. ३. तु. सा. RW.; वैद्. शंपा. सहसैषां. ४. न K, सा. ५. तु. मंपा. सा.; वैद्. शंपा. नास्ति. ६. यद्योगेऽपि निघातश्चिन्त्यः

संजाने। तान् प्राप्नोमीत्यर्थः। 'समो गमादिषु विदिप्रच्छि°' ( पावा १,३,२९ ) इति आत्मनेपदम्। यद्वा हे देवा अग्न्यादयः ये पशवः तेन रक्षःपिशाचादिना हासन्ते जिहासन्ते। ओहाक् त्यागे इत्यस्मात् सन्। 'छन्दसि वेति वक्तव्यम्' ( पावा ६,१,८ ) इति वचनाद् द्विर्वचनाभावः। कर्मणि कर्तृप्रत्ययश्छान्दसः। परित्यज्य पलायमानाश्च ये पशवः सूर्येण साकं वेगं कुर्वन्ति। शीघ्रं धावन्ति। ये च पशवो नदीषु पर्वतेषु च संचरन्ति युष्मत्प्रसादात् तन्निरोधकान् राक्षसादीन् अपहृत्य तैः सर्वैः पशुभिरहं सं विदे इति सामानाधिकरण्येन संबन्धः।

तपनो अस्मि पिशाचानां व्याघ्रो गोमतामिव।
श्वानः सिंहमिव दृष्ट्वा ते न विन्दन्ते न्यञ्चनम् ॥ ६ ॥

तपनः। अस्मि। पिशाचानाम्। व्याघ्रः। गोमताम्ऽइव।
श्वानः। सिंहम्ऽइव। दृष्ट्वा। ते। न। विन्दन्ते। निऽअञ्चनम् ॥ ६ ॥

पिशाचानाम् रक्षसाम् अहं तपनः मन्त्रसामर्थ्येन तापकोऽस्मि गोमताम् गोस्वामिनां व्याघ्र इव। यथा व्याघ्रो गवां हिंसकत्वेन तत्स्वामिनां तापको भवति तथेत्यर्थः। यथा सिंहं दृष्ट्वा श्वानो भीत्या निलीयन्ते तथा ते पिशाचाः अस्मन्मन्त्रप्रभावं दृष्ट्वा न्यञ्चनम् न्यग्भवनम् अधोगतिम् [1]अनु विन्दन्ते अनुलक्ष्य लभन्ते।

न पिशाचैः सं शक्नोमि न स्तेनैर्न वनर्गुभिः।
पिशाचास्तस्मान्नश्यन्ति यमहं ग्राममाविशे[2] ॥ ७ ॥

न। पिशाचैः। सम्। शक्नोमि। न। स्तेनैः। न। वनर्गुऽभिः।
पिशाचाः। तस्मात्। नश्यन्ति। यम्। अहम्। ग्रामम्। आऽविशे ॥ ७ ॥

न अहं पिशाचैः सं शक्नोमि संशक्तः अनुप्रविष्टो न भवामि। तथा स्तेनैः चौरैः प्रच्छन्नवृत्तिभिर्ग्रामगतैः न सं शक्नोमि न संगतो भवामि। न वनर्गुभिः। वनर्गुशब्दश्चोरनाम। 'वनर्गू वनगामिनौ' ( नि ३,१४ ) इति यास्कः। वनगामिभिश्चोरैरपि न संशक्तोस्मि। तथा पिशाचा राक्षसाः तस्माद् ग्रामान्निर्गत्य [1]नश्यन्तु नष्टा भवन्तु। यं ग्रामम् अहम् आविशे अनुविश्य वसामि। तस्माद् मदधिष्ठिताद् देशात् पलायन्ताम् इत्यर्थः।

यं ग्राममाविशत इदमुग्रं सहो मम।
पिशाचास्तस्मान्नश्यन्ति न पापमुप जानते ॥ ८ ॥

१. वैद्यु. मंपा, द्र. २. °विवेश P³,M,W.

यम् । ग्राम॑म् । आऽवि॒शते॑ । इ॒दम् । उ॒ग्रम् । सहः॑ । मम॑ ।
पि॒शा॒चाः । तस्मा॑त् । न॒श्य॒न्ति॒ । न । पा॒पम् । उप॑ । जा॒न॒ते॒ ॥ ८ ॥

मम मदीयम् इदम् उग्रम् तीक्ष्णं मन्त्रप्रभावजनितं सहः बलं यं ग्रामम् आविशते अनुप्रविश्य वर्तते तस्माद् ग्रामात् पिशाचा नश्यन्ति तत्र न प्रविशन्ति। यदि प्रविविक्षन्ति नश्यन्त्येवेत्यर्थः । अतो न तद्विषयं पापम् हिंसारूपम् उप जानते तत्रत्या जनाः । रक्षःपिशाचादिकृतम् उपद्रवं नावबुध्यन्त इत्यर्थः ।

ये मा॑ क्रो॒धय॑न्ति [1]ल॒पि॒ता ह॒स्तिनं॑ म॒शका॑ इव ।
ताने॒हं म॑न्ये [2]दु॒र्हि॑ता॒न् जने॒ अल्प॑शयूनिव ॥ ९ ॥

ये । मा॒ । क्रो॒धय॑न्ति । [3]ल॒पि॒ताः । ह॒स्तिन॑म् । म॒शकाः॑ऽइव ।
तान् । अ॒हम् । म॒न्ये॒ । [4]दुःऽहि॑तान् । जने॑ । अल्प॑शयून्ऽइव ॥ ९ ॥

ये पिशाचाद्या [5]लिपिताः उपदिग्धाः संक्रान्ताः मा मां क्रोधयन्ति । मशकाः दंशकाः क्षुद्रजन्तवो हस्तिशरीरम् आश्रिता हस्तिनम् गजम् इव । तान् सर्वान् दुर्हतान्[4] दुष्टहननेन विषयीकृतान् अहं मन्ये जानामि । तत्र निदर्शनम् आह—जने इति । जने जनसंघे तत्संचारस्थले अवस्थितान् अल्पशयूनिव परिमाणतः अल्पकायाः शयनस्वभावाः संचाराक्षमाः कीटा अल्पशयवः । ते यथा प्राणिसंचारेण हन्यन्ते तद्वद् अहम् अनायासेन अपुनरुद्भवं हन्मीत्यर्थः ।

अ॒भि तं निर्ऋ॑तिर्धत्ता॒मश्व॑मिवाश्वाभि॒धान्या॑ ।
म॒ल्वो यो मह्यं॒ क्रुध्य॑ति॒ स उ॒ पाशा॒न्न [6]मु॑च्यते ॥ १० ॥

अ॒भि । तम् । निःऽऋ॑तिः । ध॒त्ता॒म् । अश्व॑म्ऽइव । अ॒श्व॒ऽअ॒भि॒धान्या॑ ।
म॒ल्वः । यः । मह्य॑म् । क्रुध्य॑ति । सः । ऊँ इति॑ । पाशा॑त् । न । [7]मु॒च्य॒ते॒ ॥ १० ॥

तं शत्रुं निर्ऋतिः पापदेवता अभि धत्ताम् स्वकीयैः पाशैर्बध्नातु । तत्र दृष्टान्तः— अश्वमिवाश्वाभिधान्या इति । "अश्वम् अभिदधाति"[8] बध्नात्यनया इति अश्वाभिधानी रज्जुः । करणे ल्युट् टित्वाद् ङीप् । तया यथा दुष्टम् अश्वं बध्नन्ति तद्वद् इत्यर्थः । तथा यो मल्वः शत्रुः मां क्रुध्यति मद्विषयं कोपं करोति । 'क्रुधद्रुहेर्ष्यासूयार्थानाम्" ( पा १,४, ३७ ) इति मह्यम् इति चतुर्थी । स उ स एव शत्रुः पाशात् निर्ऋतिसंबन्धिनः न

१. लिपिताः सा. K,V. २. दुर्हि॑ता॒ जने॒ A,D,K[m],R,Cs. ३. ल॒पि॒ता P[2],P[5]J,Cp. ४. दुःऽह॑तान् K. ५. वैतु. मंपा. द्र. ६. मुच्यसे K, सा. ७. मु॒च्य॒से K. ८. अश्ववद् अभिधाति S', Kd.

मुच्यसे[1] मुक्तो न भवतु । बद्ध एव वर्तताम् इत्यर्थः ।

इति अष्टमेऽनुवाके प्रथमं सूक्तम् ।

'त्वया पूर्वम्' इति सूक्तस्य गणप्रयुक्तो विनियोगः पूर्वसूक्तेन सह उक्तः । तथा सर्वभूतग्रहभैषज्यार्थं शमीपर्णचूर्णं शमीफलमध्ये कृत्वा अनेन सूक्तेन अभिमन्त्र्य आविष्टग्रहं पुरुषं भोजयेत् । अलंकारेण सह धारयेत् ।

तथा व्याधितगृहं परिकिरेत् ।

सूत्रितं हि—" 'त्वया पूर्वम्' इति कोशेन शमीचूर्णानि भक्ते । अलङ्कारे । शालां परितनोति" ( कौसू २८,९-११ ) इति—

'गान्धर्वीम् अश्वक्षये' ( शाक १७,५ ) इति विहितायां गान्धर्व्याख्यायां महाशान्तौ गणप्रयुक्तेनानेन[2] सूक्तेन गुल्गुल्वादिद्रव्यहोमोभिहितः । यथा—

'शिग्रुं हुत्वा जलं चैव [3]गुल्गुलुं विषमेव च ।
पिप्पलीं कृष्णलीं चैव सहां चैव त्वलाबुना ।
शरतूलानि मृष्टीश्च जुहुयाच्चातनेन तु ।
ओषधीं सहमानां तु पृश्निपर्णीं तथापराम् ।
अजशृङ्गीं समस्यैताम् अमन्त्रं जुहुयात् सकृत् ॥' ( शाक २०,५–२१,१;५ ) इति ।

त्वया॒ पूर्व॒मथ॑र्वाणो ज॒घ्नू रक्षां॒स्योष॑धे ।
त्वया॑ जघान क॒श्यप॒स्त्वया॒ कण्वो॑ अ॒गस्त्यः॑ ॥ १ ॥

त्वया॑ । पूर्व॑म् । अथ॑र्वाणः । ज॒घ्नुः । रक्षां॑सि । ओ॒ष॒धे॒ ।
त्वया॑ । ज॒घान॒ । क॒श्यप॑ः । त्वया॑ । कण्वः॑ । अ॒गस्त्यः॑ ॥ १ ॥

अत्र सहमानादीनां विनियोगोक्तानाम् अन्यतमा संबोध्यते । हे ओषधे त्वया साधनेन पूर्वम् पुरा अथर्वाणः महर्षयः रक्षांसि जघ्नुः हतवन्तः । हन्तेर्लिटि उसि 'गमहन'' ( पा ६,४,९८ ) इति उपधालोपः । तस्य स्थानिवत्त्वाद् द्विर्वचनम् । तथा कश्यपः महर्षिः त्वया एव साधनेन तदनन्तरं रक्षांसि जघान कण्वो अगस्त्यश्च । अतः अहमपि त्वद्वारणहोमादिना रक्षांसि हन्मीत्यर्थः ।

त्वया॑ व॒यम॑प्स॒रसो॑ गन्ध॒र्वांश्चा॑तयामहे[4] ।
अज॑शृङ्ग्यज॒ रक्षः॒ सर्वा॑न् ग॒न्धेन॑ [5]नाशय ॥ २ ॥

त्वया॑ । व॒यम् । अ॒प्सर॑सः । ग॒न्ध॒र्वान् । चा॒त॒या॒म॒हे॒ ।
अज॑ऽशृङ्गि[6] । अज॑ । रक्षः॑ । सर्वा॑न् । ग॒न्धेन॑ । ना॒श॒य॒ ॥ २ ॥

१. वैतु. मंपा. द्र. २. °प्रयुक्त्यानेन S', Kd. ३. गुग्गुलुं Bo?. ४. चातयामसि पै १३,४,२. ५. नाशया पै. ६. अ॒ज॒शृं॒गि P.

'अजशृङ्गी विषाणी स्यात्' ( अको २,४,११९ ) इत्यभिधानकोशप्रसिद्धा अजशृङ्गी। सात्र संबोध्या। अजशृङ्गाकृतिफलयुक्तत्वाद् अजशृङ्गीत्युच्यते। हे तादृशि ओषधे त्वया साधनेन वयम् अप्सरसो गन्धर्वांश्च अस्मदुपद्रवकारिणः चातयामहे नाशयामः। 'चातयतिर्नाशने' ( नि ६,३० ) इति यास्कः। हे अजशृङ्गि त्वं रक्षः राक्षसजातिम् अज अस्मात् स्थानात् क्षिप प्रच्यावय। अज गतिक्षेपणयोः। किं बहुना। सर्वान् रक्षःपिशाचादीन् त्वदीयेन उग्रेण गन्धेन नाशय अदर्शनं प्रापय।

नदीं[1] यन्त्वप्सरसोपां[2] तारमवश्वसम्[3]।
गुल्गुलूः[4] पीला[5] नलद्यौ३क्षगन्धिः प्रमन्दनी[6]।
तत् [7]परेताप्सरसः [8]प्रतिबुद्धा अभूतन ॥ ३ ॥

नदीम्। यन्तु। अप्सरसः[9]। अपाम्। तारम्। अवऽश्वसम्। गुल्गुलूः। पीला। नलदी। औक्षऽगन्धिः। प्रऽमन्दनी। तत्। परा। इत। अप्सरसः। प्रतिऽबुद्धाः[10]। अभूतन ॥३॥

अप्सरसः गन्धर्वाणां स्त्रियः अस्मदीयात् स्थानात् प्रच्याविताः नदीम् नद्युपलक्षितं स्वावासस्थानं यन्तु गच्छन्तु। तत्र दृष्टान्तः—नादेयीनाम् अपां तारम् तारयितारं [11]श्वसम् इव सुष्ठु नौप्रेरणकुशलं यथा तितीर्षवो जना उपगच्छन्ति। एतत् केन साधनेन इति चेत् तत्राह—गुल्गुलूरिति। गुल्गुल्वादीनि पञ्च होमद्रव्याणि विनियोगशास्त्रप्रसिद्धानि। तेषां हवनेन भीता भवन्त्य इत्यर्थः। [12]हे अप्सरसः तत् प्रसिद्धं स्वावासस्थानं परेत परागच्छत पराङ्मुख्यः अस्मान् अनवेक्षमाणाः प्राप्नुत। गत्वा च तत्रैव प्रतिबद्धाः[11] निरुद्धगतयः अभूतन भवत। छान्दसो भवतेर्लुङ्। 'तप्तनप्तनथनाश्च' (पा ७,१,४५) इति तस्य तनादेशः।

यत्राश्वत्था न्यग्रोधा महावृक्षाः शिखण्डिनः।
तत्परेताप्सरसः प्रतिबुद्धा अभूतन ॥ ४ ॥

यत्र। अश्वत्थाः। न्यग्रोधाः। महाऽवृक्षाः। शिखण्डिनः।
तत्। परा। इत। अप्सरसः। प्रतिऽबुद्धाः। अभूतन ॥ ४ ॥

यत्र यस्मिन् स्थाने अश्वत्था न्यग्रोधा अन्ये च प्लक्षादयो महावृक्षाः शिखण्डिनः मयूराश्च सन्ति। शिखण्डिसद्भावेन विजनत्वं सूचितम्। तत् परेत इत्यादि पूर्ववत्। अश्वत्थादीनां तदावासस्थानता तैत्तिरीये समाम्नाता—'नैयग्रोध औदुम्बर आश्वत्थः

---

१. नदी Bh,Sm. २. °सो अपां पै १३,४,३. ३. °मिव स्वसम् पै [मूको.] सा. ४. गुग्गुलूः A,J,K,Bp²,H,K², RW. पै. सा. ५. पाला पै. ६. प्रमोदुनी Bh,Cs; प्रबन्धिनी पै. ७. °प्सरसः Wh. ८. °बद्धा K, सा. ऋ १,१९१,५. ९. अप्सरसः P,Wh. १०. °बद्धाः K. ११. वैतु. मंपा. द्र. १२. सा. तत् परेत इत्यादंशं चतुर्थ्या ऋचो व्याख्याने समावेशयति (तु. शंपा.).

प्लाक्ष इतीध्मो भवत्येते वै गन्धर्वाप्सरसां गृहाः' ( तै ३,४,८,४) इति। महावृक्षा इति। महान्तश्च ते वृक्षा महावृक्षाः। 'आन्महतः" (पा ६,३,४६) इति आत्वम्।

यत्र॑ 'वः प्रे॒ङ्खा' हरि॑ता अर्जु॑ना उ॒त यत्रा॑घाटाः 'कर्क॒र्यः॑ सं॒वद॑न्ति।
तत्परे॑ताप्सरसः' प्रति॑बुद्धा अभूतन ॥ ५ ॥

यत्र॑। व॒ः। प्र॒ऽई॒ङ्खाः। हरि॑ताः। अर्जु॑नाः। उ॒त। यत्र॑। आ॒घा॒टाः। 'क॒र्क॒र्यः॑। स॒म्ऽव॒द॑न्ति। तत्। परा॑। इ॒त। 'अ॒प्स॒र॒सः। 'प्रति॑ऽबुद्धाः। अ॒भू॒त॒न ॥ ५ ॥

हे अप्सरसः वः युष्माकं क्रीडनाय प्रेङ्खा दोला यत्र यस्मिन् स्थाने निबद्धा वर्तन्ते। हरिताः हरिद्वर्णा अर्जुनाः धवलाश्चेति प्रेङ्खानां विशेषणम्। यद्वा हरिद्वर्णाः श्यामला वृक्षा अर्जुनाख्याश्च यस्मिन् देशे सन्ति। तथा यत्र यस्मिन् देशे आघाटाः। आङ्पूर्वात् हन्तेः कर्मणि घञ्। छान्दसं टत्वम्। आहन्यमाना वाद्यमाना कर्कर्यः वाद्यविशेषाः संवदन्ति युष्मन्नृत्तानुगुण्येन समानं ध्वनन्ति तत्र स्थानं परेतेत्यादि पूर्ववद् योज्यम्।

एयम॑ग॒न्नोष॑धीनां॑ वी॒रुधां॑ वी॒र्या॑वती।
अ॒ज॒शृ॒ङ्ग्य॑रा॒टकी॒ तीक्ष्ण॑शृङ्गी॒ व्यृ॑षतु ॥ ६ ॥

आ। इ॒यम्। अ॒ग॒न्। ओष॑धीनाम्। वी॒रुधा॑म्। वी॒र्य॑ऽवती।
अ॒ज॒ऽशृ॒ङ्गी। अ॒रा॒टकी। ती॒क्ष्ण॒ऽशृ॒ङ्गी। वि। ऋ॒ष॒तु॒ ॥ ६ ॥

ओषधीनाम्। ओषः पाकः आसु धीयत इति ओषधयः। तासाम् ओषधीनां वीरुधाम् विरोहणस्वभावानाम् अन्यासां च लतानां मध्ये वीर्यावती अतिशयितसामर्थ्ययुक्ता इयम् अजशृङ्गी ओषधिः आगन् आगमत्। अस्मदुपद्रवं नाशयितुम् आगता। गमेर्लुङि 'मन्त्रे घस°' (पा २,४,८०) इति च्लेर्लुक्। 'हल्ङ्या' (पा ६,१,६८) इत्यादिलोपे 'मो नो धातोः' (पा ८,२,६४) इति नत्वम्। सा च अजशृङ्गी [10]अराटकी। अरा अदातारो हिंसकाः तान् अस्मात् स्थानात् आटयति उच्चाटयतीति अराटकी। तीक्ष्णशृङ्गी तीक्ष्णे उग्रगन्धे शृङ्गाकृती फले यस्याः एवंगुणविशिष्टा सा रक्षःपिशाचादीन् व्यृषतु हिनस्तु।

१. वीङ्खा पै १३,४,८. २. कर्कर्यः B,Bp,Bh,D,R,P,J,P³,M,W. ३. °प्सरसः Wh. ४. कुर्कर्यः P,J. ५. अप्सरसः P,P²,Wh. ६. °बद्धाः K. ७. डोला S', Kd. ८. हरितो S', Kd. ९. ओषधिर् पै १३,४,१०. १०. आराटकी S', Kd.

[1]आनृत्यतः शिखण्डिनो गन्धर्वस्याप्सरापतेः ।
भिनद्मि[2] मुष्कावपि [3]यामि शेपः ॥ ७ ॥

आऽनृत्यतः । शिखण्डिनः । गन्धर्वस्य । अप्सराऽपतेः ।
भिनद्मि । मुष्कौ । अपि । यामि । शेपः ॥ ७ ॥

आनृत्यतः समन्ताद् नर्तनं [4]कुर्वतः शिखण्डिनः शिखण्डाश्चूडाः तद्वतः । यद्वा शिखण्डी मयूरः । लुप्तोपममेतत् । तद्वद् आनृत्यतः । गन्धर्वस्य । गीतिरूपा वाचो गाः धारयतीति गन्धर्वः । 'गवि गन् धृञो वः' (पाउना ५,८४) इति धृञो वप्रत्ययो गोशब्दस्य गन्भावश्च । ईदृशस्य अप्सरापतेः । अप्सरस्शब्द [5]आकारान्तो वेदे प्रसिद्धः । अप्सरसाम् अधिपतेः अस्मान् जिघांसतो गन्धर्वराजस्य मुष्कौ आण्डौ भिनद्मि विदारयामि संचूर्णयामि । तन्मध्यवर्ति शेपः पुंस्प्रजननं च अपि यामि अपिगतं निरुद्धं करोमि । रिरंसवो हि गन्धर्वाः । तत्साधनत्रिकभेदनेन भीता [6]अस्मात् स्थानात् पलायन्ताम् इत्यर्थः ।

भीमा इन्द्रस्य हेतयः [7]शतमृष्टीरयस्मयीः ।
[8]ताभिर्हविरदान् गन्धर्वानवकादान् [9]व्यृषतु ॥ ८ ॥

भीमाः । इन्द्रस्य । हेतयः । शतम् । ऋष्टीः । अयस्मयीः ।
ताभिः । हविःऽअदान् । । गन्धर्वान् । अवकाऽअदान् । वि । [10]ऋषतु ॥ ८ ॥

भीमाः बिभ्यत्येभ्य इति भीमाः । 'भियः षुग्वा' (पाउ १,१४८) इति औणादिको मक्प्रत्ययः 'भीमादयोऽपादाने' (पा ३,४,७४) इति अपादानेऽर्थे भवति । [11]शतऋष्टीः शतस्पर्शनाः शतधाराः अयस्मयीः अयस्मय्यः अयोविकारा एवंभूताः इन्द्रस्य या हेतयः हननसाधनानि आयुधानि सन्ति ताभिर्हेतिभिः [11]अभि [11]हदान् अभिगताह्लादान् प्राप्तजलाशयान् वा अवकाशन् । अवका जलोपरिस्थाः शैवालविशेषाः तान् अदन्ति भक्षयन्तीति अवकादाः । तान् गन्धर्वान् व्यृषतु इन्द्रो हिनस्तु ।

भीमा इन्द्रस्य हेतयः [7]शतमृष्टीर्हिरण्ययीः ।
ताभिर्हविरदान् गन्धर्वानवकादान् व्यृषतु ॥ ९ ॥

१. इयं वीरुत् पै १३,४,९. २. भिनत्तु पै. ३. यामि RW. यातु पै. ४. कुर्वतः S', Kd. ५. अकारा° S', Kd. ६. अस्मान् S', Kd. ७. शतर्ष्टी° K, सा. पै १३,४,१३. ८. ताभिर्गन्धर्वानमेथा ? अवका° पै. ९. °षत B,Bp,B^bD,K'K^m,V,Cs,Wh: पै. १०. °तु>°त J, °त Cp. ११. वैद्. मंपा. द्र.

भीमाः । इन्द्रस्य । हेतयः । शतम् । ऋष्टीः । हिरण्ययीः ।
ताभिः । हविःऽअदान् । गन्धर्वान् । अवकाऽअदान् । वि । ऋषतु ॥ ९ ॥

हिरण्ययीः हिरण्मय्यः हिरण्यस्य विकाराः स्वर्णनिर्मिताः । इत्येतावानेव विशेषः । अन्यत् पूर्ववद् व्याख्येयम् ।

अवकादानभिशोचानप्सु[1] ज्योतय[2] मामकान् ।
[3]पिशाचान्त्सर्वानोषधे [4]प्र मृणीहि सहस्व च[5] ॥ १० ॥

अवकाऽअदान् । अभिऽशोचान् । अप्ऽसु । [6]ज्योतय† । मामकान्[7] ।
पिशाचान् । सर्वान् । ओषधे । प्र । मृणीहि । सहस्व । च ॥१०॥

अवकादान् [6]अवकाभक्षकान् अभिशोचान् अभितः शोचमानान् दीप्यमानान् शोकस्य प्रापकान् वा मामकान् मत्सम्बन्धिनो गन्धर्वान् अप्सु उदकेषु [6]द्योतय प्रकाशय । हे ओषधे अजशृङ्गि उपद्रवकारिणः पिशाचान् सर्वान् प्र मृणीहि प्रजहि सहस्व अभिभव च ।

श्वेवैकः कपिरिवैकः कुमारः सर्वकेशकः ।
प्रियो दृश इव भूत्वा गन्धर्वः सचते [8]स्त्रिय-
स्तमितो नाशयामसि ब्रह्मणा वीर्यावता ॥ ११ ॥

श्वाऽइव । एकः । कपिःऽइव । एकः । कुमारः । सर्वऽकेशकः । प्रियः । दृशेऽइव । भूत्वा । गन्धर्वः । सचते । स्त्रियः । तम् । इतः । नाशयामसि । ब्रह्मणा । वीर्यऽवता ॥ ११ ॥

एकः गन्धर्वः मायावितया श्वेव श्वाकृतिरिव भवति । एकः अपरो गन्धर्वः कपिरिव मर्कटाकृतिर्भवति । अन्यस्तु गन्धर्वः सर्वकेशकः सर्वतः उत्पन्नाः केशा यस्य तादृशः सन् कुमारः कुमारावस्थ इव भवति । एवं मायावशात् विचित्राकृतिः सन् दृशे द्रष्टुम् दर्शनाय वा प्रिय इव भूत्वा गन्धर्वः गन्धर्वरूपो ग्रहः स्त्रियः सचते समवैति । तं गन्धर्वम् इतः अस्मात् स्त्रीसकाशात् नाशयामसि नाशयामः । 'इदन्तो मसि' ( पा ७,१,४६ ) । केन साधनेन इति चेद् उच्यते— वीर्यावता अतिशयितवीर्ययुक्तेन ब्रह्मणा मन्त्रेण ।

---

१. °चान् मिहिक्षो पै १३,४,१४. २. द्योतय K, सा. पै. ३. गन्धर्वान् पै.
४. कृणु त स्व प प रा व णः? पै. ५. ज्योतयऽमामकान् Wh. † द्योतय K.
६. अवकभ° S', Kd. ७. वैतु. मंपा. द्र. ८. स्त्रियं पै १३,४,१६.

जाया इव वो अप्सरसो गन्धर्वाः पतयो यूयम् ।
'अप धावतामर्त्या मर्त्यान्' मा सचध्वम् ॥ १२ ॥

जायाः । इव । वः । अप्सरसः । गन्धर्वाः । पतयः । यूयम् ।
अप । धावत । 'अमर्त्याः । मर्त्यान् । मा । सचध्वम् ॥ १२ ॥

हे गन्धर्वाः वः युष्माकम् अप्सरसः जाया इव जाया एव उपभोग्याः स्त्रिय एव खलु । यूयं च तासां पतयः भर्तारः । अतः संघीभूय अप धावत । [3]अमर्त्याः अमरणधर्माणः देवजातीया यूयं मर्त्यान् मरणधर्मणो मनुष्यान् भिन्नजातीयान् मा सचध्वम् समवेत । संगता मा भूत ।

इति द्वितीयं सूक्तम् ।

'उद्भिन्दतीं संजयन्तीम्' इति सूक्तेन द्यूतजयकर्मणि अक्षान् अभिमन्त्र्य देवनं कुर्यात् । सूत्रितं हि— 'पूर्वास्वषाढासु गर्तं खनति' इति प्रक्रम्य " 'उद्भिन्दतीं संजयन्तीम्' ( अ ४,३८ ) 'यथा वृक्षम् अशनिः' ( अ ७,५२ ) 'इदम् उग्राय' ( अ ७,११४ ) इति वासितान् अक्षान् निवपति" ( कौसू ४१,१०;१३ ) इति ।

तथा 'सूर्यस्य रश्मीन्' (५) इत्यादिभिः [4]"कर्कीन् वत्सान्[4] इह रक्ष वाजिन्' (७) इत्येवमन्ताभिस्तिसृभिर्ऋग्भिर्गोपुष्टिकर्मणि द्वादशदाम्नीं रज्जुं संपाताज्येन संस्कुर्यात् । 'अयं घासः' (७) इति पादेन गोभ्यो घासं प्रयच्छेत् । 'इह वत्सान्' (७) इति पादेन तस्यां द्वादशदाम्न्यां रज्ज्वां वत्सान् बध्नीयात् । सूत्रितं हि—"कर्कीप्रवादानां द्वादशदाम्न्यां संपातवत्याम् 'अयं घासः' 'इह वत्साम्' इति मन्त्रोक्तम्" ( कौसू २१,११ ) इति ।

तथा 'सूर्यस्य रश्मीन्' इति तिसृभिः कर्कीसवं दद्यात् । सूत्रितं हि— " 'सूर्यस्य रश्मीन्' इति कर्की सानूबन्ध्यां ददाति" ( कौसू ६६,१३ ) इति ।

उद्भिन्दतीं संजयन्तीमप्सरां साधुदेविनीम् ।
ग्लहे कृतानि कृण्वानामप्सरां तामिह हुवे ॥ १ ॥

उत्ऽभिन्दतीम् । सम्ऽजयन्तीम् । अप्सराम् । साधुऽदेविनीम्[5] ।
ग्लहे । कृतानि । कृण्वानाम् । अप्सराम् । ताम् । इह । हुवे ॥ १ ॥

उद्भिन्दतीम् पणबन्धेन धनस्य उद्भेदनं कुर्वती संजयन्तीम् सम्यक् जयं प्राप्नुवतीं साधुदेविनीम् जयोपायपरिज्ञानेन अक्षशलाकादिभिः शोभनं क्रीडन्तीम्

१. अपक्रामत पुरुषादमर्त्या मर्त्यं पै १३,४,१२. २. तु. सा.; वैतु. P,P[2],J,K,Cp. मत्यीः. ३. वैतु. मंपा. द्र. ४. वैतु. मंपा. द्र.; कर्कीर्वत्सां S', Kd. ५. °देवनीम् P, °देवीनीम् J.

एवंगुणविशिष्टाम् अप्सराम् द्यूतक्रियाधिदेवताम् अप्सरोजातीयाम् । अहं स्तौमीति शेषः । अपि च ग्लहे । गृह्यते पणबन्धेन कल्प्यत इति द्यूतक्रियाजेयोऽर्थो ग्लहः । 'प्रहवृदनिश्चिगमश्च' (पा ३,३,५८) इति कर्मणि अप् । 'अक्षेषु ग्लहः' (पा ३,३,७०) इति अक्षविषये निपातनात् लत्वम् । तस्मिन् ग्लहे निमित्ते कृतानि द्यूतजयचिह्नानि कृतत्रेतादिशब्दवाच्यानि अयसंज्ञकानि कृण्वानाम् कुर्वाणाम् । कृतायलाभो हि महान् द्यूतजयः । तद् उक्तं द्यूतक्रियाम् अधिकृत्य आपस्तम्बेन— 'कृतं यजमानो विजिनाति' (आप ५,२०,१) इति । एवंभूतां ताम् अप्सराम् इह अस्मिन् द्यूतजयकर्मणि अहं हुवे आह्वयामि । आगत्य सा मम जयं करोतु इत्यर्थः ।

विचिन्वतीमाकिरन्तीमप्सरां साधुदेविनीम् ।
ग्लहे कृतानि गृह्णानामप्सरां तामिह हुवे ॥ २ ॥

विऽचिन्वतीम् । आऽकिरन्तीम् । अप्सराम् । साधुऽदेविनीम् ।
ग्लहे । कृतानि । गृह्णानाम् । अप्सराम् । ताम् । इह । हुवे ॥ २ ॥

विचिन्वतीम्[1] एकत्र निर्बाधे [2]कोष्ठे त्रिचतुरान् अक्षान् विशेषेण [3]समुच्चिन्वतीं संघीकुर्वतीम्[4] । पुनस्तानेव जयार्थं बहुषु कोष्ठेषु आकिरन्तीम् समन्ताद् विक्षिपन्तीम् । कॄ विक्षेपे । तुदादित्वात् शः । 'ॠत इद्धातोः' (पा ७,१,१००) इति इत्त्वम् । अन्यद् व्याख्यातम् ।

यायैः परिनृत्यत्यादंदाना[5] कृतं ग्लहात् ।
सा नः कृतानि [6]सीषती [7]प्रहामाप्नोतु मायया ।
सा नः पयस्वत्यैतु मा नो जैषुरिदं धनम् ॥ ३ ॥

या । अयैः । परिऽनृत्यति । आऽददाना[8] । कृतम् । ग्लहात् ।
सा । नः । कृतानि । सीषती[9] । प्रऽहाम्[10] । आप्नोतु । मायया ।
सा । नः । पयस्वती । आ । एतु । मा । नः । जैषुः । इदम् । धनम् ॥ ३ ॥

या गन्धर्वस्त्री अयैः अक्षगतसंख्याविशेषैः कृतादिशब्दवाच्यैः परिनृत्यति अभिमतजयप्राप्त्या परितुष्टा नर्तनं करोति । कीदृशी । ग्लहात् गृह्यमाणात् पणबन्धात् कृतम् एतत्संज्ञम् अयम् [11]आदधाना कुर्वाणा । कृतग्लहत्वं तस्या असाधारणो गुणः । सा तादृशी नः अस्माकं कृतानि कृतशब्दवाच्यान् चतुःसंख्यायुक्तान् अयान्

१. °चिन्वंतीम् S', Kd. २. काष्ठे S', Kd. ३. समुचिन्वतीं S', Kd.
४. कुर्वतीम् S', Kd. ५. °दधाना K सा.; °दधानः S. ६. शेषन्ती K सा.
७. प्रहानां° K सा. ८. °दधाना K. ९. शेषन्ती K. १०. °हाद् K.
११. वैदु. मंपा. द्र.

[१]शोषन्ती अवशोषयन्ती [२]ग्रहान् प्रहन्तव्यान् अक्षान् मायया व्यामोहकशक्त्या आप्नोतु अधितिष्ठतु । एकादयः पञ्चसंख्यान्ताः अक्षविशेषा अयाः । तत्र चतुर्णां कृतम् इति संज्ञा । तथा च तैत्तिरीयकम्—'ये वै चत्वारः स्तोमाः कृतम् तत् । अथ ये पञ्च कलिः सः (तैब्रा १,५,११,१) इति । तस्य च कृतस्य लाभाद् द्यूतजयो भवति । अत एव दाशतय्यां लब्धकृतायात् कितवाद् भीतिराम्नाता—'चतुरश्चिद् ददमानाद् बिभीयाद् आ निधातोः' (ऋ १, ४१,९) इति । तत्र च निरुक्तम्—'चतुरोऽक्षान् धारयत इति । तद् यथा कितवाद् बिभीयात्' (नि ३,१६) इति । [३]सा द्यूताधिदेवता पयस्वती द्यूतजितेन पयउपलक्षितेन गवादिधनेन तद्वती नः अस्मान् ऐतु आगच्छतु । नः अस्माकम् इदम् पणितव्यत्वेन कल्पितं धनम् अन्ये कितवा मा जैषुः मापहार्षुः । जयतेर्माङि लुङि 'सिचि वृद्धिः परस्मैपदेषु' (पा ७,२,१) इति वृद्धिः ।

या अ॒क्षेषु॑ [३]प्र॒मोद॑न्ते[?] शु॒चं॑ क्रो॒धं॑ च॒ [४]बिभ्र॑ती ।
आ॒न॒न्दि॒नीं॑ प्र॒मो॒दि॒नीम॑प्स॒रां ता॒मि॒ह हु॑वे ॥ ४ ॥

याः[५][?] । अ॒क्षेषु॑ । प्र॒ऽमोद॑न्ते[६][?] । शु॒च॑म् । क्रो॒ध॑म् । च॒ । बिभ्र॑ती ।
आ॒ऽन॒न्दि॒नी॑म् । प्र॒ऽमो॒दि॒नी॑म् । अ॒प्स॒राम् । ताम् । इ॒ह । हु॒वे ॥ ४ ॥

या गन्धर्वस्त्री द्यूतक्रियासु उक्ता अक्षेषु द्यूतसाधनेषु [१]प्रमोदते प्रहृष्यति । मुद हर्षे । किं कुर्वती । शुचम् इष्टजयवियोगात् शोकं पुनर्जिगीषया क्रोधम् कोपं च बिभ्रती धारयन्ती । डुभृञ् धारणपोषणयोः । लटः शत्रादेशः । शपः श्लौ 'भृञामित्' (पा ७,४,७६) इति अभ्यासस्य इत्वम् । 'अभ्यस्तानामादिः' (पा ६,१,१८९) इति आद्युदात्तत्वम् । आनन्दिनीम् द्यूतजनितहर्षयुक्तां प्रमोदिनीम् द्यूतासक्तान् अन्यानपि प्रमोदयन्तीम् । यद्वा आनन्दिनीम् सुखवतीं प्रमोदिनीम् प्रहर्षवतीम् ईदृशीं ताम् प्रागुक्ताम् अप्सराम् इह द्यूतकर्मणि जयार्थम् अहं हुवे आह्वयामि ।

सूर्य॑स्य र॒श्मीननु॒ याः स॒ञ्चर॑न्ति म॒रीची॑र्वा॒ या अ॑नुस॒ञ्चर॑न्ति ।
यासा॑मृष॒भो दू॑र॒तो वा॒जिनी॑वान्त्स॒द्यः [७]सर्वा॑न् लो॒कान् प॒र्येति॑[८] रक्ष॑न् ।
स न॒ ऐतु॒ होम॑मि॒मं जु॑षा॒णो३॒॑ऽन्तरि॑क्षेण स॒ह वा॒जिनी॑वान् ॥ ५ ॥

१. वैतु. मंपा. द्र. २. सा. (तु. शंपा.), Wh. तृतीयाया ऋचः अन्तिमेन पादद्वयेन चतुर्थ्याः पूर्वार्धं संयोज्य चतुर्थी, चतुर्थ्याः उत्तरार्धेन पञ्चम्याः पूर्वार्धं संयोज्य पञ्चमी, अवशिष्टां पञ्चमीं षष्ठी, षष्ठीं सप्तमी, सप्तमीं चाष्टमी इति मन्यन्ते. ३. °द॑न्ती इति शोधः (वैतु. शंपा. RW. यनि.; [६]A, सा. W. °द॑ते). ४. बिभ्र॑ति RW. ५. या·K. ६. °मोद॑ते K. ७.° सर्वा॑ K. ८. तु. पपा. सा. RW. शौच ४,८१ [भाष्ये]; वैतु. A,B[h],D,K,K[m],R,S[m], V,Cs. पु॒र्यै॑ति.

सूर्यस्य । रश्मीन् । अनु । याः । सम्ऽचरन्ति । मरीचीः । वा । याः । अनुऽसंचरन्ति ।
यासाम् । ऋषभः । दूरतः । वाजिनीऽवान् । सद्यः । सर्वान् । लोकान् । [1]परिऽएति । रक्षन् ।
सः । नः । आ । एतु । होमम् । इमम् । जुषाणः । अन्तरिक्षेण । सह । वाजिनीऽवान् ॥ ५ ॥

या अप्सरसः सूर्यस्य रश्मीन् किरणान् अनु । लक्षणे अनोः कर्मप्रवचनीयत्वम् । रश्मयो यत्र निर्गच्छन्ति तस्मिन् प्रदेशे संचरन्ति वर्तन्ते । मरीचीर्वा मरीचिशब्देन प्रभा विवक्षिता । सूर्यकिरणसंबन्धिनीः मरीचीः प्रभा [2]अनुलक्ष्य या अप्सरसः [3]संचरन्ति । 'तस्य मरीचयोऽप्सरसः' (तै ३,४,७,१) इत्यादि तैत्तिरीयकम् अनुसन्धेयम् । यासाम् अप्सरसाम् ऋषभः वृषभः सेचनसमर्थः पतिः दूरतः दूरे विप्रकृष्टे अन्तरिक्षदेशे संचरन् वाजिनीवान् वाजः अन्नम् अस्याम् अस्तीति व्युत्पत्त्या वाजिनी उषाः । ततो नित्ययोगे मतुप् । सर्वदा उषसा संबद्ध इत्यर्थः । स च सद्यः शीघ्रं सर्वान् लोकान् रक्षन् पालयन् । हेतौ शतृप्रत्ययः । पालनाद्धेतोः पर्येति प्रतिदिवसं पर्यावर्तते स वाजिनीवान् सूर्यः अन्तरिक्षेण । उपलक्षणम् एतत् । अन्तरिक्षगताभिस्ताभिरप्सरोभिः सह इमम् अस्मदीयं होमम् हूयमानं हविः जुषाणः सेवमानः नः अस्मान् ऐतु आगच्छतु ।

अन्तरिक्षेण सह वाजिनीवन् कर्कीं वत्सामिह रक्ष वाजिन् ।
इमे ते स्तोका बहुला एह्यर्वाङियं ते कर्कीह ते मनोऽस्तु ॥ ६ ॥

अन्तरिक्षेण । सह । वाजिनीऽवन् । कर्कीम्[4] । वत्साम् । इह । रक्ष । [6]वाजिन् । इमे । ते ।
स्तोकाः । बहुलाः । आ । इहि । अर्वाङ् । इयम् । ते । कर्की । इह । ते । [7]मनः । अस्तु ॥

हे वाजिन् । वाजः अन्नं बलं वा । तद्वन् अन्तरिक्षेण अन्तरिक्षदेशोपलक्षिताप्सरोगणेन सह [2]वाजिनीवान् उषसा तद्वान् । हविर्लक्षणं वा अन्नं वाजिनी तद्वान् । इह अस्मिन् स्थाने [5]कर्कीन् कर्कवर्णान् शुभ्रान् [2]वत्सान् रक्ष पालय समृद्धान् कुरु । ते त्वदीया इमे स्तोका क्षीराज्यादिबिन्दवो धाराः बहुलाः समृद्धा अस्माकं भवन्तु । त्वं च अर्वाङ् अस्मदभिमुखः सन् एहि आगच्छ । कर्की कर्कवर्णा शुभ्रा इयं गौः ते तव स्वभूता इह अस्मिन् गोष्ठे वर्तते । ते तुभ्यं [2]नमः । अस्माभिः कृतो नमस्कारः अस्तु भवतु ।

१. परिऽऐति>परिऽएति J. २. वैतु. मंपा. द्र. ३. एवं° Bp.
४. कर्की इह K,K[m],V,O. ५. कर्कीन् K. ६. ,वाजिन् P. ७. , नमः P,P[2],J.

अन्तरिक्षेण सह वाजिनीवन् कर्की [1]वत्सामिह रक्ष वाजिन् ।
अयं घासो अयं व्रज इह वत्सां[2] नि बध्नीमः[3] ।
यथानाम[4] वं ईश्महे स्वाहा ॥ ७ ॥

अन्तरिक्षेण । सह । वाजिनीऽवन् । कर्कीम् । वत्साम् । इह । रक्ष । वाजिन् । अयम् । घासः । अयम् । व्रजः । इह । [5]वत्साम् । नि । बध्नीमः । यथाऽनाम । वः । ईश्महे । स्वाहा ॥ ७ ॥

पूर्वोऽर्धर्चः पूर्ववद् योज्यः । अयं प्रदीयमानो घासः अदनीयस्तृणसंघातः पुष्टिकरो भवतु । अदेः कर्मणि घञ् । 'घञपोश्च' (पा २,४,३८) इति घस्लृ आदेशः । अयम् अस्मदीयो व्रजः गोष्ठः गोपुष्टिकरो भवतु । इह अस्मिन् व्रजे द्वादशदाम्न्या तन्त्या [6]वत्सान् नि बध्नीमः नितरां बध्नान् कुर्मः । [7]वः युष्माकं[8] यथानाम येन प्रकारेण खलु ईश्महे स्वामिनो भवामः तथा नि बध्नीमः । ईश ऐश्वर्ये । अदादित्वात् शपो लुक् । स्वाहा इदं हविः स्वाहुतम् अस्तु ।

इति तृतीयं सूक्तम् ।

'पृथिव्याम् अग्नये' इति सूक्तेन सर्वसंपत्कामः मान्त्रवर्णिकीः पृथिव्याद्या देवता यजत उपतिष्ठते वा । सूत्रितं हि काम्यकर्माणि प्रक्रम्य — " [9]'समास्त्वाग्ने' (अ २,६) 'अभ्यर्चत' (अ ७,८७) इत्यग्निं संपत्कामः । 'पृथिव्याम्' (अ ४,३९) इति मन्त्रोक्तम्" (कौसू ५९, १५;१६) इति ।

तथा पाकयज्ञतन्त्रेषु 'पृथिव्याम् अग्नये' इत्यष्टाभिः प्रधानहोमोत्तरकालं संनतिहोमान् जुहुयात् । सूत्रितं हि — " 'पृथिव्याम् अग्नये समनमन्' इति संनतिभिश्च" (कौसू ५,८) इति ।

तत्रैव कर्मणि 'अग्नावग्निः' इति द्वाभ्यां पुरस्ताद्धोमौ कुर्यात् । सूत्रितं हि — " 'अग्नावग्निः' (९), 'हृदा पूतम्' (१०), 'पुरस्ताद् युक्तः' (अ ५,२९,१), 'यज्ञस्य चक्षुः' (अ २, ३५,५) इति जुहोति । पश्चाद् अग्नेर्मध्यदेशे समान् अत्र पुरस्ताद्धोमान्" (कौसू ३,१६;१७) इति ।

तथा चातुर्मास्ये वैश्वदेवपर्वणि 'अग्नावग्निः' इति मन्थ्याग्निहोमम् अनुमन्त्रयते । तद् उक्तं वैताने — "वैश्वदेवे निर्मथ्यं प्रहृतं 'भवतं नः समनसौ' (मा ५,३) इत्यनुमन्त्रयते । 'अग्नावग्निः' (९) इति होमम्" (वैताश्रौ ८,१०;११) इति ।

१. वत्सानिह सा. K. २. वत्सान् K, सा. P[3],M,W,E[2]. ३. ह्र. A,B,Bp, Bh,D,Km,R,Sm,P,P,J,V,Cs,Cp. अथ. पपा.; वैह्र.RW. बध्नीमो यथानाम ४. वत्सान K. ५. वैह्र. मंपा. ह्र. ६. °शंपा.; शीर्णत्वादत्र यद्सतवर्णा अपठनीयाः S', तावतां वर्णानां स्थानं रिक्तम् Kd. ७. सामा° Bl.

पृथिव्याम॒ग्नये॒ सम॑नम॒न्त्स आ॑र्ध्नोत् ।
यथा॑ पृथि॒व्याम॒ग्नये॑ स॒मन॑मन्ने॒वा मह्यं॑ सं॒नमः॒ सं न॑मन्तु ॥ १ ॥

पृ॒थि॒व्याम् । अ॒ग्नये॑ । सम् । अ॒न॒म॒न् । सः । आ॒र्ध्नो॒त् । यथा॑ । पृ॒थि॒व्याम् । अ॒ग्नये॑ । स॒म्ऽअन॑मन् । ए॒व । मह्य॑म् । स॒म्ऽनमः॑ । सम् । न॒म॒न्तु ॥ १ ॥

पृथिव्याम् । प्रथनात् पृथिवी भूमिः । तस्याम् अधिदेवतात्वेन अवस्थिताय अग्नये समनमन् सर्वाणि भूतानि संनतानि उपसन्नानि भवन्ति । स च अग्निः आर्ध्नोत् संनतैर्भूतजातैः समृद्धो भवति । यथा खलु पृथिव्याम् अग्नये भूतानि समनमन् एव एवं संनमः । संपूर्वान्नमेर्भावे क्विप् । अभिलषितफलस्य संनतयः संप्राप्तयः मह्यं सं नमन्तु संप्राप्नुवन्तु ।

पृ॒थि॒वी धे॒नुस्तस्या॑ अ॒ग्निर्व॒त्सः । सा मे॒ऽग्निना॑ व॒त्सेने॒षमू॒र्जं कामं॑ दुहाम् ।
'आयु॑ः प्रथ॒मं' प्र॒जां पोषं॑ र॒यिं स्वाहा॑ ॥ २ ॥

पृ॒थि॒वी । धे॒नुः । तस्याः॑ । अ॒ग्निः । व॒त्सः । सा । मे॒ । अ॒ग्निना॑ । व॒त्सेन॑ । इष॑म् । ऊर्ज॑म् । काम॑म् । दु॒हा॒म् । आयुः॑ । प्र॒थ॒मम् । प्र॒ऽजाम् । पोष॑म् । र॒यिम् । स्वाहा॑ ॥ २ ॥

पृथिवी धेनुः दोग्ध्री गौः । तस्या धेन्वा अग्निर्वत्सः पयसः प्रस्नापयिता । सा पृथिवी अग्निना वत्सेन वत्सस्थानीयेन अग्निना इषम् अन्नम् ऊर्जम् बलकरम् अन्नरसं कामम् काम्यमानम् अन्यत् सर्वं फलं मे मह्यं दुहाम् दुग्धाम् । प्रयच्छतु इत्यर्थः । कामशब्देन सामान्योक्तं फलं विशिनष्टि — प्रथमम् पुत्रपश्वादीनां फलानाम् आदिमं प्रथितं विस्तीर्णं वा शतसंवत्सरम् अपरिमितम् आयुः जीवनं दुग्धाम् । प्रजाम् । प्रजायते उत्पद्यत इति प्रजा पुत्रादिरूपा । 'उपसर्गे च संज्ञायाम्' (पा ३,२,९९) इति डप्रत्ययः । ताम् पोषम् पुष्टिम् अविशेषात् सर्वस्य फलस्य अभिवृद्धिं रयिम् गवादिलक्षणं धनं च प्रयच्छतु । स्वाहा इदं हविः स्वाहुतम् अस्तु ।

अ॒न्तरि॑क्षे वा॒यवे॒ सम॑नम॒न्त्स आ॑र्ध्नोत् ।
यथा॒न्तरि॑क्षे वा॒यवे॑ स॒मन॑मन्ने॒वा मह्यं॑ सं॒नमः॒ सं न॑मन्तु ॥ ३ ॥

अ॒न्तरि॑क्षे । वा॒यवे॑ । सम् । अ॒न॒म॒न् । सः । आ॒र्ध्नो॒त् ।
यथा॑ । अ॒न्तरि॑क्षे । वा॒यवे॑ । स॒म्ऽअन॑मन् । ए॒व । मह्य॑म् । स॒म्ऽनमः॑ । सम् । न॒म॒न्तु ॥ ३ ॥

---

५. आयुःप्रथ॰ A,RW. (तु. शौच १,७५).

अन्तरिक्षे अन्तरिक्षलोके तदधिपत्येन अवस्थिताय वायवे तत्रत्यानि भूतजातानि यक्षगन्धर्वादीनि समनमन् सम्यक् प्रह्वीभवन्ति । स आर्ध्नोत् इत्यादि पूर्ववद् योज्यम् ।

अन्तरिक्षं धेनुस्तस्या वायुर्वत्सः । सा मे वायुना वत्सेनेषमूर्जं कामं दुहाम् ।
आयुः प्रथमं प्रजां पोषं रयिं स्वाहा ॥ ४ ॥

अन्तरिक्षम् । धेनुः । तस्याः । वायुः । वत्सः । सा । मे । वायुना । वत्सेन । इषम् । ऊर्जम् । कामम् । दुहाम् । आयुः । प्रथमम् । प्रऽजाम् । पोषम् । रयिम् । स्वाहा ॥ ४ ॥

अन्तरिक्षम् अन्तरिक्षलोक एव इष्टफलप्रदत्वाद् धेनुः दोग्ध्री गौः । [1]तस्य धेनुत्वेन रूपितस्य अन्तरिक्षस्य तदविनाभूतस्तत्र संचरन् वायुर्वत्सः । सा अन्तरिक्षरूपा धेनुः वायुना वाय्वात्मना स्वकीयेन वत्सेन इषम् ऊर्जम् इत्यादि पूर्ववद् योज्यम् ।

दिव्यादित्याय समनमन्त्स आर्ध्नोत् ।
यथा दिव्यादित्याय समनमन्नेवा मह्यं संनमः सं नमन्तु ॥ ५ ॥

दिवि । आदित्याय । सम् । अनमन् । सः । आर्ध्नोत् ।
यथा । दिवि । आदित्याय । सम्ऽअनमन् । एव । मह्यम् । सम्ऽनमः । सम् । नमन्तु ॥ ५ ॥

दिवि द्युलोके अवस्थिताय तदधिपतये आदित्याय अदितेः पुत्राय सूर्याय द्युलोकवासिनो जनाः समनमन् सम्यक् प्रह्वीभवन्ति । तं सेवन्त इत्यर्थः । स च द्युलोकस्थ आदित्यः आर्ध्नोत् इत्यादि पूर्ववद् योज्यम् ।

द्यौर्धेनुस्तस्या आदित्यो वत्सः । सा म आदित्येन वत्सेनेषमूर्जं कामं दुहाम् ।
आयुः प्रथमं प्रजां पोषं रयिं स्वाहा ॥ ६ ॥

द्यौः । धेनुः । तस्याः । आदित्यः । वत्सः । सा । मे । आदित्येन । वत्सेन । इषम् । ऊर्जम् । कामम् । दुहाम् । आयुः । प्रथमम् । प्रऽजाम् । पोषम् । रयिम् । स्वाहा ॥ ६ ॥

द्यौः द्युलोक एव अभिमतफलप्रदानेन दोग्ध्री धेनुः । तत्र संचरन् आदित्य एव तस्या वत्सः । सा म इत्यादि पूर्ववद् योज्यम् ।

---

१. वैद्य. मंपा. द्र.

दि॒क्षु च॒न्द्राय॑ स॒मन॑म॒न्त्स आ॑र्ध्नोत् ।
यथा॑ दि॒क्षु च॒न्द्राय॑ स॒मन॑म॒न्नेवा मह्यं॑ सं॒नमः॒ सं न॑मन्तु ॥ ७ ॥

दि॒क्षु । च॒न्द्राय॑ । सम् । अ॒न॒म॒न् । सः । आ॒र्ध्नो॒त् ।
यथा॑ । दि॒क्षु । च॒न्द्राय॑ । स॒म्ऽअन॑मन् । ए॒व । मह्य॑म् । स॒म्ऽनमः॑ । सम् । न॒म॒न्तु॒ ॥ ७ ॥

दिक्षु प्राच्यादिषु तदधिदेवतात्वेन अवस्थिताय चन्द्राय चन्द्रमसे तत्रत्याः सर्वे जनाः समनमन् प्रह्वीभवन्ति । स आर्ध्नोत् इत्यादि पूर्ववद् ।

दिशो॑ धे॒नव॑स्ता॒सां च॒न्द्रो व॒त्सः । ता मे॑ च॒न्द्रेण॑ व॒त्सेने॒षमू॒र्जं कामं॑ [1]दुहाम् ।
[2]आयुः॑ प्रथ॒मं॑ प्र॒जां पोषं॑ र॒यिं स्वाहा॑ ॥ ८ ॥

दिशः॑ । धे॒नवः॑ । ता॒सा॑म् । च॒न्द्रः । व॒त्सः । ताः । मे॒ । च॒न्द्रेण॑ । व॒त्सेन॑ । इ॒षम् । ऊर्ज॑म् । काम॑म् । दु॒हा॒म् । आयुः॑ । प्र॒थ॒मम् । प्र॒ऽजाम् । पोष॑म् । र॒यिम् । स्वाहा॑ ॥ ८ ॥

दिशः प्राच्याद्या अभिमतफलप्रदानाद् धेनवः दोग्ध्र्यो गावः । तासाम् अधिपतित्वेन संनिहितः चन्द्र एव वत्सः । ता मे चन्द्रेण वत्सेनेत्यादि पूर्ववद् योज्यम् ।

[3]अ॒ग्नाव॒ग्निश्च॑रति॒ [4]प्रवि॑ष्ट॒ ऋषी॑णां पु॒त्रो [4]अ॑भिशस्ति॒पा उ॑ ।
[5]न॒म॒स्का॒रेण॒ †नम॑सा ते जुहोमि॒ [6]मा दे॒वानां॑ [7]मिथु॒या क॑र्म भा॒गम् ॥ ९ ॥

अ॒ग्नौ । अ॒ग्निः । च॒र॒ति॒ । प्रऽवि॑ष्टः । ऋषी॑णाम् । पु॒त्रः । अ॒भि॒श॒स्ति॒ऽपाः । ॐ इति॑ ।
न॒मः॒ऽका॒रेण॑ । †नम॑सा । ते॒ । जु॒हो॒मि॒ । मा । दे॒वाना॑म् । मि॒थु॒या । क॒र्म॒ । भा॒गम् ॥ ९ ॥

अग्नौ लौकिके अङ्गारात्मके देवतारूपः अग्निः मन्त्रसामर्थ्येन प्रविष्टः सन् चरति वर्तते । यद्वा मथितः अग्निः आहवनीये अग्नौ प्रविष्टश्चरति । स विशेष्यते — ऋषीणाम् द्रष्टॄणां चक्षुरादीनाम् पुत्रः । तद्व्यापारेण मथनात्मना जातत्वात् । 'प्राणा वा ऋषयः' । (बृउ २,२,३) इति वाजसनेयकम् । यद्वा ऋषीणाम् मन्त्राणाम् अग्निमन्थिनां पुत्रः । अथवा अथर्वाङ्गिरःप्रभृतीनाम् ऋषीणां पुत्रः । 'त्वाम् अग्ने पुष्कराद् अध्यथर्वा निरमन्थत' (ऋ ६,१६,१३) इति हि निगमः । अभिशस्तिपाः अभिशस्तेः अभिशस्यमानाद् आरोपितात् पापात्

१. दुहाम् H,D[2]. २. आयुष्य° A,RW, शौच २,७५. ३. ब्याघ्रोऽयमग्नौ चं° तैब्रा २,७,१५,१; अग्ना अग्नि° काठ ३,४. ४. °पावा मा ५,४; °पा अयम् तैब्रा.; अधिराज एषः तै १,३,७,२ मै १,२,७ काठ. पै १३,९,१ मंब्रा २,२,१२ आश्रौ ८,१४,४. ५. तस्मै जुहोमि हविषा घृतेन पै. आश्रौ.; स्वाहाकृत्य ब्रह्मणा ते जुहोमि तै. † मनसा S[m]. ६. °या कर्मभागधेयम् तै.; यूयुपाम भागधेयम् मै.; योयुवद् (आश्रौ. मोमुहद्) भागधेयम् पै. आश्रौ. ७. मनसा P,P[2].

पालयिता। उशब्दः पूरणः। ईदृशाय ते तुभ्यं नमस्कारेण त्रिविधकरणानां प्रह्वीकरणेन त्वद्विषयसमर्पणेन नमसा। अन्ननामैतत्। हविर्लक्षणेन अन्नेन जुहोमि। 'तृतीया च होश्छन्दसि' (पा २,३,३) इति कर्मणि तृतीया। नमस्कारसहितं हविर्जुहोमीत्यर्थः। तथा च देवानां भागम् हविर्भागं मिथुया मिथ्या मा कर्म मा कार्ष्म। कृञो माङि लुङि 'मन्त्रे घस०' (पा २,४,८०) इति च्लेर्लुक्।

हृदा पूतं मन॑सा जातवेदो॒ विश्वा॑नि देव व॒युना॑नि वि॒द्वान्।
स॒प्तास्या॒ऽनि॒ तव॑ जातवेद॒स्तेभ्यो॑ जुहोमि॒ स जु॑षस्व ह॒व्यम्॥ १०॥

हृदा। पूतम्। मन॑सा। जा॒त॒ऽवे॒दः॒। विश्वा॑नि। दे॒व॒। व॒युना॑नि। वि॒द्वान्।
स॒प्त। आ॒स्या॒ऽनि॑[1]। तव॑। जा॒त॒ऽवे॒दः॒। तेभ्यः॑। जु॒हो॒मि॒। सः। जु॒ष॒स्व॒। ह॒व्यम्॥१०॥

हृदा हृदयेन मनसा तदन्तर्वर्तिज्ञानकरणेन पूतम् शुद्धं हविस्तुभ्यं जुहोमि। हे जातवेदः जातानां वेदितः हे देव दानादिगुणयुक्त अग्ने विश्वानि सर्वाणि वयुनानि। वयुनम् इति ज्ञाननाम। इह तु ज्ञातव्ये वर्तते। 'वयुनं वेतेः' (नि ५,१४) इति यास्कः। सर्वाणि ज्ञातव्यानि विद्वान् जानन् भवसि। हे जातवेदः तव सप्त आस्यानि सप्तसंख्याका जिह्वाः। ताश्च उत्तरत्र उपनिषदि आम्नायन्ते—

'काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा।
स्फुलिङ्गिनी [2]विश्वरुचीति चैता[2] लेलायमाना इति सप्त जिह्वाः॥' (मु १,२,४)। इति।

तेभ्य आस्येभ्यः। तादर्थ्ये चतुर्थी। तेषाम् उद्घाटनाय आज्यं जुहोमि। प्रक्षिपामीत्यर्थः। स त्वं हव्यम् होतव्यम् अस्मदीयं हविः जुषस्व सेवस्व।

इति चतुर्थं सूक्तम्।

'ये पुरस्तात्' इति सूक्तस्य 'दूष्या दूषिरसि' (अ २,११), 'ये पुरस्तात्' (अ ४,४०), 'ईशानां त्वा' (अ ४,१७) इत्यादिकृत्याप्रतिहरणगणे (कौसू ३९,७) पाठात् कृत्यानिर्हरणकर्मणि शान्त्युदकादौ विनियोगः।

ये पु॒रस्ता॑ज्जु॒हुति॑ जातवेदः॒ प्राच्या॑ दि॒शो॑ऽभि॒दास॑न्त्य॒स्मान्।
अ॒ग्निमृ॒त्वा ते परा॑ञ्चो व्यथन्तां प्र॒त्यगे॑नान्प्रतिस॒रेण॑ हन्मि॥ १॥

ये। पु॒रस्ता॑त्। जु॒हुति॑। जा॒त॒ऽवे॒दः॒। प्राच्याः॑। दि॒शः। अ॒भि॒ऽदास॑न्ति। अ॒स्मान्।
अ॒ग्निम्। ऋ॒त्वा। ते। परा॑ञ्चः। व्य॒थ॒न्ता॒म्। प्र॒त्यक्। ए॒ना॒न्। प्र॒ति॒ऽस॒रेण॑। ह॒न्मि॒॥

१. तु॰ W, WI.; वैतु. संपा. आस्या॑नि  २. °रुची च देवी निसा.

हे जातवेदः आतानाम् उत्पन्नानां वेदितरग्ने ये शत्रवः पुरस्तात् पूर्वस्यां दिशि। यद्वा पूर्वस्या दिशः सकाशात्। 'दिक्शब्देभ्यः' (पा ५,३,२७) इति पञ्चम्यर्थे सप्तम्यर्थे वा अस्तातिप्रत्यये 'अस्ताति च' (पा ५,३,४०) इति पूर्वशब्दस्य पुर् आदेशः। जुह्वति होमेन अस्मान् अभिचरन्ति तस्मात् होमात् प्राच्या दिशः सकाशाद् 'अस्मान् अभिदासन्ति उपक्षपयन्ति हिंसन्ति। दसु उपक्षये। अस्मात् ण्यन्तात् परस्य शपः 'छन्दस्युभयथा' (पा ३,४,११७) इति आर्धधातुकत्वात् 'णेरनिटि' (पा ६,४,५१) इति णिलोपः। ते शत्रवः तस्या दिशः अधिपतिम् अग्निम् ऋत्वा गत्वा अग्नौ निपतिताः पराञ्चः पराङ्मुखाः अस्मदनभिमुखाः सन्तो व्यथन्ताम् व्यथिताः सन्तप्ताः प्रदग्धा भवन्तु। व्यथ भयचलनयोः। एनान् अभिचरितॄन् शत्रून् प्रतिसरेण। प्रतिसरति प्रतिमुखं निवर्तते आभिचारिकं कर्म अनेनेति प्रतिसरः। प्रतिसरशब्देन एतद् रक्षाकर्म विवक्षितम्। तेन प्रत्यक् प्रतिमुखं निवृत्तेन तदीयेनैव अभिचारकर्मणा तान् हन्मि हिनस्मि। यद्वा अभिचारकर्मणा उत्पादिताम् एनां कृत्याम् अनेन प्रतिसरेण रक्षाकरणेन प्रतीचीनं निवर्त्य नाशयामीत्यर्थः।

ये दक्षिणतो जुह्वति जातवेदो दक्षिणाया दिशोऽभिदासन्त्यस्मान्।
यममृत्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ॥ २ ॥

ये। दक्षिणतः। जुह्वति। जातऽवेदः। दक्षिणायाः। दिशः। अभिऽदासन्ति। अस्मान्। यमम्। ऋत्वा। ते। पराञ्चः। व्यथन्ताम्। प्रत्यक्। एनान्। प्रतिऽसरेण। हन्मि ॥ २ ॥

ये शत्रवो दक्षिणतः अस्मदावासस्थानाद् दक्षिणस्यां दिशि दक्षिणस्या दिशो वा अवस्थिता जुह्वति होमेन[1] अस्मान् अभिचरन्ति। 'दक्षिणोत्तराभ्यामतसुच्' (पा ५,३,२८)। 'चितः' (पा ६,१,१६३) इति अन्तोदात्तत्वम्। जुह्वतीति। अभ्यस्तानामादिः' (पा ६,१,१८९) इति आद्युदात्तः। यद्वृत्तयोगाद् अनिघातः। दक्षिणाया दिश इत्यादि पूर्ववद् योज्यम्। अग्निम् इत्यस्य स्थाने दक्षिणदिशः अधिपतिं यमम् इत्येतावानेव विशेषः।

ये पश्चाज्जुह्वति जातवेदः प्रतीच्या दिशोऽभिदासन्त्यस्मान्।
वरुणमृत्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ॥ ३ ॥

ये। पश्चात्। जुह्वति। जातऽवेदः। प्रतीच्याः। दिशः। अभिऽदासन्ति। अस्मान्। वरुणम्। ऋत्वा। ते। पराञ्चः। व्यथन्ताम्॥ प्रत्यक्। एनान्। प्रतिऽसरेण। हन्मि ॥३॥

पश्चात् प्रतीच्यां दिशि ये शत्रुजना अस्मदभिचारार्थं जुह्वति। 'उपर्युपरिष्टात्', 'पश्चात्' (पा ५,३,३१;३२) इति सप्तम्यर्थे निपात्यते। अन्यत् पूर्ववद् योज्यम्। प्रत्यग्दिशोधिपतिं वरुणम् ऋत्वा इति तु विशेषः।

---

1. अस्माद् S', Kd.

य उत्तरतो जुह्वति जातवेद उदीच्या दिशोऽभिदासन्त्यस्मान् ।
सोममृत्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ॥ ४ ॥

ये । उत्तरतः । जुह्वति । जातऽवेदः । उदीच्याः । दिशः । अभिऽदासन्ति । अस्मान् ।
सोमम्[1] । ऋत्वा । ते । पराञ्चः । व्यथन्ताम् । प्रत्यक् । एनान् । प्रतिऽसरेण । हन्मि ॥ ४ ॥

ये शत्रवः उत्तरतः उत्तरस्यां दिशि । पूर्ववद् अतसुच् । अन्यद् व्याख्यातप्रायम् । सोमम् तद्दिशोधिपतिम् ऋत्वा इति अत्र विशेषः ।

ये[2]ऽधस्ताज्जुह्वति जातवेदो ध्रुवाया दिशोऽभिदासन्त्यस्मान् ।
भूमिमृत्वा[3] ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ॥ ५ ॥

ये । अधस्तात् । जुह्वति । जातऽवेदः । ध्रुवायाः । दिशः । अभिऽदासन्ति । अस्मान् ।
भूमिम्[3] । ऋत्वा । ते । पराञ्चः । व्यथन्ताम् । प्रत्यक् । एनान् । प्रतिऽसरेण । हन्मि ॥ ५ ॥

ये शत्रवः अधस्तात् अधरायां दिशि । पूर्ववद् अधरशब्दाद् अस्तातिप्रत्ययः । अन्यत् पूर्ववद् व्याख्येयम् । सैव अधरा दिक् पृथिव्यात्मना स्थिरत्वाद् ध्रुवेत्युच्यते । अधराया दिश इत्यर्थः । तस्या दिशो भूमिरेवाधिदेवतेति तां प्राप्य व्यथिता भवन्त्वित्यादि पूर्ववद् योज्यम् ।

ये[4]ऽन्तरिक्षाज्जुह्वति जातवेदो व्यध्वाया दिशोऽभिदासन्त्यस्मान् ।
वायुमृत्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ॥ ६ ॥

ये । अन्तरिक्षात् । जुह्वति । जातऽवेदः । विऽअध्वायाः[5] । दिशः । अभिऽदासन्ति । अस्मान् ।
वायुम् । ऋत्वा । ते । पराञ्चः । व्यथन्ताम् । प्रत्यक् । एनान् । प्रतिऽसरेण । हन्मि ॥ ६ ॥

[6]अन्तरिक्षाद् अन्तरा द्यावापृथिव्यावीक्षितम् अन्तरा[6] क्षान्तं वा यक्षगन्धर्वादिगणसेवितम् अवकाशात्मकम् अन्तरिक्षम् । सप्तम्यर्थे पञ्चमी । अन्तरिक्षलोके ये शत्रवो जुह्वतीत्यादि पूर्ववद् योज्यम् । व्यध्वाया दिशः इति । विगता अध्वानो यस्याम् इति व्यध्वा । 'उपसर्गादध्वनः' ( पा ५,४,८५ ) इति अच् समासान्तः । तत्र संचरन् वायुस्तस्याधिदेवतेति वायुम् ऋत्वा इत्युक्तम् ।

य उपरिष्टाज्जुह्वति जातवेद ऊर्ध्वाया दिशोऽभिदासन्त्यस्मान् ।
सूर्यमृत्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ॥ ७ ॥

---

१. सोम° A,B,Bp,Bh,D,R,Sm,P,P2,J,Cs,Cp,Wh. २. येऽ A,K,Km,V.
३. भूमि° A,Bh,D,Sm,P,P2,J,Cs,Cp,E2,I,H. ४. येऽ A,B,Bh,K,Km,R,S,V,Cs.
५. °अध्वयां P. ६. °शंपा; क्षीर्णमत्र S', उपद्गादक्षवर्णानां स्थाने रिक्तम् Kd.

ये । उपरिष्टात् । जुह्वति । जातऽवेदः । ऊर्ध्वायाः । दिशः । अभिऽदासन्ति । अस्मान् ।
सूर्यम् । ऋत्वा । ते । पराञ्चः । व्यथन्ताम् । प्रत्यक् । एनान् । प्रतिऽसरेण । हन्मि ॥ ७ ॥

ये शत्रवः उपरिष्टात् ऊर्ध्वायां दिशि द्युलोकवर्तिन्यां जुह्वति अस्मान् अभिचरन्तीत्यादि पूर्ववत् । द्युलोकस्थोर्ध्वदिगधिपतिं सूर्यम् ऋत्वा इत्येतावानेव विशेषः ।

**ये दिशामन्तर्देशेभ्यो जुह्वति जातवेदः सर्वाभ्यो दिग्भ्योऽभिदासन्त्यस्मान् ।**
**ब्रह्मर्त्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ॥ ८ ॥**

ये । दिशाम् । अन्तःऽदेशेभ्यः । जुह्वति । जातऽवेदः । सर्वाभ्यः । दिक्ऽभ्यः । अभिऽदासन्ति ।
अस्मान् । ब्रह्म । ऋत्वा । ते । पराञ्चः । व्यथन्ताम् । प्रत्यक् । एनान् । प्रतिऽसरेण । हन्मि ॥ ८ ॥

हे जातवेदः ये शत्रवः दिशाम् प्राच्यादीनाम् उक्तानाम् अन्तर्देशेभ्यः अन्तरालदेशेभ्यः सकाशात् अस्मदभिचारार्थं जुह्वति ये च ताभ्यः सर्वाभ्यो दिग्भ्यः अस्मान् अभिदासन्ति उपक्षपयन्ति ते सर्वे पराञ्चः पराङ्मुखाः कुण्ठितशक्तयः सन्तः ब्रह्म सर्वगतं भूतभौतिकप्रपञ्चकल्पनास्पदम् 'महद् भयं वज्रम् उद्यतम्' ( कठ २,३,२ ), 'भीषास्माद् वातः पवते' ( तैआ ८,८,१ ) इत्यादिश्रुत्यन्तप्रसिद्धनियमनशक्तियुक्तं परं ब्रह्म ऋत्वा प्राप्य व्यथन्ताम् व्यथिताः संतप्ता भवन्तु । एनान् शत्रून् प्रतिसरेण अनेन रक्षाकर्मणा प्रत्यक् प्रतीचीनं हन्मि ।

इति पञ्चमं सूक्तम् ।

इति अष्टमोऽनुवाकः ।

श्रीमद्राजाधिराजराजपरमेश्वरश्रीवीरहरिहरमहाराजसाम्राज्यधुरंधरेण
सायणार्येण विरचिते अथर्वसंहिताभाष्ये
चतुर्थकाण्डे अष्टमोऽनुवाकः ।

समाप्तश्चतुर्थः काण्डः ।



१. दिग्भ्योऽभि॰ Wh. २. ॰ब्रह्मर्त्वा॰ S', Kd.

अथ

# पञ्चमं काण्डम्



पञ्चमे काण्डे षडनुवाकाः। तत्र प्रथमेऽनुवाके पञ्च सूक्तानि। तत्र 'ऋधङ्मन्त्रः', 'तदिद् आस' (अ ५,१;२) इति सूक्ताभ्यां हस्तिपृष्ठे पुरुषशिरसि वा निहितायाम् आश्वत्थ्यां पात्र्यां त्रिवृति गोमयपरिचये अग्निं प्रज्वाल्य आज्यं जुह्वत् शत्रून् अभिक्रामति संग्रामजयकामः।

तथा तस्मिन्नेव कर्मणि वराहखातमृत्तिकाम् आनीय राजानो वेदिं कुर्वन्ति। ततः पुरोधा आभ्यां सूक्ताभ्याम् आज्यं सक्तूंश्च जुहुयात्। धनुरिध्मे तन्त्रे धनुःसमिधः इष्विध्मे तन्त्रे इषुसमिधश्च आदधाति। अपि च धनुः संपातवद् विसृज्य अभिमन्त्र्य राज्ञे प्रयच्छति।

तथा तस्मिन्नेव कर्मणि युद्धे एकबाणेन मृतस्य पुरुषस्य इध्मम् उपसमाधाय उपरि चक्रं धारयित्वा दीर्घदण्डेन स्रुवेण आभ्यां चक्रच्छिद्रे अग्नौ आज्यं जुहोति। उत्तिष्ठ संनह्य प्रहर युध्यस्वेत्यादिकां प्रोत्साहनवाचं श्रुत्वा युद्धे योजयेत्।

'यदि चिन्नु त्वा' (अ ५,२,४) इति ऋचं परसैनिकान् अनुब्रूयात्।

एतेषां कर्मणां विकल्पः। कृतैरवश्यं जयो भवति। राजा वैश्यश्चेद् उक्तानि कर्माणि 'यदि चिन्नु त्वा' इति ऋचा कार्याणि। जयकामः सेनापतिश्चेद् उक्तान्येव कर्माणि 'त्वया वयम्' (अ ५,२,५) इत्येकया ऋचा कार्याणि। युद्धयोग्यत्वपरीक्षणकर्मणि 'नि तद् दधिषे' (अ ५,२,६) इति ऋचा उदपात्रम् अभिमन्त्र्य तस्मिन् द्वौ द्वौ योद्धारौ राजा अवेक्षयेत्। तयोर्मध्ये यं यं न पश्येत् तं तं युधि न योजयेत्। 'नि तद् दधिषे' इति ऋचा नवे रथे ससारथिं राजानम् आस्थापयति।

सूत्रितं हि—"'ऋधङ्मन्त्रः' 'तदिदास' इत्याश्वत्थ्यां पात्र्यां त्रिवृति गोमयपरिचये हस्तिपृष्ठे पुरुषशिरसि वाऽमित्रान् जुह्वद् अभिप्रक्रम्य निवपति। वराहविहिताद् राजानो वेदिं कुर्वन्ति। तस्यां प्रदानान्तानि। एकेष्वाहतस्यादहन उपसमाधाय दीर्घदण्डेन स्रुवेण रथचक्रस्य खेन समया जुहोति। योजनीयां श्रुत्वा योजयेत्। 'यदि चिन्नु त्वा' (अ ५,२,४), 'नमो देववधेभ्यः' (अ ६,१३) इत्यन्वाह" (कौसू १५,१-६) इत्यादि।

तथा पुष्टिकर्मसु आभ्यां सूक्ताभ्यां मैश्रधान्यं अष्टपिष्टं सक्तुम् अजालोहितमिश्रितं रसमिश्रितं च संपात्य अभिमन्त्र्य अश्नीयात्।

तथा तेष्वेव कर्मसु आभ्यां सूक्ताभ्यां त्रिषु उदुम्बरचमसेषु प्लक्षचमसेषु वा मैश्रधान्यं प्रक्षिप्य रसांश्च संपात्य अभिमन्त्र्य अश्नीयात्। तत्र सूत्रोक्तमन्त्रैः पूर्वाह्णमध्याह्नापराह्णकाले एकैकचमसभक्षणम्।

तथा तत्रैव कर्मसु आभ्यां सूक्ताभ्याम् ऋतुमत्याः स्त्रिया लोहितं रसमिश्रितं कृत्वा संपात्याभिमन्त्र्य प्रादेशिनीमध्यमाङ्गुलिभ्यां प्राश्नीयात्।

तद् उक्तं कौशिकेन— " 'ऋधङ्मन्त्रः', 'तद्दिदास' ( अ ५,१;२ ) इति मैश्रधान्यं मृष्टपिष्टं लोहितालंकृतं रसमिश्रम् अश्नाति। अमृष्टं प्लक्षोदुम्बरस्योत्तरतोऽग्नेस्त्रिषु चमसेषु 'पूर्वाह्णस्य तेजसाग्रम् अन्नस्य प्राशिषम्' इति पूर्वाह्णे। 'मध्यंदिनस्य तेजसा मध्यम् अन्नस्य प्राशिषम्' इति मध्यंदिने। 'अपराह्णस्य तेजसा सर्वम् अन्नस्य प्राशिषम्' इत्यपराह्णे। ऋतुमत्याः[1] स्त्रिया अङ्गुलिभ्यां लोहितम्" ( कौसू २२,१-५ ) इति।

तथा क्षेत्रं कामयमानः काम्यमाने क्षेत्रे आभ्यां सूक्ताभ्यां भक्तं दधिमधुमिश्रं संपात्य अभिमन्त्र्य अश्नीयात्। तद् उक्तं कौशिकेन—'यत् क्षेत्रं कामयते तस्मिन् कीलालं दधिमधुमिश्रम्' ( कौसू २२,६ ) इति।

तथा सतग्रामलाभकर्मणि अस्य सूक्तस्य विनियोगः। तद् उक्तं कौशिकेन— 'संवत्सरं स्त्रियम् अनुपेत्य शुक्त्यां रेत आनीय तण्डुलमिश्रम्' ( कौसू २२,७ ) इति। संवत्सरं ब्रह्मचर्यं कृत्वा ततो मैथुनं कृत्वा रेतस्तण्डुलमिश्रं कृत्वा संपात्य अभिमन्त्र्य अश्नातीति तस्यार्थः।

तथा समृद्धिकर्मण्यपि विनियुज्यते सूक्तद्वयम् एतत्। 'निशायाम् आग्रयणतण्डुलान् [2]उदङ्क्यां मधुमिश्रान् निदधाति-आ यवानां [3]पक्तेः। एवं यवान् उभयान् समोप्य। 'त्रिवृति गोमयपरिचये श्रृतम् अश्नाति' ( कौसू २२,१०-१२ ) इति। शरदि व्रीहितण्डुलान् मधुमिश्रितांश्चर्मभाण्डे निधाय निखन्यात् आ यवपचनमासात्। तथैव यवपचनतौ यवानपि तादृश एव भाण्डे व्रीहिपचनकालपर्यन्तं निधाय निखन्यात्। अनन्तरम् उभयान् मिश्रीकृत्य त्रिगुणिते गोमयपरिचये श्रपयित्वा संपात्याभिमन्त्र्य अश्नातीति तस्यार्थः।

तथा गर्भदृंहणकर्मणि 'ऋधङ्मन्त्रः' इति सूक्तस्य प्रथमाया ऋचो विनियोगः। स च 'यथेयं पृथिवी मही' ( अ ६,१७ ) इति सूक्तस्य प्रस्तावनायाम् अनुसंधेयः।

[4]ऋधङ्मन्त्रो योनिं य आबभूवामृतासुर्वर्धमानः[5] सुजन्मा।
अदब्धासुर्भ्राजमानोऽहेव[6] [7]त्रितो धर्ता दाधार त्रीणि ॥ १ ॥

१. [1]मत्या Bl. २. उदक्यान् Bl. ३. पक्केः Bl. ४. वृधमंत्र योनि गो विभावात्? पै ६,२,१. ५. स्वजन्मा पै. ६. भ्राजसा इहवी पै. ७. तृतो Bp[2], P[3],M,W.

ऋधक्ऽमन्त्रः । योनिम् । यः । आऽबभूव । अमृतऽअसुः । [1]वर्धमानः । सुऽजन्मा ।
अदब्धऽअसुः । भ्राजमानः । अहाऽइव । त्रितः । धर्ता । दाधार । त्रीणि ॥ १ ॥

[1]आ यो[1] धर्माणि प्रथमः ससाद ततो वपूंषि [2]कृणुषे पुरूणि ।
[3]धास्युर्योनिं[3] प्रथम आ विवेशा यो [4]वाचमनुदितां चिकेत[4] ॥ २ ॥

आ । यः । धर्माणि । प्रथमः । ससाद । ततः । वपूंषि । कृणुषे । पुरूणि । धास्युः ।
योनिम् । प्रथमः । आ । विवेश । आ । यः । वाचम् । अनुदिताम् । चिकेत ॥ २ ॥

यस्ते [5]शोकाय तन्वं[5] रिरेच क्षरद्धिरण्यं शुचयोऽनु स्वाः ।
अत्रा [6]दधेते अमृतानि नामास्मे[7] वस्त्राणि विश [8]एरयन्ताम् ॥ ३ ॥

यः । ते । शोकाय । तन्वम् । रिरेच । क्षरत् । हिरण्यम् । शुचयः । अनु । स्वाः ।
अत्र । दधेते इति । अमृतानि । नाम । अस्मे इति । वस्त्राणि । विशः । आ । ईरयन्ताम् ॥

प्र यदेते प्रतरं [9]पूर्व्यं [10]गुः सदःसद [11]आतिष्ठन्तो अजुर्यम्[11] ।
[12]कविः शुषस्य मातरा रिहाणे जाम्यै धुर्यं पतिमेरयेथाम् ॥ ४ ॥

प्र । यत् । एते । प्रऽतरम् । पूर्व्यम् । गुः । सदःऽसदः । आऽतिष्ठन्तः । अजुर्यम् ।
कविः । शुषस्य । मातरा । रिहाणे इति । जाम्यै । धुर्यम् । पतिम् । आ । ईरयेथाम् ॥ ४ ॥

तदू षु ते महत् पृथुज्मन् नमः कविः काव्येना कृणोमि ।
यत् सम्यञ्चावभियन्तावभि क्षामत्रा मही रोधचक्रे वावृधेते ॥ ५ ॥

तत् । ऊँ इति । सु । ते । महत् । पृथुऽज्मन् । नमः । कविः । काव्येन । कृणोमि ।
यत् । सम्यञ्चौ । अभिऽयन्तौ । अभि । क्षाम् । अत्र । मही इति । रोधचक्रे इति रोधऽचक्रे ।
वावृधेते इति ॥ ५ ॥

सप्त मर्यादाः कवयस्ततक्षुस्तासामिदेकामभ्यंहुरो[13] गात् ।
आयोर्ह स्कम्भ [14]उपमस्य [15]नीडे पथां विसर्गे धरुणेषु तस्थौ ॥ ६ ॥

१. वि नि यो पै ६,२,२. २. कृणुते पै. ३. यश्च यो° पै. ४. °नुचितां जिगाय पै.
५. शोकस्तन्वा पै ६,२,३. ६. दधेथे पै. ७. °स्मै P³,M,W.RW. ८. ऐरे° R.
९. पूर्व्यऽP³,M. १०. गुः Wh. ११. न्तो जुर्यम् T. १२. !कुविः>(गैव->
गवी->प्र २).गवी [=गावौ, धेनू] इति, मातरा रिहाणे इत्यनेनान्वितं द्र. । शिष्टं सस्थ. वैप १
शुषस्य इत्यत्र टि. द्र. १३. °तासाममेकमभ्यं° पै ६,२,६. १४. तु. W.,WI, स्क.; वैतु.
मूको. उपमस्य (तु. शंपा.). १५.नीडे A,B,Bʰ,Bp,D,K,Kᵐ,R,Sᵐ,V,Dc,Cs,Wh.

सप्त । मर्यादाः । कवयः । ततक्षुः । तासाम् । इत् । एकाम् । अभि । अंहुरः । गात् ।
आयोः । ह । स्कम्भः । [1]उपमस्य । [2]नीडे । पथाम् । विऽसर्गे । धरुणेषु । तस्थौ ॥६॥

उतामृतासुर्व्रत एमि कृण्वन्नसुरात्मा [3]तन्व१स्तत् सुमद्गुः ।
उत वा शक्रो रत्नं दधात्यूर्जया वा यत् सचते हविर्दाः ॥ ७ ॥

उत । अमृतऽअसुः । व्रतः । एमि । कृण्वन् । असुः । आत्मा । तन्वः । तत् । सुमत्ऽगुः ।
उत । वा । शक्रः । रत्नम् । दधाति । ऊर्जया । वा । यत् । सचते । हविःऽदाः ॥ ७ ॥

[4]उत पुत्रः[4] पितरं क्षत्रमीडे ज्येष्ठं मर्यादमह्वयन्त्स्वस्तये[5] ।
दर्शन् नु [6]ता वरुण यास्ते विष्ठा †आवर्व्रततः[6] कृणवो वपूंषि ॥ ८ ॥

उत । पुत्रः । पितरम् । क्षत्रम् । ईडे । ज्येष्ठम् । मर्यादम् । अह्वयन् । स्वस्तये ।
दर्शन् । नु । ताः । वरुण । याः । ते । विऽस्थाः । आऽवर्व्रततः । [7]कृणवः । वपूंषि ॥ ८ ॥

अर्धमर्धेन [8]पयसा [9]पृणक्ष्यर्धेन शुष्म [10]वर्धसे [11]असुर ।
[12]अविं वृधाम शग्मियं[12] सखायं वरुणं पुत्रमदित्या[13] इषिरम् ।
कविशस्तान्यस्मै वपूंष्यवोचाम[14] रोदसी सत्यवाचा[15] ॥ ९ ॥

अर्धम् । अर्धेन । पयसा । पृणक्षि । अर्धेन । शुष्म । वर्धसे । असुर ।
[16]अविम् । वृधाम[16] । शग्मियम् । सखायम् । वरुणम् । पुत्रम् । अदित्याः । इषिरम् ।
कविऽशस्तानि । अस्मै । वपूंषि । अवोचाम[14] । रोदसी इति । सत्यऽवाचा ॥ ९ ॥

इति प्रथमेऽनुवाके प्रथमं सूक्तम् ।

'तदिद् आस' इति सूक्तस्य विनियोगः पूर्वसूक्तेन सह उक्तः ।

तथा सर्वफलकामोऽनेन सूक्तेन इन्द्राग्नी यजते उपतिष्ठते वा । तद् उक्तं कौशिकेन — " 'तदिदास' (अ ५,२,), 'धीती वा' (अ ७,१) इतीन्द्राग्नी" (कौसू ५९,१७) इति ।

---

१. तु. मंपा.; वैतु. P,P², J,Cp उपमस्य. २. नीडे K,V,P,J,Cp. ३. तन्व१स्तत् D,Cs; तन्वा१स्तत् B,Bp,R,S^m; तन्व१स्तत् A,B^h. ४. पुत्रो वा यत् पै ६,२,७. ५. स्वस्ति पै. ६. तां वरुणे च दृष्टावावरव्रजत पै. † आवर्वृततः RW. ७. कृण्वः P. ८. शवसा पै ६,२,८. ९. पृ॰ B,B^h,K,K^m,V,Dc,Cs,Cp; पृणक्षि>पृणक्षि P,J; पृणक्षि P²,V,O,D²,K². १०. वर्धयसे पै. ११. असूर S,Cs, पै. १२. अवीवृधाम शग्म्यं पै. १३. °दितिर् पै. १४. पादादौ निघातः? तु. W. १५. °वाचौ पै. १६. अविंवृधाम P,Kp; अविंऽवृधाम P²; अविम् । वृधाम>अविवृधाम J; अविंवृधाम K,Cp, अविंऽवृधाम D²; अविम् । वृधाम V.

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति [1]शत्रूननु यदेनं मदन्ति विश्व ऊमाः[1] ॥ १ ॥

तत् । इत् । आस । भुवनेषु । ज्येष्ठम् । यतः । जज्ञे । उग्रः । त्वेषऽनृम्णः ।
सद्यः । जज्ञानः । नि । रिणाति । शत्रून् । अनु । यत् । एनम् । मदन्ति । विश्वे । ऊमाः ॥ १ ॥

वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च [2]सस्नि[2] सं ते [3]नवन्त प्रभृता[3] मदेषु ॥ २ ॥

ववृधानः । शवसा । भूरिऽओजाः । शत्रुः । दासाय । भियसम् । दधाति ।
अविऽअनत् । च । विऽअनत् । च । [4]सस्नि । सम् । ते । नवन्त । प्रऽभृता । मदेषु ॥ २ ॥

त्वे क्रतुमपि [5]पृञ्चन्ति† भूरि[5] द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा [6]समदः सु मधु मधुनाभि योधीः[6] ॥ ३ ॥

त्वे इति । क्रतुम् । अपि । पृञ्चन्ति । भूरि । द्विः । यत् । एते । त्रिः । भवन्ति । ऊमाः ।
स्वादोः । स्वादीयः । स्वादुना । सृज । सम् । अदः । सु । मधु । मधुना । अभि । योधीः ॥ ३ ॥

[7]यदि चिन्नु[7] त्वा धना जयन्तं [8]रणेरणे अनुमदन्ति विप्राः ।
ओजीयः [9]शुष्मिन्त्स्थिरमा तनुष्व मा त्वा दभन् [10]दुरेवासः कशोकाः[10] ॥४॥

यदि । चित् । नु । त्वा । धना । जयन्तम् । रणेऽरणे । अनुऽमदन्ति । विप्राः ।
ओजीयः । शुष्मिन् । स्थिरम् । आ । तनुष्व । मा । त्वा । दभन् । दुःऽएवासः । कशोकाः ॥ ४ ॥

त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ॥ ५ ॥

त्वया । वयम् । शाशद्महे । रणेषु । प्रऽपश्यन्तः । युधेन्यानि । भूरि ।
चोदयामि । ते । आयुधा । वचःऽभिः । सम् । ते । शिशामि । ब्रह्मणा । वयांसि ॥ ५ ॥

१. ‘ननु यं विश्वे मदन्त्यूमाः ऋ १०,१२०,१ कौ २,८३३ मा ३३,८० पै ६,१,१ ऐआ १,३,४. २. सस्ति D,Cs. ३. नवन्तः पिपृता पै ६,१,२. ४. सस्ति P². ५. वृञ्जन्ति विश्वे ऋ १०,१२०,३ तै ३,५,१०,१ कौ २,८३५ पै ६,१,३ ऐआ १,३,४. † पृचंति Cs. ६. समतं ऊ षु मधु मधुनाभियोधि तै. ७. इति चिद्धि ऋ १०,१२०,४ पै ६,१,४. ८. मदेमदे ऋ.; रणंरणम् पै. ९. शुष्मिंस्थि॰ K,Km,V; शुष्मिन् P; धृष्णो स्थि॰ ऋ. पै. १०. यातुधाना दुरेवाः ऋ. पै.

नि तद् दधिषेऽवरे[1] परे[1] च यस्मिन्नाविथावसा दुरोणे ।
[2]आ स्थापयत मातरं जिगत्नुमत इन्वत कर्वराणि भूरि[2] ॥ ६ ॥

नि । तत् । [3]दधिषे । अवरे । परे । च । यस्मिन् । आविथ । अवसा । दुरोणे ।
आ । स्थापयत । मातरम् । जिगत्नुम् । अतः । इन्वत । कर्वराणि । भूरि ॥ ६ ॥

[4]स्तुष्व वर्ष्मन् पुरुवर्त्मानं [5]समृभ्वाणमिनतममाप्तमाप्त्यानाम् ।
आ [6]दर्शति शवसा भूर्योजाः प्र सक्षति प्रतिमानं पृथिव्याः[6] ॥७॥

स्तुष्व । वर्ष्मन् । पुरुऽवर्त्मानम् । सम् । ऋभ्वाणम् । इनऽतमम् । आप्तम् । आप्त्यानाम् ।
आ । दर्शति । शवसा । भूरिऽओजाः । प्र । सक्षति । प्रतिऽमानम् । पृथिव्याः ॥ ७ ॥

इमा ब्रह्म बृहद्दिवः [7]कृणवदिन्द्राय शूषमग्रियः[8] स्वर्षाः ।
महो गोत्रस्य क्षयति [9]स्वराजा तुरश्चिद् विश्वमर्णवत् तपस्वान्[9] ॥ ८ ॥

इमा । ब्रह्म । बृहत्ऽदिवः । कृणवत् । इन्द्राय । शूषम् । अग्रियः । स्वःऽसाः ।
महः । गोत्रस्य । क्षयति । स्वऽराजा । [10]तुरः । चित् । विश्वम् । अर्णवत् । तपस्वान् ॥८॥

एवा महान् बृहद्दिवो अथर्वावोचत् स्वां [11]तन्व१मिन्द्रमेव ।
स्वसारौ[12] [13]मातरिभ्वरी† अरिप्रे[13] हिन्वन्ति चैने शवसा वर्धयन्ति च ॥

एव । महान् । बृहत्ऽदिवः । अथर्वा । अवोचत् । स्वाम् । तन्वम् । इन्द्रम् । एव ।
स्वसारौ । [14]मातरिभ्वरी इति । अरिप्रे इति । हिन्वन्ति । च । एने इति । शवसा । वर्धयन्ति । च ॥

इति प्रथमेऽनुवाके द्वितीयं सूक्तम् ।

दर्शपूर्णमासयोः समिदाधाने 'ममाग्ने वर्चः' इति सूक्तस्य विनियोगः । तद् उक्तं कौशिकेन । "'ममाग्ने वर्चः' इति समिध आधाय" (कौसू १,३३) इति ।

तथा वर्चस्यकर्मणि अस्य सूक्तस्य विनियोगः । "पूर्वस्य 'ममाग्ने वर्चः' इति वर्चस्यानि" (कौसू १२,१०) इत्यादि सूत्रम् । एतद्विस्तरः 'ये त्रिषप्ताः' ( अ १,१ ) इति सूक्ते द्रष्टव्यः ।

१. °वरं परं ऋ १०,१२०,७ पै ६,१,७. २ आ मातरा स्थापयसे जिगत्नू अत इनोषि कर्वरा पुरूणि ऋ. पै. ३. दुधिषे V,P; दुधिषे>दधिषे Cp. ४. स्तुषेय्यं पुरुवर्पसमृ° ऋ १०,१२०,६. ५. °माप्त्यमा° K[m],O, ऋ. ६. दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ऋ. ७. विवक्तीन्द्राय ऋ १०,१२०,८ पै ६,१,८. ८. °मग्रयः पै. ९. स्वराजो दुरश्च विश्वा अवृणोदप स्वाः ऋ. पै. १०. तुरः P, तुरम् P[2]. ११. तन्व३ A,B,D; तन्व३° S[m]; तन्वा३° Dc; तन्वा३° R,Cs,K[m]. १२. स्वसारो ऋ १०,१२०,९ पै ६,१,९. १३. मातरिभ्वरीररिप्रा ऋ. † मातरिश्वरी RW. १४. मातरिभ्वरी इति मातरिभ्वरी K.

तथा पुष्टिकर्मणि अस्य सूक्तस्य विनियोगः । तत्र "'ममाग्ने वर्चः' इति सारित्रकान्" (कौसू २२,१४) इत्यादि सूत्रम् ।

तथा विभागकर्मणि कलहाभावम् इच्छन् पिता अनेन सूक्तेन तैलिकस्य रज्जुम् अभिमन्त्र्य धारयति हस्तेन । "'ममाग्ने वर्चः' इति [1]विभुक्ष्समाणः प्रमत्तरज्जुं [2]धारयति" (कौसू ३८,२६) इति सूत्रात् ।

विभुक्षमाणः विभागं करिष्यन् । प्रमत्तरज्जुः आक्षिकाणाम् अवलम्बनरज्जुः ।

तथा आभिचारिके कर्मणि अनेन सूक्तेन बृहस्पतिशिरसम् ओदनं पृषातकेनोपसिञ्चेत् । तद् उक्तं कौशिकेन "'ममाग्ने वर्चः' इति बृहस्पतिशिरसं पृषातकेनोपसिच्य" ( कौसू ४९,१५ ) इति ।

तथा 'कौबेरीं धनकामस्य धनक्षये च' ( नक १६,३ ) इति विहितायां कौबेर्यां महाशान्तौ एतत् सूक्तं योजयेत् । तद् उक्तं नक्षत्रकल्पे — "'ममाग्ने वर्चः' इति कौबेर्याम्" ( नक १८,१४ ) इति ।

तथा हस्त्यश्वदीक्षाख्ये कर्मणि अनेन सूक्तेन जुहुयात् । तद् उक्तं परिशिष्टे- "'ममाग्ने वर्चः' इति जुहुयात्" ( अप १६? ) इति । अन्यत्रापि व्रतग्रहणादौ अस्य सूक्तस्य विनियोगः ।

ममा॑ग्ने॒ वर्चो॑ विह॒वेष्व॑स्तु व॒यं त्वेन्धा॑नास्त॒न्वं॑ पुषेम ।
मह्यं॑ नमन्तां प्र॒दिश॒श्चत॑स्र॒स्त्वया॑ध्य॑क्षेण॒ पृत॑ना जयेम ॥ १ ॥

मम॑ । अ॒ग्ने॒ । वर्चः॑ । वि॒ऽह॒वेषु॑ । अ॒स्तु॒ । व॒यम् । त्वा॒ । इन्धा॑नाः । त॒न्व॑म् । पु॒षे॒म॒ ।
मह्य॑म् । न॒म॒न्ता॒म् । प्र॒ऽदिशः॑ । चत॑स्रः । त्वया॑ । अधि॑ऽअक्षेण । पृत॑नाः । ज॒ये॒म॒ ॥ १ ॥

[3]अग्ने॑ म॒न्युं[4] प्र॑तिनु॒दन् [5]परे॑षां [6]त्वं नो॑[7] गो॒पाः परि॑ पाहि [8]वि॒श्वतः॑ ।
[9]अपा॑ञ्चो यन्तु [9]नि॒वता॑ [9]दु॒र॒स्य॒वो॒ऽमैषां॑[10] चि॒त्तं [11]प्र॒बुधां॑ वि [12]नेश॒त् ॥२॥

अग्ने॑ । म॒न्युम् । प्र॒ति॒ऽनु॒दन् । परे॑षाम् । त्वम् । नः॒ । गो॒पाः । परि॑ । पा॒हि॒ । वि॒श्वतः॑ ।
अपा॑ञ्चः । य॒न्तु॒ । नि॒ऽवता॑ । दु॒र॒स्यवः॑ । अ॒मा । ए॒षा॒म् । चि॒त्तम् । प्र॒ऽबुधा॑म् । वि । ने॒श॒त् ॥ २ ॥

१. विभुक्ष्यमाणः Bl. २. बध्नाति Bl. ३. अग्निर्मे॰ तै ४,७,१४,२. ४. पुरस्तात् तै. ५. अदब्धो ऋ १०,१२८,६ तै ४,७,१४,३. ६. नुस्त्वम् ऋ. तै. ७. प्रत्यञ्चो ऋ. तै. ८. प्रबुधा पै ५,४,२; निगुतः ऋ. तै. ९. पुनस्तेषु ऋ. तै. १० अमैषां पै. ११. बहुधा पै.; प्रबुधा तै. १२. °नेषत् Km,R; नश्यतु पै.

मम॑ दे॒वा वि॑ह॒वे स॑न्तु॒ सर्व॒ [1]इन्द्र॑वन्तो म॒रुतो॒ विष्णु॑र॒ग्निः ।
ममा॒न्तरि॑क्षमु॒रुलो॑कमस्तु॒ मह्यं॒ वातः॑ पवतां॒ [2]कामा॑या॒स्मै ॥ ३ ॥

मम॑ । दे॒वाः । वि॒ऽह॒वे । स॒न्तु॒ । सर्वे॑ । इन्द्र॑ऽवन्तः । म॒रुतः॑ । विष्णुः॑ । अ॒ग्निः ।
मम॑ । अ॒न्तरि॑क्षम् । उ॒रुऽलो॑कम् । अ॒स्तु॒ । मह्य॑म् । वातः॑ । प॒व॒ता॒म् । कामा॑य । अ॒स्मै ॥ ३ ॥

मह्यं॑ [3]यजन्तां॒ मम॒ यानी॒ष्टाकू॑तिः[4] स॒त्या मन॑सो मे अस्तु ।
एनो॒ मा नि गां॑ कत॒मच्च॒नाहं विश्वे॑ [5]दे॒वा अ॒भि र॑क्षन्तु[6] [7]मे॒ह ॥ ४ ॥

मह्य॑म् । य॒ज॒न्ता॒म् । मम॑ । यानि॑ । इ॒ष्टा । आऽकू॑तिः । स॒त्या । मन॑सः । मे॒ । अ॒स्तु॒ ।
एनः॑ । मा । नि । गा॒म् । क॒त॒मत् । च॒न । अ॒हम् । विश्वे॑ । दे॒वाः । अ॒भि । र॒क्ष॒न्तु॒ । मा॒ । इ॒ह ॥ ४ ॥

[8]मयि॑ दे॒वा द्रवि॑ण॒मा य॑जन्तां॒ [9]मय्या॒शीर॑स्तु॒ [9]मयि॑ दे॒वहू॑तिः ।
[10]दैवा॒ [11]होता॑रः [12]सनिषन् [13]न ए॒तदरि॑ष्टाः स्याम[13] त॒न्वा॒[14] सु॒वीराः॑ ॥ ५ ॥

मयि॑ । दे॒वाः । द्रवि॑णम् । आ । य॒ज॒न्ता॒म् । मयि॑ । आ॒ऽशीः । अ॒स्तु॒ । मयि॑ । दे॒वऽहू॑तिः ।
दैवाः॑ । होता॑रः । स॒नि॒ष॒न् । नः॒ । ए॒तत् । अरि॑ष्टाः । स्या॒म॒ । त॒न्वा॒ । सु॒ऽवीराः॑ ॥ ५ ॥

[15]दैवीः॑ [16]षडुर्वी॑रु॒रु [17]नः॑ [18]कृणोत॒ विश्वे॑ [19]देवास इ॒ह [20]मा॑दयध्वम् ।
मा नो॑ विद॒दभि॒भा मो अश॑स्ति॒र्मा नो॑ विदद्वृ॒जिना॒ द्वेष्या॒ या ॥ ६ ॥

दैवीः॑ । [21]षट् । उ॒र्वीः॑ । उ॒रु । नः॒ । कृ॒णो॒त॒ । विश्वे॑ । दे॒वा॒सः॒ । इ॒ह । मा॒द॒य॒ध्व॒म् ।
मा । नः॒ । वि॒द॒त् । अ॒भि॒ऽभाः । मो इति॑ । अश॑स्तिः । मा । नः॒ । वि॒द॒त् । वृ॒जि॒ना । द्वेष्या॑ । या ॥ ६ ॥

[22]तिस्रो॑ दे॒वीर्महि॑[23] नः[24] शर्म॑ यच्छत[25] प्र॒जायै॑ [25]नस्त॒न्वे॒३॒॑ यच्च॑ पु॒ष्टम् ।
मा हा॑स्महि प्र॒जया॒ मा [26]त॒नूभि॒र्मा र॑धाम द्विष॒ते सो॑म राजन् ॥ ७ ॥

---

१. इन्द्रावन्तो तै ४,७,१४,१. २. °मुरु गोपम° तै. ३. कामे अस्मिन् ऋ १०,१२८,२ पै ५,४,३ तै. ४. यजन्तु मम यानि हव्याकू° ऋ १०,१२८,४ तै ४,७,१४,२. ५. देवासो अधि वोचता ऋ. तै. ६. नः ऋ., मे तै., मामिह पै. ७. मह्यं पै ५,४,५. ८. ममाशी° पै. ९. मम पै. १०. दैवा सात[२].; दैव्या ऋ १०,१२८,३ तै ४,७,१४,१. ११. होतारा तै. १२. सनिषन् $S^m$; सनिषम् $Bp^2$,H; वनुषन्त ऋ.; वनिषन्त तै. १३. पूर्वारि° ऋ.; °रिष्टा स्याम B,$B^h$,D,K,$K^m$,$S^m$,Cs. १४. तनुवा तै १५. देवीः $P^2$,Dc, पै ५,४,६ ऋ १०,१२८,५ तै ४,७,१४,२. १६. षडुर्वी° Bp,$P^3$,M,$K^2$. १७. णः A,D,$K^m$,R,$S^m$, तै. १८. कराथ पै. १९. देवास $P^3$,M. २० वीरयध्वम् ऋ. तै. २१. षद् K,P. २२. द्र. RW., ऋ १०,७०,८; वैतु. मूको. (द्र. शंपा.) तिस्रो देवी°. २३. मे पै ५,४,१२. २४. यच्छन् पै. २५. मे तन्वे पै. २६. धनेन मा पै ५,४,६.

तिस्रः[1] । देवीः । मही । नः । शर्म । यच्छत । प्रऽजायै । नः । तन्वे । यत् । च । पुष्टम् ।
मा । हास्महि । प्रऽजया । मा । तनूभिः । मा । रधाम । द्विषते । सोम । राजन्[2] ॥ ७ ॥

**उरुव्यचा नो महिषः शर्म [3]यच्छत्वस्मिन् हवे पुरुहूतः [4]पुरुक्षु ।**
**स नः प्रजायै हर्यश्व [5]मृडेन्द्र मा नो रीरिषो मा परा दाः ॥ ८ ॥**

उरुऽव्यचाः । नः । महिषः । शर्म । यच्छतु । अस्मिन् । हवे । पुरुऽहूतः । पुरुऽक्षु ।
सः । नः । प्रऽजायै । हरिऽअश्व । मृड । इन्द्र । मा । नः । रिरिषः । मा । परा । दाः ॥ ८ ॥

**धाता [6]विधाता भुवनस्य [7]यस्पतिर्देवः सवितामिमातिषाहः[7] ।**
**[8]आदित्या रुद्रा[8] अश्विनोभा देवाः पान्तु यजमानं [9]निर्ऋथात् ॥ ९ ॥**

धाता । विऽधाता । भुवनस्य । यः । पतिः । देवः । सविता । अभिमातिऽसहः ।
आदित्याः । रुद्राः । अश्विना । उभा । देवाः । पान्तु । यजमानम् । निःऽऋथात् ॥ ९ ॥

**ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव [10]बाधामह एनान्[10] ।**
**आदित्या रुद्रा उपरिस्पृशो[11] [12]न उग्रं[12] [13]चेत्तारमधिराजमक्रत[14] ॥ १० ॥**

ये । नः । सऽपत्नाः । अप । ते । भवन्तु । इन्द्राग्निऽभ्याम् । अव । बाधामहे । एनान् ।
आदित्याः । रुद्राः । उपरिऽस्पृशः । नः । उग्रम् । चेत्तारम् । अधिऽराजम् । अक्रत ॥ १० ॥

**अर्वाञ्चमिन्द्रममुतो[15] हवामहे यो गोजिद् धनजिदश्वजिद् यः ।**
**इमं नो यज्ञं विहवे [16]शृणोत्वस्माकमभूर्हर्यश्व मेदी ॥ ११ ॥**

अर्वाञ्चम् । इन्द्रम् । अमुतः । हवामहे । यः । गोऽजित् । धनऽजित् । अश्वऽजित् । यः ।
इमम् । नः । यज्ञम् । विऽहवे । शृणोतु । अस्माकम् । अभूः । हरिऽअश्व । मेदी ॥ ११ ॥

### इति प्रथमेऽनुवाके तृतीयं सूक्तम् ।

१. त्रु मंपा.; वैतु. शंपा.तिस्त्रः. २. सोमऽराजन् P. ३. यंसदुस्मिन् ऋ १०, १२८,८ तै ४,७,१४,३; यच्छदस्मिन् पै ५,४,७. ४. पुरुक्षुः ऋ. पै. ५. मृडयेन्द्र ऋ. पै. तै. ६. धातृणां ऋ १०,१२८,७ तै ४,७,१४,३; विधर्ता पै ५,४,८. ७. °देवं त्रातारं (तै. सवितारं°) मभिमातिषाहम् ऋ. तै. ८. इमं यज्ञम् ऋ. तै. ९. न्यर्थात् ऋ. तै. १०. °महे तान् ऋ १०,१२८,९ मा ३४,४६ तै ४,७,१४,४ काठ ४०,१०. ११. स्पर्शो D; °स्पृशं ऋ. मा. तै. काठ. १२. मोग्रं ऋ. मा. तै.; मामुग्रं पै ५,४,१४. १३. चेत्तारं° ऋ. मा. तै. काठ. १४. °क्रन् ऋ. मा. तै. काठ. पै. १५. °मंवत पै ५,४,१०. १६. शृंणवत् तै.

'यो गिरिष्वजायथाः' इति सूक्तेन राजयक्ष्मकुष्ठादिरोगशान्त्यर्थं कुष्ठाख्यौषधिमिश्रितं नवनीतम् अभिमन्त्र्य प्रतिलोमं व्याधितशरीरं प्रलिम्पेत्। 'कुष्ठलिङ्गाभिर्नवनीतमिश्रेणाप्रतीहारं प्रलिम्पति' ( कौसू २८,१३ ) इति सूत्रात्।

यो [1]गिरिष्वजायथा वीरुधां बलवत्तमः ।
कुष्ठेहि तक्मनाशन तक्मानं नाशयन्नितः ॥ १ ॥

यः । गिरिषु । अजायथाः । वीरुधाम् । बलवत्ऽतमः ।
कुष्ठ । आ । इहि । [2]तक्मऽनाशन । तक्मानम् । नाशयन् । इतः ॥ १ ॥

सुपर्णसुवने[3] गिरौ जातं हिमवतस्परि ।
धनैरभि [4]श्रुत्वा यन्ति [5]विदुर्हि तक्मनाशनम्[5] ॥ २ ॥

सुपर्णऽसुवने । गिरौ । जातम् । हिमऽवतः । परि ।
धनैः । अभि । श्रुत्वा । यन्ति । विदुः । हि । तक्मऽनाशनम् ॥ २ ॥

अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि ।
तत्रामृतस्य चक्षणं देवाः कुष्ठमवन्वत ॥ ३ ॥

अश्वत्थः । देवऽसदनः । तृतीयस्याम् । इतः । दिवि ।
तत्र । अमृतस्य । चक्षणम् । देवाः । कुष्ठम् । अवन्वत ॥ ३ ॥

हिरण्ययी[6] नौरचरद्धिरण्यबन्धना दिवि ।
तत्रामृतस्य [7]पुष्पं देवाः कुष्ठमवन्वत ॥ ४ ॥

हिरण्ययी । नौः । अचरत् । हिरण्यऽबन्धना । दिवि ।
तत्र । अमृतस्य । [8]पुष्पम् । देवाः । कुष्ठम् । अवन्वत ॥ ४ ॥

[9]हिरण्ययाः पन्थान आसन्नरित्राणि हिरण्यया[9] ।
नावो [10]हिरण्ययीरासन् याभिः कुष्ठं निरावहन् ॥ ५ ॥

१. गिरिषु जायसे पै १९,८,१५.　२. तक्मनाशन P².　३. °सवने पै १९, ८,१४.　४. श्रुतं पै.　५. कुष्ठेहि तक्मनाशन पै.　६. हिरण्मयी R, ७. पुष्पं M,RW.　८. पुष्पंम् J.　९. हिरण्मयः पन्था आसीदरित्राणि हिरण्मया पै १९,८,१३.　१०. हिरण्मयी° पै.

हिरण्ययाः । पन्थानः । आसन् । अरित्राणि । हिरण्यया ।
नावः । हिरण्ययीः । आसन् । याभिः । कुष्ठम् । निःऽआवहन् ॥ ५ ॥

इमं मे कुष्ठ [1]पूरुषं तमा वह तं [2]निष्कुरु । तमु मे अगदं कृधि ॥ ६ ॥

इमम् । मे । कुष्ठ । पुरुषम् । तम् । आ । वह । तम् । निः । कुरु ।
तम् । ऊं इति । मे । अगदम् । कृधि ॥ ६ ॥

देवेभ्यो अधि [3]जातो॒सि सोमस्यासि सखा हितः ।
स [4]प्राणाय व्यानाय[4] चक्षुषे [5]मे अस्मै[5] मृड ॥ ७ ॥

देवेभ्यः । अधि । जातः । असि । सोमस्य । असि । सखा । हितः ।
सः । प्राणाय । विऽआनाय । चक्षुषे । मे । अस्मै । मृड ॥ ७ ॥

उदङ् जातो हिमवतः स प्राच्यां नीयसे जनम् ।
तत्र कुष्ठस्य नामान्युत्तमानि वि भेजिरे ॥ ८ ॥

उदङ् । जातः । हिमऽवतः । सः । प्राच्याम् । नीयसे । जनम् ।
तत्र । कुष्ठस्य । नामानि । उत्ऽतमानि । वि । भेजिरे ॥ ८ ॥

उत्तमो नाम कुष्ठास्युत्तमो नाम ते पिता ।
यक्ष्मं च सर्वं नाशय तक्मानं चारसं कृधि ॥ ९ ॥

उत्ऽतमः । नाम । कुष्ठ । असि । उत्ऽतमः । नाम । ते । पिता ।
यक्ष्मम् । च । सर्वम् । नाशय । तक्मानम् । च । अरसम् । कृधि ॥ ९ ॥

शीर्षामयमुपहत्यामक्ष्योस्तन्वो३[7] रपः ।
कुष्ठस्तत् सर्वं [8]निष्करद् दैवं समह वृष्ण्यम् ॥ १० ॥

शीर्षऽआमयम् । उपऽहत्याम् । [6]अक्ष्योः । तन्वः । रपः ।
कुष्ठः । तत् । सर्वम् । निः । करत् । दैवम् । समह । वृष्ण्यम् ॥ १० ॥

इति प्रथमेऽनुवाके चतुर्थं सूक्तम् ।

१. पुरुषं Bh,R. २. निःकुरु E2,H; निष्कृधि पै १,३१,१. ३. जातोसि A,R, E2,H; जातोऽसि सात2. ४. प्राणायापानाय पै १९,११,२. ५. ऽस्य पै. ६. °मक्षो° A,B,Bh,D,R,Sm,Cs; अक्षोः P,P2,J,Cp; °मक्षो° > °मक्ष्यो° Dc. ७. °वो३ K,Km,V. ८. °निः क° R,Dc.

शस्त्राद्यभिघाते 'रात्री माता' इति सूक्तेन दुग्धे लाक्षां क्राथयित्वा अभिमन्त्र्य पाययति। तथा च सूत्रम्—'लाक्षालिङ्गाभिर्दुग्धे फाण्टान् पाययति' (कौसू २८,१४) इति।

[1]रात्री माता नभः पितार्यमा ते पितामहः।
[2]सिलाची नाम वा असि सा देवानामसि स्वसा ॥ १ ॥

रात्री। माता। नभः। पिता। अर्यमा। ते। पितामहः।
सिलाची। नाम। वै। असि। सा। देवानाम्। असि। स्वसा ॥ १ ॥

यस्त्वा पिबति जीवति त्रायसे पुरुषं त्वम्।
[3]भर्त्री हि[3] शश्वतामसि [4]जनानां च न्यञ्चनी[4] ॥ २ ॥

यः। त्वा। पिबति। जीवति। त्रायसे। पुरुषम्। त्वम्।
भर्त्री। हि। शश्वताम्। [5]असि। जनानाम्। च। निऽअञ्चनी ॥ २ ॥

वृक्षंवृक्षमा रोहसि वृषण्यन्तीव कन्यला।
जयन्ती प्रत्यातिष्ठन्ती [6]स्परणी नाम वा असि ॥ ३ ॥

वृक्षम्ऽवृक्षम्। आ। रोहसि। वृषण्यन्तीऽइव। कन्यला।
जयन्ती। प्रतिऽआतिष्ठन्ती। [6]स्परणी। नाम। वै। असि ॥ ३ ॥

यद् दण्डेन [7]यदिष्वा यद् वारुर्हरसा कृतम्।
तस्य त्वमसि [8]निष्कृतिः† सेमं ‡निष्कृधि पूरुषम्[8] ॥ ४ ॥

यत्। दण्डेन। यत्। इष्वा। यत्। वा। अरुः। हरसा। कृतम्।
तस्य। त्वम्। असि। निःऽकृतिः। सा। इमम्। निः। कृधि। पुरुषम् ॥ ४ ॥

[9]भद्रात् प्लक्षान्निस्तिष्ठस्यश्वत्थात् खदिराद्धवात्।
भद्रान्न्यग्रोधात् पर्णात्[9] सा न एह्यरुन्धति ॥ ५ ॥

१. सूर्यसिद् खि ४,७,१. २. घृताची खि.; शिलादी? पै ६,४,१. ३. धर्त्री च पै ६,४,२; त्रात्रिणी खि ४,७,२. ४. शश्वतां त्यन्वंचनी पै., शश्वतां सम्यञ्चनी खि. ५. असि P. ६. स्परं° B,Bp,K,K^m,V,Dc,P; स्प° > स्प° Cs; संजया पै ६,४,५. ७. °दिंपुणा खि. ४,७,३. ८. भेषजी निष्कृतिर्नाम वा असि पै ४,४,३; निष्कृतिः सानौ निष्कृत्य ओषधीः खि. † निः-कृतिः R,Dc. ‡ निःकृधि R,Dc. ९. पाभे. भूयस्त्वं पै ६,४,८ खि ४,७,५. द्र.

भद्रात् । प्लक्षात् । निः । तिष्ठसि । अश्वत्थात् । खदिरात् । धवात् ।
भद्रात् । न्यग्रोधात् । पर्णात् । सा । नः । आ । इहि । अरुन्धति ॥ ५ ॥

**हिरण्यवर्णे[1] सुभगे सूर्यवर्णे वपुष्टमे ।**
**[2]रुतं गच्छासि [3]निष्कृते [4]निष्कृतिर्नाम वा असि[5] ॥ ६ ॥**

हिरण्यऽवर्णे । सुऽभगे । सूर्यऽवर्णे । वपुःऽतमे ।
रुतम् । गच्छासि । निःऽकृते । निःऽकृतिः । नाम । वै । असि ॥ ६ ॥

**[6]हिरण्यवर्णे [7]सुभगे [8]शुष्मे लोमशवक्षणे ।**
**अपामसि स्वसा लाक्षे वातो ह्यात्मा बभूव ते ॥ ७ ॥**

हिरण्यऽवर्णे । सुऽभगे । शुष्मे । लोमशऽवक्षणे ।
अपाम् । असि । स्वसा । लाक्षे । वातः । ह । आत्मा । बभूव । ते ॥ ७ ॥

**[8]सिलाची [9]नाम [10]कानीनोऽजबभ्रु पिता तव ।**
**अश्वो यमस्य यः [11]श्यावस्तस्य हास्नास्युक्षिता ॥ ८ ॥**

सिलाची । नाम । कानीनः । [12]अजऽबभ्रु । पिता । तव ।
अश्वः । यमस्य । यः । श्यावः । तस्य । ह । [13]अस्ना । असि । उक्षिता ॥ ८ ॥

**अश्वस्यास्नः संपतिता सा [14]वृक्षाँ अभि सिष्यदे ।**
**[15]सरा [16]पतत्रिणी भूत्वा[16] सा न एह्यरुन्धति ॥ ९ ॥**

अश्वस्य । अस्नः । सम्ऽपतिता । सा । वृक्षान् । अभि । सिस्यदे ।
सरा । पतत्रिणी । भूत्वा । सा । नः । आ । इहि । अरुन्धति ॥ ९ ॥

**इति प्रथमेऽनुवाके पञ्चमं सूक्तम् ।**
**इति प्रथमोऽनुवाकः ।**

---

१. हिरण्यबाहु पै ६,४,७. २. ऋतं H,Bp[2], पै. ३. निःकृते R,Dc. ४. निःकृति° R,Dc; सेमं निष्कृधि पूरुषम् पै. ५. °ण्यपर्णे खि ४,७,७. ६. युवते पै ६,४,६. ७. सोक्ष्मे खि. ८. घृताची पै ६,४,८. ९. नाम Sm; नाम>नाम B[h]. १०. °बभ्रुः R, °नो अज° पै. ११. श्याव° Cs. १२. अजबभ्रु K. १३. आस्ना K,P. १४.° वृक्षाँ B,R,Sm; पर्णम् पै ६,४,९. १५. सीराः ऋ १०,९७,९ मा १२,८३; सुराः तै ४,२,६,२ मै २,७,१३ काठ १६,१३. १६. °त्रिण्यसि पै.; °णीः स्थन ऋ. मा.; °णीः स्थ काठ.

रोगिण आरोग्यविज्ञानकर्मणि 'ब्रह्म जज्ञानम्' इति सूक्तेन तिस्रः स्नाव-रज्जूरभिमन्त्र्य अङ्गारेषु निदधाति । यदि अङ्गारस्थास्ता[1] ऊर्ध्वं गच्छन्ति ततो जीविष्यतीति ज्ञेयम् । तद् उक्तं कौशिकेन—"'ब्रह्म जज्ञानम्' इति जीवित-विज्ञानम् । तिस्रः स्नावरज्जूरङ्गारेष्ववधाय । उत्कुचतीषु कल्याणम्" (कौसू १५,१२-१४) इति ।

तथा सांग्रामिकविज्ञानकर्मणि अनेन सूक्तेन तिस्रः स्नावरज्जूरभिमन्त्र्य एका रज्जुः आत्मसेना द्वितीया मध्ये मृत्युः तृतीया रज्जुः परसेनेति संकल्प्य अङ्गारेषु निदधाति । यस्या उपरि मृत्युर्गच्छति तस्याः पराजयो भवति । या मृत्योरुपरि पतति तस्या जयो भवति । या संमुखा याति तस्या अपि जयो भवति ।

तथा तत्रैव कर्मणि रज्जुम् एकाम् अभिमन्त्र्य अङ्गारेषु निदधाति । एवम् इषीकाः ।

तद् उक्तं कौशिकेन—'सांग्रामिकमेता व्यादिशति मध्ये मृत्युरितरे सेने । पराजेष्यमाणा[2] मृत्युरतिवर्तते । जेष्यन्ती[2] मृत्युम् । अग्रेषूत्कुचत्सु मुख्या हन्यन्ते मध्येषु मध्या अन्तेष्ववरे । एवम् इषीकाः' ( कौसू १५,१५-१८ ) इति ।

सलिलगणे अस्य सूक्तस्य पाठः । तद् 'आपो हि ष्ठा' ( अ १,५ ) इति सूक्ते द्रष्टव्यम् ।

तथा प्रवत्स्यन् अनेन सूक्तेन हवींषि जुहुयात् । आज्यपालाशादिसमित्पु-रोडाशपयउदौदनपायसपशुव्रीहियवतिलधानाकरम्भशष्कुल्यः इत्येतानि हवींषि विक-ल्पेन जुहुयाद् इत्यर्थः । तद् उक्तं कौशिकेन—'द्वितीयेन प्रवत्स्यन् हविषाम् उपदधीत' ( कौसू १८,२७ ) इति ।

तथा स्त्रीप्रसवदोषे सूतिकारोगे च अनेन सूक्तेन भक्तम् अभिमन्त्र्य ददाति । तथा सक्तुमन्थम् अभिमन्त्र्य पाययति । अनेनैव सूक्तेन उपस्थानम् आदित्यस्य । तद् उक्तं कौशिकेन—"'ब्रह्म जज्ञानम्' इति सूतिकारिष्टकौ प्रपादयति । मन्थाचमनोपस्थानम् आदित्यस्य" ( कौसू २८,१५;१६ ) इति ।

ब्रह्म जज्ञानं प्रथमं पुरस्ताद् वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ॥ १ ॥

ब्रह्म । जज्ञानम् । प्रथमम् । पुरस्तात् । वि । सीमतः । सुऽरुचः । वेनः । आवः ।
सः । बुध्न्याः । उपऽमाः । अस्य । विऽस्थाः । सतः । च । योनिम् । असतः । च । वि । वः ॥

[3]अनाप्ता ये वः प्रथमा यानि कर्माणि चक्रिरे ।
वीरान् नो अत्र मा दभन् तद् व एतत् पुरो दधे ॥ २ ॥

---

१. °माणान् Bl.    २. °न्तो Bl.    ३. पाभे. ६२९ पृ. द्र.

अनाप्ताः । ये । वः । प्रथमाः । यानि । कर्माणि । चक्रिरे ।
वीरान् । नः । अत्र । मा । दभन् । तत् । वः । एतत् । पुरः । दधे ॥ २ ॥

**[1]सहस्रधार एव[1] ते समस्वरन् दिवो नाके मधुजिह्वा असश्चतः ।**
**[2]तस्य स्पशो न नि मिषन्ति भूर्णयः पदेपदे पाशिनः [3]सन्ति सेतवे[4] ॥३॥**

सहस्रऽधारे । एव । ते । सम् । [5]अस्वरन् । दिवः । नाके । मधुऽजिह्वाः । असश्चतः ।
तस्य । स्पशः । न । नि । मिषन्ति । भूर्णयः । पदेऽपदे । पाशिनः । सन्ति । सेतवे ॥ ३ ॥

**पर्यू षु प्र [6]धन्वा वाजसातये परि वृत्राणि सक्षणिः ।**
**[7]द्विषस्तदध्यर्णवेनेयसे[7] सनिस्रसो नामासि त्रयोदशो मास इन्द्रस्य गृहः ॥४॥**

परि । ऊं इति । सु । प्र । धन्व । वाजऽसातये । परि । वृत्राणि । सक्षणिः । द्विषः । तत् ।
अधि । अर्णवेन । ईयसे । सनिस्रसः[8] । नाम । असि । त्रयःऽदशः । मासः । इन्द्रस्य । गृहः ॥४॥

**[9]न्वेतेनारात्सीरसौ स्वाहा ।**
**तिग्मायुधौ तिग्महेती [10]सुशेवौ सोमारुद्राविह[10] सु मृडतं नः ॥ ५ ॥**

नु । एतेन । अरात्सीः । असौ । स्वाहा ।
तिग्मऽआयुधौ । तिग्महेती इति तिग्मऽहेती । सुऽशेवौ । सोमारुद्रौ । इह । सु । मृडतम् । नः ॥५॥

**अवैतेनारात्सीरसौ स्वाहा । तिग्मा० ॥ ६ ॥**

अव । एतेन ।० ॥ ६ ॥

**अपैतेनारात्सीरसौ स्वाहा । तिग्मा०॥ ७ ॥**

अप । एतेन ।० ॥ ७ ॥

**[11]मुमुक्तमस्मान् [12]दुरितादवद्याज्जुषेथां यज्ञममृतमस्मासु [13]धत्तम् ॥ ८ ॥**

मुमुक्तम् । [14]अस्मान् । दुःऽइतात् । अवद्यात् । जुषेथाम् । यज्ञम् । अमृतम् । अस्मासु । [15]धत्तम् ॥

---

१. °धारेऽव ऋ ९,७३,४; °धारमभि पै ६,११,४. २. अस्य ऋ. ३. सन्तु पै. ४. सेतवः ऋ. ५. अश्वरन् P. ६. धन्व ऋ ९,११०,१ पै ६,११,५. ७. द्विषस्तरध्या ऋणया न ईयसे (कौ. ईरसे) ऋ. कौ १,४२८; दि व स्तु द र्ण वा न् नी य से पै. ८. सनिस्रसः P². ९. न्वै१ A,K,Km,V; न्वे१ Sm; न्वेते° पै ६,११,७. १०. °वा अग्नीषोमाविह पै. ११. °मस्मार्दु° Bh,Dc; °मस्मान्दु° > °मस्माद्दु° A; °स्माद्दु° Cs; °मस्माद्दु° K,Km,R,V,O; °मस्माद् पै [मूको.] ६,११,१०. १२. गृभीथादव° पै. १३. धत्ताम् Sm; धत्तं स्वाहा पै. १४. अस्मात् P,P²,J,Cp,Bp³. १५. धत्ताम् P.

चक्षुषो हेते मनसो हेते ब्रह्मणो हेते तपसश्च हेते ।
मेन्या मेनिरस्यमेनयस्ते सन्तु [1]येऽस्माँ अभ्यघायन्ति[2] ॥ ९ ॥

चक्षुषः । हेते । मनसः । हेते । ब्रह्मणः । हेते । तपसः । च । हेते ।
मेन्याः । मेनिः । असि । अमेनयः । ते । सन्तु । ये । अस्मान् । अभिऽअघायन्ति ॥ ९ ॥

[4]योऽस्मांश्चक्षुषा मनसा चित्त्याकूत्या च यो अघायुरभिदासात् ।
त्वं [5]तानग्ने मेन्यामेनीन्[6] कृणु स्वाहा ॥ १० ॥

यः । अस्मान् । चक्षुषा । मनसा । चित्त्या । [7]आऽकूत्या । च । यः । अघऽयुः । अभिऽदासात् ।
त्वम् । तान् । अग्ने । मेन्या । अमेनीन् । कृणु । स्वाहा ॥ १० ॥

इन्द्रस्य गृहोऽसि ।
तं त्वा प्र पद्ये तं त्वा प्र विशामि सर्वगुः सर्वपूरुषः
सर्वात्मा सर्वतनूः सह यन्मेऽस्ति तेन ॥ ११ ॥

इन्द्रस्य । गृहः । असि । तम् । त्वा । प्र । पद्ये । तम् । त्वा । प्र । विशामि । सर्वऽगुः ।
सर्वऽपुरुषः । सर्वऽआत्मा । सर्वऽतनूः । सह । यत् । मे । अस्ति । तेन ॥ ११ ॥

इन्द्रस्य शर्मासि । तं त्वा०॥ १२ ॥

इन्द्रस्य । शर्म । असि । ० ॥ १२ ॥

इन्द्रस्य वर्मासि । तं त्वा ०॥ १३ ॥

इन्द्रस्य । वर्म । असि ।० ॥ १३ ॥

इन्द्रस्य वरूथमसि । तं त्वा ० ॥ १४ ॥

इन्द्रस्य । वरूथम् । असि । ० ॥ १४ ॥

**इति द्वितीयेऽनुवाके प्रथमं सूक्तम् ।**

**निर्ऋतिकर्मणि 'आ नो भर' इति सूक्तेन शर्करामिश्रा धानाः सकृज्जुहोति ।** "'आ नो भर' इति धानाः" ( कौसू १८,१४ ) इत्यादि सूत्रम् ।

१. येँ१ K,Km; ये१ Sm. २. °न्ति स्वाहा पै ६,११,११. ३. अ नास्ति K,P.
४. यो१ Bh,K,Km,V; यो१ Dc; यो१ Sm; योस्मां° Cs. ५. अग्ने तं पै ६,११,१२.
६. °मेनिं पै. ७. आकूत्या P².

तथा अर्थोत्थापनविघ्नशमनकर्मणि अस्य सूक्तस्य विनियोगः । सूत्रादिकम् 'अयं ते योनिः' ( अ ३,२० ) इति सूक्ते द्रष्टव्यम् ।

अग्निचयने वनीवाहने क्रियमाणे इदं सूक्तं यजमानं वाचयति। तद् उक्तं वैताने — "'आ नो भर' इति वनीवाहने वाचयति" ( वैताश्रौ २८,१७ ) इति। वनीवाहनम् ऋत्विजां भृत्यर्थं वचनम् ।

आ नो॑ [1]भ॒र [2]मा परि॑ ष्ठा अराते॒ मा नो॑ [3]र॒क्षीर्दक्षि॑णां नी॒यमा॑नाम् ।
नमो॑ वी॒त्सा॑या॒ असमृ॑द्धये॒[4] नमो॑ अ॒स्त्वरा॑तये ॥ १ ॥

आ । नः॒ । भ॒र । मा । परि॑ । स्था॒ः । अ॒रा॒ते॒ । मा । नः॒ । र॒क्षीः॒ । दक्षि॑णाम् । नी॒यमा॑नाम् ।
नमः॑ । वि॒ऽई॒र्त्सा॑यै॑ । अस॑म्ऽऋद्धये । नमः॑ । अ॒स्तु॒ । अरा॑तये ॥ १ ॥

यम॑राते पु॒रोध॒त्से पुरु॑षं परि॒रा॒पिण॑म् ।
नम॑स्ते॒ तस्मै॑ कृण्मो॒ मा व॒निं [5]व्य॑थयी॒र्मम॑ ॥ २ ॥

यम् । अ॒रा॒ते॒ । पु॒रः॒ऽध॒त्से । पुरु॑षम् । प॒रि॒ऽरा॒पिण॑म् ।
नमः॑ । ते॒ । तस्मै॑ । कृ॒ण्मः॒ । मा । व॒निम् । व्य॒थ॒यीः॒ । मम॑ ॥ २ ॥

प्र णो॑ व॒निर्दे॒वकृ॑ता दि॒वा नक्तं॑ च [6]कल्पताम् ।
[7]अरा॑तिमनु॒प्रेमो॑ व॒यं नमो॑ अ॒स्त्वरा॑तये ॥ ३ ॥

प्र । [8]नः॒ । व॒निः । दे॒व॒ऽकृ॑ता । दिवा॑ । नक्त॑म् । च॒ । क॒ल्प॒ता॒म् ।
[9]अरा॑तिम् । अ॒नु॒ऽप्रेमः॑[9] । व॒यम् । नमः॑ । अ॒स्तु॒ । अरा॑तये ॥ ३ ॥

सर॑स्वतीमनु॒मतिं॒ भगं॒ यन्तो॑ हवामहे ।
वाचं॑ जु॒ष्टां मधु॑मतीमवादिषं दे॒वानां॑ दे॒वहू॑तिषु ॥ ४ ॥

सर॑स्वतीम् । अनु॑ऽमतिम् । भग॑म् । यन्तः॑ । ह॒वा॒म॒हे॒ ।
वाच॑म् । जु॒ष्टाम् । मधु॑ऽमतीम् । अ॒वा॒दि॒ष॒म् । दे॒वाना॑म् । दे॒वऽहू॑तिषु ॥ ४ ॥

१. दिशा पै ७,९,१. २. मा नास्ति P³,M,W. ३. चक्षीर्दक्षिणां यातुमावान् पै. ४. °मृद्धयै पै, ५. मम व्यथः पै ७,९,२. ६. सिध्यतु पै ७,९,४. ७. अ॒रा॒तिम॑नु॒° A,B,Bʰ,D,K,Kᵐ,R,Sᵐ,Cs,Bp²,K³,P³,M; अ॒रा॒तिम॑नु > अरा॑तिमनु Dc; अ॒रा॒तिम॑नु H, E²,I. ८. नुः Bp³. ९. अ॒रा॒ति॒म् । अनु॒प्रेम॑ः P,J,K,Cp; अरा॑तिम् । अनु॒प्रेमः॑ P².

यं याचाम्यहं वाचा सरस्वत्या मनोयुजा ।
श्रद्धा तमद्य विन्दतु दत्ता सोमेन बभ्रुणा ॥ ५ ॥

यम् । याचामि । अहम् । वाचा । सरस्वत्या । मनःऽयुजा ।
श्रद्धा । तम् । अद्य । विन्दतु । दत्ता । सोमेन । बभ्रुणा ॥ ५ ॥

मा वनिं मा वाचं नो [1]वीर्त्सीरुभाविन्द्राग्नी आ [2]भरतां नो वसूनि ।
सर्वे [3]नो अद्य दित्सन्तोऽरातिं प्रति हर्यत ॥ ६ ॥

मा । वनिम् । मा । वाचम् । नः । [4]वि । ईर्त्सीः[4] । उभौ । इन्द्राग्नी इति । आ । भरताम् । नः । वसूनि ।
सर्वे । नः । अद्य । दित्सन्तः । अरातिम् । प्रति । हर्यत ॥ ६ ॥

[5]परोपेह्यसमृद्धे वि ते हेतिं नयामसि ।
वेद त्वाहं निमीवन्तीं नितुदन्तीमराते ॥ ७ ॥

परः । अप । इहि । असम्ऽऋद्धे । वि । ते । हेतिम् । नयामसि ।
वेद । त्वा । अहम् । निऽमीवन्तीम् । निऽतुदन्तीम् । अराते ॥ ७ ॥

उत नग्ना बोभुवती स्वप्नया सचसे जनम् ।
अराते [6]चित्तं वीर्त्सन्त्याकूतिं पुरुषस्य च ॥ ८ ॥

उत । नग्ना । बोभुवती । स्वप्नऽया । सचसे । जनम् ।
अराते । चित्तम् । विऽईर्त्सन्ती । आऽकूतिम् । पुरुषस्य । च ॥ ८ ॥

या महती महोन्माना [7]विश्वा आशा व्यानशे ।
तस्यै हिरण्यकेश्यै [8]निर्ऋत्या अकरं नमः[8] ॥ ९ ॥

या । महती । महाऽउन्माना । विश्वाः । आशाः । विऽआनशे ।
तस्यै । हिरण्यऽकेश्यै । निःऽऋत्यै । अकरम् । नमः ॥ ९ ॥

हिरण्यवर्णा सुभगा हिरण्यकशिपुर्मही ।
तस्यै हिरण्यद्रापयेऽरात्या अकरं नमः ॥ १० ॥

१. °ह्यावि° पै ७,९,८. २. भजतां पै. ३. णो A,B,Bp,B[h],R,S[m];H,E[2],O,K[2]; णो > नो Dc. ४. वि । ईर्त्सीः K; विऽईर्त्सीः V. ५. परोमेह्यस° पै ७,१,६. ६. चित्तिं पै ७,९,५. ७. सर्वा ७,१९,४. ८. नमः कृण्मो अरातये पै.

हिरण्यऽवर्णा । सुऽभगा । हिरण्यऽकशिपुः । मही ।
तस्यै । हिरण्यऽद्रापये । अरात्यै । अकरम् । नमः ॥ १० ॥

इति द्वितीयेऽनुवाके द्वितीयं सूक्तम् ।

अभिचारकर्मणि 'वैकङ्कतेन' इति सूक्तेन जुहोति । "'वैकङ्कतेन' इति मन्त्रोक्तम्" (कौसू ४८,८ ) इति सूत्रात् ।

वैकङ्कतेनेध्मेन देवेभ्य आज्यं वह ।
अग्ने [1]ताँ इह [2]मादय सर्व आ यन्तु मे हवम् ॥ १ ॥

वैकङ्कतेन । इध्मेन । देवेभ्यः । आज्यम् । वह ।
अग्ने । तान् । इह । मादय । सर्वे । आ । यन्तु । मे । हवम् ॥ १ ॥

इन्द्रा याहि मे हवमिदं करिष्यामि तच्छृणु ।
[3]इम ऐन्द्रा अतिसरा[3] आकूतिं सं नमन्तु मे ।
तेभिः शकेम [4]वीर्यं[4] जातवेदस्तनूवशिन् ॥ २ ॥

इन्द्र । आ । याहि । मे । हवम् । इदम् । करिष्यामि । तत् । शृणु ।
इमे । ऐन्द्राः । अतिऽसराः । आऽकूतिम् । सम् । नमन्तु । मे ।
तेभिः । शकेम । वीर्यम् । जातऽवेदः । तनूऽवशिन् ॥ २ ॥

यदसावमुतो देवा अदेवः संश्चिकीर्षति[5] ।
मा तस्याग्निर्हव्यं [6]वाक्षीद्धवं देवा अस्य मोप गुर्ममैव हवमेतन ॥ ३ ॥

यत् । असौ । अमुतः । देवाः । [7]अदेवः । सन् । चिकीर्षति[5] । मा । तस्य । अग्निः ।
हव्यम् । वाक्षीत् । हवम् । देवाः । अस्य । मा । उप । गुः । मम । एव । हवम् । आ । इतन ॥ ३ ॥

[8]अति धावतातिसरा[8] [9]इन्द्रस्य वचसा[9] हत ।
अविं [10]वृक इव[10] मथ्नीत [11]स वो जीवन् मा मोचि प्राणमस्यापि नह्यत ॥ ४ ॥

१. तैं R. २. सादय पै ७,१८,१. ३. इममिन्द्राति° पै ७,१८,२. ४. वीर्यं३ A,B[10],B,D,S[m],Cs. ५. °कीरिषति D,I,Bp[2],Bp[3]. ६. साक्षी° पै ७,१८,३. ७. अद्वेवः P[2]. ८. अतिसृत्याति° पै ७,१८,५; °सुरा Cs. ९. °स्यौजसा पै. १०. द्रुकीव पै. ११. तत्रो पै.

अर्ति । धावत । अतिऽसराः । इन्द्रस्य । वर्चसा । हत ।
[1]अविम् । वृकःऽइव । मथ्नीत । सः । वः । जीवन् । मा । मोचि । प्राणम् । अस्य । अपि । नह्यत ॥४॥

यममी पुरोदधिरे [2]ब्रह्माणमपभूतये ।
इन्द्र स ते अधस्पदं तं प्रत्यस्यामि मृत्यवे ॥ ५ ॥

यम् । अमी इति । पुरःऽदधिरे । ब्रह्माणम् । अपऽभूतये ।
इन्द्र । सः । ते । अधःऽपदम् । तम् । प्रति । अस्यामि । मृत्यवे ॥ ५ ॥

यदि प्रेयुर्देवपुरा ब्रह्म वर्माणि चक्रिरे ।
तनूपानं [3]परिपाणं कृण्वाना यदुपोचिरे[3] सर्वं तदरसं कृधि ॥ ६ ॥

यदि । प्रऽईयुः । देवऽपुराः । ब्रह्म । वर्माणि । चक्रिरे ।
तनुऽपानम् । परिऽपानम् । कृण्वानाः । यत् । उपऽऊचिरे । सर्वम् । तत् । अरसम् । कृधि ॥ ६ ॥

यानसावतिसरांश्चकार कृणवच्च यान् ।
त्वं तानिन्द्र वृत्रहन् प्रतीचः पुनरा कृधि यथामुं तृणहां जनम् ॥ ७ ॥

यान् । असौ । अतिऽसरान् । चकार । कृणवत् । च । यान् ।
त्वम् । तान् । इन्द्र । वृत्रऽहन् । प्रतीचः । पुनः । आ । कृधि । यथा । अमुम् । तृणहान् । जनम् ॥७॥

यथेन्द्र [4]उद्वाचनं लब्ध्वा चक्रे अधस्पदम् ।
[5]कृण्वे३हमधरांस्तथामून्छश्वतीभ्यः समाभ्यः ॥ ८ ॥

यथा । इन्द्रः । उत्ऽवाचनम् । लब्ध्वा । चक्रे । अधःऽपदम् ।
कृण्वे[6] । अहम् । अधरान् । तथा । अमून् । शश्वतीभ्यः । समाभ्यः ॥ ८ ॥

[7]अत्रैनानिन्द्र वृत्रहन्नुग्रो मर्माणि विध्य ।
[8]अत्रैवैनानभि तिष्ठेन्द्र[8] [9]मेद्य१हं तव ।
[10]अनु त्वेन्द्रा रभामहे स्याम सुमतौ तव[10] ॥ ९ ॥

१. अविम् P[3]. २. °मभिभू° पै ७,१८,६. ३. परिपाणानि चक्रिरे पै ७,१८,७. ४. उद्वातनं? पै ७,१८,९. ५. कृण्वे१° K,V; कृण्वे ऽमुमधरं तथा शश्व° पै.; °मून्छ° Cs. ६. कृण्वे ऽ P,J,Cp; कृण्व P[2]. ७. अत्रैनानिन्द्र K[m],R,S[m],Dc,H,I,O,K[2]; अथैनामिन्द्र पै ७,१८,८. ८. °वैनमभि तिष्ठः शक्र पै. ९. °द्य३हं A,B,B[h],D,S[m]. १०. दशमी ऋक् P[3],M,W,O.

अत्र । एनान् । इन्द्र । वृत्रऽहन् । उग्रः । मर्माणि । विध्य ।॰अत्र । एव । एनान् । अभि । तिष्ठ । इन्द्र । मेदी । अहम् । तव । अनु । त्वा । ॰इन्द्र । आ । रभामहे । स्याम । सऽमतौ । तव ॥ ९ ॥

इति द्वितीयेऽनुवाके तृतीयं सूक्तम् ।

'दिवे स्वाहा' इति सूक्तेन सर्वरोगभैषज्यार्थम् आज्यं हुत्वा सयवे केवले वा उदपात्रे चतुरः संपातान् द्वौ पृथिव्याम् आनीय संपातितमृत्सहितोदकेन सूक्ताभिमन्त्रितेन व्याधितम् आप्लावयेत् । सूत्रितं हि — "'दिवे स्वाहा' (अ ५,९), 'इमं यवम्' (अ ६,९१) इति चतुर उदपात्रे संपातान् आनयति । द्वौ पृथिव्याम् । तौ प्रत्याहृत्याप्लावयति । सयवे च" (कौसू २८,१७-२०) इति ।

दिवे स्वाहा ॥१॥ पृथिव्यै स्वाहा ॥२॥ अन्तरिक्षाय स्वाहा ॥३॥
दिवे । स्वाहा ॥१॥ पृथिव्यै । स्वाहा ॥२॥ अन्तरिक्षाय । स्वाहा ॥३॥

अन्तरिक्षाय स्वाहा ॥४॥ दिवे स्वाहा ॥५॥ पृथिव्यै स्वाहा ॥६॥
अन्तरिक्षाय । स्वाहा ॥४॥ दिवे । स्वाहा ॥५॥ पृथिव्यै । स्वाहा ॥ ६ ॥

सूर्यो मे चक्षुर्वातः [1]प्राणो[2]ऽन्तरिक्षमात्मा पृथिवी शरीरम् ।
अस्तृतो नामाहमयमस्मि स आत्मानं [3]नि दधे द्यावापृथिवीभ्यां गोपीथाय[4] ॥७॥

सूर्यः । मे । चक्षुः । वातः । प्राणः । अन्तरिक्षम् । आत्मा । पृथिवी । शरीरम् । अस्तृतः । नाम । अहम् । अयम् । अस्मि । सः । आत्मानम् । नि । दधे । द्यावापृथिवीभ्याम् । गोपीथाय ॥

उदायुरुद् बलमुत् कृतमुत् कृत्यामुन्मनीषामुदिन्द्रियम् ।
[5]आयुष्कृदायुष्पत्नी[5] [6]स्वधावन्तौ गोपा मे[6] स्तं[7] गोपायतं मा ।
आत्मसदौ मे स्तं मा मा हिंसिष्टम् ॥ ८ ॥

उत् । आयुः । उत् । बलम् । उत् । कृतम् । उत् । कृत्याम् । उत् । मनीषाम् । उत् । इन्द्रियम् । आयुःऽकृत् । आयुष्पत्नीत्यायुःऽपत्नी । स्वधाऽवन्तौ । गोपा । मे । स्तम् । गोपायतम् । मा । आत्मऽसदौ । मे । स्तम् । मा । मा । हिंसिष्टम् ॥ ८ ॥

इति द्वितीयेऽनुवाके चतुर्थं सूक्तम् ।

• १. इन्द्र P. २. ॰णोऽन्त॰ Bh,D,K,Km,Sm,V,Cs. ३. परि पै ६,१२,५. ४.॰ ॰य प्रहूयसे पै. ५. आयुःकृदायुःपत्नी A; वैप १,६८९ n द्र.; आयुष्कृदायुष्पत्नि का० १७,१५; ॰युष्मती पै ६,११,१४. ६. स्वधावो गोपा नः काठ. ७. स्थो पै., स्थ काठ.

'अश्मवर्म मेसि' इति[1] सूक्तेन पत्तनग्रामगृहस्वस्त्ययनार्थं षड् अश्मनः संपातवतः कृत्वा अभिमन्त्र्य चतुरो पत्तनादिकोणेषु चतुरो निखनति एकं मध्ये निखनति एकं पत्तनाद्युपरि निदधाति। तद् उक्तं कौशिकेन —" 'अश्मवर्म' इति षड् अश्मनः संपातवतः [1]स्रक्तिषूपर्यधस्तात् निखनति" (कौसू ५१,१४) इति। "यो मा दिशाम्' इति सप्तमी ऋक्। पूर्वासाम् ऋचां प्रत्येकं द्वितीया कार्या। एवं षड्भिः षड् संपाताः कार्या इत्यर्थः।

अश्मवर्म [2]मेसि यो [3]मा प्राच्या [4]दिशोघायुरभिदासात्।
एतत् स ऋच्छात्॥ १॥

अश्मऽवर्म। मे। असि। यः। मा। प्राच्याः। दिशः। अघऽयुः। अभिऽदासात्। एतत्। सः। ऋच्छात्॥ १॥

अश्मवर्म [2]मेसि यो [3]मा दक्षिणाया दिशोघा ०० ॥ २॥

० मा। दक्षिणायाः। दिशः। ०० ॥ २॥

अश्मवर्म [2]मेसि यो [3]मा प्रतीच्या दिशोघा ०० ॥ ३॥

० मा। प्रतीच्याः। दिशः। ०० ॥ ३॥

अश्मवर्म [2]मेसि यो [3]मोदीच्या दिशोघा ०० ॥ ४॥

० मा। उदीच्याः। दिशः। ०० ॥ ४॥

अश्मवर्म [2]मेसि यो [3]मा ध्रुवाया दिशोघा ०० ॥ ५॥

० मा। ध्रुवायाः। दिशः। ०० ॥ ५॥

अश्मवर्म [2]मेसि यो [3]मोर्ध्वाया दिशोघा ०० ॥ ६॥

० मा। ऊर्ध्वायाः। दिशः। ०० ॥ ६॥

अश्मवर्म [2]मेसि यो [3]मा दिशामन्तर्देशेभ्योघा ०० ॥ ७॥

अश्मऽवर्म। मे। असि। यः। मा। दिशाम्। अन्तःऽदेशेभ्यः। अघऽयुः। ०० ॥ ७॥

१. स्रक्तिषु पर्य[0] Bl. २. णोऽस्तु पै ६,१२,९. ३. अस्मान् पै. ४. दिशो॰ घा॰ A,R.

बृह॒ता मन॒ उप॑ ह्वये मात॒रिश्व॑ना प्राणापा॒नौ ।
सूर्या॒च्चक्षु॑र॒न्तरि॑क्षा॒च्छ्रोत्रं॑ पृथि॒व्याः शरी॑रम् ।
सर॑स्वत्या वा॒चमुप॑ ह्वयामहे मनो॒युजा॑ ॥ ८ ॥

बृ॒ह॒ता । मनः॑ । उप॑ । ह्व॒ये॒ । मा॒त॒रिश्व॑ना । प्रा॒णा॒पा॒नौ । सूर्या॑त् । चक्षुः॑ । अ॒न्तरि॑क्षात् । श्रोत्र॑म् । पृ॒थि॒व्याः । शरी॑रम् । सर॑स्वत्या । वा॒च॑म् । उप॑ । ह्व॒या॒म॒हे॒ । म॒नः॒ऽयुजा॑ ॥ ८ ॥

इति द्वितीयेऽनुवाके पञ्चमं सूक्तम् ।

इति द्वितीयोऽनुवाकः ।

सर्वसंपत्कर्मसु 'कथं महे' इति सूक्तेन मादानककाष्ठभृतं क्षीरौदनं संपात्य अभिमन्त्र्य अश्नाति ।

तथा तत्रैव अनेन सूक्तेन चमसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्छयित्वा मध्वासिच्य संपात्याभिमन्त्र्य आशयति । तद् उक्तं कौशिकेन—" 'कथं महे' इति मादानकभृतं क्षीरौदनम् अश्नाति । चमसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्छयित्वा मध्वासिच्याशयति" ( कौसू° १२,१:२ ) इति । मूर्छयित्वा चूर्णीकृत्य इत्यर्थः ।

'कथं म॒हे असु॑राया॒ब्रवी॑रि॒ह क॒थं' पि॒त्रे हर॑ये त्वे॒षनृ॑म्णः ।
पृश्नि॑न् वरुण॒ दक्षि॑णां दा॒वान् 'पुन॑र्मघ॒ त्वं मन॑साचिकित्सीः'[1][2][3] ॥ १ ॥

क॒थम् । म॒हे । असु॑राय । अ॒ब्र॒वीः॒ । इ॒ह । क॒थम् । पि॒त्रे । हर॑ये । त्वे॒षऽनृ॑म्णः । पृश्नि॑म् । व॒रु॒ण॒ । दक्षि॑णाम् । द॒दा॒वान् । पुनः॑ऽमघ । त्वम् । मन॑सा । अ॒चि॒कि॒त्सीः॒ ॥१॥

न कामे॑न॒ पुन॑र्मघो भवामि॒ [4]सं च॑क्षे॒ कं पृश्नि॑मे॒तामुपा॑जे ।
केन॒ [5]नु त्वम॑थर्व॒न्[6] काव्ये॑न॒ केन॑ जा॒तेना॑सि जा॒तवे॑दाः ॥ २ ॥

न । कामे॑न । पुनः॑ऽमघः । भ॒वा॒मि॒ । सम् । च॒क्षे॒ । कम् । पृश्नि॑म् । ए॒ताम् । उप॑ । अ॒जे॒ । केन॑ । नु । त्वम् । [7]अथ॑र्वन् । काव्ये॑न । केन॑ । जा॒तेन॑ । असि॒ । जा॒तऽवे॑दाः ॥ २ ॥

स॒त्यम॒हं ग॑भी॒रः काव्ये॑न स॒त्यं जा॒तेना॑स्मि जा॒तवे॑दाः ।
न मे॑ दा॒सो नार्यो॑ महि॒त्वा व्र॒तं मी॑माय॒ यद॒हं ध॑रि॒ष्ये ॥ ३ ॥

१. कथा दिव्यायासुराय ब्रवामः? कथा पै ८,१,१. २. पुनर्मघ सात°. ३. °सा चिकित्से पै. ४. सं चक्षे P³,M,W; सं पृच्छे पै ८,१,२. ५. ह्न पै. ६. °मथर्वन् A,D,R,Sᵐ,Cs,B²,P³,M; °मर्थ° > °मथ° Dc. ७. अथर्वन् P,J,Cp.

सत्यम् । अहम् । गभीरः । काव्येन । सत्यम् । जातेन । अस्मि । जातऽवेदाः ।
न । मे । दासः । न । आर्यः । महिऽत्वा । व्रतम् । मीमाय । यत् । अहम् । धरिष्ये ॥३॥

**न त्वदन्यः कवितरो न [1]मेधया धीरतरो वरुण स्वधावन्[2] ।**
**[3]त्वं ता विश्वा †भुवनानि[4] वेत्थ स चिन्नु त्वज्जनो मायी बिभाय ॥ ४ ॥**

न । त्वत् । अन्यः । कविऽतरः । न । मेधया । धीरऽतरः । वरुण । स्वधाऽवन् । त्वम् । ता । विश्वा । भुवनानि । [4]वेत्थ । सः । चित् । नु । त्वत् । जनः । मायी । बिभाय ॥४॥

**त्वं [5]ह्यङ्ग वरुण स्वधावन्[6] विश्वा वेत्थ [7]जनिमा सुप्रणीते ।**
**किं रजस एना परो [8]अन्यदस्त्येना किं [9]परेणावरममुर ॥ ५ ॥**

त्वम् । हि । अङ्ग । वरुण । स्वधाऽवन् । विश्वा । वेत्थ । जनिम । सुऽप्रनीते । किम् । रजसः । एना । परः । अन्यत् । [10]अस्ति । एना । किम् । परेण । अवरम् । अमुर ॥ ५ ॥

**एकं रजस एना परो [11]अन्यदस्त्येना पर एकेन [12]दुर्णशं चिदर्वाक् ।**
**तत् ते विद्वान् वरुण[13] प्र ब्रवीम्यधोवचसः पणयो भवन्तु नीचैर्दासा**
**उप सर्पन्तु [14]भूमिम् ॥ ६ ॥**

एकम् । रजसः । एना । परः । अन्यत् । [15]अस्ति । एना । परः । एकेन । दुःऽनशम् । चित् । अर्वाक् । तत् । ते । विद्वान् । वरुण । प्र । ब्रवीमि । अधःऽवचसः । पणयः । भवन्तु । नीचैः । दासाः । उप । सर्पन्तु । भूमिम् ॥ ६ ॥

**त्वं [5]ह्यङ्ग वरुण ब्रवीषि पुनर्मघेष्ववद्यानि भूरि ।**
**मो षु पणीँरभ्ये३तावतो भून्मा त्वा वोचन्नराधसं जनासः ॥ ७ ॥**

त्वम् । हि । अङ्ग । वरुण । ब्रवीषि । पुनःऽमघेषु । अवद्यानि । भूरि । मो इति । सु । पणीन् । अभि । एतावतः । भूत् । मा । त्वा । वोचन् । अराधसम् । जनासः ॥ ७ ॥

१. वेधा अनु पै ८,१,४. २. °धाव: पै. ३. त्वमङ्ग विश्वा जन्मानि पै. † भुवनानि D,R,S^m,Cs; भुवनानि>भुवनानि Dc. ४. वेत्थ P. ५. ह्यंग B^h,D,R,S^m,Cs. ६. स्वधावो पै ८,१,५. ७. जन्मा श्रद्धानि ते पै. ८. अन्यदस्त्येना A,K,K^m, R,S^m,V,Dc,B^2,P^2,M,H,O; °स्त्येना > °स्तेना B,D. ९. अवरेणावरममूर, पै. १०. अस्ति P^2,J,V,Cp. ११. अन्यदस्त्येना A,B^h,D,K,K^m,S^m,Dc. १२. ?वृकाकं पै ८,१,६. १३. °ण: पै. W. १४. रिप्रा पै. १५. अस्ति V,P^2,J,Cp; अस्ति>अस्ति P.

मा मा वोचन्नराधसं जनासः पुनस्ते पृश्निं जरितर्ददामि ।
स्तोत्रं मे विश्वमा याहि 'शचीभिरन्तर्विश्वासु मानुषीषु दिक्षु' ॥ ८ ॥

मा । मा । वोचन् । अराधसम् । जनासः । पुनः । ते । पृश्निम् । जरितः । ददामि ।
स्तोत्रम् । मे । विश्वम् । आ । याहि । शचीभिः । अन्तः । विश्वासु । मानुषीषु । दिक्षु ॥ ८ ॥

'आ ते स्तोत्राण्युद्यतानि यन्त्वन्तर्विश्वासु मानुषीषु दिक्षु ।
देहि नु मे यन्मे अदत्तो असि युज्यो मे सप्तपदः सखासि ॥ ९ ॥

आ । ते । स्तोत्राणि । उत्ऽयतानि । यन्तु । अन्तः । विश्वासु । मानुषीषु । दिक्षु ।
देहि । नु । मे । यत् । मे । अदत्तः । असि । युज्यः । मे । सप्तऽपदः । सखा । असि ॥९॥

समा 'नौ बन्धुर्वरुण समा जा 'वेदाहं तद्यन्नावेषा' समा जा ।
ददामि 'तद् यत् ते अदत्तो अस्मि' युज्यस्ते सप्तपदः सखास्मि ॥ १० ॥

समा । नौ । बन्धुः । वरुण । समा । जा । वेदं । अहम् । तत् । यत् । नौ । एषा । समा । जा ।
ददामि । तत् । यत् । ते । अदत्तः । अस्मि । युज्यः । ते । सप्तऽपदः । सखा । अस्मि ॥१० ॥

देवो देवाय गृणते वयोधा विप्रो विप्राय 'स्तुवते सुमेधाः' ।
अजीजनो हि वरुण स्वधावन्नथर्वाणं पितरं 'देवबन्धुम् ।
तस्मा 'उ राधः' कृणुहि सुप्रशस्तं सखा नो 'असि परमं' च बन्धुः ॥ ११ ॥

देवः । देवाय । गृणते । वयःऽधाः । विप्रः । विप्राय । स्तुवते । सुऽमेधाः ।
अजीजनः । हि । वरुण । स्वधाऽवन् । अथर्वाणम् । पितरम् । देवऽबन्धुम् ।
तस्मै । ऊं इति । राधः । कृणुहि । सुऽप्रशस्तम् । सखा । नः । असि । परमम् । च । बन्धुः ॥ ११॥

इति तृतीयेऽनुवाके प्रथमं सूक्तम् ।

वशाशमनकर्मणि वपायाश्चत्वारि खण्डानि कृत्वा 'समिद्धो अद्य' इति सूक्तेन एकं खण्डं जुहोति । 'ऊर्ध्वा अस्य' (अ ५,२७) इति सूक्तेन द्वितीयं खण्डं

१. जनेष्वन्तर्देवेषु मानुषेषु विप्र पै ८,१,८. २. पाभे. भूयस्त्वं पै ८,१,९ द्र. ३. नो Bh. ४. वेद वैतद् वंद पै ८,१,१०. ५. तुभ्यं यददत्तमस्ति पै. ६. स्तुवते सुमेधाः मूको. (तु. शंपा. Wh. ) ७. वैश्वदेवम् पै ८,१,११. ८. उर्वांशुः ? पै ९. अ नास्ति A,D; ऽस्ति वरुणः पै.

जुहोति। युक्ताभ्यां सूक्ताभ्यां तृतीयं खण्डम्। 'अनुमतये स्वाहा' (कौसू ४५,१६) इति चतुर्थं खण्डं जुहोति। तथा च सूत्रम्— "'समिद्धः', 'ऊर्ध्वा अस्य' इति जुहोति। युक्ताभ्यां तृतीयाम्। आनुमतीं चतुर्थीम्" ( कौसू ४५,८-१० ) इति।

समिद्धो अद्य मनुषो दुरोणे देवो देवान् यजसि जातवेदः।
आ च वह मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेताः॥ १॥

सम्ऽइद्धः। अद्य। मनुषः। दुरोणे। देवः। देवान्। यजसि। जातऽवेदः।
आ। च। वह। [1]मित्रऽमहः। चिकित्वान्। त्वम्। दूतः। कविः। असि। प्रऽचेताः॥ १॥

तनूनपात् पथ ऋतस्य यानान् मध्वा समञ्जन्त्स्वदया[2] सुजिह्व।
मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः॥ २॥

तनूऽनपात्। पथः। ऋतस्य। यानान्। मध्वा। सम्ऽअञ्जन्। [3]स्वदय। सुऽजिह्व।
मन्मानि। धीभिः। उत। यज्ञम्। [4]ऋन्धन्। देवऽत्रा। च। कृणुहि। अध्वरम्। नः॥ २॥

आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः।
त्वं देवानामसि यह्व होता स एनान् यक्षीषितो यजीयान्॥ ३॥

आऽजुह्वानः। ईड्यः। वन्द्यः। च। आ। याहि। अग्ने। वसुऽभिः। सऽजोषाः।
त्वम्। देवानाम्। असि। यह्व। होता। सः। एनान्। यक्षि। इषितः। यजीयान्॥ ३॥

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या [5]वृज्यते अग्रे अह्नाम्।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम्॥ ४॥

प्राचीनम्। [6]बर्हिः। प्रऽदिशा। पृथिव्याः। वस्तोः। अस्याः। वृज्यते। अग्रे। अह्नाम्।
वि। ऊं इति। प्रथते। विऽतरम्। वरीयः। देवेभ्यः। अदितये। स्योनम्॥ ४॥

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो [7]भवत सुप्रायणाः॥ ५॥

१. मित्रऽमहः P. २. तु. ऋ १०,११०,२ प्रमृ.; वैतु. A,B,Bp,B[h],D,K[m],R,S[m], V,Dc,Cs,Wh. स्वदया; K स्वधया. ३. तु. मंपा.; वैतु. P,P[2],J,Cp,V स्वदय. ४. ऋन्धन् P, ऋधन् P[2]. ५. तु. ऋ १०,११०,४ प्रमृ. W; वैतु. मूको. (तु. शंपा. Wh.) वृज्यसे. ६. बर्हिः J; बर्हिः > बर्हिः P. ७. भवथ तैब्रा ३,६,३,३.

व्यचस्वतीः । उर्विया । वि । श्रयन्ताम् । पतिऽभ्यः । न । जनयः । शुम्भमानाः ।
देवीः । द्वारः । बृहतीः । [1]विश्वम्ऽइन्वाः । देवेभ्यः । भवत । [2]सुऽप्रायनाः ॥ ५ ॥

आ सुष्वयन्ती यजते [3]उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥ ६ ॥

आ । सुस्वयन्ती इति । यजते इति । उपाके इति । उषसानक्ता । सदताम् । नि । योनौ । दिव्ये इति ।
योषणे इति । बृहती इति । सुरुक्मे इति सुऽरुक्मे । अधि । श्रियम् । शुक्रऽपिशम् । दधाने इति ॥६॥

दैव्या होतारा प्रथमा सुवाचा [4]मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥ ७ ॥

दैव्या । होतारा । प्रथमा । सुऽवाचा । मिमाना । यज्ञम् । मनुषः । यजध्यै ।
प्रऽचोदयन्ता । विदथेषु । कारू इति । प्राचीनम् । ज्योतिः । प्रऽदिशा । दिशन्ता ॥ ७ ॥

आ नो यज्ञं भारती तूयमेत्विडा [5]मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वतीः[6] स्वपसः [7]सदन्ताम् ॥ ८ ॥

आ । नः । यज्ञम् । भारती । तूयम् । एतु । इडा । मनुष्वत् । इह । चेतयन्ती ।
तिस्रः । देवीः । बर्हिः । आ । इदम् । स्योनम् । सरस्वतीः । सुऽअपसः । सदन्ताम् ॥ ८ ॥

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ॥ ९ ॥

यः । इमे इति । द्यावापृथिवी इति । जनित्री इति । रूपैः । अपिंशत् । भुवनानि । विश्वा ।
तम् । अद्य । होतः । इषितः । यजीयान् । देवम् । त्वष्टारम् । इह । यक्षि । विद्वान् ॥ ९ ॥

उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि ।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ॥ १० ॥

१. विश्वम्ऽइन्वाः P². २. सुप्रऽअयनाः ऋपपा १०,११०,५. ३. उपाके ऋ १०,११०,६ मा २९,३१ मै ४,१३,३ काठ १६,२० तैब्रा ३,६,३,३. ४. मिमान Sm; मिमानो>मिमाना Dc,Cs. ५. तु. ऋ १०,११०,८ मा २९,३३ मै. काठ. तैब्रा ३,६,३,४; वैतु. मूको. (तु. शंपा. Wh.) मनुष्वदिह ६. °ती ऋ. मा. मै. काठ. तैब्रा. W. ७. सदन्तु ऋ. मा. मै. काठ. तैब्रा.

उप॒ऽअवसृज । त्मन्या । सम्ऽअ॒ञ्जन् । दे॒वाना॑म् । पाथः । 'ऋ॒तुऽथा । ह॒वींषि ।
वन॒स्पतिः । श॒मि॒ता । दे॒वः । अ॒ग्निः । स्वद॑न्तु । ह॒व्यम् । मधु॑ना । घृ॒तेन॑ ॥ १० ॥

स॒द्यो जा॒तो व्य॑मिमीत य॒ज्ञम॒ग्निर्दे॒वाना॑मभवत् पु॒रोगाः[2] ।
अ॒स्य होतुः 'प्र॒शिष्यृ॒तस्य॑ वा॒चि स्वाहा॑कृतं ह॒विर॑दन्तु दे॒वाः ॥ ११ ॥

स॒द्यः । जा॒तः । वि । अ॒मि॒मी॒त । य॒ज्ञम् । अ॒ग्निः । दे॒वाना॑म् । अ॒भ॒व॒त् । पु॒रः॒ऽगाः ।
अ॒स्य । होतुः । [4]प्र॒ऽशिषि॑ । ऋ॒तस्य॑ । वा॒चि । स्वाहा॑ऽकृतम् । ह॒विः । अ॒द॒न्तु । दे॒वाः ॥ ११ ॥

इति तृतीयेऽनुवाके द्वितीयं सूक्तम् ।

'ददिर्हि' इति सूक्तं विषभैषज्यकर्मणि विनियुज्यते । तत्र 'ददिर्हि' इति प्रथमर्चः सर्वविषभैषज्यकर्मणि विनियोगः । तद् उक्तं कौशिकेन — " 'ददिर्हि' इति तक्षकायेत्युक्तम्" ( कौसू २९,१ ) इति । 'ददिर्हि' इत्येतस्या विनियोगः 'तक्षकाय' ( कौसू २८,१ ) इति सूत्रे प्रोक्त इति तस्यार्थः । तद्विनियोगविस्तरस्तु 'ब्राह्मणो जज्ञे' (अ ४,६) इति सूक्ते द्रष्टव्यः ।

द्वितीयादीनाम् ऋचां प्रत्यृचं विषापहरण एव विनियोगः । तथा च सूत्रम् — "द्वितीयया ग्रहणी । सव्यं परिक्रामति । शिखासिचि स्तम्बान् उद्ग्रथ्नाति । तृतीयया प्रसर्जनी । चतुर्थ्या दक्षिणम् 'अपेहि' (अ ७,९३,१) इति दंश तृणैः प्रकर्याहिम् अभि निरस्यति यतो दष्टः । पञ्चम्या वलीकाल(?ला)लज्वालेन । षष्ठ्यार्त्नीज्यापाशेन । द्वाभ्यां मधूद्वापान् पाययति । नवम्या श्वावित्पुरीषम् । त्रिःशुक्लया मांसं प्राशयति । दशम्याऽलाबुनाऽऽचमयति । एकादश्या नाभिं बध्नाति" ( कौसू २९,२-१४ ) इति । अस्यार्थः— ग्रहणी कटकबन्धः । मृदादितोऽप्रदक्षिणं रेखां करोति बन्धः । तद् विषस्तम्भनभैषज्यम् । शिखां दष्टस्य बध्नाति तदपि विषस्तम्भनम् । श्वेतवस्त्रे शणस्तम्बे वा ग्रन्थिं बध्नाति । विषं स्तभ्यते शरीरे न सर्पति । तृतीयया दष्टं स्थानं पीडयति । तेन विषम् अन्यत्र गच्छति । चतुर्थ्या आचार्यस्ततः प्रदक्षिणं परिक्रामति । 'अपेहि' ( अ ७,९३,१ ) इत्यृचं जपित्वा तृणानि प्रज्वाल्य अहेरभिमुखं प्रक्षिपति दष्टस्थाने वा । वलीकेति गृहतृणावज्वालितम् उदकम् अभिमन्त्र्य दष्टं पाययति प्रोक्षति च । षष्ठ्या आर्त्नीज्यापाशम् अभिमन्त्र्य बध्नाति । सप्तम्यष्टमीभ्यां मधुमक्षिकां मधुवृक्षमृत्तिकां चाभिमन्त्र्य पाययति । पुरीषम् अभिमन्त्र्य पाययतीति शेषः । त्रिःशुक्लया श्वाविच्छलाकया । मांसं श्वावित्सम्बन्धि । अलाबुना अलाबुन्युदकं कृत्वा अभिमन्त्र्य आचमयति विषव्याधितम् । अलाबुवृन्तं संपात्याभिमन्त्र्य बध्नाति । इति ।

१. ऋ॒तुथा P. २. पुरोहितः ऋ ३,२,८. ३. प्रदिश्यृ॰ ऋ १०,११०,११ मा २९,३६ मै ४,१३,३ काठ १६,२० तैब्रा ३,६,३,४. ४. प्र॒ऽदिषि P,K.

**तथा आभिचारिके कर्मणि अस्य सूक्तस्य विनियोगः। तद् उक्तं कौशिकेन — " 'ददिर्हि' इति सामीनि। देशकपट्टु प्रक्षिणाति' (कौसू. ४८,९;१०) इति। देशकपट्टु सर्पच्छत्रम् अहिच्छत्रम्।**

**द॒दिर्हि मह्यं॒ वरु॑णो दि॒वः क॒विर्वचो॑भिरु॒ग्रैर्नि रि॑णामि ते वि॒षम्।**
**खा॒तमखा॑तमु॒त स॒क्तम॑ग्रभ॒मिरे॑व॒ धन्व॒न्नि ज॑जास ते वि॒षम् ॥ १ ॥**

द॒दिः। हि। मह्य॑म्। वरु॑णः। दि॒वः। क॒विः। वचः॑ऽभिः। उ॒ग्रैः। नि। रि॒णा॒मि॒। ते॒। वि॒षम्। खा॒तम्। अखा॑तम्। उ॒त। स॒क्तम्। अ॒ग्र॒भ॒म्। इरा॑ऽइव। [1]धन्व॑न्। नि। ज॒जा॒स॒। ते॒। वि॒षम् ॥१॥

**यत् ते॒ अपो॑दकं वि॒षं तत् त॑ [2]ए॒तास्व॑ग्रभम्।**
**गृ॒ह्णामि॑ ते मध्य॒मम॑त्त॒मं रस॑मु॒ताव॒मं भि॒यसा॑ नेश॒दादु॑ ते ॥ २ ॥**

यत्। ते॒। अप॑ऽउदकम्। वि॒षम्। तत्। ते॒। ए॒तासु॑। अ॒ग्र॒भ॒म्। गृ॒ह्णामि॑। ते॒। म॒ध्य॒मम्। उ॒त्ऽत॒मम्। रस॑म्। उ॒त। अ॒व॒मम्। भि॒यसा॑। ने॒श॒त्। आत्। ऊं॒ इति॑। ते॒। ॥ २ ॥

**वृषा॑ मे॒ रवो॒ [3]नभ॑सा॒ न[3] त॑न्यतु॒रु॒ग्रेण॑ [4]ते॒ वच॑सा [5]बाध॒ आदु॑[5] ते।**
**अ॒हं तम॑स्य॒ नृभि॑रग्रभं॒ रसं॒ [6]तम॑स इव॒ ज्योति॒रु॒दे॑तु[6] सूर्यः॑ ॥ ३ ॥**

वृषा॑। मे॒। रवः॑। नभ॑सा। न। त॒न्य॒तुः। उ॒ग्रेण॑। ते॒। वच॑सा। बा॒धे॒। आत्। ऊं॒ इति॑। ते॒। अ॒हम्। तम्। अ॒स्य॒। नृऽभिः॑। अ॒ग्र॒भ॒म्। रस॑म्। तम॑सःऽइव। ज्योतिः॑। उ॒त्। ए॒तु॒। सूर्यः॑ ॥ ३ ॥

**चक्षु॑षा ते॒ चक्षु॑र्हन्मि वि॒षेण॑ हन्मि ते वि॒षम्।**
**[7]अहे॑ [8]म्रि॒यस्व॒ मा जी॑वीः प्र॒त्यग॒भ्ये॑तु॒ त्वा वि॒षम् ॥ ४ ॥**

चक्षु॑षा। ते॒। चक्षुः॑। ह॒न्मि॒। वि॒षेण॑। ह॒न्मि॒। ते॒। वि॒षम्।
अहे॑[9]। म्रि॒यस्व॑। मा। जी॒वीः॒। प्र॒त्यक्। अ॒भि। ए॒तु॒। त्वा॒। वि॒षम् ॥ ४ ॥

१. धन्वन् P². २. एताभिरग्र° पै ८,२,२. ३. रभसा नि पै ८,२,१. ४. तै पै. ५. बाधे तु पै. ६. ज्योतिषेव तमस उदेतु पै. ७. अहेर° A,B,Bp, B^{lr},D,K,K^m,R,S,V,Dc,Cs,Wh. ८. रिमरिष्टा पै ८,२,३. ९. अहेः P,P²,J,K, V,Cp,Wh.

कैरात पृश्न उपतृण्य बभ्र आ मे शृणुतासिता अलीकाः ।
मा [1]मे सख्यु [2]स्तामानमपि ष्ठाताश्रावयन्तो नि [3]विषे [4]रमध्वम् ॥५॥

कैरात । पृश्ने । उपऽतृण्य । बभ्रो इति । आ । मे । शृणुत । असिताः । अलीकाः ।
मा । मे । सख्युः । स्तामानम् । अपि । स्थात । आऽश्रावयन्तः । नि । विषे । रमध्वम् ॥

असितस्य तैमातस्य [5]बभ्रोरपोदकस्य च ।
सात्रासाहस्याहं मन्योरव [6]ज्यामिव धन्वनो वि मुञ्चामि रथाँ इव ॥६॥

असितस्य । तैमातस्य । [7]बभ्रोः । अपऽउदकस्य । च ।
सात्राऽसहस्य । अहम् । मन्योः । अव । ज्याम्ऽइव । धन्वनः । वि । मुञ्चामि । रथान्ऽइव ॥६॥

[8]आलिगी च विलिगी च पिता च माता च ।
विद्म वः सर्वतो बन्ध्वरसाः किं करिष्यथ ॥ ७ ॥

आऽलिगी । च । विऽलिगी । च । पिता । च । माता । च ।
विद्म । वः । सर्वतः । बन्धु । अरसाः । किम् । करिष्यथ ॥ ७ ॥

[9]उरुगूलाया दुहिता जाता दास्यसिक्न्या[10] ।
प्रतङ्कं दद्रुषीणां सर्वासामरसं विषम् ॥ ८ ॥

उरुऽगूलायाः । दुहिता । जाता । दासी । असिक्न्या ।
प्रऽतङ्कम् । दद्रुषीणाम् । सर्वासाम् । अरसम् । विषम् ॥ ८ ॥

[11]कर्णा श्वावित् तदब्रवीद् गिरेरवचरन्तिका ।
याः काश्चेमाः खनित्रिमास्तासामरसतमं विषम् ॥ ९ ॥

कर्णा । श्वावित् । तत् । अब्रवीत् । गिरेः । अवऽचरन्तिका ।
याः । काः । च । इमाः । खनित्रिमाः । तासाम् । अरसऽतमम् । विषम् ॥ ९ ॥

१. नस् पै ८,२,५. २. स्थामा° पै. ३. मिषे $P^3$,M,H,I,O,A,D,R, Cs,P. ४. रंभध्वम् D,Cs,M,W. ५. बभ्रोरुपो° पै ८,२,४. ६. ज्यामुग्रस्येव पै. ७. बभ्रो इति Cp. ८. पाभे. भूयस्त्वं पै ८,२,६ द्र. ९. ?उदकूलाया पै ८,२,७. १०. °सिक्न्यां $S^m$, °सिक्न्याः $B^h$. ११. कण्वा पै ८,२,८.

'तावुवं न 'तावुवं न 'घेत् त्वमसि' 'तावुवम्। 'तावुवेनारसं विषम् ॥१०॥

तावुवम्। न। तावुवम्। न। घ। इत्। त्वम्। असि। तावुवम्।
तावुवेन। अरसम्। विषम् ॥ १० ॥

"तस्तुवं न "तस्तुवं न 'घेत् त्वमसि" "तस्तुवम्। "तस्तुवेनारसं विषम् ॥११॥

तस्तुवम्। न। तस्तुवम्। न। 'घ। इत्। त्वम्। असि। तस्तुवम्।
तस्तुवेन। अरसम्। विषम् ॥ ११ ॥

इति तृतीयेऽनुवाके तृतीयं सूक्तम्।

'सुपर्णस्त्वा' इति सूक्तस्य कृत्याप्रतिहरणगणे (कौसू ३९,७) पाठाद् यत्रयत्र कृत्याप्रतिहरणगणो विनियुज्यते तत्रतत्रास्य सूक्तस्य विनियोगः। सूत्रादिकं 'दूष्या दूषिरसि' (अ २,११) इति सूक्ते द्रष्टव्यम्।

सुपर्णस्त्वान्वविन्दत् सूकरस्त्वाखनन्नसा।
दिप्सौषधे त्वं "दिप्सन्तमव कृत्याकृतं जहि" ॥ १ ॥

सुऽपर्णः। त्वा। अनु। अविन्दत्। सूकरः। त्वा। अखनत्। नसा।
दिप्स। ओषधे। त्वम्। दिप्सन्तम्। अव। कृत्याऽकृतम्। जहि ॥ १ ॥

अव जहि यातुधानानव कृत्याकृतं जहि।
अथो यो अस्मान् दिप्सति तमु त्वं जह्योषधे ॥ २ ॥

अव। जहि। यातुऽधानान्। अव। कृत्याऽकृतम्। जहि।
अथो इति। यः। अस्मान्। दिप्सति। तम्। ऊं इति। त्वम्। जहि। 'ओषधे ॥ २ ॥

'रिश्यस्येव परीशासं ''परिकृत्य परि त्वचः।
कृत्यां कृत्याकृते देवा निष्कमिव प्रति मुञ्चत ॥ ३ ॥

रिश्यस्यऽइव। ''परिऽशासम्। परिऽकृत्य। परि। त्वचः।
कृत्याम्। कृत्याऽकृते। देवाः। निष्कम्ऽइव। प्रति। मुञ्चत ॥ ३ ॥

१. ? तावुचं पै ८,२,९. २. ? हेरसिक्तं पै. ३. ? तावुचेना° पै. ४. तस्तु° Cs,Wh. ५. ? हरिसिक्तं पै ८,२,१०. ६. घ P. ७. °न्तं प्रति कृत्याकृते दह पै ७,१,१. ८. ओषधे P². ९. ऋश्य° A,B,D,R,Sm,Cs,P,P²,Cp, पै ७,१,१०; रिश्य° E². १० परिमाय पै. ११? परिशासम् P.

पुर्नः कृत्यां कृत्याकृते [१]हस्तगृह्य परा [†]णय[१] ।
[२]समुक्षमस्मा आ धेहि[२] यथा कृत्याकृतं हनत् ॥ ४ ॥

पुर्नः । कृत्याम् । कृत्याऽकृते । हस्तऽगृह्य । परा । नय ।
समऽअक्षम् । अस्मै । आ । धेहि । यथा । कृत्याऽकृतम् । हनत् ॥ ४ ॥

[३]कृत्याः सन्तु कृत्याकृते[३] शपथः शपथीयते ।
सुखो रथइव वर्ततां कृत्या कृत्याकृतं पुर्नः ॥ ५ ॥

कृत्याः । सन्तु । कृत्याऽकृते । शपथः । शपथिऽयते ।
सुऽखः । रथःऽइव । वर्तताम् । कृत्या । कृत्याऽकृतम् । पुर्नः ॥ ५ ॥

यदि स्त्री यदि वा पुमान् कृत्यां चकार पाप्मने ।
तामु तस्मै नयामस्यश्वमिवाश्वाभिधान्या ॥ ६ ॥

यदि । स्त्री । यदि । वा । पुमान् । कृत्याम् । चकार । पाप्मने ।
ताम् । ऊं इति । तस्मै नयामसि । अश्वम्ऽइव । अश्वऽअभिधान्या ॥ ६ ॥

यदि वासि देवकृता यदि वा पुरुषैः कृता ।
तां त्वा पुर्नर्णयामसीन्द्रेण सयुजा वयम् ॥ ७ ॥

यदि । वा । असि । देवऽकृता । यदि । वा । पुरुषैः । कृता ।
ताम् । त्वा । पुर्नः । नयामसि । इन्द्रेण । सऽयुजा । वयम् ॥ ७ ॥

अग्ने पृतनाषाट् पृतनाः सहस्व ।
[४]पुर्नः कृत्यां कृत्याकृते प्रतिहरणेन हरामसि ॥ ८ ॥

अग्ने । पृतनाषाट् । पृतनाः । सहस्व ।
पुर्नः । कृत्याम् । कृत्याऽकृते । प्रतिऽहरणेन । हरामसि ॥ ८ ॥

कृतव्यधनि विध्य तं यश्चकार तमिज्जहि ।
न त्वामचक्रुषे वयं वधाय सं शिशीमहि ॥ ९ ॥

कृतऽव्यधनि । विध्य । तम् । यः । चकार । तम् । इत् । जहि ।
न । त्वाम् । अचक्रुषे । वयम् । वधाय । सम् । शिशीमहि ॥ ९ ॥

---

१. प्रतिहरणेन हरामसि पै ७,१,७. † नय K. २. 'मस्मिन्मा वृक्ष्मो' पै.
३. अघमस्त्वघकृते पै ७,१,५. ४. प्रति पै ७,१,३.

पुत्र इ॑व पि॒तरं॑ गच्छ स्व॒ज इ॑वाभिष्ठि॑तो दश ।
बन्ध॑मिवावक्रामी गच्छ॒ कृत्ये॑ कृत्या॒कृतं॒ पुनः॑ ॥ १० ॥

पुत्रःऽइ॑व । पि॒तर॑म् । ग॒च्छ॒ । स्व॒जःऽइ॑व । अ॒भिऽस्थि॑तः । द॒श॒ ।
ब॒न्धम्ऽइ॑व । अ॒व॒ऽक्रा॒मी । ग॒च्छ॒ । कृत्ये॑ । कृ॒त्या॒ऽकृत॑म् । पुन॒रिति॑ ॥ १० ॥

उदे॒णीव॑ वार॒ण्य॑भि॒स्कन्दं॑[1] मृ॒गीव॑ । कृ॒त्या क॒र्तार॑मृच्छतु ॥ ११ ॥

उत् । ए॒णीऽइ॑व । वा॒र॒णी । अ॒भि॒ऽस्कन्द॑म् । मृ॒गीऽइ॑व । कृ॒त्या । क॒र्तार॑म् । ऋ॒च्छ॒तु ॥ ११ ॥

इष्वा॑ ऋजीयः पतत॒ु द्यावा॑पृथि॒वी[2] तं प्रति॑[3] ।
[3]सा तं मृ॒गमि॑व गृह्णातु कृ॒त्या कृ॑त्या॒कृतं॒ पुनः॑[3] ॥ १२ ॥

इष्वाः॑ । ऋ॒जीयः॑ । प॒त॒तु॒ । द्यावा॑पृथि॒वी[4] इति॑ । तम् । प्रति॑ ।
सा । तम् । मृ॒गम्ऽइ॑व । गृ॒ह्णा॒तु॒ । कृ॒त्या । कृ॒त्या॒ऽकृत॑म् । पुन॒रिति॑ ॥ १२ ॥

अ॒ग्निरि॑वैतु प्रति॒कूल॑मनु॒कूल॑मिवोद॒कम् ।
सु॒खो रथ॑ इव वर्ततां कृ॒त्या कृ॑त्या॒कृतं॒ पुनः॑ ॥ १३ ॥

अ॒ग्निःऽइ॑व । ए॒तु॒ । प्र॒ति॒ऽकूल॑म् । अ॒नु॒ऽकूल॑म्ऽइव । उ॒द॒कम् ।
सु॒ऽखः । रथः॑ऽइव । व॒र्त॒ता॒म् । कृ॒त्या । कृ॒त्या॒ऽकृत॑म् । पुन॒रिति॑ ॥ १३ ॥

**इति तृतीयेऽनुवाके चतुर्थं सूक्तम् ।**

**गवां रोगोपशमनपुष्टिप्रजननकर्मसु** 'एका च मे' **इति सूक्तेन अभिमन्त्रितं सलवणं केवलं वा उदकं गाः पाययेत् । तद् उक्तं कौशिकसूत्रे**—" 'एका च मे' इति गा लवणं पाययति" ( कौसू. १९,१ ) **इत्यादि ।**

**दुष्टवक्तृमुखस्तम्भनकर्मणि** 'एका च मे' (अ ५,१५), 'यद्येकवृषोसि' ( अ ५,१६) **इति सूक्ताभ्यां खलतुलपर्णी मधुना लोडितेषु सक्तुषु जर्जरीकृत्य अभिमन्त्र्य पाययति ।** 'यद्येकवृषोसि' ( अ ५,१६ ) **इत्यभिमन्त्र्य अन्नं भुङ्क्ते शापभैषज्यार्थम् ।**

**तथा तत्रैव कर्मणि** 'यद्येकवृषोसि' (अ ५,१६,१) **इत्यनेन गृहद्वारम् अभिमन्त्र्य अपिदधाति । तद् उक्तं कौशिकेन**— 'मधुलावृषलिङ्गाभिः खलतुलपर्णीं संक्षुद्य मधुमन्थे पाययति । उत्तराभिर्भुङ्क्ते । द्वारं सृजति' (कौसू. २९,१५;१७) **इति ।** 'एका च मे' **इति मधुलाशब्दवत्यः ।** 'यद्येकवृषोसि' **इति वृषलिङ्गाः ।**

१. 'भिकन्दं' पै ७,१,९. २. तस्तुतत्? पै ७,१,४. ३. उत तं मृगमिव विध्यत् कृत्ये कृत्याकृतं कृता पै. ४. 'द्युथिवी' P.

एका च मे दश च मेऽपवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला करः ॥ १ ॥

एका । च । मे । दश । च । मे । अपऽवक्तारः । ओषधे ।
ऋतऽजाते । ऋतऽवरि । मधु । मे । मधुला । करः ॥ १ ॥

द्वे च मे विंशतिश्च ०० ॥२॥

द्वे इति । च । मे । विंशतिः । च । ० ॥

तिस्रश्च मे त्रिंशच्च ०० ॥३॥

तिस्रः । च । मे । त्रिंशत् । च । ० ॥

चतस्रश्च मे चत्वारिंशच्च ०० ॥४॥

चतस्रः । च । मे । चत्वारिंशत् । च । ० ॥

'पञ्च च' मे पञ्चाशच्च ०० ॥५॥

'पञ्च । च'[1] । मे । पञ्चाशत् । च ।०॥

षट् च मे षष्टिश्च ०० ॥ ६ ॥

षट् । च । मे । षष्टिः । च । ० ॥

सप्त च मे सप्ततिश्च ००॥७॥

सप्त । च । मे । सप्ततिः । च । ० ॥

अष्ट च मेऽशीतिश्च ०० ॥८॥

अष्ट । च । मे । अशीतिः । च । ० ॥

नव च मे नवतिश्च ०० ॥ ९ ॥

नव । च । मे । नवतिः । च । ० ॥

दश च मे शतं च ०० ॥ १० ॥

दश । च । मे । शतम् । च । ०० ॥ १० ॥

शतं च मे सहस्रं चापवक्तार ओषधे ।
ऋतजात ऋतावरि मधु मे मधुला करः ॥ ११ ॥

शतम् । च । मे । सहस्रम् । च । अपऽवक्तारः । ओषधे ।
ऋतऽजाते । ऋतऽवरि । मधु । मे । मधुला । करः ॥ ११ ॥

इति तृतीयेऽनुवाके पञ्चमं सूक्तम् ।

इति तृतीयोऽनुवाकः ।

'यद्येकवृषोसि' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः । सूत्रमपि पूर्वसूक्ते उदाहृतम् ।

१. द्र. O,D[a]; वैद्ध. शंपा. पञ्च चं (पपा. पञ्च । च);

'यद्येकवृषोऽसि सृजारसोऽसि ॥ १ ॥ यदि द्विवृषोऽसि ०० ॥२॥

यदि । एकऽवृषः । असि । सृज । अरसः । असि ॥१॥ यदि । द्विऽवृषः । असि । ०० ॥

यदि त्रिवृषोऽसि ०० ॥३॥ यदि चतुर्वृषोऽसि ०० ॥४॥

यदि । त्रिऽवृषः । असि । ०० ॥३॥ यदि । चतुःऽवृषः । असि । ०० ॥ ४ ॥

यदि पञ्चवृषोऽसि ०० ॥५॥ यदि षड्वृषोऽसि ०० ॥६॥

यदि । पञ्चऽवृषः । असि । ०० ॥५॥ यदि । षट्ऽवृषः । असि । ०० ॥ ६ ॥

यदि सप्तवृषोऽसि ०० ॥७॥ यद्यष्टवृषोऽसि ०० ॥८॥

यदि । सप्तऽवृषः । असि । ०० ॥ ७ ॥ यदि । अष्टऽवृषः । असि । ०० ॥ ८ ॥

यदि नववृषोऽसि ०० ॥ ९ ॥ यदि दशवृषोऽसि ०० ॥१०॥

यदि । नवऽवृषः । असि । ०० ॥ ९ ॥ यदि । दशऽवृषः । असि । ०० ॥ १० ॥

'यद्येकादशोऽसि सोऽपोदकोऽसि' ॥ ११ ॥

यदि । एकादशः । असि । सः । अपऽउदकः । असि ॥ ११ ॥

इति चतुर्थेऽनुवाके प्रथमं सूक्तम् ।

गोहरणेभिचारकर्मणि 'तेऽवदन्' इति सूक्तेन नेतॄणां पदं वृश्चति ।

तथा अनेन सूक्तेन चौरान् अन्वाह ।

तद् उक्तं कौशिकेन — "'ते ऽवदन्' इति नेतॄणां पदं वृश्चति । अन्वाह" ( कौसू॰ ४८,११;१२)

तेऽवदन् प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा ।
वीडुहरास्तप 'उग्रं 'मयोभूरापो देवीः प्रथमजा 'ऋतस्य ॥ १ ॥

ते । अवदन् । प्रथमाः । ब्रह्मऽकिल्बिषे । अकूपारः । सलिलः । मातरिश्वा ।
वीडुऽहराः । तपः । उग्रम् । मयःऽभूः । आपः । देवीः । प्रथमऽजाः । ऋतस्य ॥ १ ॥

१. इह सूक्ते यदि>यः पै ८,४. २. योऽपोदकोऽसि सृजारसोऽसि पै ८,४,११. ३. उग्रो ऋ १०,१०९,१. ४. मयोभुव आपो पै ९,१५,१. ५. ऋतेन ऋ.

सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः ।
अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्या निनाय ॥ २ ॥

सोमः । राजा । प्रथमः । ब्रह्मऽजायाम् । पुनः । प्र । अयच्छत् । अहृणीयमानः ।
अनुऽअर्तिता । वरुणः । मित्रः । आसीत् । अग्निः । होता । हस्तऽगृह्य । आ । निनाय ॥

हस्तेनैव [1]ग्राह्य आधिरस्या [2]ब्रह्मजायेति चेदवोचत् ।
न दूताय [3]प्रहेया तस्थ एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥ ३ ॥

हस्तेन । एव । [4]ग्राह्यः । आऽधिः । अस्याः । ब्रह्मऽजाया । इति । च । इत् । अवोचत् ।
न । दूताय । प्रऽहेया । तस्थे । एषा । तथा । राष्ट्रम् । गुपितम् । क्षत्रियस्य ॥ ३ ॥

[5]यामाहुस्तारकैषा विकेशीति दुच्छुनां[6] ग्राममवपद्यमानाम् ।
सा ब्रह्मजाया वि[7] दुनोति राष्ट्रं यत्र प्रापादि शश उल्कुषीमान् ॥ ४ ॥

याम् । आहुः । तारका । [8]एषा । विऽकेशी । इति । दुच्छुनाम् । ग्रामम् । अवऽपद्यमानाम् ।
सा । ब्रह्मऽजाया । वि । दुनोति । राष्ट्रम् । यत्र । प्रऽअपादि । शशः । उल्कुषीऽमान् ॥४॥

ब्रह्मचारी चरति वेविषद् विषः स देवानां भवत्येकमङ्गम् ।
तेन जायामन्वविन्दद् बृहस्पतिः सोमेन नीतां जुह्वं[9] न देवाः ॥ ५ ॥

ब्रह्मऽचारी । चरति । वेविषत् । विषः । सः । देवानाम् । भवति । एकम् । अङ्गम् । तेन ।
जायाम् । अनु । अविन्दत् । बृहस्पतिः । सोमेन । नीताम् । जुह्वम् । न । देवाः ॥

[10]देवा वा एतस्यामवदन्त पूर्वे [11]सप्तऋषयस्तपसा[12] ये निषेदुः ।
भीमा जाया [13]ब्राह्मणस्यापनीता दुर्धां दधाति परमे व्योमन् ॥ ६ ॥

१. ग्राह्य आधि° R,B[a]; ग्राह्य आधि° E[a]. २. °जायेयमिति चेदवोचन् ऋ १०, १०९,३. ३. प्रहेयें ऋ. ४. ग्राह्यः P,Cp. ५. ? °तारकां विकेशीइत् प्राग् पै ९,१५,४. ६. प्र पै. ७. पुषाम् J. ८. °हं३D,Cs. ९. °मजायन्त पै ९,१५,६. १०. सप्तर्ष° पै. ११. तपसे ऋ १०,१०९,४; तपस्ते पै. १२. °स्योप° P[3],M,W, RW. ऋ.

देवाः । वै । एतस्याम् । अवदन्त । पूर्वे । सप्तऽऋषयः । तपसा । ये । निऽसेदुः ।
भीमा । जाया । ब्राह्मणस्य । अपऽनीता । दुःऽधाम् । दधाति । परमे । विऽओमन् ॥६॥

ये गर्भा अवपद्यन्ते जगद् यच्चापलुप्यते ।
वीरा ये तृह्यन्ते मिथो ब्रह्मजाया हिनस्ति तान् ॥ ७ ॥

ये । गर्भाः । अवऽपद्यन्ते । जगत् । यत् । च । अपऽलुप्यते ।
वीराः । ये । तृह्यन्ते । मिथः । ब्रह्मऽजाया । हिनस्ति । तान् ॥ ७ ॥

उत यत् पतयो दश स्त्रियाः पूर्वे अब्राह्मणाः ।
ब्रह्मा चेद्धस्तमग्रहीत् स एव पतिरेकधा ॥ ८ ॥

उत । यत् । पतयः । दश । स्त्रियाः । पूर्वे । अब्राह्मणाः ।
ब्रह्मा । च । इत् । हस्तम् । अग्रहीत् । सः । एव । पतिः । एकऽधा ॥ ८ ॥

ब्राह्मण एव पतिर्न राजन्यो३ न वैश्यः ।
तत् सूर्यः प्रब्रुवन्नेति पञ्चभ्यो मानवेभ्यः ॥ ९ ॥

ब्राह्मणः । एव । पतिः । न । राजन्यः । न । वैश्यः ।
तत् । सूर्यः । प्रऽब्रुवन् । एति । पञ्चऽभ्यः । मानवेभ्यः ॥ ९ ॥

पुनर्वै देवा अददुः पुनर्मनुष्या अददुः ।
राजानः सत्यं गृह्णाना ब्रह्मजायां पुनर्ददुः ॥ १० ॥

पुनः । वै । देवाः । अददुः । पुनः । मनुष्याः । अददुः ।
राजानः । सत्यम् । गृह्णानाः । ब्रह्मऽजायाम् । पुनः । ददुः ॥ १० ॥

पुनर्दाय ब्रह्मजायां कृत्वा देवैर्निकिल्बिषम् ।
ऊर्जं पृथिव्या भक्त्वोरुगायमुपासते ॥ ११ ॥

पुनःऽदाय । ब्रह्मऽजायाम् । कृत्वा । देवैः । निऽकिल्बिषम् ।
ऊर्जम् । पृथिव्याः । भक्त्वा । उरुऽगायम् । उप । आसते ॥११॥

---

१. नृत्यन्ते B²; तृह्यते P³,M; नृह्यन्ते D²; हन्यन्ते पै ९,१५,७. २. राजन्यो३ A; राजा भोत पै ९,१६,७. ३. °भेतु पै. ४. उत ऋ १०,१०९,६ पै ९,१५,९. ५. कृण्वाना ऋ. पै.° ६. कृत्वी ऋ १०,१०९,७. ७. °देवैर्नैकि° P³,M,W. ८. भक्त्वायोरु° ऋ.

**नास्य जाया शतवाही कल्याणी तल्पमा शये ।**
**यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाचित्त्या ॥ १२ ॥**

न । अस्य । जाया । शतऽवाही । कल्याणी । तल्पम् । आ । शये ।
यस्मिन् । राष्ट्रे । निऽरुध्यते । ब्रह्मऽजाया । अचित्त्या ॥ १२ ॥

**न विकर्णः पृथुशिरास्तस्मिन् वेश्मनि जायते । यस्मिन्०० ॥ १३ ॥**

न । विऽकर्णः । पृथुऽशिराः । तस्मिन् । वेश्मनि । जायते । यस्मिन्०० ॥ १३ ॥

**नास्य क्षत्ता निष्कग्रीवः सूनानामेत्यग्रतः । यस्मिन्०० ॥ १४ ॥**

न । अस्य । क्षत्ता । निष्कऽग्रीवः । सूनानाम् । एति । अग्रतः । यस्मिन्०० ॥ १४ ॥

**नास्य श्वेतः कृष्णकर्णो धुरि युक्तो महीयते । यस्मिन्०० ॥ १५ ॥**

न । अस्य । श्वेतः । कृष्णऽकर्णः । धुरि । युक्तः । महीयते । यस्मिन्०० ॥ १५ ॥

**नास्य क्षेत्रे पुष्करिणी नाण्डीकं जायते बिसम् । यस्मिन्०० ॥ १६ ॥**

न । अस्य । क्षेत्रे । पुष्करिणी । न । आण्डीकम् । जायते । बिसम् । यस्मिन्०० ॥ १६ ॥

**नास्मै पृश्निं वि दुहन्ति [1]येऽस्या दोहमुपासते । यस्मिन्०० ॥ १७ ॥**

न । अस्मै । पृश्निम् । वि । दुहन्ति । ये । अस्याः । दोहम् । उपऽआसते । यस्मिन्०० ॥ १७ ॥

**[2]नास्य धेनुः [3]कल्याणी नानड्वान्त्सहते धुरम् ।**
**विजानिर्यत्र [4]ब्राह्मणो रात्रिं वसति पापया ॥ १८ ॥**

न । अस्य । धेनुः । कल्याणी । न । अनड्वान् । सहते । धुरम् ।
विऽजानिः । यत्र । ब्राह्मणः । रात्रिम् । वसति । पापया ॥ १८ ॥

**इति चतुर्थेऽनुवाके द्वितीयं सूक्तम् ।**

**गोहरणमारणविशसनाधिश्रयणपचनभक्षणादिषु क्रियमाणेषु अभिचारकामो ब्रह्मचारी 'नैतां ते देवाः, 'अतिमात्रम् अवर्धन्त' इति सूक्तद्वयं 'श्रमेण तपसा' (शौ १२,५) इत्यनुवाकं च शत्रून् अन्वाह । द्वेष्यं मनसि कृत्वा जपतीत्यर्थः । तद् उक्तं कौशिक-**

१. येस्या A,K^m,R,I,H. यो(ऽ)स्या P.　२. न तत्र पै ९,१६,१.　३. दोग्ध्री पै.
४. ब्रह्मणो R,S^m.

सूत्रे। 'ब्रह्मगवीभ्याम् अन्वाह। चेष्टाम्। विचृतति। ऊबध्ये। श्मशाने। त्रिरमून् हनस्वेत्याह। द्वितीययाश्मानम् ऊबध्ये गूहयति। द्वादशरात्रं सर्वव्रत उपश्राम्यति। द्विरुदिते स्तृतः। अवागग्रेण निवर्तयति' (कौसू ४८,१९-२२) इति। 'नैतां ते देवाः' 'अतिमात्रम् अवर्धन्त' इति द्वे सूक्ते एका ब्रह्मगवी। 'श्रमेण तपसा' इत्यनुवाकोऽन्या। चेष्टाम्। अन्वाहेति शेषः। चेष्टा हरणमारणविशसनाद्याः। विचृतति ऊबध्ये हविः कृतेत्यर्थः। अमून् शत्रून्। द्विरुदिते द्वादशरात्राद् ऊर्ध्वं द्विः सवितर्युदिते नष्टः शत्रुरिति ज्ञेयम्। अवागग्रेण दण्डेन अश्मानम् ऊबध्यग्रहाद् अपनयति।

नैतां ते देवा अददुस्तुभ्यं नृपते अत्तवे।
मा ब्राह्मणस्य राजन्य गां जिघत्सो अनाद्याम् ॥ १ ॥

न। एताम्। ते। देवाः। अददुः। तुभ्यम्। नृऽपते। अत्तवे।
मा। ब्राह्मणस्य। राजन्य। गाम्। जिघत्सः[1]। अनाद्याम् ॥ १ ॥

अक्षद्रुग्धो राजन्यः पाप आत्मपराजितः।
स ब्राह्मणस्य गामद्याद् अद्य जीवानि मा श्वः ॥ २ ॥

अक्षऽद्रुग्धः। राजन्यः। पापः। आत्मऽपराजितः।
सः। ब्राह्मणस्य। गाम्। अद्यात्। अद्य। जीवानि। मा। श्वः ॥ २ ॥

[2]आविष्टिताघविषा पृदाकूरिव चर्मणा।
सा ब्राह्मणस्य राजन्य तृष्टैषा गौरनाद्या ॥ ३ ॥

आऽविष्टिता। अघऽविषा। पृदाकूःऽइव। चर्मणा।
सा। ब्राह्मणस्य। राजन्य। तृष्टा। एषा। गौः। [3]अनाद्या ॥ ३ ॥

निर्वै क्षत्रं नयति हन्ति वर्चोऽग्निरिवारब्धो[4] वि दुनोति सर्वम्[5]।
यो ब्राह्मणं मन्यते अन्नमेव स विषस्य पिबति तैमातस्य ॥ ४ ॥

निः। वै। क्षत्रम्। नयति। हन्ति। वर्चः। अग्निःऽइव। आऽरब्धः। वि। दुनोति। सर्वम्। यः। ब्राह्मणम्। मन्यते। अन्नम्। एव। सः। विषस्य। पिबति। तैमातस्य ॥४॥

---

१. जिघत्सः P. २. आविष्टि° A,B,B[h],K,K[m],R,S[m],Dc,Cs; आऽविस्थिता P,P[2] J,K,Cp. ३. अनाद्याम् P,P[2],J. ४. °रब्धो K, °वालब्धः पै ९,१७,३. ५. प्र दुनोतु राष्ट्रम् पै.

य [1]एनं [2]हन्ति मृदुं मन्यमानो देवपीयुर्धनकामो न चित्तात् ।
सं तस्येन्द्रो हृदयेऽग्निमिन्ध [3]उभे एनं द्विष्टो नभसी चरन्तम् ॥ ५ ॥

[4]यः । एनम् । हन्ति । मृदुम् । मन्यमानः । देवऽपीयुः । धनऽकामः । न । चित्तात् । सम् । तस्य । इन्द्रः । हृदये । अग्निम् । इन्धे । उभे इति । एनम् । द्विष्टः । नभसी इति । चरन्तम् ॥ ५ ॥

न ब्राह्मणो हिंसितव्यो३ऽग्निः [5]प्रियतनोरिव[6] ।
सोमो ह्य१स्य दायाद इन्द्रो अस्याभिशस्तिपाः ॥ ६ ॥

न । ब्राह्मणः । हिंसितव्य१ः । अग्निः । प्रियतनोःऽइव ।
सोमः । हि । अस्य । दायादः । इन्द्रः । अस्य । अभिशस्तिऽपाः ॥ ६ ॥

शतापाष्ठां नि गिरति तां न शक्नोति [6]निःखिदम् ।
अन्नं यो ब्रह्मणां [7]मल्वः [8]स्वाद्व१द्मीति मन्यते ॥ ७ ॥

शतऽअपाष्ठाम् । नि । गिरति । ताम् । न । शक्नोति । [6]निःऽखिदम् ।
अन्नम् । यः । ब्रह्मणाम् । [7]मल्वः । स्वादु । अद्मि । इति । मन्यते ॥ ७ ॥

जिह्वा ज्या भवति कुल्मलं वाङ्नाडीका दन्तास्तपसाभिदिग्धाः[9] ।
तेभिर्ब्रह्मा [10]विध्यति [11]देवपीयून् [12]हृद्बलैर्धनुर्भिर्देवजूतैः[13] ॥ ८ ॥

जिह्वा । ज्या । भवति । कुल्मलम् । वाक् । नाडीकाः । दन्ताः । तपसा । अभिऽदिग्धाः ।
तेभिः । ब्रह्मा । विध्यति । देवऽपीयून् । हृत्ऽबलैः । धनुःऽभिः । देवऽजूतैः ॥८॥

• तीक्ष्णेषवो ब्राह्मणा हेतिमन्तो यामस्यन्ति [14]शरव्या३ं न सा मृषा ।
अनुहाय तपसा मन्युना चोत दूरादव [15]भिन्दन्त्येनम् ॥ ९ ॥

१. एनां पै ९,१७,७. २. हन्यात् पै. ३. उभ एं° A,B,Bp,D,K,R,Sm,Dc,Cs.M,W,H,I,O. ४. ये P,P², J,Cp. ५. अग्नेः प्रियतमा तनूः पै ९,१७,८. ६. तु. RW. पै.; वैतु. शंपा. निःखिदन् ७. मल्वः A,D,Cs; मल्वऽः Dc,Sm,R,P,J,Cp, B²M,E²,I,D²,K². ८. °द्व३ B,Bh,D,R,Sm,Cs. ९. °पसा सुदिग्धाः पै ९,१८,३. १०. विध्यातु पै. ११. °पीयुं पै. १२. निर्जलैर्ध° पै. १३. °धनुर्भिर्देव° Cs. १४. °व्यां३ A, शरव्याऽ P,P²,J; शरव्यम् K,V; शरव्याम्>शरव्यम् Cp. १५. भिन्द्यन्ति ते तया पै ९,१८,२.

तीक्ष्णऽईषवः । ब्राह्मणाः । हेतिऽमन्तः । याम् । अस्यन्ति । शरव्याम् । न । सा । मृषा ।
अनुऽहाय । तपसा । मन्युना । च । उत । दूरात् । अव । भिन्दन्ति । एनम् ॥ ९ ॥

ये सहस्रमराजन्नासन् दशशता उत ।
'ते ब्राह्मणस्य गां जग्ध्वा[1] वैतहव्याः पराभवन् ॥ १० ॥

ये । सहस्रम् । अराजन् । आसन् । दशऽशताः । उत ।
ते । ब्राह्मणस्य । गाम् । जग्ध्वा । वैतऽहव्याः । परा । अभवन् ॥ १० ॥

गौरेव [2]तान् हन्यमाना वैतहव्याँ [3]अवातिरत् ।
ये केसरप्राबन्धायाश्चरमाजामपेचिरन् ॥ ११ ॥

गौः । एव । तान् । हन्यमाना । वैतऽहव्यान् । अव । अतिरत् ।
ये । केसरऽप्राबन्धायाः । चरमऽअजाम् । अपेचिरन् ॥ ११ ॥

एकशतं [4]ता जनता या भूमिर्व्यधूनुत[5] ।
प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन् ॥ १२ ॥

एकऽशतम् । ताः । जनताः । याः । भूमिः । विऽअधूनुत[6] ।
प्रऽजाम् । हिंसित्वा । ब्राह्मणीम् । असम्ऽभव्यम् । परा । अभवन् ॥ १२ ॥

देवपीयुश्चरति मर्त्येषु गरगीर्णो भवत्यस्थिभूयान् ।
यो ब्राह्मणं देवबन्धुं हिनस्ति न स [7]पितृयाणमप्येति लोकम् ॥ १३ ॥

देवऽपीयुः । चरति । मर्त्येषु । गरऽगीर्णः । भवति । अस्थिऽभूयान् ।
यः । ब्राह्मणम् । देवऽबन्धुम् । हिनस्ति । न । सः । पितृऽयानम् । अपि । एति । लोकम् ॥

अग्निर्वै नः पदवायः सोमो दायाद उच्यते ।
[8]हन्ताभिशस्तेन्द्रस्तथा तद् वेधसो विदुः ॥ १४ ॥

अग्निः । वै । नः । पदऽवायः । सोमः । दायादः । उच्यते ।
हन्ता । अभिऽशस्ता । इन्द्रः । तथा । तत् । वेधसः । विदुः ॥ १४ ॥

• १. तेभ्यः प्रब्रवीमि त्वा पै ९,१८,५. २. तां K. ३. इवाचरत् पै ९,१८,६. ४. है पै ९,१९,५. ५. व्यधू° RW. ६. विऽअधूनुत Bp². ७ पितृणामप्येतु पै ९,१७,३. ८. हंता° A,D,R,Sᵐ,Cs,P,J,Cp.

इषुरिव दिग्धा नृपते पृदाकूरिव गोपते ।
सा ब्राह्मणस्येषुर्घोरा[1] तया विध्यति[2] पीयतः ॥ १५ ॥

इषुःऽइव । दिग्धा । नृऽपते । पृदाकूःऽइव । गोऽपते ।
सा । ब्राह्मणस्य । इषुः । घोरा । तया । विध्यति । पीयतः ॥ १५ ॥

इति चतुर्थेऽनुवाके तृतीयं सूक्तम् ।

'अतिमात्रम् अवर्धन्त' इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ।

अतिमात्रमवर्धन्त[3] नोदिव दिवमस्पृशन् ।
भृगुं हिंसित्वा [4]सृञ्जया वैतहव्याः पराभवन् ॥ १ ॥

अतिऽमात्रम् । अवर्धन्त । न । उत्ऽइव । दिवम् । अस्पृशन् ।
भृगुम् । हिंसित्वा । सृन्ऽजयाः । वैतऽहव्याः । परा । अभवन् ॥ १ ॥

ये बृहत्सामानमाङ्गिरसमार्पयन् ब्राह्मणं जनाः ।
[5]पेत्वस्तेषामुभयादमविस्तोकान्यावयत्[5] ॥ २ ॥

ये । बृहत्ऽसामानम् । आङ्गिरसम् । आर्पयन् । ब्राह्मणम् । जनाः ।
पेत्वः । तेषाम् । उभयादम् । अविः । तोकानि । आवयत् ॥ २ ॥

ये ब्राह्मणं प्रत्यष्ठीवन् ये [6]वास्मिञ्छुल्कमीषिरे ।
[7]अस्नस्ते मध्ये कुल्यायाः केशान् खादन्त आसते ॥ ३ ॥

ये । ब्राह्मणम् । प्रतिऽअष्ठीवन् । ये । वा । अस्मिन् । शुल्कम् । ईषिरे ।
अस्नः । ते । मध्ये । कुल्यायाः । केशान् । खादन्तः । आसते ॥ ३ ॥

ब्रह्मगवी पच्यमाना यावत् साभि[8] विजङ्गहे ।
तेजो राष्ट्रस्य निर्हन्ति न वीरो जायते वृषा[9] ॥ ४ ॥

ब्रह्मऽगवी । पच्यमाना । यावत् । सा । अभि । विऽजङ्गहे ।
तेजः । राष्ट्रस्य । निः । हन्ति । न । वीरः । जायते । वृषा ॥ ४ ॥

---

१. °षुर्दिग्धा पै ९,१८,१.   २. विध्यतु पै.   ३. °वर्धयन्त K; अतिमात्रा अजायन्त पै ९,१८,७.   ४. सृजंया Cs.   ५. ?ते त्वक्स्तोकान्युभयादन् यत् स्तोकान्यभमयत् पै ९,१८,८.   ६. ये चास्मै शु° पै.; °शुक्ल° A,R,Sm; शुल्क° सात².   ७. अस्नस्ते B, ते P.   ८. साभिं सात².   ९. पुमान् पै ९,१९,१.

क्रूरमस्या आशसनं तृष्टं पिशितमस्यते ।
क्षीरं यदस्याः पीयते तद् वै पितृषु किल्बिषम् ॥ ५ ॥

क्रूरम् । अस्याः । आऽशसनम् । तृष्टम् । पिशितम् । अस्यते ।
क्षीरम् । यत् । अस्याः । पीयते । तत् । वै । पितृषु । किल्बिषम् ॥ ५ ॥

उग्रो राजा मन्यमानो ब्राह्मणं यो जिघत्सति ।
परा तत् सिच्यते राष्ट्रं ब्राह्मणो यत्र जीयते ॥ ६ ॥

उग्रः । राजा । मन्यमानः । ब्राह्मणम् । यः । जिघत्सति ।
परा । तत् । सिच्यते । राष्ट्रम् । ब्राह्मणः । यत्र । जीयते ॥ ६ ॥

अष्टापदी चतुरक्षी चतुःश्रोत्रा चतुर्हनुः ।
'द्व्या-ऽस्या द्विजिह्वा'[1] भूत्वा सा राष्ट्रमव धूनुते ब्रह्मज्यस्य ॥ ७ ॥

अष्टाऽपदी । चतुःऽअक्षी । चतुःऽश्रोत्रा । चतुःऽहनुः ।
द्विऽआस्या । द्विऽजिह्वा । भूत्वा । सा । राष्ट्रम् । अव । धूनुते । ब्रह्मऽज्यस्य ॥ ७ ॥

तद् वै राष्ट्रमा स्रवति नावं भिन्नामिवोदकम् ।
'ब्रह्माणं यत्र हिंसन्ति'[2] तद् राष्ट्रं हन्ति दुच्छुना ॥ ८ ॥

तत् । वै । राष्ट्रम् । आ । स्रवति । नावम् । भिन्नाम्ऽइव । उदकम् ।
ब्रह्माणम् । यत्र । हिंसन्ति । तत् । राष्ट्रम् । हन्ति । दुच्छुना ॥ ८ ॥

तं वृक्षा अप सेधन्ति छायां नो मोपगा इति ।
यो ब्राह्मणस्य सद्धनमभि नारद मन्यते ॥ ९ ॥

तम् । वृक्षाः । अप । सेधन्ति । छायाम् । नः । मा । उप । गाः । इति ।
यः । ब्राह्मणस्य । सत् । धनम् । अभि । नारद । मन्यते ॥ ९ ॥

विषमेतद् देवकृतं राजा वरुणोऽब्रवीत् ।
न ब्राह्मणस्य गां जग्ध्वा[3] राष्ट्रे जागार कश्चन ॥ १० ॥

• १. द्विजिह्वा द्विप्राणा पै ९,१८,१०. २. ब्राह्मणो यत्र जीयते पै ९,१९,४. ३. दुग्ध्वा ९,१३,३. [मूको].

विषम् । एतत् । देवऽकृतम् । राजा । वरुणः । अब्रवीत् ।
न । ब्राह्मणस्य । गाम् । जग्ध्वा । राष्ट्रे । जागार । कः । चन ॥ १० ॥

नवैव ता नवतयो या भूमिर्व्यधूनुत[1] ।
प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन् ॥ ११ ॥

नव । एव । ताः । नवतयः । या । भूमिः । विऽअधूनुत[2] ।
प्रऽजाम् । हिंसित्वा । ब्राह्मणीम् । असम्ऽभव्यम् । परा । अभवन् ॥ ११ ॥

यां मृतायानुबध्नन्ति कूद्यं पदयोपनीम् ।
तद् वै ब्रह्मज्य ते देवा उपस्तरणमब्रुवन् ॥ १२ ॥

याम् । मृताय । अनुऽबध्नन्ति । कूद्यम् । पदऽयोपनीम् ।
तत् । वै । ब्रह्मऽज्य । ते । देवाः । उपऽस्तरणम् । अब्रुवन् ॥ १२ ॥

अश्रूणि कृपमाणस्य यानि जीतस्य[3] वावृतुः ।
तं वै ब्रह्मज्य ते देवा अपां भागमधारयन् ॥ १३ ॥

अश्रूणि[4] । कृपमाणस्य । यानि । जीतस्य । ववृतुः ।
तम् । वै । ब्रह्मऽज्य । ते । देवाः । अपाम् । भागम् । अधारयन् ॥ १३ ॥

येन मृतं स्नपयन्ति श्मश्रूणि येनोन्दते ।
तं वै ब्रह्मज्य ते देवा अपां भागमधारयन् ॥ १४ ॥

येन । मृतम् । स्नपयन्ति । श्मश्रूणि । येन । उन्दते ।
तम् । वै । ब्रह्मऽज्य । ते । देवाः । अपाम् । भागम् । अधारयन् ॥ १४ ॥

न वर्षं मैत्रावरुणं ब्रह्मज्यमभि वर्षति ।
नास्मै समितिः कल्पते न मित्रं नयते वशम् ॥ १५ ॥

न । वर्षम् । मैत्रावरुणम् । ब्रह्मऽज्यम् । अभि । वर्षति ।
न । अस्मै । सम्ऽइतिः । कल्पते । न । मित्रम् । नयते । वशम्[5] ॥ १५ ॥

इति चतुर्थेऽनुवाके चतुर्थं सूक्तम् ।

---

१. व्यधू° RW. २. विऽअधूनुत Bp². ३. जीवस्य P³,M,W.
४. अश्रुणि P, ५. विशम् P.

'उच्चैर्घोषः' इति सूक्तेन आसनपरसेनाविक्षेपणकर्मणि भेर्यादिवादित्राणि प्रक्षाल्य तगरोशीरेण लेपयित्वा संपात्य त्रिस्ताडयित्वा वादकाय पुरोधाः प्रयच्छेत्। सूत्रितं हि—"'उच्चैर्घोषः' (शौ ५,२०) 'उप श्वासय' (शौ ६,१२६) इति सर्ववादित्राणि प्रक्षाल्य तगरोशीरेण संधाव्य संपातवन्ति त्रिराहत्य प्रयच्छति" (कौसू १६,१) इति।

तथा महाव्रते अनेन सूक्तेन भूमिदुन्दुभिं ताडयेत्। तद् उक्तं वैताने—"भूमिदुन्दुभिम् [1]औक्षेणापिनद्धं पुच्छेनाघ्नन्ति 'उच्चैर्घोषः' 'उप श्वासय'" (वैताश्रौ ३४,११) इति।

**उच्चैर्घोषो दुन्दुभिः सत्वनायन् वानस्पत्यः संभृत उस्रियाभिः।**
**वाचं क्षुणुवानो[2] दमयन्त्सपत्नान्त्सिंह इव [3]जेष्यन्नभि तंस्तनीहि[4] ॥ १ ॥**

उच्चैःऽघोषः। दुन्दुभिः। सत्वनाऽयन्। वानस्पत्यः। सम्ऽभृतः। उस्रियाभिः। वाचम्। क्षुणुवानः। दमयन्। सऽपत्नान्। सिंहःऽइव। जेष्यन्। अभि। तंस्तनीहि ॥१॥

**सिंह इवास्तानीद् [5]द्रुवयो विबद्धोऽभिक्रन्दन्नृषभो वासितामिव[6]।**
**वृषा त्वं वध्रयस्ते सपत्ना ऐन्द्रस्ते शुष्मो अभिमातिषाहः ॥ २ ॥**

सिंहःऽइव। अस्तानीत्। द्रुवयः। विऽबद्धः। अभिऽक्रन्दन्। ऋषभः। वासिताम्ऽइव। वृषा। त्वम्। वध्रयः। ते। सऽपत्नाः। ऐन्द्रः। ते। शुष्मः। अभिमातिऽसहः ॥ २ ॥

**वृषेव यूथे[7] सहसा विदानो गव्यन्नभि रुव[8] संधनाजित्।**
**शुचा विध्य हृदयं परेषां हित्वा ग्रामान् प्रच्युता यन्तु शत्रवः ॥ ३ ॥**

वृषाऽइव। यूथे। सहसा। विदानः। गव्यन्। अभि। रुव। संधनऽजित्। शुचा। विध्य। हृदयम्। परेषाम्। हित्वा। ग्रामान्। प्रऽच्युताः। यन्तु। शत्रवः ॥ ३ ॥

**संजयन् पृतना ऊर्ध्वमायुर्गृह्या गृह्णानो बहुधा वि चक्ष्व[9]।**
**दैवीं वाचं दुन्दुभ आ गुरस्व वेधाः शत्रूणामुप भरस्व वेदः ॥ ४ ॥**

सम्ऽजयन्। पृतनाः। ऊर्ध्वऽमायुः। गृह्याः। गृह्णानः। बहुऽधा। वि। चक्ष्व। दैवीम्। वाचम्। दुन्दुभे। आ। गुरस्व। वेधाः। शत्रूणाम्। उप। भरस्व। वेदः ॥ ४ ॥

१. औष्ट्रेणा° RG. २. क्रुणुवानो Bp[2], क्षणुवानो E[2], पै ९,२४,१. ३. ज्येष्य° A,D,K,K[m],R,S[m],Dc,P,P[2]. द्वेष° पै. ४. तंस्तनीति पै. ५. °नीद्रुव° Wh, द्रुवयो B,B[h],Bp,D,K,K[m],S[m],V,Dc,Cs,P[3],M,W,E,H,O. ६. वाशिता° RW. पै ९,२४,२. ७. यूथं पै ९,२४,४. ८. रोह पै. ९. चक्षः पै ९,२४,३.

दुन्दुभेर्वाचं प्रयतां वदन्तीमाशृण्वती नाथिता घोषबुद्धा ।
नारी पुत्रं धावतु हस्तगृह्यामित्री भीता समरे वधानाम् ॥ ५ ॥

दुन्दुभेः । वाचम् । प्रऽयताम् । वदन्तीम् । आऽशृण्वती । नाथिता । घोषऽबुद्धा ।
नारी । पुत्रम् । धावतु । हस्तऽगृह्य । आमित्री[1] । भीता । समऽअरे[2] । वधानाम् ॥ ५ ॥

पूर्वो दुन्दुभे प्र वदासि वाचं भूम्याः पृष्ठे वद रोचमानः ।
अमित्रसेनामभिजञ्जभानो[3] द्युमद् वद दुन्दुभे सूनृतावत् ॥ ६ ॥

पूर्वः । दुन्दुभे । प्र । वदासि । वाचम् । भूम्याः । पृष्ठे । वद । रोचमानः ।
अमित्रऽसेनाम् । अभिऽजञ्जभानः[4] । द्युऽमत् । वद । दुन्दुभे । सूनृताऽवत् ॥ ६ ॥

अन्तरेमे नभसी घोषो[5] अस्तु पृथक् ते ध्वनयो यन्तु शीभम् ।
अभि क्रन्द स्तनयोत्पिपानः श्लोककृन्मित्रतूर्याय स्वर्धी[6] ॥ ७ ॥

अन्तरा । इमे इति । नभसी इति । घोषः । अस्तु । पृथक् । ते । ध्वनयः । यन्तु । शीभम् ।
अभि । क्रन्द । स्तनय । उत्ऽपिपानः[7] । श्लोकऽकृत् । मित्रऽतूर्याय । सुऽअर्धी ॥ ७ ॥

धीभिः कृतः प्र वदाति[8] वाचमुद्धर्षय [9]सत्वनामायुधानि ।
इन्द्रमेदी सत्वनो नि[10] ह्वयस्व मित्रैरमित्राँ[11] अव जङ्घनीहि ॥ ८ ॥

धीभिः । कृतः । प्र । वदाति । वाचम् । उत् । हर्षय । सत्वनाम् । आयुधानि ।
इन्द्रऽमेदी । सत्वनः । नि । ह्वयस्व । मित्रैः । अमित्रान् । अव । जङ्घनीहि ॥ ८ ॥

संक्रन्दनः प्रवदो[12] धृष्णुषेणः प्रवेदकृद् बहुधा ग्रामघोषी ।
श्रेयो वन्वानो वयुनानि विद्वान् कीर्तिं बहुभ्यो वि हर[13] द्विराजे ॥ ९ ॥

सम्ऽक्रन्दनः । प्रऽवदः । धृष्णुऽसेनः । प्रवेदऽकृत् । बहुऽधा । ग्रामऽघोषी ।
श्रेयः । वन्वानः । वयुनानि । विद्वान् । कीर्तिम् । बहुऽभ्यः । वि । हर । द्विऽराजे ॥ ९ ॥

१. अमित्री K. २. समऽआरे P. ३. °मानो Bh,K,Km,V. ४. °जञ्जनानः P. ५. घोष Bh,Km,V. ६. अर्द्धी पै ९,२४,८. ७. °पियानः P. ८. भरस्व°पै ९, २४,६ वैप १,२२०३ J द्र. ९. मघवन्नायु° ऋ १०,१०३,१०. १०. °नः सं पै. ११. °त्रुमित्रैं A, °त्रान् पै. १२. प्रस्तावेन पै ९,२४,९. १३. भज पै.

श्रेयःकेतो वसुजित्[1] सहीयान्त्संग्रामजित् संशितो ब्रह्मणासि ।
अंशूनिव ग्रावाधिषवणे[2] अद्रिर्[3]गव्यन्[4] दुन्दुभेधि नृत्य वेदः ॥ १० ॥

श्रेयःऽकेतः । वसुऽजित् । सहीयान् । संग्रामऽजित् । सम्ऽशितः[5] । ब्रह्मणा । असि ।
अंशून्ऽइव । ग्रावा । अधिऽसवने । अद्रिः । गव्यन् । दुन्दुभे । अधि । नृत्य । वेदः ॥ १० ॥

शत्रूषाण्नीषाडभिमातिषाहो गवेषणः सहमान उद्भित्[6] ।
[7]वाग्वीव मन्त्रं प्र भरस्व[7] वाचं सांग्रामजित्यायेषमुद् वदेह ॥ ११ ॥

शत्रुषाट् । नीषाट् । अभिमातिऽसहः । गोऽएषणः । सहमानः । उत्ऽभित् ।
वाग्वीऽइव । मन्त्रम् । प्र । भरस्व । वाचम् । सांग्रामऽजित्याय[8] । इषम् । उत् । वद । इह ॥ ११ ॥

अच्युतच्युत् समदो गमिष्ठो मृधो जेता पुरएतायोध्यः[9] ।
इन्द्रेण गुप्तो[10] विदथा निचिक्यद्धृद्द्योतनो द्विषतां याहि शीभम् ॥ १२ ॥

अच्युतऽच्युत् । सऽमदः । गमिष्ठः । मृधः । जेता । पुरःऽएता । अयोध्यः ।
इन्द्रेण । गुप्तः । विदथा । निऽचिक्यत् । हृत्ऽद्योतनः[11] । द्विषताम् । याहि । शीभम् ॥ १२ ॥

इति चतुर्थेऽनुवाके पञ्चमं सूक्तम् ।

'विहृदयम्' इति सूक्तेन परसेनात्रासनविद्वेषणकर्मणि सर्ववादित्राणि प्रक्षाल्य तगरोशीरेण लेपयित्वा संपातवन्ति त्रिराहत्य वादकाय प्रयच्छति ।

तथा अनेन सूक्तेन सोमाङ्कुरमणिं हरिणचर्मणा वेष्टितं कृत्वा संपात्य अभिमन्त्र्य बध्नाति ।

तद् उक्तं कौशिकसूत्रे—" 'विहृदयम्' इत्युच्चैस्तरां हुत्वा स्रुवम् उद्वर्तयन् सोमांशू हरिणचर्मण्युत्सीव्य क्षत्रियाय बध्नाति' ( कौसू १६,२; ३ ) इति । 'विहृदयम्' इति सूक्तस्य सर्वत्र उच्चैःस्वरेण प्रयोगः । उद्वर्तयन् ऊर्ध्वं परिवर्तयन् ।

विहृदयं वैमनस्यं वदामित्रेषु दुन्दुभे ।
विद्वेषं कश्मशं भयममित्रेषु नि दध्मस्यवैनान् दुन्दुभे जहि ॥ १ ॥

१. वसुधितिस् पै ९,२४,१०. २. आवा वृषणे पै. ३. अभ्रि R,Bp[2], अद्रि° > अभ्रि° Dc, अद्रं° Cs. ४. गव्यं Wh. ५. सम्ऽशीतः । P. ६. उिदभूत् पै ९,२४,११. ७. वाग्वी मन्त्रां प्र तनयस्व पै. ८. संग्रामऽजित्याय P. ९. पृतनाषाडयोध्यः पै ९,२४,१२. १०. क्लृप्तो पै. ११. हृऽद्योतनः P., हृऽद्यो° K,P[2],J,Cp.

विऽहृदयम् । वैमनस्यम् । वद॑ । अमित्रेषु । दुन्दुभे ।
विऽद्वेषम् । कश्मशम् । भयम् । अमित्रेषु । नि । दध्मसि । अव॑ । एनान् । दुन्दुभे । जहि ॥

उद्वेपमाना मनसा चक्षुषा हृदयेन च ।
धावन्तु बिभ्यतोमित्राः प्रत्रासेनाज्ये हुते ॥ २ ॥

[1]उत्ऽवेपमानाः । मनसा । चक्षुषा । हृदयेन । च ।
धावन्तु । बिभ्यतः । अमित्राः । प्रऽत्रासेन । आज्ये । हुते ॥ २ ॥

वानस्पत्यः संभृत उस्रियाभिर्विश्वगोत्र्यः ।
प्रत्रासममित्रेभ्यो वदाज्येनाभिघारितः ॥ ३ ॥

वानस्पत्यः । सम्ऽभृतः । उस्रियाभिः । विश्वऽगोत्र्यः ।
प्रऽत्रासम् । अमित्रेभ्यः । वद । आज्येन । अभिऽघारितः ॥ ३ ॥

यथा मृगाः संविजन्त आरण्याः पुरुषादधि ।
एवा त्वं दुन्दुभेमित्रानभि क्रन्द प्र त्रासयाथो चित्तानि मोहय ॥ ४ ॥

यथा । मृगाः । सम्ऽविजन्ते । आरण्याः । पुरुषात् । अधि । एव । त्वम् ।
दुन्दुभे । अमित्रान् । अभि । क्रन्द । प्र । त्रासय । अथो इति । चित्तानि । मोहय ॥ ४ ॥

यथा वृकादजावयो धावन्ति बहु बिभ्यतीः । एवा० ॥५॥

यथा । वृकात् । अजऽअवयः । धावन्ति । बहु । बिभ्यतीः । एव० ॥ ५ ॥

यथा श्येनात् पतत्रिणः संविजन्ते अहर्दिवि सिंहस्य स्तनथोर्यथा । एवा० ॥६॥

यथा । श्येनात् । पतत्रिणः । सम्ऽविजन्ते । अहःऽदिवि । सिंहस्य । स्तनथोः । यथा । एव० ॥

परामित्रान् दुन्दुभिना हरिणस्याजिनेन च ।
सर्वे देवा अतित्रसन् ये संग्रामस्येशते ॥ ७ ॥

परा । अमित्रान् । दुन्दुभिना । हरिणस्य । अजिनेन । च ।
सर्वे । देवाः । अतित्रसन् । ये । सम्ऽग्रामस्य । ईशते ॥ ७ ॥

1. °माना । P,P[2],J,Cp.

यैरिन्द्रः प्रक्रीडते पद्घोषैश्छायया सह ।
तैरमित्रास्त्रसन्तु नोमी ये यन्त्यनीकशः ॥ ८ ॥

यैः । इन्द्रः । प्रऽक्रीडते । पत्ऽघोषैः । छायया । सह ।
तैः । अमित्राः । त्रसन्तु । नः । अमी इति । ये । यन्ति । अनीकऽशः ॥ ८ ॥

ज्याघोषा दुन्दुभयोऽभि क्रोशन्तु या दिशः ।
सेनाः पराजिता यतीरमित्राणामनीकशः ॥ ९ ॥

ज्याऽघोषाः । दुन्दुभयः । अभि । क्रोशन्तु । याः । दिशः ।
सेनाः । पराऽजिताः । यतीः । अमित्राणाम् । अनीकऽशः ॥ ९ ॥

आदित्य चक्षुरा दत्स्व मरीचयोऽनु धावत ।
पत्सङ्गिनीरा सजन्तु विगते बाहुवीर्ये ॥ १० ॥

आदित्य । चक्षुः । आ । दत्स्व । मरीचयः । अनु । धावत ।
पत्ऽसङ्गिनीः । आ । सजन्तु । विऽगते । बाहुऽवीर्ये ॥ १० ॥

यूयमुग्रा मरुतः पृश्निमातर इन्द्रेण युजा प्र मृणीत शत्रून् ।
सोमो राजा वरुणो राजा महादेव उत मृत्युरिन्द्रः ॥ ११ ॥

यूयम् । उग्राः । मरुतः । पृश्निऽमातरः । इन्द्रेण । युजा । प्र । मृणीत । शत्रून् ।
सोमः । राजा । वरुणः । राजा । महाऽदेवः । उत । मृत्युः । इन्द्रः ॥ ११ ॥

एता देवसेनाः सूर्यकेतवः सचेतसः । अमित्रान् नो जयन्तु स्वाहा ॥ १२ ॥

एताः । देवऽसेनाः । सूर्यऽकेतवः । सऽचेतसः । अमित्रान् । नः । जयन्तु । स्वाहा ॥ १२ ॥

इति चतुर्थेऽनुवाके षष्ठं सूक्तम् ।

इति चतुर्थोऽनुवाकः ।

ज्वरभैषज्यकर्मणि 'अग्निस्तक्मानम्' इति सूक्तेन लाजान् पाययति ।

तथा तत्रैव कर्मणि दावाग्निप्रणयनं कृत्वा अनेन सूक्तेन ताम्रस्रुवेण मूर्ध्नि संपातान् आनयति ।

*तथा च सूत्रम्—" 'अग्निस्तक्मानम्' इति लाजान् पाययति । दावे लोहित-

पात्रेण मूर्ध्नि संपातान् आनयति" (कौसू २९,१८;१९) इति । लाजाः कृष्णा व्रीहयः । तान् अभिमन्त्र्य पाययति मण्डं कृत्वा ।

अग्निस्तक्मानमप बाधतामितः सोमो ग्रावा वरुणः[1] पूतदक्षाः ।
वेदिर्बर्हिः समिधः शोशुचाना[2] अप [3]द्वेषांस्यमुया भवन्तु[4] ॥१॥

अग्निः । तक्मानम् । अप । बाधताम् । इतः । सोमः । ग्रावा । वरुणः । पूतऽदक्षाः ।
वेदिः । बर्हिः । सम्ऽइधः । शोशुचानाः । अप । द्वेषांसि । अमुया । भवन्तु ॥ १ ॥

अयं यो विश्वान्[5] हरितान् [6]कृणोष्युच्छोचयन्नग्निरिवाभिदुन्वन् ।
अधा हि तक्मन्नरसो हि भूया अधा न्यङ्ङधराङ्[7] वा परेहि ॥ २ ॥

अयम् । यः । विश्वान् । हरितान् । कृणोषि । उत्ऽशोचयन् । अग्निःऽइव । अभिऽदुन्वन् ।
अध । हि । तक्मन् । अरसः । हि । भूयाः । अध । न्यङ् । अधराङ्[8] । वा । परा । इहि ॥ २ ॥

यः परुषः [9]पारुषेयोऽवध्वंस इवारुणः ।
तक्मानं विश्वधावीर्याधराञ्चं परा सुव[10] ॥३॥

यः । परुषः । पारुषेयः । अवध्वंसःऽइव । अरुणः ।
तक्मानम् । विश्वधाऽवीर्य । अधराञ्चम् । परा । सुव ॥ ३ ॥

अधराञ्चं प्र हिणोमि[11] नमः कृत्वा[12] तक्मने ।
शकम्भरस्य मुष्टिहा पुनरेतु[13] महावृषान् ॥ ४ ॥

अधराञ्चम् । प्र । हिनोमि । नमः । कृत्वा । तक्मने ।
शकम्ऽभरस्य । मुष्टिऽहा । पुनः । एतु । महाऽवृषान् ॥ ४ ॥

ओको अस्य मूजवन्त ओको अस्य महावृषाः ।
[14]यावज्जातस्तक्मंस्तावानसि[15] बल्हिकेषु न्योचरः ॥ ५ ॥

१. मरुतः पै १३,१,१. २. संशिशाना पै. ३. रक्षांस्य° पै. ४. धमन्तु पै. ५. जनान् पै १९,१२,१२. ६. कृणोस्यु° पै. ७. न्यङ् धरा° K,V,Dc, न्यङ्धरा° A,Bh,Km,R, न्यङ्ङ्वरा D,Sm,Cs, न्यङ्ङगवरा° P3M,W,H. ८. अधराग् P,M,W. ९. पाश्वेयो अव° पै १३,१,४. १०. सुव पै. सात. च ११. हिंणामि Cs. १२. कृत्वाय पै १३,१,५. १३. पुनर्गच्छ पै. १४. महान् जात° पै १३,१,७, °स्तक्मं° B,Bh, D,K,Sm,V,Cs, १५. °क्मंस्तदसि पै.

ओकः । अस्य । मूजऽवन्तः । ओकः । अस्य । महाऽवृषाः ।
यावत् । जातः । तक्मन्[1] । तावान् । असि । बल्हिकेषु । निऽओचरः ॥ ५ ॥

तक्मन् व्याल वि गद व्यङ्ग भूरिं यावय ।
दासीं निष्टक्करीमिच्छ[2] तां वज्रेण समर्पय ॥ ६ ॥

तक्मन् । विऽआल । वि । गद । विऽअङ्ग । भूरिं । यवय ।
दासीम् । निःऽतक्करीम् । इच्छ । ताम् । वज्रेण । सम् । अर्पय ॥ ६ ॥

तक्मन् मूजवतो गच्छ बल्हिकान् वा परस्तराम् ।
शूद्रामिच्छ[3] प्रफर्व्यं[4] तां[5] तक्मन् वीव[6] धूनुहि ॥ ७ ॥

तक्मन् । मूजऽवतः । गच्छ । बल्हिकान् । वा । परःऽतराम् ।
शूद्राम् । इच्छ । प्रऽफर्व्यम् । तान् । तक्मन् । विऽइव । धूनुहि ॥ ७ ॥

महावृषान् मूजवतो [7]बन्ध्वद्धि परेत्य ।
प्रैतानि तक्मने ब्रूमो अन्यक्षेत्राणि वा इमा ॥ ८ ॥

महाऽवृषान् । मूजऽवतः । बन्धु । अद्धि । पराऽइत्य ।
प्र । एतानि । तक्मने । ब्रूमः । अन्यऽक्षेत्राणि । वै । इमा ॥ ८ ॥

अन्यक्षेत्रे न [8]रमसे वशी सन् मृडयासि नः[8] ।
अभूदु प्रार्थस्तक्मा स गमिष्यति बल्हिकान् ॥ ९ ॥

अन्यऽक्षेत्रे । न । रमसे । वशी । सन् । मृडयसि । नः ।
अभूत् । ऊं इति । प्रऽअर्थः । तक्मा । सः । गमिष्यति । बल्हिकान् ॥ ९ ॥

[9]यत् त्वं [10]शीतोथो रूरः सह [11]कासावेपयः ।
भीमास्ते तक्मन् हेतयस्ताभिः [12]स्म परि वृङ्ग्धि नः ॥ १० ॥

१. तक्मन् V,P,P², Cp,l,H,O,D. २. °रीं पृच्छ पै १३,१,८. ३. दासीमन्विच्छ पै १३,१,९. ४. प्रफर्व्यं॑इ B,Bʰ,Bp,D,Sᵐ. ५. तांस्त॑° Dc,O,R²,K². ६. नीव पै. ७. °वैधि पै १३,१,६. ८. रमते सहस्राक्षो अमर्त्यः पै १३,१,१४. ९. यः पै १३,१,१०. १०. °तो अथो पै. ११. कासावीविपः पै. १२. °स्ताभिस्म A,B,Bʰ,D,K,Kᵐ,Sᵐ, Cs,Wh.

यत् । त्वम् । शीतः । अथो इति । रूरः । सह । कासा । अवेपयः ।
भीमाः । ते । तक्मन् । हेतयः । ताभिः । स्म । परि । वृङ्ग्धि । नः ॥ १० ॥

**मा स्मैतान्त्सखीन् कुरुथा बलासं कासमुद्युगम् ।**
**मा [1]स्मातोर्वाङैः पुनस्तत्[2] त्वा तक्मन्नुप ब्रुवे ॥ ११ ॥**

मा । स्म । एतान् । सखीन् । कुरुथाः । बलासम् । कासम् । उत्ऽयुगम् ।
मा । स्म । अतः । अर्वाङ् । आ । ऐः[3] । पुनः । तत् । त्वा । तक्मन् । उप । ब्रुवे ॥११॥

**तक्मन् [4]भ्रात्रा बलासेन स्वस्रा कासिकया सह ।**
**[5]पाप्मा भ्रातृव्येण सह [6]गच्छामुमरणं जनम्[7] ॥ १२ ॥**

तक्मन् । भ्रात्रा । बलासेन । स्वस्रा । कासिकया । सह ।
पाप्मा । भ्रातृव्येण । सह । गच्छ । अमुम् । अरणम् । जनम् ॥१२॥

**तृतीयकं वितृतीयं सदन्दिमुत [8]शारदम् ।**
**तक्मानं [9]शीतं रूरं[9] ग्रैष्मं नाशय वार्षिकम् ॥१३॥**

तृतीयकम् । विऽतृतीयम् । सदम्ऽदिम् । उत । शारदम् ।
तक्मानम् । शीतम् । रूरम् । ग्रैष्मम् । नाशय । वार्षिकम् ॥ १३ ॥

**गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो[9] मगधेभ्यः ।**
**[10]प्रैष्यन् [10]जनमिव शेवधिं तक्मानं परि [11]दद्मसि ॥१४॥**

[12]गन्धारिऽभ्यः । मूजवत्ऽभ्यः । अङ्गेभ्यः । मगधेभ्यः ।
प्रऽएष्यन् । जनम्ऽइव । शेवऽधिम् । तक्मानम् । परि । दद्मसि ॥ १४ ॥

**इति पञ्चमेऽनुवाके प्रथमं सूक्तम् ।**

**कृमिभैषज्यकर्मणि** 'ओते मे द्यावापृथिवी' **इति सूक्तेन करीरमूलं संपात्य अभिमन्त्र्य बध्नीयात् । तथा अनेन सूक्तेन गोवालैः करीरकाष्ठं वेष्टयित्वा सूक्तं जपित्वा**

१. °तोऽभ्यूर्णोः पै १३,१,१५.　२. °नः प्र पै.　३. ऐः P[2],J; एः V,Cp,Bp[2]; एः K.　४. ?भ्राता पै १३,१,११.　५. पाप्ना RW, पाप्मना H.　६. नश्येतो ?मरजानभि पै.　७. हायनम् पै १,३२,५.　८. विश्वशारदं पै.　९. °भ्यः काशिभ्यो पं १३,१,१२.　१०. प्रैष्यं° A, प्रेष्यं° सात[2]; धाने प्रियमिव पै.　११. दध्मसि B[h], पै°[मूको].　१२. गन्धारिऽभ्यः P.

पाषाणेन चूर्णयति । ततः सूक्तेनाग्नौ प्रतपति । ततः सूक्तेनादधाति ।

तथा अनेन सूक्तेन ग्रामपांशून् अभिमन्त्र्य सव्येन हस्तेन दक्षिणामुखो भूत्वा पांशून् परिकिरति ।[1]

तथा अनेन सूक्तेन पांशून् अभिमन्त्र्य हस्तेन मथित्वा कृमेरुपरि क्षिपति ।

तथा अनेन सूक्तेन शान्तिवृक्षसमिध आदधाति । कृमिभञ्जनम् ।

तथा अनेन सूक्तेन पश्चाद् अग्नेर्मातुरुत्सङ्गे बालं कृत्वा नवनीताभ्यक्तेन मुसलबुध्नेन तालुनि तापयति । त्रिः सूक्तप्रयोगः ।

तथा अनेन सूक्तेन शिग्रुबीजेन नवनीतमिश्रेण अभिमन्त्र्य व्याधिदेशं प्रलिम्पति ।

तथा अनेन सूक्तेन एकविंशत्युशीराणां मूलान्यभिमन्त्र्य पाषाणेन कुट्टयति । ततः सूक्तं जपित्वा उशीराणि अग्निना दहति ।

तथा अनेन सूक्तेन एकविंशत्युशीराणि अभिमन्त्र्य व्याधिताय समर्पयति ।

तथा अनेन सूक्तेन उदकघटम् एकविंशत्युशीरपिञ्जूलीसहितं संपात्य अभिमन्त्र्य व्याधितम् आप्लावयति ।

तद् उक्तं कौशिकसूत्रे — '"ओते मे' इति करीरमूलं काण्डेनैकदेशम् । ग्रामात् [1]पांसून् । पश्चाद् अग्नेर्मातुरुपस्थे मुसलबुध्नेन नवनीताभ्यक्तेन त्रिः प्रतीहारं तालुनि तापयति । शिग्रुभिर्नवनीतमिश्रैः प्रदेग्धि । एकविंशतिम् उशीराणि 'भिनद्मि' ( १३ ) इति मन्त्रोक्तम् । उशीराणि प्रयच्छति । एकविंशत्या सहाप्लावयति' (कौ.सू. २९,२०-२६) इति ।

ओते॑ मे॒ द्यावा॑पृथि॒वी ओता॑ दे॒वी सर॑स्वती ।
ओतौ॑ म॒ इन्द्र॑श्चा॒ग्निश्च॒ [2]क्रिमिं॑ जम्भयता॒मिति॑[3] ॥ १ ॥

ओते॒ इत्या॒ऽउते । मे॒ । द्यावा॑पृथि॒वी इति॑ । आऽउ॑ता । दे॒वी । सर॑स्वती ।
आऽउ॑तौ । मे॒ । इन्द्रः॑ । च॒ । अ॒ग्निः । च॒ । क्रिमि॑म् । ज॒म्भ॒य॒ता॒म् । इति॑ ॥ १ ॥

अ॒स्येन्द्र॑ कु॒मार॑स्य॒ [4]क्रिमी॑न् धनपते जहि ।
ह॒ता विश्वा॒ अरा॑तय उ॒ग्रेण॒ वच॑सा॒ मम॑ ॥ २ ॥

अ॒स्य । इ॒न्द्र॒ । कु॒मार॑स्य । क्रिमी॑न् । ध॒न॒ऽप॒ते॒ । ज॒हि॒ ।
ह॒ताः । वि॒श्वाः॑ । अरा॑तयः । उ॒ग्रेण॑ । वच॑सा । मम॑ ॥ २ ॥

१. पांशून् इति शंपा. २. कृमिं Cs. ३. °तामिमम् पै ७,२,१. ४. क्रिमिं पै ७,२,२.

**यो अ॒क्ष्यौ॑ परि॒सर्प॑ति॒ यो [1]नासे॑ परि॒सर्प॑ति ।**
**द॒तां यो मध्यं॒ गच्छ॑ति॒ तं [2]क्रिमिं॑ जम्भयामसि ॥ ३ ॥**

यः । अ॒क्ष्यौ॑ । प॒रि॒ऽसर्प॑ति । यः । नासे॑ इति॑ । प॒रि॒ऽसर्प॑ति ।
द॒ताम् । यः । मध्य॑म् । गच्छ॑ति । तम् । क्रिमि॑म् । ज॒म्भ॒या॒म॒सि॒ ॥ ३ ॥

**[3]सरू॑पौ॒ द्वौ [4]विरू॑पौ॒ द्वौ कृ॒ष्णौ द्वौ रोहि॑तौ॒ द्वौ ।**
**ब॒भ्रुश्च॑ ब॒भ्रुक॑र्णश्च॒ गृध्रः॒ [5]कोक॑श्च॒ ते[6] ह॒ताः ॥ ४ ॥**

सऽरू॑पौ । द्वौ । विऽरू॑पौ । द्वौ । कृ॒ष्णौ । द्वौ । रोहि॑तौ । द्वौ ।
ब॒भ्रुः । च॒ । ब॒भ्रुऽक॑र्णः । च॒ । गृध्रः॑ । कोकः॑ । च॒ । ते । ह॒ताः ॥ ४ ॥

**ये क्रिम॑यः [7]शिति॒क॒क्षा ये कृ॒ष्णाः शिति॒बाह॑वः ।**
**ये के च॑ वि॒श्वरू॑पा॒स्तान् क्रिमी॑न् जम्भयामसि ॥ ५ ॥**

ये । क्रिम॑यः । शि॒ति॒ऽक॒क्षाः । ये । कृ॒ष्णाः । शि॒ति॒ऽबाह॑वः ।
ये । के । च॒ । वि॒श्वऽरू॑पाः । तान् । क्रिमी॑न् । ज॒म्भ॒या॒म॒सि॒ ॥ ५ ॥

**उत् [8]पु॒रस्ता॒त् सूर्य॑ एति[8] वि॒श्वदृ॑ष्टो अदृष्ट॒हा ।**
**[9]दृ॒ष्टांश्च॒ घ्नन्न॒दृष्टां॑श्च॒ सर्वां॑श्च प्रमृ॒णन् क्रिमी॑न्[9] ॥ ६ ॥**

उत् । पु॒रस्ता॑त् । सूर्यः॑ । ए॒ति॒ । वि॒श्वऽदृ॑ष्टः । अ॒दृ॒ष्ट॒ऽहा ।
दृ॒ष्टान् । च॒ । घ्नन् । अ॒दृष्टा॑न् । च॒ । सर्वा॑न् । च॒ । प्र॒ऽमृ॒णन् । क्रिमी॑न् ॥ ६ ॥

**येवा॑षा॒सः कष्क॑षास [10]एज॒त्काः शि॑पवि॒त्नुकाः॑[10] ।**
**दृ॒ष्टश्च॑ ह॒न्यतां॒ क्रिमि॑रु॒तादृ॒ष्टश्च॑ हन्यताम् ॥ ७ ॥**

येवा॑षासः । कष्क॑षासः । ए॒ज॒त्ऽकाः । शि॒प॒वि॒त्नु॒काः॑ ।
दृ॒ष्टः । च॒ । ह॒न्यता॑म् । क्रिमिः॑ । उ॒त । अ॒दृ॒ष्टः । च॒ । ह॒न्य॒ता॒म् ॥ ७ ॥

१. नासौ पै ७,२,३. २. कृमिं Cº. ३. विरूपौ पै ७,२,४. ४. सरूपौ पै. ५. कोकश्च ते I,H,T,K[a],S[m],Cs,RW. ६. ते॒ P,Cp. ७. शितिवक्षा पै ७,२,५. ८. असौ सूर्यो अगाद् पै ७,२,७. ९. ऋ १,१९१,८ विशिष्टः शभे. १०. ?धुक्षामश्च परिवृक्णवः पै ७,२,८.

हतो येवाषः क्रिमीणां हतो [1]नदनिमोत ।
सर्वान् नि मष्मषाकरं दृषदा खल्वाँ इव ॥ ८ ॥

हतः । येवाषः । क्रिमीणाम् । हतः । नदनिमा । उत ।
सर्वान् । नि । मष्मषा । अकरम् । दृषदा । खल्वान्ऽइव ॥ ८ ॥

[2]त्रिशीर्षाणं ‡त्रिककुदं क्रिमिं सारङ्गमर्जुनम्[2] ।
शृणाम्यस्य [3]पृष्टीरपि[4] वृश्चामि यच्छिरः ॥ ९ ॥

त्रिऽशीर्षाणम् । त्रिऽककुदम् । क्रिमिम् । सारङ्गम् । अर्जुनम् ।
शृणामि । अस्य । [5]पृष्टीः । अपि । वृश्चामि । यत् । शिरः ॥ ९ ॥

[6]अत्रिवद् वः क्रिमयो हन्मि कण्ववज्जमदग्निवत् ।
अगस्त्यस्य ब्रह्मणा सं पिनष्म्यहं क्रिमीन् ॥ १० ॥

अत्रिऽवत् । वः । क्रिमयः । हन्मि । कण्वऽवत् । जमदग्निऽवत् ।
अगस्त्यस्य । ब्रह्मणा । सम् । पिनष्मि । अहम् । क्रिमीन् ॥ १० ॥

हतो राजा क्रिमीणामुतैषां स्थपतिर्हतः ।
हतो हतमाता क्रिमिर्हतभ्राता हतस्वसा ॥ ११ ॥

हतः । राजा । क्रिमीणाम् । उत । एषाम् । स्थपतिः । हतः ।
हतः । हतमाता । क्रिमिः । हतऽभ्राता । हतऽस्वसा ॥ ११ ॥

हतासो अस्य वेशसो हतासः परिवेशसः ।
अथो ये क्षुल्लका इव ‡सर्वे ते क्रिमयो हताः[6] ॥ १२ ॥

हतासः । अस्य । वेशसः । हतासः । परिऽवेशसः ।
अथो इति । ये । क्षुल्लकाःऽइव । सर्वे । ते । क्रिमयः । हताः ॥ १२ ॥

१. नदंनिमोत B. २. यो द्विशीर्षश्चतुरक्षः क्रिमिस्सारङ्गो अर्जुनः पै ७,२,६. ‡ त्रैककुदं P[3],M,W.H. ३. पृष्टी° A,K,K[m],S[m],V,Dc. ४. °रप पै. ५. पृष्ठीः J,V,Cp. ६. [मूको.] १०–१२ ऋचो न सन्ति किन्तु अ २,३२,३-५ तासां सद्भावः संकेत्यते। ‡. द्र. अ २,३२,५ टि..

**सर्वे॑षां च॒ क्रिमी॑णां॒ सर्वा॑सां च क्रि॒मीणा॑म् ।**
**भि॒नद्म्यश्म॑ना॒ शिरो॒ दहा॑म्य॒ग्निना॒ मुख॑म् ॥ १३ ॥**

सर्वे॑षाम् । च॒ । [1]क्रिमी॑णाम् । सर्वा॑साम् । च॒ । क्रि॒मीणा॑म् ।
भि॒नद्मि॑ । अश्म॑ना । शिरः॑ । दहा॑मि । अ॒ग्निना॑ । मुख॑म ॥ १३ ॥

**इति पञ्चमेऽनुवाके द्वितीयं सूक्तम् ।**

**पौरोहित्यं करिष्यन्** 'सविता प्रसवानाम्' **इति सूक्तेन शूद्रेणाहृताः समिध आद-धातीति केशवः । तथा च सूत्रम्** —'सविता प्रसवानाम् इति पौरोहित्ये वत्स्यन् वैश्वलोपीः समिध आधाय' ( कौसू १७,३० ) **इति । विश्वो लुप्यते चन्द्रोऽस्याम् इति विश्वलोपा अमावास्या । तस्यां भवा एतादृशीः समिधः । चन्द्रमसः सर्वलोपाद् अमावास्या विश्वलोपेति हि दारिलः ।**

**तथा अस्य सूक्तस्य विवाहे आज्यहोमे विनियोगः । तथा च सूत्रम्**—'सविता प्रसवानाम् इति' ( कौसू ७८,११ ) **इति ।**

**तथा चातुर्मास्ये वैश्वदेवपर्वणि सावित्रं यागं** 'सविता प्रसवानाम' **इति ब्रह्मा अनु-मन्त्रयेत् । तद् उक्तं वैताने** —'सविता प्रसवानाम्' ( वैताश्रौ ८,१३ ) **इति ।**

**स॒वि॒ता प्र॑स॒वाना॒मधि॑पतिः[2] स मा॑वतु ।**
**अ॒स्मिन् ब्रह्म॑ण्य॒स्मिन् कर्म॑ण्य॒स्यां पु॑रो॒धाया॑म॒स्यां प्र॑ति॒ष्ठाया॑म॒स्यां**
**चि॒त्त्याम॒स्यामाकू॑त्याम॒स्यामा॒शिष्य॒स्यां दे॒वहू॑त्यां[3] स्वाहा॑ ॥ १ ॥**

स॒वि॒ता । प्र॒ऽस॒वाना॑म् । अधि॑ऽपतिः । सः । मा॒ । अ॒व॒तु॒ । अ॒स्मिन् । ब्रह्म॑णि । अ॒स्मिन् । कर्म॑णि । अ॒स्याम् । पु॒रः॒ऽधाया॑म् । अ॒स्याम् । प्र॒ति॒ऽस्थाया॑म् । अ॒स्याम । चि॒त्त्या॑म । अ॒स्याम् । आऽकू॑त्याम् । अ॒स्याम् । आ॒ऽशिषि॑ । अ॒स्याम् । दे॒वऽहू॑त्याम् । स्वाहा॑ ॥ १ ॥

**[4]अ॒ग्निर्व॑न॒स्पती॑ना॒मधि॑पतिः॒ स मा॑वतु । ०० ॥२॥**

अ॒ग्निः । व॒न॒स्पती॑नाम् । अधि॑ऽपतिः । सः । मा॒ । अ॒व॒तु॒ । ०० ॥ २ ॥

**द्यावा॑पृथि॒वी [5]दा॒तॄ॒णामधि॑पत्नी ते मा॑वताम् । ० ॥३॥**

द्यावा॑पृथि॒वी इति॑ । दा॒तॄ॒णाम् । अधि॑पत्नी॒ इत्यधि॑ऽपत्नी । ते इति॑ । मा॒ । अ॒व॒ताम् ।०॥

---

१. क्रिमीणाम् P,J. २. °मध्यक्षः सर्वत्र पं १५,७,१०. ३. देवहूती सर्वत्र मैं २,७,२०. ४. °ग्निर्भूताना° ते ३,४,४,१; पागृ १,५,१०. ५. दात्रे° Bp[2],P[3],M,W, H,E[2],T; °त्रॄ° 1; °तॄ° K[2]; दात्रा° सात[2].

**वरुणोऽपामधिपतिः स मावतु । ० ॥ ४ ॥**

वरुणः । अपाम् । अधिऽपतिः । सः । मा । अवतु । ० ॥ ४ ॥

**मित्रावरुणौ [1]वृष्ट्याधिपती तौ मावताम् । ० ॥ ५ ॥**

मित्रावरुणौ । वृष्ट्याः[2] । अधिपती इत्यधिऽपती । तौ । मा । अवताम् । ० ॥ ५ ॥

**मरुतः [3]पर्वतानामधिपतयस्ते मावन्तु । ० ॥ ६ ॥**

मरुतः । पर्वतानाम् । अधिऽपतयः । ते । मा । अवन्तु । ० ॥ ६ ॥

**सोमो [4]वीरुधामधिपतिः स मावतु । ० ॥ ७ ॥**

सोमः । वीरुधाम् । अधिऽपतिः । सः । मा । अवतु । ० ॥ ७ ॥

**वायुरन्तरिक्षस्याधिपतिः स मावतु । ० ॥ ८ ॥**

वायुः । अन्तरिक्षस्य । अधिऽपतिः । सः । मा । अवतु । ० ॥ ८ ॥

**[5]सूर्यश्चक्षुषामधिपतिः स मावतु । ० ॥ ९ ॥**

सूर्यः । चक्षुषाम् । अधिऽपतिः । सः । मा । अवतु । ० ॥ ९ ॥

**चन्द्रमा नक्षत्राणामधिपतिः स मावतु । ० ॥ १० ॥**

चन्द्रमाः । नक्षत्राणाम् । अधिऽपतिः । सः । मा । अवतु । ० ॥ १० ॥

**इन्द्रो [6]दिवोधिपतिः स मावतु । ० ॥ ११ ॥**

इन्द्रः । दिवः। अधिऽपतिः । सः । मा । अवतु । ० ॥ ११ ॥

**[7]मरुतां पिता[7] पशूनामधिपतिः स मावतु । ० ॥ १२ ॥**

मरुताम् । पिता । पशूनाम् । अधिऽपतिः । सः । मा । अवतु । ० ॥ १२

**मृत्युः प्रजानामधिपतिः स मावतु । ० ॥ १३ ॥**

मृत्युः । प्रऽजानाम् । अधिपतिः । सः । मा । अवतु । ० ॥ १३ ॥

१. सन्धिरार्ष इति W., वृष्ट्या अधि °सात[2]. २. वैतु. पपा. °ष्ट्या । ३. °रुतो गणाना° तै ३,४,५,१. ४. °म ओषधीना° तं. ५. °यौ दिवः तै. ६. ज्येष्ठानां तं. ७. रुद्रः तै. पै १५,८,३.

यमः 'पितृणामधिपतिः स मावतु । ० ॥ १४ ॥

यमः । पितृणाम् । अधिऽपतिः । सः । मा । अवतु । ० ॥ १४ ॥

पितरः परे ते मावन्तु । ० ॥ १६ ॥

पितरः । परे । ते । मा । अवन्तु । ० ॥ १५ ॥

तता अवरे ते मावन्तु । ० ॥ १६ ॥

ततः । अवरे । ते । मा । अवन्तु । ० ॥ १६ ॥

'ततस्ततामहास्ते मावन्तु' । ० ० ॥ १७ ॥

ततः । ततामहाः । ते । मा । अवन्तु । ० ० ॥ १७ ॥

इति पञ्चमेऽनुवाके तृतीयं सूक्तम् ।

गर्भाधानाख्ये कर्मणि 'पर्वताद् दिवः' इति सूक्तेन आगमकृशरं चरुद्वयं श्रपयित्वा संपात्य अभिमन्त्र्य द्वितीयं चरुं युगच्छिद्रेण संपात्य अभिमन्त्र्य आशयति ।

तथा तत्रैव कर्मणि केलूनांश्च पलाशात्सरून्निवृत्ते निघृष्य 'पर्वताद् दिवः' इति सूक्तेन अभिमन्त्र्य शिश्ने आधाय ततो मैथुनं करोति ।

तद् उक्तं कौशिकेन—"'पर्वताद् दिवः' इत्यागमकृशरम् आशयति । युगतर्द्मना संपातवन्तं द्वितीयम् । केलूनांश्च पलाशात्सरून्निवृत्ते निकार्याधाय शिश्ने ग्रामं प्रविशति" ( कौसू. ३५, ५-७ ) इति ।

पर्वताद् दिवो योनेरङ्गादङ्गात् समाभृतम् ।
शेपो 'गर्भस्य रेतोधाः' सरौ पर्णमिवा दधत् ॥ १ ॥

पर्वतात् । दिवः । योनेः । अङ्गात्ऽअङ्गात् । सम्ऽआभृतम् ।
शेपः । गर्भस्य । रेतःऽधाः । सरौ । पर्णम्ऽइव । आ । दधत् ॥ १ ॥

यथेयं 'पृथिवी मही भूतानां' गर्भमादधे ।
एवा दधामि ते गर्भं तस्मै त्वामवसे हुवे ॥ २ ॥

१. पृथिव्या° तै ३,४,५,१; पित्रेणा° Bp[2]. २. तु. O,D[2]. वेनु. शंपा. ततस्त°; पपा. ततः ।, ततास्ततामहा इह माऽवत तै. ततास्त° पै १५,९,४. ३. गर्भस्य रेतो धाः सात[2]. ४. उर्वी पृथिवी विष्ठेव पै १३,२,१.

यथा । इयम् । पृथिवी । मही । भूतानाम् । गर्भम् । आऽदधे ।
एव । आ । दधामि । ते । गर्भम् । तस्मै । त्वाम् । अवसे । हुवे ॥ २ ॥

**गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति[1] ।**
**गर्भं [2]ते अश्विनोभा[2] धत्तां[3] पुष्करस्रजा[4] ॥३॥**

गर्भम् । धेहि । सिनीवालि । गर्भम् । धेहि । सरस्वति ।
गर्भम् । ते । अश्विना । उभा । आ । धत्ताम् । पुष्करऽस्रजा ॥ ३ ॥

**गर्भं ते [5]मित्रावरुणौ गर्भं देवो बृहस्पतिः ।**
**गर्भं त इन्द्रश्चाग्निश्च गर्भं धाता दधातु ते ॥ ४ ॥**

गर्भम् । ते । मित्रावरुणौ । गर्भम् । देवः । बृहस्पतिः ।
गर्भम् । ते । इन्द्रः । च । अग्निः । च । गर्भम् । धाता । दधातु । ते ॥ ४ ॥

**विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।**
**आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ ५ ॥**

विष्णुः । योनिम् । कल्पयतु । त्वष्टा । रूपाणि । पिंशतु ।
आ । सिञ्चतु । प्रजाऽपतिः । धाता । गर्भम् । दधातु । ते ॥ ५ ॥

**यद् वेद राजा वरुणो [6]यद् वा देवी सरस्वती[6] ।**
**यदिन्द्रो वृत्रहा [7]वेद तद् [8]गर्भकरणं [9]पिब ॥ ६ ॥**

यत् । वेद । राजा । वरुणः । यत् । वा । देवी । सरस्वती ।
यत् । इन्द्रः । वृत्रऽहा । वेद । तत् । गर्भऽकरणम् । पिब ॥ ६ ॥

**गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।**
**गर्भो विश्वस्य भूतस्य सो [10]अग्ने गर्भमेह धाः[10] ॥ ७ ॥**

---

१. पृथुष्टुके माश १४,९,४,२०. २. योन्यामश्विनास्यामा पै १३,२,४; ते अश्विनौ देवावा ऋ १०,१८४,२; मंत्रा १,४,७; माश. ३. धत्तं पै. ४. °स्रजौ माश. ५. राजा वरुणो पै १३,२,७. ६. वेद देवो बृहस्पतिः पै १३,२,१६. ७. वेद Sm, वेद P. ८. गर्भक° P3,W. ९. पिबा पै. १०. अग्ने गर्भोऽअपामसि मा १२,३७; तै ४,२,३,३; मै २, ७,१०; काठ १६,१०.

गर्भः । असि । ओषधीनाम् । गर्भः । वनस्पतीनाम् ।
गर्भः । विश्वस्य । भूतस्य । सः । अग्ने । गर्भम् । आ । इह । धाः ॥ ७ ॥

**[1]अधि स्कन्द[1] वीरयस्व[2] गर्भमा धेहि योन्याम्[3] ।**
**[4]वृषासि [5]वृष्ण्यावन् प्रजायै त्वा नयामसि[6] ॥ ८ ॥**

अधि । स्कन्द । वीरयस्व । गर्भम् । आ । धेहि । योन्याम् ।
वृषा । असि । वृष्ण्यऽवन् । प्रऽजायै । त्वा । आ । नयामसि ॥ ८ ॥

**वि जिहीष्व[7] बार्हत्सामे गर्भस्ते योनिमा शयाम् ।**
**[8]अदुष्टे देवाः पुत्रं[8] सोमपा उभयाविनम् ॥ ९ ॥**

वि । जिहीष्व । बार्हत्ऽसामे[9] । गर्भः । ते । योनिम् । आ । शयाम् ।
अदुः । ते । देवाः । पुत्रम् । सोमऽपाः । उभयाविनम् ॥ ९ ॥

**धातः[10] श्रेष्ठेन रूपेणास्या[11] नार्या गवीन्योः[11] ।**
**पुमांसं पुत्रमा[12] धेहि दशमे मासि सूतवे ॥ १० ॥**

धातः । श्रेष्ठेन । रूपेण । अस्याः । नार्याः । गवीन्योः ।
पुमांसम् । पुत्रम् । आ । धेहि । दशमे । मासि । सूतवे ॥ १० ॥

**त्वष्टः श्रेष्ठेन । ०० ॥ ११ ॥**

त्वष्टः । श्रेष्ठेन । ०० ॥ ११ ॥

**सवितः श्रेष्ठेन । ०० ॥ १२ ॥**

सवितः । श्रेष्ठेन । ०० ॥ १२ ॥

**प्रजापते श्रेष्ठेन । ०० ॥ १३ ॥**

प्रजाऽपते । श्रेष्ठेन । ०० ॥ १३ ॥

**इति पञ्चमेऽनुवाके चतुर्थं सूक्तम् ।**

---

१. अभि क्रन्द शांगृ १,१९,१०; °क्रन्द पै १३,२,१५; °स्कन्ध O.　२. वीडयस्व A.B[h],K, K[m],S[m],V,Dc,Cp; वीलयस्व शांगृ.　३. साधय शांगृ.　४. वृषाणं पै. शांगृ.　५. वृष्ण्यावन्तं पै.; वृषणाधेहि शांगृ.　६. हवामहे शांगृ.　७. जहीष्व Cs.　८. ददन् ते पुत्रं देवाः पै १३,२,१७.　९. °सामे P.　१०. विष्णो खि ४,१३,३ आपमं १,१२,६; भग पै १३,२,१४.　११. अस्यां नार्यां गवीन्याम् खि. आपमं.; °न्याम् E[2],W.　१२. गर्भमा आपम.

'यजूंषि यज्ञे' इति सूक्तेन नवशालायां पुष्टिकामो, घृतं मधुमिश्रं जुहुयात्। तथा च सूत्रम्—'यजूंषि यज्ञ' (अ ५,२६) इति नवशालायां सर्पिर्मधुमिश्रमश्नोति। होमो गाय' (अ ६,१*) इति द्वितीयाम्। युक्ताभ्यां तृतीयाम्' (कौसू २३,१-३) इति। आहुतिम् इति शेषः।

ज्योतिष्टोमे 'यजूंषि यज्ञे' इति सूक्तेन आज्यं जुहोति। 'यजूंषि यज्ञ इति ।' (वैताश्रौ १६,६) इति वैतानसूत्रात्।

**यजूंषि यज्ञे समिधः स्वाहाग्निः प्रविद्वानिह वो युनक्तु ॥ १ ॥**

यजूंषि । यज्ञे । सम्ऽइधः । स्वाहा । अग्निः । प्रऽविद्वान् । इह । वः । युनक्तु ॥ १ ॥

**युनक्तु देवः सविता प्रजानन्नस्मिन् यज्ञे महिषः[1] स्वाहा ॥ २ ॥**

युनक्तु । देवः । सविता । प्रऽजानन् । अस्मिन् । यज्ञे । महिषः । स्वाहा ॥ २ ॥

**इन्द्र उक्थामदान्यस्मिन् यज्ञे प्रविद्वान् युनक्तु [3]सुयुजः स्वाहा ॥ ३ ॥**

इन्द्रः । उक्थऽमदानि । अस्मिन् । यज्ञे । प्रऽविद्वान् । युनक्तु । सुऽयुजः । स्वाहा ॥ ३ ॥

**प्रैषा यज्ञे निविदः स्वाहा शिष्टाः पत्नीभिर्वहतेह युक्ताः ॥ ४ ॥**

प्रऽएषाः । यज्ञे । निऽविदः । स्वाहा । शिष्टाः । पत्नीभिः । वहत । इह । युक्ताः ॥ ४ ॥

**छन्दांसि यज्ञे मरुतः[5] स्वाहा मातेव पुत्रं पिपृतेह युक्ताः ॥ ५ ॥**

छन्दांसि । यज्ञे । मरुतः । स्वाहा । माताऽइव । पुत्रम् । पिपृत । इह । युक्ताः ॥ ५ ॥

**एयमगन् बर्हिषा प्रोक्षणीभिर्यज्ञं तन्वानादितिः स्वाहा ॥ ६ ॥**

आ । इयम् । अगन् । बर्हिषा । प्रऽउक्षणीभिः । यज्ञम् । तन्वाना । अदितिः । स्वाहा ॥ ६ ॥

**विष्णुर्युनक्तु बहुधा तपांस्यस्मिन् यज्ञे सुयुजः स्वाहा ॥ ७ ॥**

विष्णुः । युनक्तु । बहुऽधा । तपांसि । अस्मिन् । यज्ञे । सुऽयुजः । स्वाहा ॥ ७ ॥

**त्वष्टा युनक्तु बहुधा नु[6] रूपा अस्मिन् यज्ञे सुयुजः स्वाहा ॥ ८ ॥**

त्वष्टा । युनक्तु । बहुऽधा । नु । रूपाः[7] । अस्मिन् । यज्ञे । सुऽयुजः । स्वाहा ॥ ८ ॥

१. °श्नं जुहोति इति शंपा. २. सयुजस् पै ९,२,२. ३. उक्थामदा° P³,W. ४. सयुजस् एवं सर्वत्र पै ९,२,३. ५. मरुतः सात.² ६. वि पै ९,२,८. ७ रूपा J वैप१, २६८४ c द्र.

भगो युनक्त्वाशिषो न्व१स्मा[1] अस्मिन् यज्ञे प्रविद्वान् युनक्तु सुयुजः स्वाहा ।९।

भगः । युनक्तु । आऽशिषः । नु । अस्मै । अस्मिन् । यज्ञे । प्रऽविद्वान् । युनक्तु । सुऽयुजः । स्वाहा ।

सोमो युनक्तु बहुधा पयांस्यस्मिन् यज्ञे सुयुजः स्वाहा ॥ १० ॥

सोमः । युनक्तु । बहुऽधा । पयांसि । अस्मिन् । यज्ञे । सुऽयुजः । स्वाहा ॥ १० ॥

इन्द्रो युनक्तु बहुधा वीर्याण्यस्मिन् यज्ञे सुयुजः स्वाहा ॥ ११ ॥

इन्द्रः । युनक्तु । बहुऽधा । वीर्याणि । अस्मिन् । यज्ञे । सुऽयुजः । स्वाहा ॥ ११ ॥

अश्विना ब्रह्मणा[2] यातमर्वाञ्चौ[3] वषट्कारेण यज्ञं वर्धयन्तौ ।
बृहस्पते [4]ब्रह्मणा याह्यर्वाङ्[5] यज्ञो अयं स्वरिदं यजमानाय स्वाहा[6] ॥१२॥

अश्विना । ब्रह्मणा । आ । यातम् । अर्वाञ्चौ । वषट्ऽकारेण । यज्ञम् । वर्धयन्तौ ।
बृहस्पते । ब्रह्मणा । आ । याहि । अर्वाङ् । यज्ञः । अयम् । स्वः । इदम् । यजमानाय । स्वाहा ।१२

इति पञ्चमं सूक्तम् ।

इति पञ्चमोऽनुवाकः ।

पुष्टिकामः 'ऊर्ध्वा अस्य' इति सूक्तेन अग्नौ मन्थाकारम् औदुम्बरं दत्त्वा आज्यं जुहोति ।

तथा असंख्याता आगमशष्कुलीरधिश्रित्य अनेन सूक्तेन सप्त शष्कुलीरग्नौ दत्त्वा आज्यं जुहोति । शेषाः शष्कुलीः कर्त्रे ददाति ।

तद् उक्तं कौशिकेन — "'ऊर्ध्वा अस्य' इति वार्मणम् औदुम्बरं मन्थप्रतिरूपम् अभिजुहोति । असंख्याता अधिश्रित्य सप्तागमशष्कुलीः" (कौसू. २३,७-८) इति । प्रतिग्रहोपात्तेन द्रव्येण कृताः शष्कुल्य आगमशष्कुल्यः ।

तथा वशाशमनकर्मणि अस्य सूक्तस्य विनियोग उक्तः । सूत्रादिकं 'समिद्धो अद्य' ( अ ५,१२ ) इति सूक्ते द्रष्टव्यम् ।

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्यग्नेः ।
द्युमत्तमा [1]सुप्रतीकः ससूनुस्तनूनपादसुरो भूरिपाणिः ॥१॥

१. न्व१स्मा B,Bh,D,Sm,Cs. २. °णेतमर्वाग् पै ९,२,१२. ३. ब्रह्मणेह्यर्वाङ् पै. °याह्यर्वाङ् सात[2]. ४. धेहि स्वाहा पै. ५. सुप्रतीकस्य सूनोः मा २७,११ तै ४,१,८,१ मै २,१२,६; काठ १८,१७ पै ९,१,१. ६. विश्ववेदाः मा २७,१२; तै. मै. का. पै ९,१,२;

ऊर्ध्वाः । अस्य । सम्ऽइधः । भवन्ति । ऊर्ध्वा । शुक्रा । शोचींषि । अग्नेः ।
द्युमत्ऽतमा । सुऽप्रतीकः । सऽसूनुः । तनूऽनपात्[१] । असुरः । भूरिऽपाणिः ॥ १॥

देवो [२]देवेषु देवः[२] पथो अनक्ति[३] मध्वा घृतेन ॥ २ ॥

देवः । देवेषु । देवः । पथः । अनक्ति । मध्वा । घृतेन ॥ २ ॥

मध्वा यज्ञं नक्षति[४] प्रैणानो[५] नराशंसो[६] अग्निः[७] सुकृद् देवः सविता विश्ववारः ॥ ३ ।

मध्वा । यज्ञम् । नक्षति । प्रैणानः । नराशंसः[६] । अग्निः ।
सुऽकृत् । देवः । सविता । विश्वऽवारः ॥ ३ ॥

अच्छायमेति शवसा [८]घृता चिदीडानो[८] वह्निर्नमसा ॥ ४ ॥

अच्छ । अयम् । एति । शवसा । घृता । चित् । ईडानः । वह्निः । नमसा ॥ ४ ॥

अग्निः[९] स्रुचो अध्वरेषु प्रयक्षु[१०] स यक्षदस्य महिमानमग्नेः ॥ ५ ॥

अग्निः । स्रुचः । अध्वरेषु । प्रऽयक्षु । सः । यक्षत् । अस्य । महिमानम् । अग्नेः ॥ ५ ॥

[११]तरी मन्द्रासु प्रयक्षु वसवश्चातिष्ठन् वसुधातरश्च[११] ॥ ६ ॥

तरी । मन्द्रासु । प्रऽयक्षु । वसवः । च । अतिष्ठन् । वसुऽधातरः । च ॥ ६ ॥

द्वारो देवीरन्वस्य [१२]विश्वे‡ व्रतं रक्षन्ति विश्वहा[१२] ॥ ७ ॥

द्वारः । देवीः । अनु । अस्य । विश्वे । व्रतम् । रक्षन्ति । विश्वहा ॥ ७ ॥

उरुव्यचसाऽ[१३]ग्नेर्धाम्ना पत्यमाने[१४] ।
आ सुष्वयन्ती यजते[१५] उपाके उषासानक्तेमं यज्ञमवतामध्वरं नः ॥ ८ ॥

१. तु. मा. प्रभृ.; वैतु. शंपा तु°  २. देवेभ्यो देवयानान् मं २,१२,६.  ३. अनक्तु मा २७,१२ ग.; °थ आनक्ति तै ४,१,८,१; ऽयुक्त पै ९,१,२.  ४. नक्षसे मा २७,१३. तै  ५. प्रीणानो मा. तै. मं. काठ १८,१७ पै.  ६. नरा° A; नराशंस P,Cp.  ७. अग्ने मा. तै. काठ.  ८. घृतेनेडानो मा २७,१४ त.; घृतेन । ईडानो मै.; घृताचीः । ईडाना काठ.; घृतेन । ईडे पै ९,१,३-४.  ९. अग्निं मा. त. मै. काठ. पै.  १०. प्रयत्सु मा. तै. मै. काट. पै.  ११. पाभे. भूयस्त्वं द्र. मा. २७,१५ तै. ४,१,८,२ मै. काठ. पै ९,१,५.  १२. °व्रता ददन्ते अग्नेः मा २७,१६ तै. मै. काठ. पै.  ‡ विश्वेद् पै ७,१,६; विश्वा मै. काठ.  १३. उरुव्यचसो मा. तै. मै. काठ.  १४. पत्यमानाः मा. तै. मै. काठ. पै.  १५. रजते Cs.

उरुऽव्यचसा । अग्नेः । धाम्नी । पत्यमाने इति । आ । सुस्वयन्ती इति । यजते इति । उपाके इति । उषसानक्ता । इमम् । यज्ञम् । अवताम् । अध्वरम् । नः ॥ ८ ॥

दैवा[1] होतार[2] ऊर्ध्वमध्वरं[3] नोऽग्नेर्जिह्वयाभि[4] गृणत[5] गृणाता[6] नः स्विष्टये[7]।
तिस्रो देवीर्बर्हिरेदं [8]सदन्तामिडा सरस्वती [9]मही भारती [10]गृणाना ॥९॥

[11]दैवाः । होतारः । ऊर्ध्वम् । अध्वरम् । नः । अग्नेः । जिह्वया । अभि । गृणत । गृणत । नः । सुऽइष्टये । तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्ताम् । इडा । सरस्वती । मही । भारती । गृणाना ॥ ९ ॥

तन्नस्तुरीपमद्भुतं[12] पुरुक्षु । [13]देव त्वष्टा रायस्पोषं[13] वि[14] ष्य नाभिमस्य[15] ॥१०॥

तत् । नः । तुरीपम्[16] । अतत्ऽभुतम्[17] । पुरुऽक्षु[18] । देव । त्वष्टः । रायः । पोषम् । वि । स्य । नाभिम् । अस्य[19] ॥१०॥

वनस्पतेऽव सृजा[20] रराणः ।
‡त्मना †देवेभ्यो[20] अग्निर्हव्यं[21] शमिता स्वदयतु[22] ॥ ११ ॥

वनस्पते । अव । सृज । रराणः । त्मना । देवेभ्यः । अग्निः । हव्यम् । शमिता । स्वदयतु ॥

अग्ने स्वाहा कृणुहि जातवेदः ।
इन्द्राय यज्ञं[23] विश्वे देवा हविरिदं जुषन्ताम् ॥ १२ ॥

१. दैव्या K. दैव्या मा २७,१८ तै ४,१,८,२ मैं २,१२,६ काठ १८,१७. २. होतारौ तै. होतारा मा. मै. काठ. ३. इममध्वरं पै ९,१,८. ऊर्ध्वमिममध्वरं मैं. काठ. ४. जिह्वामभि मा. तै.; जिह्वाभि मै. ५. गृणीतम् मा. तै. मै. काठ. पै. ६. कृणुतं मा. तै. मैं. पै. काठ. ७. स्विष्टिम् मा. तै. पै.; °ष्टम् मैं. काठ. ८. सदन्त्विडा मा २७,१९ तैं. पैं ९,१,९ काठ; स्योनमिडा मै. ९. महीर् काठ; ? महा° पै. १०. गृणानाः काठ. पै. ११. दैव्याः K. १२. अह्रुम् Bp[2], अह्रुम् > अह्रुतम् Bp[2], अतऽभुतम् D[2],K[2]. १३. त्वष्टा सुवीर्यम् । रा° मा २७,२०; पै ९,१,१० त्वष्टः सुवीर्यम् । रा° मै; त्वष्टा सुवीरम् । रा° तै ४,१,८,३ त्वष्टः पोषाय काठ. १४. वि ष्यतु मा. तै. पै. १५. नाभिमस्मे मा. तै. मै. काठ. पै. १६. तुरीयम् P,P[2]. १७. अतऽभूतम् । P,P[2]; अद्भूतम् । Cp. १८. पुरुक्षु P,J. १९. अस्य P. २०. °जोप देवान् ऋ. ३,४,१० ‡ सुमना पै ९,१,११. † देवेषु मा २७,२१ तै ४,१,८,३. २१. °हविः ऋ. काठ. २२. सूदयाति ऋ. मा. तै. मैं. काठ. पै. २३. हव्यम् मा २७,२२ तै; देवेभ्यः मै.; भागम् पै ९,१,१२.

अग्ने । स्वाहा । कृणुहि । जातऽवेदः । इन्द्राय । यज्ञम् । विश्वे । देवाः । हविः । इदम् । जुषन्ताम् ॥ १२ ॥

इति षष्ठेऽनुवाके प्रथमं सूक्तम् ।

सर्वसंपत्कर्मसु 'नव प्राणान्' इति सूक्तस्य विनियोगः । तथा आयुष्कामस्य हिरण्यमणिबन्धने अस्य विनियोगः । एतदुभयविस्तरः 'यदाबध्नन्' इति सूक्ते ( अ १,३५ ) द्रष्टव्यः । उपनयनकर्मण्यपि आयुष्कामस्य ब्रह्मचारिण आज्यहोमे एतद् विनियुक्तम् । अस्य आयुष्यगणे पाठात् । सूत्रितं हि—'मेधाजननायुष्यैर्जुहुयात्' ( कौसू० ५७,३१ ) इति ।

तथा अनेन सूक्तेन उपनयनानन्तरं आयुष्कामस्य माणवकस्य सुवर्णरजतलोहमयानि त्रीणि शकलान्येकत्र कृत्वा नवशालाकं मणिं त्रिवृतं कृत्वा संपात्याभिमन्त्र्य बध्नाति इति केशवः । तद् उक्तं कौशिकेन—'उपनयनम्' ( कौसू ५५,१ ) प्रक्रम्य 'नव प्राणान् इति मन्त्रोक्तम्' ( कौसू ५८,१० ) इति ।

तथा 'वैष्णवीम् अन्नकामस्य अन्नक्षये च' ( नक १७,३ ) इति विहितायां वैष्णव्याख्यायां महाशान्तौ त्रिवृन्मणिबन्धनेपि अस्य सूक्तस्य विनियोगः । तद् उक्तं नक्षत्रकल्पे—'नव प्राणान् इति त्रिवृतं वैष्णव्याम्' ( नक १९,५ ) इति ।

नव प्राणान्नवभिः सं मिमीते दीर्घायुत्वाय शतशारदाय ।
हरिते त्रीणि रजते त्रीण्ययसि त्रीणि तपसाविष्ठितानि[1] ॥ १ ॥

नव । प्राणान् । नवऽभिः । सम् । मिमीते । दीर्घायुऽत्वाय । शतऽशारदाय ।
हरिते । त्रीणि । रजते । त्रीणि । अयसि । त्रीणि । तपसा । आऽविस्थितानि ॥ १ ॥

अग्निः सूर्यश्चन्द्रमा भूमिरापो द्यौरन्तरिक्षं प्रदिशो दिशश्च ।
आर्तवा ऋतुभिः संविदाना अनेन मा त्रिवृता[3] पारयन्तु ॥ २ ॥

अग्निः । सूर्यः । चन्द्रमाः । भूमिः । आपः । द्यौः । अन्तरिक्षम् । प्रऽदिशः । दिशः । च ।
आर्तवाः । ऋतुऽभिः । समऽविदानाः । अनेन । मा । त्रिऽवृता । पारयन्तु ॥ २ ॥

त्रयः पोषास्त्रिवृति[4] श्रयन्तामनक्तु पूषा पयसा घृतेन ।
अन्नस्य भूमा पुरुषस्य भूमा भूमा पशूनां त इह श्रयन्ताम् ॥ ३ ॥

---

१. रजसावि° पै २,५९,१०. २. 'विष्टितानि R,RW. ३. तूवृता W.
४. °वृर्ति B; °वृतिः A,B[h],D,K,R,S[m],Cs; °वृति A; °वृतस् पै २,५९,१.

त्रयः। पोषाः। त्रिऽवृति। श्रयन्ताम्। अनक्तु। पूषा। पयसा। घृतेन।
अन्नस्य। भूमा। पुरुषस्य। भूमा। भूमा। पशूनाम्। ते। इह। श्रयन्ताम्॥ ३॥

इममादित्या[1] वसुना समुक्षतेममग्ने वर्धय वावृधानः।
इममिन्द्र सं सृज वीर्येणास्मिन्[2] त्रिवृच्छ्रयतां पोषयिष्णु[3]॥ ४॥

इमम्। आदित्याः। वसुना। सम्। उक्षत। इमम्। अग्ने। वर्धय। ववृधानः।
इमम्। इन्द्र। सम्। सृज। वीर्येण। अस्मिन्। त्रिऽवृत्। श्रयताम। पोषयिष्णु॥ ४॥

भूमिष्ट्वा पातु हरितेन विश्वभृदग्निः पिपर्त्वयसा सजोषाः।
वीरुद्भिष्टे[4] अर्जुनं संविदानं दक्षं दधातु सुमनस्यमानम्॥ ५॥

भूमिः। त्वा। पातु। हरितेन। विश्वऽभृत्। अग्निः। पिपर्तु। अयसा। सऽजोषाः।
वीरुत्ऽभिः। ते। अर्जुनम्। सम्ऽविदानम्। दक्षम्। दधातु। सुऽमनस्यमानम्॥ ५॥

त्रेधा जातं जन्मनेदं हिरण्यमग्नेरेकं प्रियतमं बभूव सोमस्यैकं हिंसितस्य परापतत्।
अपामेकं वेधसां[5] रेत आहुस्तत् ते हिरण्यं त्रिवृदस्त्वायुषे॥ ६॥

त्रेधा। जातम्। जन्मना। इदम्। हिरण्यम्। अग्नेः। एकम्। प्रियऽतमम्। बभूव। सोमस्य।
एकम्। हिंसितस्य। परा। अपतत्। अपाम्। एकम्। वेधसाम्। रेतः। आहुः। तत्। ते।
हिरण्यम्। त्रिऽवृत्। अस्तु। आयुषे॥ ६॥

त्र्यायुषं[6] जमदग्नेः कश्यपस्य त्र्यायुषम्[7]।
त्रेधामृतस्य चक्षणं त्रीण्यायूंषि तेऽकरम्[8]॥ ७॥

त्रिऽआयुषम्। जमत्ऽअग्नेः। कश्यपस्य[9]। त्रिऽआयुषम्।
त्रेधा। अमृतस्य। चक्षणम्। त्रीणि। आयूंषि[10]। ते। अकरम्॥ ७॥

त्रयः सुपर्णास्त्रिवृता यदायन्नेकाक्षरमभिसंभूय शक्राः।
प्रत्यौहन्मृत्युममृतेन साकमन्तर्दधाना दुरितानि विश्वा॥ ८॥

१. °दित्या K,K^m. २. °ण यस्मिन् पै २,५९,२. ३. °ष्णुः W^{h}. पै. ४. °भिस्ते पै २,५९,३. ५. वेधसो पै २,५९,४. ६. त्रिविद्° पै. ७. त्रियायु° पै २,५९,५. ८. नस्कृधि पै. ९. कुस्यपस्य P. १०. आयुंषि P.

त्रयः । सुऽपर्णाः । त्रिऽवृता । यत् । आयन् । एकऽअक्षरम् । अभिऽसंभूय । शक्राः ।
प्रति । औहन् । मृत्युम् । अमृतेन । साकम् । अन्तःऽदधानाः[1] । दुःऽइतानि । विश्वा ॥८॥

**दिवस्त्वा पातु हरितं मध्यात् त्वा पात्वर्जुनम् ।**
**भूम्या अयस्मयं पातु प्रागाद्[2] देवपुरा अयम् ॥ ९ ॥**

दिवः । त्वा । पातु । हरितम् । मध्यात् । त्वा । पातु । अर्जुनम् ।
भूम्याः । अयस्मयम् । पातु । प्र । अगात् । देवऽपुराः[3] । अयम् ॥ ९ ॥

**इमास्तिस्रो देवपुरास्तास्त्वा रक्षन्तु सर्वतः ।**
**तास्त्वं बिभ्रद् वर्चस्व्युत्तरो[4] द्विषतां भव ॥ १० ॥**

इमाः । तिस्रः । देवऽपुराः । ताः । त्वा । रक्षन्तु । सर्वतः ।
ताः । त्वम् । बिभ्रत् । वर्चस्वी । उत्तरः । द्विषताम् । भव ॥ १० ॥

**पुरं देवानाममृतं हिरण्यं य आबेधे प्रथमो देवो अग्रे ।**
**तस्मै नमो दश प्राचीः कृणोम्यनु मन्यतां[5] त्रिवृदाबधे मे[6] ॥ ११ ॥**

पुरम् । देवानाम् । अमृतम् । हिरण्यम् । यः । आऽबेधे । प्रथमः । देवः । अग्रे ।
तस्मै । नमः । दश । प्राचीः । कृणोमि । अनु । मन्यताम्[5] । त्रिऽवृत् । आऽबधे । मे ॥ ११ ॥

**आ त्वा [7]चृतत्वर्यमा पूषा बृहस्पतिः ।**
**अहर्जातस्य यन्नाम तेन त्वाति[8] चृतामसि ॥ १२ ॥**

आ । त्वा । [7]चृततु । अर्यमा । आ । पूषा । आ । बृहस्पतिः ।
अहःऽजातस्य । यत् । नाम । तेन । त्वा । अति । चृतामसि ॥ १२ ॥

**ऋतुभिष्ट्वार्तवैरायुषे वर्चसे त्वा ।**
**संवत्सरस्य तेजसा तेन संहनु कृण्मसि ॥ १३ ॥**

१. °दधाना P,J,K,V,Cp. २. प्राहरद् पै २,५९,७. ३. देवपुरः P.
४. °स्व्युत्तरो>°स्युत्तरो B,B^h,A,D; °स्युत्तरो K; आयुष्मान् वर्चस्वान् उत्तरो पै २,५९,८.
५. मन्यतां A,B^h,D,K,K^m,R,S^m,V,Dc; मन्यताम् । P,P², J,V,Cp. ६. °वृता वधेन पै २,५९,९१ [मूको]. ७. वृ° K,K^m,V,P²; वृ° वा चृ° वेति संदेहः B. ८. तेऽति पै २,५९,११.

ऋतुऽभिः । त्वा । आर्तवैः । आयुषे । वर्चसे । त्वा ।
सम्ऽवत्सरस्य । तेजसा । तेन । सम्ऽहनु । कृण्मसि ॥ १३ ॥

**घृतादुल्लुप्तं मधुना समक्तं भूमिदृंहमच्युतं पारयिष्णु ।**
**भिन्दत्[1] सपत्नानधरांश्च कृण्वदा मा रोह महते[2] सौभगाय ॥ १४ ॥**

घृतात् । उत्ऽलुप्तम् । मधुना । सम्ऽअक्तम् । भूमिऽदृंहम् । अच्युतम् । पारयिष्णु ।
भिन्दत्[3] । सऽपत्नान् । अधरान् । च । कृण्वत्[4] । आ । मा । रोह । महते । सौभगाय ॥ १४ ॥

**इति षष्ठेऽनुवाके द्वितीयं सूक्तम् ।**

'पुरस्ताद् युक्तः' **इति सूक्तस्य चातनगणे पाठाद् यत्रयत्र चातनगणस्य विनियोगस्तत्रतत्रास्य सूक्तस्य विनियोगः । विस्तरस्तु** 'स्तुवानम् अग्ने' **( अ १,७ ) इति सूक्ते कृतः ।**

**पुरस्ताद् युक्तो वह जातवेदोऽग्ने विद्धि क्रियमाणं यथेदम् ।**
**त्वं भिषग् भेषजस्यासि कर्ता त्वया गामश्वं पुरुषं सनेम ॥ १ ॥**

पुरस्तात् । युक्तः । वह । जातऽवेदः । अग्ने । विद्धि । क्रियमाणम् । यथा । इदम् ।
त्वम् । भिषक् । भेषजस्य । असि[5] । कर्ता । त्वया । गाम् । अश्वम् । पुरुषम् । सनेम ॥ १ ॥

**तथा तदग्ने[6] कृणु जातवेदो विश्वेभिर्देवैः सह संविदानः ।**
**यो नो[7] दिदेव यतमो जघास यथा सो अस्य परिधिष्पताति[8] ॥ २ ॥**

तथा । तत् । अग्ने । कृणु । जातऽवेदः । विश्वेभिः । देवैः । सह । सम्ऽविदानः ।
यः । नः । दिदेव । यतमः । जघास । यथा । सः । अस्य[9] । परिऽधिः । पताति ॥ २ ॥

**यथा सो अस्य परिधिष्पताति तथा तदग्ने कृणु जातवेदः ।**
**विश्वेभिर्देवैः सह संविदानः ॥ ३ ॥**

यथा । सः । अस्य । परिऽधिः । पताति । तथा । तत् । अग्ने । कृणु । जातऽवेदः ।
विश्वेभिः । देवैः । सह । सम्ऽविदानः ॥ ३ ॥

१. भिंदन् स॰ A,B,S^m; भिंदंत्स॰ B^b,D,K,K^m,R,V,Dc. २. सह्ने सात. ३. भिंदन् । P,P², J,V,Cp. ४. कृण्वत् । P. ५. असि P,V. ६. त्वमग्ने पै १३,९,४. ७. अस्य पै. ८. परिधिः पताति पै. ९. अस्य । P.

अक्ष्यौ३ नि विध्य हृदयं नि विध्य जिह्वां नि तृन्द्धि प्र दतो मृणीहि[1]
पिशाचो अस्य यतमो जघासाग्ने यविष्ठ[2] प्रति तं शृणीहि ॥ ४ ॥

अक्ष्यौ ऽ । नि । विध्य । हृदयम् । नि । विध्य । जिह्वाम् । नि । तृन्द्धि । प्र । दतः । मृणीहि ।
पिशाचः । अस्य[3] । यतमः । जघास । अग्ने । यविष्ठ[4] । प्रति । तम् । शृणीहि ॥ ४ ॥

यदस्य हृतं विहृतं[5] यत् पराभृतमात्मनो जग्धं यतमत्[6] पिशाचैः ।
तदग्ने विद्वान् पुनरा भर त्वं शरीरे [7]मांसमसुमेरयामः[7]॥ ५ ॥

यत् । अस्य । हृतम् । विऽहृतम् । यत् । पराऽभृतम् । आत्मनः । जग्धम् । यतमत् । पिशाचैः ।
तत् । अग्ने । विद्वान् । पुनः । आ । भर । त्वम् । शरीरे । मांसम् । असुम् । आ । ईरयामः ॥ ५ ॥

आमे सुपक्वे शबले विपक्वे यो मा[8] पिशाचो अशने ददम्भ ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो३[9]ऽयमस्तु ॥६॥

आमे । सुऽपक्वे । शबले । विऽपक्वे । यः । मा । पिशाचः । अशने । ददम्भ ।
तत् । आत्मना । प्रऽजया । पिशाचाः । वि । यातयन्ताम् । अगदः । अयम् । अस्तु ॥ ६ ॥

क्षीरे [10]मा मन्थे[10] यतमो ददम्भाकृष्टपच्ये अशने धान्ये३[11] यः ।
तदात्मना प्रजया पिशाचा वि यातयन्तामगदो३ऽयमस्तु ॥ ७ ॥

क्षीरे । मा । मन्थे । यतमः । ददम्भ । अकृष्टऽपच्ये । अशने । धान्ये ऽ । यः ।०॥७॥

अपां मा[12] पाने यतमो [13]ददम्भ क्रव्याद् यातूनां शयने शयानम्[13] ।०॥८॥

अपाम् । मा । पाने । यतमः । ददम्भ । क्रव्यऽअत् । यातूनाम् । शयने । शयानम् ।०॥८॥

दिवा मा[14] नक्तं यतमो ददम्भ क्रव्याद् यातूनां[15] शयने शयानम्[16] ।०॥९॥

दिवा । मा । नक्तम् । यतमः । ददम्भ । क्रव्यऽअत् । यातूनाम् । शयने । शयानम् ।०॥९॥

१. शृणीहि पै १३,९,५. २. यविष्ट Bh,D,K,Km,Dc,Cs. ३. अस्य । P. ४. यविष्ट । P². ५. यदितं पै १३,९,६. ६. उत यत् पै. ७. प्राणमसुमिरया संसृजेम पै. ८. मां पै १३,९,९. ९. °दो१ R. १०. त्वा मांसे पै १३,९,८. ११. धान्ये१ R. १२. त्वा पै १३,९,७. १३. °म्भौदने मन्थे दिव उत लेहे पै. १४. त्वा पै १३,९,१०. १५. यातुष् पै. १६. पिशाचः पै.

क्रव्यादमग्ने रुधिरं पिशाचं मनोहनं जहि जातवेदः ।
तमिन्द्रो वाजी वज्रेण हन्तु च्छिनत्तु[1] सोमः शिरो अस्य धृष्णुः[2] ॥१०॥

क्रव्यऽअदम् । अग्ने । रुधिरम् । पिशाचम् । मनःऽहनम् । जहि । जातऽवेदः ।
तम् । इन्द्रः । वाजी । वज्रेण । हन्तु । छिनत्तु । सोमः । शिरः । अस्य । धृष्णुः ॥१०॥

सनादग्ने मृणसि यातुधानान् न त्वा रक्षांसि पृतनासु जिग्युः ।
सहमूराननु दह क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥ ११ ॥

सनात् । अग्ने । मृणसि । यातुऽधानान् । न । त्वा । रक्षांसि । पृतनासु । जिग्युः ।
सहऽमूरान् । अनु । दह । क्रव्यऽअदः । मा । ते । हेत्याः । मुक्षत । दैव्यायाः ॥ ११ ॥

समाहर[3] जातवेदो यद्धृतं[4] यत् पराभृतम् ।
गात्राण्यस्य वर्धन्तामंशुरिवा[5] प्यायतामयम् ॥ १२ ॥

सम्ऽआहर । जातऽवेदः । यत् । हृतम् । यत् । पराऽभृतम् ।
गात्राणि । अस्य । वर्धन्ताम् । अंशुःऽइव । आ । प्यायताम् । अयम् ॥ १८ ॥

सोमस्येव जातवेदो अंशुरा प्यायतामयम् ।
अग्ने विरप्शिनं[6] मेध्यमयक्ष्मं कृणु जीवतु[7] ॥ १३ ॥

सोमस्यऽइव । जातऽवेदः । अंशुः । आ । प्यायताम् । अयम् ।
अग्ने । विऽरप्शिनम् । मेध्यम् । अयक्ष्मम् । कृणु । जीवतु ॥ १३ ॥

एतास्ते अग्ने समिधः पिशाचजम्भनीः ।
तास्त्वं जुषस्व प्रति चैना गृहाण जातवेदः ॥ १४ ॥

एताः । ते । अग्ने । सम्ऽइधः । पिशाचऽजम्भनीः ।
ताः । त्वम् । जुषस्व । प्रति । च । एनाः । गृहाण । जातऽवेदः ॥ १४ ॥

ताष्टाघीरग्ने[8] समिधः प्रति गृह्णाह्यर्चिषा ।
जहातु क्रव्याद्रूपं यो अस्य मांसं जिहीर्षति ॥ १५ ॥

१. भिनत्तु पै १३,९,९. २. जिष्णुः पै. ३. समाभर पै १६,९,१५.
४. यज्जग्धं पै. ५. कल्पन्ता° पै. ६. विरप्सिनं B[2],H,E[2]; विरप्त्रानं I; विरशिपनं O. ७. जीवसे पै १३,९,१६. ८. °घीरग्ने > °धीरग्ने B[b]; °धीरग्ने K,K[m],S[p],V.

तार्ष्टऽअघीः[१] । अग्ने । समऽइर्धः । प्रति । गृहाहि । अर्चिषा । जहातु । क्रव्यऽअत् । रूपम् । यः । अस्य । मांसम् । जिहीर्षति ॥ १५ ॥

इति षष्ठेऽनुवाके तृतीयं सूक्तम् ।

'आवतस्ते' इति सूक्तस्य अंहोलिङ्गगणे पाठात् तस्य गणस्य यत्रयत्र सर्वभैषज्यादिषु विनियोग उक्तस्तत्र सर्वत्र विनियोगोऽनुसंधेयः । अस्य विस्तरस्तु 'अक्षीभ्याम्' ( अ २,३३ ) इत्यत्र उक्तः । तथा अनेन सूक्तेन उपनयनानन्तरम् आयुष्कामं माणवकम् अभिमृश्य अभिमन्त्रयेत । सूत्रितं हि—'उत देवाः ( अ ४,१३ ) आवतस्ते' (अ ५,३०) इत्यादि 'इत्यभिमन्त्रयते'[२] (कौसू ५८,११) इत्यन्तम् । तथा ऋषिहस्ते माणवकशरीराभिमन्त्रणेऽपि एतत् सूक्तम् । सूत्रितं हि—'उत देवाः ( अ ४,१३ ) आवतस्ते' ( अ ५,३० ) इत्यादि 'इत्यभिमन्त्रयते' ( कौसू ५८,११ ) इत्यन्तम् । तथा अस्य सूक्तस्य पिष्टरात्रीकल्पे सर्षपाभिमन्त्रणानन्तरं जपे विनियोगः । तद् उक्तं परिशिष्टे—'अथातः पिष्टराज्याः कल्पं व्याख्यास्यामः' इति प्रक्रम्य 'सर्षपान् अभिमन्त्र्य आवतस्त इति जपन्' ( अप ६,१,१-१० ) इति ।

आवतस्त आवतः[३] परावतस्त आवतः ।
इहैव भव मा नु गा मा पूर्वाननु[४] गाः पितॄनसुं[५] बध्नामि ते दृढम् ॥१॥

आऽवतः । ते । आऽवतः । पराऽवतः । ते । आऽवतः । इह । एव । भव । मा । नु । गाः । मा । पूर्वान् । अनु । गाः । पितॄन् । असुम् । बध्नामि । ते । दृढम् ॥ १ ॥

यत् त्वाभिचेरुः पुरुषः स्वो यदरणो जनः ।
उन्मोचनप्रमोचने उभे वाचा वदामि ते ॥ २ ॥

यत् । त्वा । अभिऽचेरुः । पुरुषः । स्वः । यत् । अरणः । जनः । उन्मोचनप्रमोचने इत्युन्मोचनऽप्रमोचने । उभे इति । वाचा । वदामि । ते ॥ २ ॥

यद् दुद्रोहिथ शेपिषे स्त्रियै पुंसे [६]अचित्त्या ।० ॥३॥

यत् । दुद्रोहिथ । शेपिषे । स्त्रियै । पुंसे । अचित्त्या ।० ॥३॥

यदेनसो मातृकृताच्छेषे [७]पितृकृताच्च यत्[७] । ० ॥४॥

यत् । एनसः । मातृऽकृतात् । शेषे । पितृऽकृतात् । च । यत् ।० ॥४॥

१. °अघीः । > °अघीः । Bh; °अघीः । K,K^m,S,V. २. ब्राह्मणोक्तम् इत्यधिकं शंपा. ३. परावतः पै ९,१३,१. ४. पूर्वा अनु पै. ५. पितॄणसुं B,D,S^m,Cs; गतानसुं पै. ६. अ° नास्ति K,K^m,V. ७. °तादुत पै ९,१३,४.

यत् ते माता यत् ते पिता जामिर्भ्राता च सर्जतः[1] ।
प्रत्यक् सेवस्व भेषजं जरदष्टिं कृणोमि त्वा[2] ॥ ५ ॥

यत् । ते । माता । यत् । ते । पिता । जामिः । भ्राता । च । सर्जतः ।
प्रत्यक् । सेवस्व । भेषजम् । जरत्ऽअष्टिम् । कृणोमि । त्वा ॥ ५ ॥

[3]इहैधि पुरुष[3] सर्वेण मनसा सह ।
दूतौ यमस्य मानु गा अधि जीवपुरा इहि ॥ ६ ॥

इह । एधि । पुरुष । सर्वेण । मनसा । सह ।
दूतौ । यमस्य । मा । अनु । गाः । अधि । जीवऽपुराः । इहि ॥ ६ ॥

अनुहूतः पुनरेहि विद्वानुदयनं पथः ।
आरोहणमाक्रमणं जीवतोजीवतोऽयनम् ॥ ७ ॥

अनुऽहूतः । पुनः । आ । इहि । विद्वान् । उत्ऽअयनम् । पथः ।
आऽरोहणम् । आऽक्रमणम् । जीवतःऽजीवतः । अयनम् ॥ ७ ॥

मा बिभेर्न मरिष्यसि [4]जरदष्टिं कृणोमि त्वा[4] ।
निरवोचमहं यक्ष्ममङ्गेभ्यो अङ्गज्वरं तव ॥ ८ ॥

मा । बिभेः । न । मरिष्यसि । जरत्ऽअष्टिम् । कृणोमि । त्वा ।
निः । अवोचम् । अहम् । यक्ष्मम् । अङ्गेभ्यः । अङ्गऽज्वरम् । तव ॥ ८ ॥

अङ्गभेदो अङ्गज्वरो यश्च ते हृदयामयः ।
यक्ष्मः श्येन इव प्रापप्तद् वाचा साढः परस्तराम् ॥ ९ ॥

अङ्गऽभेदः । अङ्गऽज्वरः । यः । च । ते । हृदयऽआमयः ।
यक्ष्मः । श्येनःऽइव । प्र । अपप्तत् । वाचा । साढः । परःऽतराम् ॥ ९ ॥

ऋषी बोधप्रतीबोधावस्वप्नो यश्च जागृविः ।
तौ ते प्राणस्य गोप्तारौ दिवा [5]नक्तं च जागृताम्[5] ॥ १० ॥

१. सर्जत पै ९,१३,५. २. ते पै. ३. एह्ययेहि पुनरेहि पै ९.१३.६. ४. जरदष्टिर्भविष्यसि पै ९,१३,८. ५. स्वप्नं च जाग्रतुः पै ९,१३,१०.

ऋषी इति॑ । बो॒ध॒ऽप्र॒ती॒बो॒धौ । अ॒स्व॒प्नः । यः । च॒ । जागृ॑विः ।
तौ । ते॒ । प्रा॒णस्य॑ । गो॒प्तारौ॑ । दिवा॑ । नक्त॑म् । च॒ । जा॒गृ॒ता॒म् ॥ १० ॥

**अ॒यम॒ग्निरु॑प॒सद्य॑ इ॒ह सूर्य॒ उदे॑तु ते ।**
**उ॒देहि॑[1] मृ॒त्योर्ग॑म्भी॒रात् कृ॒ष्णाच्चि॒त् तम॑स॒स्परि॑ ॥ ११ ॥**

अ॒यम् । अ॒ग्निः । उ॒प॒ऽसद्यः॑ । इ॒ह । सूर्यः॑ । उत् । ए॒तु॒ । ते॒ ।
उ॒त्ऽएहि॑ । मृ॒त्योः । ग॒म्भी॒रात् । कृ॒ष्णात् । चि॒त् । तम॑सः । परि॑ ॥ ११ ॥

**नमो॑ य॒माय॒ नमो॑ अस्तु मृ॒त्यवे॒ नमः॑ पि॒तृभ्य॑ उ॒त ये नय॑न्ति ।**
**उ॒त्पार॑णस्य॒ यो वेद॒ तम॒ग्निं पु॒रो द॑धे॒स्मा अ॑रि॒ष्टता॑तये ॥ १२ ॥**

नमः॑ । य॒माय॑ । नमः॑ । अ॒स्तु॒ । मृ॒त्यवे॑ । नमः॑ । पि॒तृऽभ्यः॑ । उ॒त । ये । नय॑न्ति ।
उ॒त्ऽपार॑णस्य । यः । वेद॑ । तम् । अ॒ग्निम् । पु॒रः । द॒धे॒ । अ॒स्मै । अ॒रि॒ष्टऽता॑तये ॥ १२ ॥

**ऐतु॑ प्रा॒ण ऐतु॒ मन॒ ऐतु॒ चक्षु॒रथो॒ बल॑म् ।**
**शरी॑रमस्य॒ सं वि॒दां तत् प॒द्भ्यां प्रति॑ तिष्ठतु ॥ १३ ॥**

आ । ए॒तु॒ । प्रा॒णः । आ । ए॒तु॒ । मनः॑ । आ । ए॒तु॒ । चक्षुः॑ । अथो॒ इति॑ । बल॑म् ।
शरी॑रम् । अ॒स्य॒ । सम् । वि॒दाम् । तत् । प॒त्ऽभ्याम् । प्रति॑ । ति॒ष्ठ॒तु॒ ॥ १३ ॥

**प्रा॒णेना॑ग्ने॒ चक्षु॑षा॒ सं सृ॑जे॒मं समी॑रय त॒न्वा॒३ सं बले॑न[2] ।**
**वेत्था॒मृत॑स्य॒ मा [3]नु॒र्गा॒न्मा †नु[3] भू॑मिगृ॒हो भु॑वत् ॥ १४ ॥**

प्रा॒णेन॑ । अ॒ग्ने॒ । चक्षु॑षा । सम् । सृ॒ज॒ । इ॒मम् । सम् । ई॒र॒य॒ । त॒न्वा॒३ । सम् । बले॑न ।
वेत्थ॑ । अ॒मृत॑स्य । मा । नु । गा॒त् । मा । नु । भूमि॑ऽगृहः । भु॒व॒त्[4] ॥ १४ ॥

**मा[5] ते॑ प्रा॒ण उप॑ दस॒न्मो[6] अ॑पा॒नोपि॑[6] धायि ते ।**
**सूर्य॒स्त्वाधि॑पतिर्मृ॒त्योरु॒दाय॑च्छतु[7] र॒श्मिभि॑ः ॥ १५ ॥**

मा । ते॒ । प्रा॒णः । उप॑ । द॒स॒त् । मो इति॑ । अ॒पा॒नः । अपि॑ । धा॒यि॒ । ते॒ ।
सूर्यः॑ । त्वा॒ । अधि॑ऽपतिः । मृ॒त्योः । उ॒त्ऽआय॑च्छतु । र॒श्मिऽभिः॑ ॥ १५ ॥

*१. उदेहि Bp[2]. २. सर्जनेन पै ९,१४,४. ३. मृत मो षु पै. † तुं B,R.. † तु B,B[h],K,K[m],A,D,R,V,Cs,P,P[2],J,Cp,Wh. ४. भु॒व॒त् । P. ५. मो K[m]. ६. मापानो अपि पै ९,१४,५ ७. °यच्छाति पै.

इयमन्तर्वदति जिह्वा बद्धा पनिष्पदा[1] ।
'त्वया यक्ष्मं निरवोचं[2] शतं रोपीश्च तक्मनः ॥ १६ ॥

इयम् । अन्तः । वदति । जिह्वा । बद्धा । पनिष्पदा ।
त्वया । यक्ष्मम् । निः । अवोचम् । शतम् । रोपीः । च । तक्मनः ॥ १६ ॥

अयं लोकः प्रियतमो देवानामपराजितः ।
यस्मै त्वमिह मृत्यवे दिष्टः पुरुष जज्ञिषे ।
'स च[3] त्वानु ह्वयामसि मा पुरा जरसो मृथाः ॥ १७ ॥

अयम् । लोकः । प्रियऽतमः । देवानाम् । अपराऽजितः । यस्मै । त्वम् । इह । मृत्यवे ।
दिष्टः । [4]पुरुष । जज्ञिषे[4] । सः । च । त्वा । अनु । ह्वयामसि । मा । पुरा । जरसः । मृथाः ॥

इति षष्ठेऽनुवाके चतुर्थं सूक्तम् ।

'यां ते चक्रुः' इति सूक्तस्य कृत्याप्रतिहरणगणे पाठाद् यत्रयत्र तस्य गणस्य विनियोगस्तत्र सर्वत्रास्य सूक्तस्य विनियोगोऽनुसंधेयः । विस्तरस्तु 'दूष्या दूषिरसि' ( अ २,११ ) इति सूक्ते कृतः ।

यां ते चक्रुरामे पात्रे यां चक्रुर्मिश्रधान्ये ।
आमे मांसे कृत्यां यां चक्रुः पुनः प्रति हरामि ताम् ॥ १ ॥

याम् । ते । चक्रुः । आमे । पात्रे । याम् । चक्रुः । मिश्रऽधान्ये ।
आमे । मांसे । कृत्याम् । याम् । चक्रुः । पुनः । प्रति । हरामि । ताम् ॥ १ ॥

यां ते चक्रुः कृकवाकावजे वा यां कुरीरिणि ।
अव्यां ते कृत्यां० ॥ २ ॥

याम् । ते । चक्रुः । कृकवाकौ । अजे । वा । याम् । कुरीरिणि ।
अव्याम् । ते । कृत्याम् ।०॥ २ ॥

यां ते चक्रुरेकशफे पशूनामुभयादति[5] ।
गर्दभे कृत्यां० ॥ ३ ॥

---

१. पणिष्पदा पै ९,१४,६.　२. तया रोगं विनयामश् पै.　३. तस्मै पै ९,१४,७.
४. पुरुषऽजज्ञिषे । P, P², J, V, Cp.　५. उभयाद्विति । P.

याम् । ते । चक्रुः । एकऽशफे । पशूनाम् । उभयादति ।
गर्दभे । कृत्याम् । ० ॥ ३ ॥

यां ते चक्रुरमूलायां वलगं वा नराच्याम् ।
क्षेत्रे ते कृत्यां ० ॥ ४ ॥

याम् । ते । चक्रुः । अमूलायाम् । वलगम् । वा । नराच्याम् ।
क्षेत्रे । ते । कृत्याम् । ० ॥ ४ ॥

यां ते चक्रुर्गार्हपत्ये पूर्वाग्नावुत दुश्चितः ।
शालायां कृत्यां ० ॥ ५ ॥

याम् । ते । चक्रुः । गार्हऽपत्ये । पूर्वऽअग्नौ । उत । दुःऽचितः ।
शालायाम् । कृत्याम् । ० ॥ ५ ॥

यां ते चक्रुः सभायां यां चक्रुरधिदेवने ।
अक्षेषु कृत्यां ० ॥ ६ ॥

याम् । ते । चक्रुः । सभायाम् । याम् । चक्रुः । अधिऽदेवने ।
अक्षेषु । कृत्याम् । ० ॥ ६ ॥

यां ते चक्रुः सेनायां यां चक्रुरिष्वायुधे ।
दुन्दुभौ कृत्यां ० ॥ ७ ॥

याम् । ते । चक्रुः । सेनायाम् । याम् । चक्रुः । इषुऽआयुधे ।
दुन्दुभौ । कृत्याम् । ० ॥ ७ ॥

यां ते कृत्यां कूपेऽवदधुः श्मशाने वा निचख्नुः ।
सद्मनि कृत्यां यां चक्रुः पुनः प्रति हरामि ताम् ॥ ८ ॥

याम् । ते । कृत्याम् । कूपे । अवऽदधुः । श्मशाने । वा । निऽचख्नुः ।
सद्मनि । कृत्याम् । याम् । चक्रुः । पुनः । प्रति । हरामि । ताम् ॥ ८ ॥

यां ते चक्रुः पुरुषास्थे अग्नौ संकसुके च याम् ।
म्रोकं निर्दाहं क्रव्यादं पुनः प्रति हरामि ताम् ॥ ९ ॥

याम् । ते । चक्रुः । पुरुषऽअस्थे । अग्नौ । सम्ऽकसुके । च । याम् ।
म्रोकम् । निःऽदाहम् । क्रव्यऽअदम् । पुनः । प्रति । हरामि । ताम् ॥ ९ ॥

अपथेना जभारैणां तां पथेतः[1] प्र हिण्मसि ।
अधीरो मर्याधीरेभ्यः सं जभाराचित्त्या ॥ १० ॥

अपथेन । आ । जभार । एनाम्[2] । ताम् । पथा । इतः । प्र । हिण्मसि ।
अधीरः । मर्याऽधीरेभ्यः । सम् । जभार[3] । अचित्त्या ॥ १० ॥

यश्चकार न शशाक कर्तुं शश्रे पादमङ्गुरिम् ।
चकार भद्रमस्मभ्यमभगो भगवद्भ्यः ॥ ११ ॥

यः । चकार । न । शशाक । कर्तुम् । शश्रे । पादम् । अङ्गुरिम् ।
चकार । भद्रम् । अस्मभ्यम् । अभगः । भगवत्ऽभ्यः ॥ ११ ॥

कृत्याकृतं वलगिनं मूलिनं शपथेय्यम् ।
इन्द्रस्तं हन्तु महता वधेनाग्निर्विध्यत्वस्तया ॥ १२ ॥

कृत्याऽकृतम् । वलगिनम् । मूलिनम् । शपथेय्यम् ।
इन्द्रः । तम् । हन्तु । महता । वधेन । अग्निः । विध्यतु । अस्तया ॥ १२ ॥

इति षष्ठेऽनुवाके पञ्चमं सूक्तम् ।
इति षष्ठोऽनुवाकः ।
इति पञ्चमं काण्डं समाप्तम् ।



१. पुथेत Cs.    २. पुनाम् । P.    ३. जुभारा । P.